मान् ध्वजं यस्य सः । गुरोः पुत्रं रथेनान्वाद्रवदन्वधावत् ॥ १७ ॥ आपतंतमाधावंतं स द्रौणिः । कुमारहा बालघाती । उद्विग्नमनाः कंपितहृदयः । प्राणपरीप्सुः प्राणान् लब्धुमिच्छुर्न तु कीर्तिम् । यावद्गमं यावद्गंतुं शक्यं तावदुर्व्यां पराद्रवदपलायत । को ब्रह्मा मृगो भूत्वा सुतां यब्धुमुद्यतः सन् रुद्रस्य भयाद्यथा पलायते स्म । अर्क इति पाठे वामनपुराणकथा सूचिता । तथा हि । विद्युन्माली नाम कश्चिद्राक्षसो माहेश्वरस्तस्मै रुद्रेण सौवर्णं विमानं दत्तम् । ततोऽसावर्कस्य पृष्ठतो भ्राम्यन्विमानदीप्त्या रात्रिं विलोपितवान् । ततोऽर्केण निजतेजोभिर्द्रावयित्वा तद्विमानं पातितम् । तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पराद्रवत् । ततो रुद्रस्य क्रूरदृष्ट्या दंदह्यमानः पतन्वाराणस्यां पतितो लोलार्कनाम्ना विख्यात इति ॥ १८ ॥ अशरणं रक्षकरहितम् । ननु पलायनमेव रक्षकमस्ति । न तस्यापि कुंठितत्वादित्याह । श्रांता वाजिनो यस्य तम् । ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रम् । द्विजात्मज इत्यदीर्घदर्शितामाह ॥१९॥ तद्ब्रह्मास्त्रं समाहितः कृतध्यानः । उपसंहारमजानतोऽपि संधाने हेतुः प्राणकृच्छ्र इति ॥ २० ॥ ततोऽस्त्रात् सर्वतोदिशं प्रादुष्कृतं प्रकटीभूतं तेजोऽभिप्रेक्ष्य ततः प्राणापदं चाभिप्रेक्ष्य ॥ २१ ॥ प्रस्तुतं विज्ञापयितुं प्रथमं

सांत्वयित्वाच्युतमित्रसूतः ॥ अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥ तमापतंतं स निलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथा कः ॥ १८ ॥ यदाऽशरणमात्मानमैक्षत श्रांतवाजिनम् ॥ अस्त्रं ब्रह्मशिरो मेन आत्मत्राणं द्विजात्मजः ॥ १९ ॥ अथोपस्पृश्य सलिलं संदधे तत्समाहितः ॥ अजानन्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥ ततः प्रादुष्कृतं तेजः प्रचंडं सर्वतोदिशम् ॥ प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥ अर्जुन उवाच ॥ कृष्ण कृष्ण महाभाग भक्तानामभयंकर ॥ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥ २२ ॥ त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ॥ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥ स एव जीवलोकस्य मायामोहितचेतसः ॥ विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥ तथायं चावतारस्ते भुवो भारजिहीर्षया ॥ स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥ किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम् ॥ सर्वतोमुखमायाति तेजः परमदारुणम् ॥ २६ ॥ श्रीभगवानुवाच ॥ वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ॥ नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥ न ह्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्शनम् ॥ जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा ॥ २८ ॥

स्तौति । कृष्णेति चतुर्भिः । संसृतेर्हेतोर्दह्यमानानां तस्या अपवर्गोऽपवर्जयिता नाशक इत्यर्थः ॥ २२ ॥ यतस्त्वमीश्वरः साक्षात् । कुतः । यतः प्रकृतेः परः पुरुषः । तत्कुतः । यत आद्यः कारणम् । कारणत्वेऽप्यविकारितमाह । मायां व्युदस्याभिभूय कैवल्यरूप आत्मन्येव स्थितः ॥ २३ ॥ त्रिवर्गदातापि त्वमेवेत्याह । स इति । यस्त्वं मायामभिभूय स्थितः स एव मायाभिभूतस्य जनस्य धर्मादिफलमुपासितः सन्दिधत्से । वीर्येण प्रभावेन ॥ २४ ॥ तथा चानेनावतारेण तव साधुपक्षपातो लक्ष्यत इत्याह । तथेति । किं भूभारहरणं मदिच्छामात्रेण न भवति तत्राह स्वानां ज्ञातीनामनुध्यानाय च तथानन्यभावानामेकांतभक्तानां च ॥ २५ ॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति । किमिति । किमात्मकमिदं कुतो वा आयातीति । स्विद्वितर्के ॥ २६ ॥ इदं द्रोणपुत्रस्य ब्राह्ममस्त्रं तेन च प्राणबाधे प्राप्ते प्रदर्शितं केवलं न तत्प्रयोगे कुशल इत्यर्थः । यतोऽसावुपसंहारं न वेद । एतच्च त्वं तु वेत्थ जानासि ॥ २७ ॥ प्रत्यवकर्शनं कृशत्वकरं निवर्तकमित्यर्थः ।

सरहस्यो गोप्यमंत्रसहितः । विसर्गोऽस्त्रप्रयोगः उपसंयम उपसंहारः ताभ्यां सहितोऽस्त्रसमूहश्च ॥ ४४ ॥ किंच तस्य द्रोणस्यात्मा देहस्तस्यार्धं कृपी आस्ते । अर्धत्वे हेतुः पत्नी । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः । जायापती अग्निमादधीयातामिति श्रुतेरुभयोरेकाकारत्वावगमाच्च । ननु भर्तरि मृते सा कथं जीवति तत्राह । नान्वगाद्भर्तारं यतो वीरसूः पुत्रवती ॥ ४५ ॥ तत्तस्माद्गौरवं गुरोः कुलं भवद्भिः कर्तृभिर्वृजिनं दुःखं प्राप्तुं नार्हति किंतु पूज्यं वंद्यं च ॥ ४६ ॥ मृतवत्सा मृतपुत्रा ॥ ४७ ॥ विपक्षे दोषमाह । यैरिति । तेषां राजन्यानां कुलं कर्म । कथंभूतम् । सानुबंधं सपरिवारम् । शुचा शोकेनार्पितं व्याप्तं च ब्रह्मकुलं कर्तृ प्रदहति ॥ ४८ ॥ धर्म्यमित्यादयो वचसः षड्गुणाः पूर्वश्लोकषट्के द्रष्टव्याः । तत्र धर्म्यं धर्मादनपेतं मुच्यतां मुच्यतामिति । न्याय्यं न्यायादनपेतं सरहस्य इत्यादि । सकरुणं तस्यात्मनोऽर्धमिति । निर्व्यलीकं तद्धर्मज्ञेति समं मा रोदीदिति । दुःखसाम्योक्तेः । महद्यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् । एवंभूतं

नं सती ॥ मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥ सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ॥ अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥ स एष भगवान्द्रोणः प्रजारूपेण वर्तते ॥ तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥ तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम् ॥ वृजिनं नार्हति प्राप्तुं पूज्यं वंद्यमभीक्ष्णशः ॥ ४६ ॥ मारोदीदस्य जननी गौतमी पतिदेवता ॥ यथाऽहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥ यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ॥ तत्कुलं प्रदहत्याशु सानुबंधं शुचार्पितम् ॥ ४८ ॥ सूत उवाच ॥ धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ॥ राजा धर्मसुतो राज्ञ्याः प्रत्यनंदद्वचो द्विजाः ॥ ४९ ॥ नकुलः सहदेवश्च युयुधानो धनंजयः ॥ भगवान्देवकीपुत्रो ये चान्ये याश्च योषितः ॥ ५० ॥ तत्राहामर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः ॥ न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून्वृथा ॥ ५१ ॥ निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥ आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥ श्रीभगवानुवाच ॥ ब्रह्मबंधुर्न हंतव्य आततायी वधार्हणः ॥ मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥५३॥ कुरु प्रतिश्रुतं सत्यं यत्तत्सांत्वयता प्रियाम् ॥ प्रियं च भीमसेनस्य पांचाल्या मह्यमेव ॥ ५४ ॥ सूत उवाच ॥ अर्जुनः सहसाज्ञाय हरेर्हार्दमथासिना ॥ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥५५॥ विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ॥ तेजसा

राज्ञ्या वचो हे द्विजाः प्रत्यनंददनुमोदितवान् ॥ ४९ ॥ नकुलादयश्च प्रत्यनंदन् । युयुधानः सात्यकिः ॥ ५० ॥ तस्य तथाविधस्य द्रौणेर्वध एव श्रेष्ठः । अन्यथास्य नरकपातप्रसंगात् तदाह । न भर्तुरिति । अहन् जघान ॥ ५१ ॥ चतुर्भुजोक्तेरयं भावः । भीमे तं हंतुं प्रवृत्ते द्रौपद्यां च सहसा तन्निवारणे प्रवृत्तायामुभयोः संवरणायाविष्कृतचतुर्भुज इति । संदिहानस्य सख्युरर्जुनस्य ॥ ५२ ॥ वधार्हणो वधार्हः । मयैव शास्त्रकृता ब्रह्मणो न हंतव्यः । तथा । आततायिनमायांतमपि वेदांतपारगम् । जिघांसंतं जिघांसीयान्न तेन ब्रह्महा भवेदिति च वदता । तदुभयमप्यनुशासनं परिपालय ॥ ५३ ॥ तत्र च प्रतिज्ञां पूरयेत्याह । कुर्विति । प्रियां सांत्वयता त्वया यत्प्रतिश्रुतं हननं तच्च सत्यं कुरु प्रियं च कुरु । मह्यं मम । तत्र वधे भीमस्य प्रियं भवति अवधे द्रौपद्या द्वये श्रीकृष्णस्य ॥ ५४ ॥ हार्दमभिप्रायमाज्ञाय ज्ञात्वा न ह्यशक्यमुभयं विदध्यादतोऽस्यायमभिप्राय इति ज्ञात्वेत्यर्थः । असिना खड्गेन । मूर्धन्यं मूर्धनि जातम् । सहमूर्धजं सकेशम् ॥ ५५ ॥ म-

श्वरं इति बहिःस्थस्यापि प्रवेशघटनार्थमुक्तम् । कुरूणां तंतवे संतानाय । पांडवानामपि कुरुवंशजत्वादेवमुक्तम् ॥ १३॥१४ ॥ अमोघमप्रतिक्रियं च समशाम्यत् पंचास्त्रमासीत्॥१५॥एतद्ब्रह्मास्त्रशमनमाश्चर्यं मा मंस्था न मन्यस्व । इदं जगत् ॥ १६ ॥ कृष्णया सह ॥१७ ॥ त्वा त्वां नमस्ये नमस्करोमि । ननु कनिष्ठं मां कथं नमस्करोपि तत्राह । आद्यं पुरुषं कुतः प्रकृतेः परम् तत्कुतः ईश्वरं प्रकृतेरपि नियंतारम् । अत एव सर्वभूतानामंतर्बहिश्च पूर्णत्वेनावस्थितं तथाप्यलक्ष्यम् ॥ १८ ॥ तत्र हेतुः । मायैव जवनिका तिरस्करणी तयाच्छन्नं प्रतिच्छन्नम् । अतोऽहमज्ञा भक्तियोगानभिज्ञा केवलं नमस्यामि । अधोऽक्षजमिंद्रियजं ज्ञानं यस्मात्तम् । अव्ययमपरिच्छिन्नम् । तत्प्रपंचः । मूढदृशा देहाभिमानिना पुंसा न त्वं लक्ष्यसे ॥ १९ ॥ किंच परमहंसानामात्मानात्मविवेकिनां ततो मुनीनां मननशीलानामपि ततश्चामलात्मनां निवृत्तरागादीनामपि तथा तेन निजमहिम्ना न लक्ष्यसेऽतो भक्तियोगं विधातुं त्वां वयं स्त्रियः कथं हि पश्येम । यद्वा । परमहंसादीनामपि भक्तियोगविधानार्थं त्वामात्मारामाणामप्यचिंत्यनिजगुणैराकृष्य भक्तियोगं विधातुं कारयितुमवतीर्णमित्यर्थः ॥ २० ॥ ज्ञानभक्त्योरशक्यत्वमुक्त्वा पुनः केवलं नमस्करोति ।

रक्षां व्यधाद्विभुः ॥ १३ ॥ अंतस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ॥ स्वकाययावृणोद्गर्भं वैराट्याः कुरुतंतवे ॥ १४ ॥ यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम् ॥ वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह ॥ १५ ॥ मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ॥ य इदं मायया देव्या सृजत्यवति हंत्यजः ॥ १६ ॥ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया ॥ प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ १७ ॥ कुंत्युवाच ॥ नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेःपरम् ॥ अलक्ष्यं सर्वभूतानामंतर्बहिरवस्थितम् ॥ १८ ॥ मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ॥ न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ १९ ॥ तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ २० ॥ कृष्णाय वासुदेवाय देवकीनंदनाय च ॥ नंदगोपकुमाराय गोविंदाय नमो नमः ॥ २१ ॥ नमः पंकजनाभाय नमः पंकजमालिने ॥ नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥ २२ ॥ यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता ॥ विमोचिताऽहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥ २३ ॥ विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ॥ मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २४ ॥ विपदः संतु नः शश्वत्तत्र तत्र जगद्गुरो ॥ भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २५ ॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ॥ नैवार्हत्यभिधातुं वै

कृष्णायेति द्वाभ्याम् ॥ २१ ॥ पंकजं नाभौ यस्य पंकजानां मालाऽस्ति यस्य पंकजवत्प्रसन्ने नेत्रे यस्य पंकजांकितावंघ्री यस्य तस्मै ॥ २२ ॥ तत्कृतोपकाराननुस्मरति । यथेति द्वाभ्याम् । अयमर्थः । मातृतोऽपि मय्यधिका तव प्रीतिः । तथा हि । हे हृषीकेश ! यथा देवकी कंसेन रुद्धा त्वया विमोचिता अहं च तथैव किं विमोचितेति काक्वा महान्विशेष उक्तः । तं दर्शयति । साऽतिचिरं रुद्धा सती तस्मादेव सकृद्विमोचिता । तथा शुचार्पिता च सती । न च तस्याः पुत्राः रक्षिताः । अस्ति चान्यो नाथस्तस्याः । अहं तु विपद्गणात्तत्रापि मुहुः । शीघ्रं च सात्मजा च त्वयैव च नाथेनेति ॥२३॥ विपद्गणमेव दर्शयति । विषाद्भीमस्य विषमोदकदानात् । महाग्नेर्जतुगृहदाहात् । पुरुषादा हिडिंबादयो राक्षसास्तेषां दर्शनात् । असत्सभाया द्यूतस्थानात् । अभितो रक्षिता आस्म अभवाम ॥ २४ ॥ यत् यासु विपत्सु कीदृशं दर्शनं नास्ति पुनरपि भवदर्शनं यस्मात् ॥ २५ ॥ संपदस्तु श्रेयः परिपंथिन्य इत्याह । जन्म सत्कुले । जन्मादिभिरेधमानो

यस्मिंस्तत् ॥ ३६ ॥ इदानीं तवास्मत्परित्यागोऽनुचित इत्याशयेनाह । अयीति चतुर्भिः । हे प्रभो ! सुहृदोऽतिस्निग्धाननुजीविनश्च नोऽद्यापि स्वित्किंस्वित्त्वं जिहाससि येषामस्माकमन्यत्परायणं नैवास्ति । तत्कुतः । राजसु योजितमंहो दुःखं यैस्तेषां स्वानां कृतमहितमपेक्षितं येन तस्य संबोधनम् । विसर्गांतपाठे त्वंपदविशेषणम् ॥ ३७ ॥ ननु तव बंधवो यदवः पुत्राश्च पांडवाः शूराः समर्थाश्च तत्किं कार्पण्यं भाषसेऽत आह । के वयमिति । यर्हि भवतोऽदर्शनं यदा त्वमस्मान्न पश्यसि तदा नामरूपाभ्यां नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सहिताः पांडवा नाम के वयं न केऽपि । अतितुच्छा इत्यर्थः । हृषीकाणामिंद्रियाणामीशितुर्जीवस्यादर्शने यथा न किंचिन्नाम च रूपं च तद्वत् ॥ ३८ ॥ किंच यथेदानीमियमस्मत्पाल्या भूमिः स्वैरसाधारणैर्वज्रांकुशादिभिर्लक्षणैर्विलक्षितैश्चिह्नितैस्त्वत्पदैरंकिता सती भाति तत्र तदा त्वयि निर्गते सति न शोभिष्यते ॥ ३९ ॥ अपि चेमे जनपदा देशाः स्वृद्धाः सुसमृद्धाः संतः ॥ ४० ॥ गमने पांडवानामकुशलमगमने च यादवानामित्युभयतो व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते । अथेति । विश्वेशेत्यादिसंबोधनानि स्नेहपाशच्छेदे सामर्थ्यख्यापनाय । दृढं संतम् ॥ ४१ ॥ ततः

॥ ३७ ॥ के वयं नामरूपाभ्यां यदुभिः सह पांडवाः ॥ भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ३८ ॥ नेयं शोभिष्यते तत्र यथेदानीं गदाधर ॥ त्वत्पदैरंकिता भाति स्वलक्षणविलक्षितैः ॥ ३९ ॥ इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ॥ वनाद्रिनद्युदन्वंतो ह्येधंते तव वीक्षितैः ॥४०॥ अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे ॥ स्नेहपाशमिमं छिंधि दृढं पांडुषु वृष्णिषु ॥४१॥ त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ॥ रतिमुद्वहतादद्धा गंगेवौघमुदन्वति ॥ ४२ ॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥ ४३ ॥ सूत उवाच ॥ पृथयेत्थं कलपदैः परिणूताखिलोदयः ॥ मंदं जहास वैकुंठो मोहयन्निव मायया ॥ ४४ ॥ तां बाढमित्युपामंत्र्य प्रविश्य गजसाह्वयम् ॥ स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥ व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ॥ प्रबोधितोऽपीतिहासैर्नाबुद्ध्यत शुचार्पितः ॥४६॥ आह राजा धर्मसुतश्चिंतयन् सुहृदां वधम् ॥ प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥४७॥

किमत आह । त्वयीति । अनन्यविषया सती मे रतिमुद्वहतात् । अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः । ओघं पूरम् । यथा गंगा प्रतिबंधं न गणयत्येवं मतिरपि विघ्नान्मा गणयत्विति भावः ॥ ४२ ॥ एवमभ्यर्थ्य पुनः प्रणमति । हे श्रीकृष्ण ते नमः । उपकराननुस्मरंती बहुधा संबोधयति । कृष्णसखार्जुनस्य सखे । वृष्णीनामृषभ श्रेष्ठ । अवन्यै भूम्यै द्रुह्यंति ये राजन्यास्तेषां वंशस्य दहन । एवमप्यनपवर्गवीर्याक्षीणप्रभाव । गोविंद प्राप्तकामधेन्वैश्वर्य । गोद्विजसुराणामार्तिहरोऽवतारो यस्येति ॥ ४३ ॥ कलानि मधुराणि पदानि येषु तैर्वाक्यैः परिणूतः स्तुतोऽखिल उदयो महिमा यस्य सः । णु स्तुतावित्यस्मात् । परिणुतेति वक्तव्ये दीर्घश्छंदोऽनुरोधेन । मंदमीषत् । तस्य हास एव माया । वक्ष्यति हि । हासो जनोन्मादकरी च मायेति ॥ ४४ ॥ त्वयि मेऽनन्यविषया रतिरिति यत्प्रार्थितं तद्बाढमित्यंगीकृत्य रथस्थानाद्गजसाह्वयमागत्य पश्चात्तां चान्याश्च सुभद्राप्रमुखाः स्त्रिय उपामंत्र्यानुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णात्रैव किंचित्कालं निवसेति संप्रार्थ्य निवारितः । ॥ ४५ ॥ अथ भीष्मनिर्याणोत्सवं वक्तुमुपोद्घातकथां प्रस्तौति । व्यासाद्यैः प्रबोधितोऽपि शुचा व्याप्तः सन्नाबुद्ध्यत विवेकं न प्राप । कुतः । ईश्वरेहाया अज्ञैः स्वभक्तभीष्मनिर्याणमहोत्सवाय राज्ञा सह कुरुक्षेत्रं गंतव्यं तत्र तन्मुखेनैवायं प्रबोधनीय इतीश्वराभिप्रायः कार्यद्वयविधायकस्तमजानद्भिरित्यर्थः । श्रीकृष्णेनापि प्रबोधितो

भरतपुंगवं भीष्मम् ॥ ५ ॥ रेणुकासुतः परशुरामः ॥६॥७॥ ब्रह्मरातः शुकः आंगिरसो बृहस्पतिः ॥८॥ वसूत्तमो भीष्मः देशकालविभागविदित्युत्थातुमशक्यत्वाच्छयान एव मनसा वाचा च पूजयामासेत्यभिप्रायः ॥ ९ ॥ हृदिस्थं संतं पुरतश्चासीनं पूजयामास ॥१०॥ उपासीनान् समीप उपविष्टान् प्रश्रयो विनयः प्रेम स्नेहस्ताभ्यां संगतानुपसन्नान् । पाठांतरे ताभ्यामवनतान् । अभ्याचष्टाभ्यभाषत । अनुरागास्रैः स्नेहाश्रुभिरंधीभूतेन चक्षुषोपलक्षितो ददर्शेति वा ॥११॥ अभिभाषणमाह । अहो इत्येकादशभिः । हे धर्मनंदन ! क्लिष्टं यथा भवत्येवं जीवितुं नार्हथ यदेतदहो कष्टं जुगुप्सितम् । अहो अन्याय्यं चैतत् । यतो यूयं विप्रा धर्मोऽच्युतश्चाश्रयो येषां ते ॥ १२ ॥ किंच संस्थिते मृते बालाः प्रजाः पुत्रा यस्याः सा । वधूरिति दैन्यं दर्शितम् । तोकान्यपत्यानि तद्वती । अपत्यैः सह क्लेशान् प्राप्तेत्यर्थः ॥ १३ ॥ कालकृतत्वेन शोकं वारयति । सर्वमिति द्वाभ्याम् । भवतामपि । यद्वशे यस्य वशवर्ती ॥ १४ ॥ अहो दुर्घटघटनापटुः काल इत्याह । यत्रेति । कृष्णोऽर्जुनः । अस्त्री धन्वी । ततस्तत्रापि विपत् ! पुण्यशारीरबलास्त्रनैपुणशस्त्रदेवसंपत्तावपीत्यर्थः ॥ १५ ॥ ननु कृष्णं कथं कालोऽतिक्रमेदित्यपेक्षायामाह । न ह्यस्य

मदोऽसितः ॥ कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥ अन्ये च मुनयो ब्रह्मन् ब्रह्मरातादयोऽमलाः ॥ शिष्यैरुपेता आजग्मुः कश्यपांगिरसादयः ॥ ८ ॥ तान्समेतान्महाभागानुपलभ्य वसूत्तमः ॥ पूजयामास धर्मज्ञो देशकालविभागवित् ॥९ ॥ कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ॥ हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥१०॥ पांडुपुत्रानुपासीनान्प्रश्रयप्रेमसंगतान् ॥ अभ्याचष्टानुरागास्रैरंधीभूतेन चक्षुषा ॥ ११ ॥ अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनंदनाः ॥ जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥ संस्थितेऽतिरथे पांडौ पृथा बालप्रजा वधूः ॥ युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः ॥ १३ ॥ सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥ सपालो यद्वशे लोको वायोरिव घनावलिः ॥ १४ ॥ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्री गांडिवं चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥ न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ॥ यद्विजिज्ञासया युक्ता मुह्यंति कवयोऽपि हि ॥ १६ ॥ तस्मादिदं दैवतंत्रं व्यवस्य भरतर्षभ ॥ तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥ १७ ॥ एष वै भगवान् साक्षादाद्यो नारायणः पुमान् ॥ मोहयन्मायया लोकं गूढश्चरति वृष्णिषु ॥ १८ ॥ अस्यानुभावं भगवान् वेद गुह्यतमं शिवः ॥ देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥ १९ ॥ यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ॥ अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २० ॥ सर्वात्मनः समदृशो ह्यद्वयस्यानहंकृतेः ॥ तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ २१ ॥ तथाऽप्येकांत-

श्रीकृष्णस्येत्यंगुल्या निर्दिशति । विधित्सितं कर्तुमिष्टम् । यत् यस्य विधित्सितस्य जिज्ञासया ॥ १६ ॥ इदं सुखादि दैवतंत्रमीश्वराधीनं व्यवस्य निश्चित्य तस्येश्वरस्यानुविहितोऽनुवर्ती सन् । कर्तरि क्तः । हे नाथ कुलपरंपरागत स्वामिन् प्रभो समर्थानाथाः प्रजाः पाहि ॥ १७ ॥ अनुविधेयः परमेश्वरश्च श्रीकृष्ण एवेत्याह । एष एव भगवान्सर्वेश्वरः । यत आद्यः पुमान् । तच्च कुतः । यतो नारायणः साक्षात् ॥ १८ ॥ तदुपपादयति । अस्येति । अनुभावं प्रभावम् ॥ १९ ॥ त्वमज्ञानाद्यमेवं मन्यसे । मातुलेयं देवक्याः सुतम् । प्रियं प्रीतिविषयम् । मित्रं प्रीतिकर्तारम् । सुहृत्तममुपकारानपेक्ष्योपकारकं च । सौहृदाद्विश्वासात् । अकरोः कृतवानसि । सचिवं मंत्रिणम् ॥ २० ॥ नन्वीश्वरश्चेत्कथं नीचे सारथ्यादौ प्रवृत्तस्तत्राह । सर्वेति । तत्कृतं नीचो-

श्यामेकमेव कमनीयं यत्तद्वपुर्दधाने रतिर्मेऽस्तु । कथंभूतं वपुः । तमालवन्नीलो वर्णो यस्य तत् । प्रातःकालीना रवेः करा इव स्वत एव गौरे पीतवरे निर्मले चांबरे यस्मिंस्तत् । अलकङ्कुलैरुपर्यावृतमाननाब्जं यस्मिंस्तत् । विजयसखे पार्थसारथौ । अनवद्याऽहैतुकी फलाभिसंधिरहिता रतिरस्तु ॥३३॥ विजयसखित्वमेवानुवर्णयन् रतिं प्रार्थयते । युधि युद्धे तुरगाणां खुररजस्तुरगरजस्तेन विधूम्रा धूसरास्ते च ते विष्वं च इतस्ततश्चलंतः कचाः कुंतलास्तैर्लुलितं विकीर्णं श्रमवारि स्वेदबिंदुरूपं तेन भक्तवात्सल्यद्योतकेनालंकृतमास्यं यस्य तस्मिन् श्रीकृष्णे ममात्मा मनोऽस्तु रमतामित्यर्थः । पुनः किंभूते । मदीयैर्निशितैस्तीक्ष्णैः शरैर्भिद्यमाना त्वग्यस्य तस्मिन् । शरैरेव विलसत्त्रुट्यत्कवचं यस्य तस्मिन् ॥ ३४ ॥ किंच । सपदीति । सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितानिति सख्युरर्जुनस्य वचो निशम्य सपदि तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये रथं निवेश्य स्थिते पार्थसखे मम रतिरस्तु । तत्र स्थित्वा कृतं सख्यं दर्शयति । परस्य दुर्योधनस्य सैनिकानामायुरक्ष्णा कालदृष्ट्या हृतवति । असौ द्रोणोऽसौ भीष्मोऽसौ कर्ण इति तत्तत्प्रदर्शनव्याजेन दृष्ट्यैव सर्वेषामायुराकृष्यार्जुनस्य जयं कृतवति ॥ ३५ ॥ न केवलमर्जुनस्य सपत्नायुर्हरणेनैष जयमावहत्किंत्वविद्याहरणेनापीत्याह । व्यवहिता दूरे स्थिता या पृतना सेना तस्या मुखमिव मुखमग्रे स्थितान्भीष्मादीन्निरीक्ष्येत्यर्थः ।

विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥ युधितुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ॥ मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३४ ॥ सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ॥ स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममाऽस्तु ॥ ३५ ॥ व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ॥ कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥ स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ॥ धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हंतुमिभं गतोत्तरीयः ॥३७॥ शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ॥ प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुंदः ॥३८॥ विजयरथकुटुंब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ॥ भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः सरूपम् ॥ ३९ ॥ ललितगतिविलासवल्गु-

स्वजनवधाद्विमुखस्य निवृत्तस्य । तदुक्तं गीतासु । एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंविग्नमानस इति । कुमतिमहं हंतेत्यादिकुबुद्धिम् ॥ ३६ ॥ मम तु महांतमनुग्रहं कृतवानित्याह द्वाभ्याम् । स्वनिगममशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्येवंभूतां स्वप्रतिज्ञां हित्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीत्येवंरूपां मत्प्रतिज्ञामृतं सत्यं यथा भवति तथा अधि अधिकां कर्तुं यो रथस्थः सहसैवावतीर्णः सन् योऽभ्ययादभिमुखमधावत् । इभं हंतुं हरिः सिंह इव किंभूतः । धृतो रथचरणश्चक्रं येन सः तदा च संरंभेण मानुष्यनाट्यविस्मृतेरुदरस्थसर्वभूतभुवनभारेण प्रतिपदं चलद्गुश्चलंती गौः पृथ्वी यस्मात्सः । तेनैव संरंभेण पथि गतं पतितमुत्तरीयं वस्त्रं यस्य स मुकुंदो मे गतिर्भवत्वित्युत्तरेणान्वयः ॥३७॥ एवं यदाभ्ययात्तदा स्मयमानस्याततायिनो धन्विनो मे शितैस्तीक्ष्णैर्विशिखैर्हतोऽतो विशीर्णदंशो विध्वस्तकवचः क्षतजेन रुधिरेण परिप्लुतो व्याप्तः सन्प्रसभं बलाद्वारयंतमर्जुनमप्यतिक्रम्य मद्वधार्थमभिससाराभिमुखं जगाम। एवं यो लोकप्रतीत्याऽर्जुनपक्षपातीव लक्षितो वस्तुतस्तु ममैवानुग्रहं कृतवान्यन्मद्भक्तेनोक्तं वचो मा मृषास्त्विति । स भगवान्मे गतिर्भवत्वित्यर्थः ॥ ३८ ॥ तदेवमन्यायैरपि भृत्यरक्षाव्यग्रे कृष्णे रतिमाशास्ते । विजयोऽर्जुनस्तस्य रथ एव कुटुंबमकृत्यशतैरपि रक्षणीयो यस्य तस्मिन् आत्तं तोत्रं प्रतोदो येन तस्मिन् । धृताश्च ते हयानां रश्मयः प्रग्रहास्ते संति यस्य तस्मिन् । त्रीह्यादिभ्य-

प्रत्यवरुद्धभोजनो बंधुवधदुःखेन संकुचितभोगो राज्यलाभेन प्राप्तभोगो वा। कथं राज्ये प्रवृत्तः प्रवृत्ता वा ततः किमकार्षीत् ॥ १ ॥ राज्यप्रवृत्तौ श्रीकृष्णस्य प्रीतिं पर्यालोच्य प्रवृत्त इत्याशयेनोत्तरमाह। वंशं कुरोः संरोहयित्वा परीक्षिद्रक्षणेन संरोहांकुरितं कृत्वा। कथंभूतं। वंशदवाग्निनिर्हृतं वंश एव दवो वनं तस्मादुद्भूतो यः क्रोधरूपोऽग्निस्तेन निर्हृतं दग्धम्। निजराज्ये निवेश्य च ॥ २ ॥ प्रवृत्तौ हेतुमुक्त्वा किमकार्षीदित्यस्योत्तरमाह। प्रवृत्तं विज्ञानं परमेश्वराधीनं जगन्न स्वतंत्रमित्येवंभूतं तेन विधूतो विभ्रमोऽहंकर्तेत्येवंभूतो मोहो यस्य सः। अनुजैरनुवर्तितः सेवितः सन्। अजितः श्रीकृष्ण एवाश्रयो यस्य सः। परिधिः समुद्रस्तत्पर्यंतां गां पृथ्वीं पालयामास ॥३॥ तस्य राज्यमनुवर्णयति। काममिति त्रिभिः। मही सर्वकामदोग्ध्री बभूव। व्रजान् गोष्ठानि। ऊधस्वतीरूधस्वत्यः ऊधः क्षीराशयस्तद्वत्यः। स्थूलोधस इत्यर्थः। सिषिचुरभ्यषिंचन् ॥ ४ ॥ अन्वृतु ऋतावृतौ ॥ ५ ॥ आधयो मनोव्यथाः। व्याधयो रोगाः। क्लेशाः शीतोष्णादिकृताः। दैवं च भूतानि चात्मा च हेतुर्येषामाधिदैविकादीनां ते जंतूनां नाभवन् ॥ ६ ॥ इदानीं द्वारकागमनं निरूपयितुमाह। उषित्वेति। स्वसुः सुभद्रायाः ॥ ७ ॥ तं युधिष्ठिरम् ॥ ८ ॥

उवाच ॥ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः ॥ निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥ २ ॥ निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः ॥ शशास गामिंद्र इवाजिताश्रयः परिध्युपांतामनुजानुवर्तितः ॥ ३ ॥ कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ॥ सिषिचुः स्म व्रजान्गावः पयसोधस्वतीर्मुदा ॥ ४ ॥ नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ॥ फलंत्योषधयः सर्वाः काममन्वृतु तस्य वै ॥ ५ ॥ नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ॥ अजातशत्राववभवन् जंतूनां राज्ञि कर्हिचित् ॥ ६ ॥ उषित्वा हास्तिनपुरे मासान्कतिपयान् हरिः ॥ सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥ आमंत्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ॥ आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥ सुभद्रा द्रौपदी कुंती विराटतनया तथा ॥ गांधारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥ ९ ॥ वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ॥ न सेहिरे विमुह्यंतो विरहं शार्ङ्गधन्वनः ॥ १० ॥ सत्संगान्मुक्तदुःसंगो हातुं नोत्सहते बुधः ॥ कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ ११ ॥ तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम् ॥ दर्शनस्पर्शसंलापशयनासनभोजनैः ॥ १२ ॥ सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ॥ वीक्षंतः स्नेहसंबद्धा विचेलुस्तत्र तत्र ह ॥ १३ ॥ न्यरुंधन्नुद्गलद्बाष्पमौत्कंठ्याद्देवकीसुते ॥ निर्यात्यगारान्नोऽभद्रमिति

युयुत्सुर्धृतराष्ट्राद्वैश्यायां जातः। गौतमः कृपः यमौ नकुलसहदेवौ ॥ ९ ॥ अन्याश्च स्त्रियः। मत्स्यसुतोत्तरा तस्याः पुनर्ग्रहणं गर्भरक्षककृष्णविरहे मोहाधिक्यात्। यद्वा मत्स्यसुता सत्यवती ॥ १० ॥ तेषां कृष्णविरहासहनं कैमुत्यन्यायेनाह। सत्संगादिति द्वाभ्याम्। सतां संगाद्धेतोर्मुक्तः पुत्रादिविषयो दुःसंगो येन सः। सद्भिः कीर्त्यमानं रुचिकरं यस्य यशः सकृदप्याकर्ण्य सत्संगं त्यक्तुं न शक्नोति ॥ ११ ॥ दर्शनादिभिस्तस्मिन् श्रीकृष्णे न्यस्ता अध्यस्ता धीर्येषां ते ॥ १२ ॥ अत एवानिमिषैर्नेत्रैस्तमेव वीक्षमाणास्तत्र तत्राहरणानयनाद्यर्थं चलंति स्म। यतः स्नेहेन सम्यग्बद्धाः। अत एव तमनुद्रुतानि गतानि चेतांसि येषां ते ॥ १३ ॥ अगारान्निर्याति निर्गच्छति सति। औत्कंठ्यादासक्त्यतिशयाद्धेतोरुद्गलत्स्रवद्बाष्पमश्रु न्यरुंधन्नेत्रेष्वेव स्तंभितवत्यः।

तसत्कथः अनुगीताः सत्यः कथा यस्य स एवायम् । गानप्रकारमाहुः । य एक ईश इत्यादि ॥ २४ ॥ एवंभूतस्य नानावतारे कारणमाहुः । यदा हीति तमोव्याप्ता धीर्येषां ते नृपा यदाधर्मेण जीवंति केवलं प्राणान्पुष्णंति तत्र तदैष एव भवाय स्थित्यै सत्त्वतो विशुद्धसत्त्वेन रूपाणि दधद्भगादीनि धत्ते प्रकटयति । युगे युगे तत्तदवसरे । भगमैश्वर्यम् । सत्यं सत्यप्रतिज्ञत्वम् । ऋतं यथार्थोपदेशकत्वम् । दयां भक्तकृपाम् । यशोऽद्भुतकर्मत्वम् ॥ २५ ॥ विशेषतः श्रीकृष्णावतारसौभाग्यं वर्णयंति । अहो इति पंचभिः । यद्यस्मादेष पुरुषोत्तमः श्रियः पतिः स्वजन्मना यदोः कुलमंचति पूजयति सत्करोति । अतः श्लाघ्यतमं तत् । चंक्रमणेन च मधोर्वनं मथुरां सत्करोत्यतस्तत्पुण्यतममिति । तमवयवस्यात्यर्थतातिशयेऽलमिति । तत्राप्याश्चर्ये अहो इत्युक्तम् ॥ २६ ॥ द्वारकां श्लाघंते । अहोबतात्याश्चर्यम् । किं तत् । कुशस्थली द्वारका । स्वर्ग उत्कृष्ट इति यद्यशस्तस्य तिरस्करी परिभवकर्त्री । भुवश्च पुण्ययशःकर्त्री भवति यद्यतो यत्रत्याः सर्वाः प्रजाः स्वानुग्रहेणेषितं प्रेषितम् । स्मितपूर्वकोऽवलोको यस्य तम् । यद्वाऽनुग्रहार्थमिषितमिष्टम् । अनुग्रहोषितमिति पाठे स्वानुग्रहार्थमुषितं कृतनिवासम् । ऐकपद्यपाठे त्वनुग्रहेणेषितं प्रेषितं यस्मिंस्तं तत्पूर्वकोऽवलोको यस्य तम् । स्वस्यात्मनः पतिं श्रीकृष्णं न तु पित्रादिवद्देहमात्रपतिं नित्यं पश्यंति स्म । नैतत्स्वर्गेऽस्तीत्यर्थः ॥२७॥ हे सखि ! अस्य गृहीतपाणिभिः पत्नीभिरीश्वरोऽयमेव नूनं जन्मांतरेषु समर्चितः । यस्मिन्नधरामृते आशयश्चित्तं यासां ताः । संमोहं प्राप्ता इति मनोहरत्वमुक्तम् ॥ २८ ॥ एतत्प्रपंचयंति । या इति द्वाभ्याम् । वीर्यं प्रभाव एव शुल्कं मूल्यं तेन शुष्मिणो बलिष्ठान् । प्रद्युम्नश्च सांबश्चांबश्च सुता यासां रुक्मिणीजांबवतीनाग्नजितीनां या आदिर्यासां सत्यभामादीनां ताः । याश्चापराः । अस्य श्लोकस्योत्तरश्लोकेनान्वयः ॥ २९ ॥ एताः स्त्रीत्वमेव परं केवलं साधु शोभनं कुर्वते । किंभूतम् । अपास्तं गतं पेशलं भद्रं स्वातंत्र्यं यस्मात्तत् । निरस्तं शौचं शुचित्वं यस्मात्तथाभूतमपि जातु कदाचिदपि नापैति न निर्गच्छति । व्याहृतिभिर्व्याहारैः । यद्वा । पारिजातादिप्रियवस्त्वाहरणैः । हृदि स्पृशन्नानंदयन् ॥ ३० ॥ एवंविधा विचित्रा गिरः सस्मितेन निरीक्षणेनाभिनंदन् स हरिर्ययौ ॥ ३१ ॥ मधुद्विषोऽपि गोपीथाय रक्षणाय स्नेहात्परेभ्यः शत्रुभ्यः शंकितः सन् प्रायुंक्त । हस्त्यश्वरथपादातं सेनांगं स्याच्चतुर्विधमित्येवं चतुरंगिणीम् पृतनां सेनाम् ॥ ३२ ॥ पांडोः कुरुवंशजत्वात्पांडवा अपि कौरवा एव तान् ।

सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ॥ य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥२४॥ यदा ह्यधर्मेण तमोधियो नृपा जीवंति तत्रैष हि सत्त्वतः किल ॥ धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥ २५ ॥ अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम् ॥ यदेष पुंसामृषभः श्रियः प्रियः स्वजन्मना चंक्रमणेन चांचति ॥ २६ ॥ अहो वत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ॥ पश्यंति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥ नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ॥ पिबंति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदाशयाः ॥ २८ ॥ या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान् हि शुष्मिणः ॥ प्रद्युम्नसांबांबसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः ॥ २९ ॥ एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं वत साधु कुर्वते ॥ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ ३० ॥ एवंविधा गदंतीनां स गिरः पुरयोषिताम् ॥ निरीक्षणेनाभिनंदन् सस्मितेन ययौ हरिः ॥ ३१ ॥ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥ परेभ्यः शंकितः स्नेहात्प्रायुंक्त चतुरंगिणीम् ॥ ३२ ॥ अथ दूग-

कृतार्थत्वमेवाहुः । अहो भवता वयं सनाथाः स्म । यद्यस्मात्तव रूपं पश्येम । त्रैविष्टपानामपि दूरे दर्शनं यस्य तत् । देवानामपि दुर्लभदर्शनमित्यर्थः । ॥ ८ ॥ यस्मिन्नस्तदाननं यस्मिंस्तद्रूपम् सर्वेषु चांगेषु सौभगं यस्मिंस्तत् ॥ ८ ॥ अर्भका इव सकरुणमाहुः । यर्हि यदा । भो अंबुजाक्ष । नो भवानिति पाठे न इत्यनादरे षष्ठी । अस्माननादृत्यापस-
सारापहाय जगाम । कुरून्हस्तिनापुरम् । मधून्मथुरां वा । तत्र तदा रविं विना आंध्यादक्ष्णोर्यथैकोऽपि क्षणोऽब्दकोटिप्रतिमो भवेदेवं तव नस्त्वदीयानामस्माकमपीत्यर्थः ॥ ९ ॥ इति चैवंविधा
अन्याश्चोचारिता वाचः शृण्वन् दृष्ट्या सानंदनावलोकेनानुग्रहं कुर्वन् पुरीं द्वारकां प्राविशत् ॥ १० ॥ तां द्वारकां स्तौति पंचभिः । स्वतुल्यबलैर्मधुभोजादिभिर्गुप्तां रक्षिताम् ॥ ११ ॥ सर्वेष्वृतुषु
सर्वे विभवाः पुष्पादिसंपदो येषां ते पुण्यवृक्षा लताश्रमा लतामंडपाश्च येषु तैरुद्यानादिभिर्वृता ये पद्माकराः सरांसि तैः श्रीः शोभा यस्यां ताम् । उद्यानं फलप्रधानम् । उपवनं पुष्पप्रधानम् ।
आरामः क्रीडार्थं वनम् ॥ १२ ॥ गोपुरं पुरद्वारम् । द्वारं गृहद्वारम् । कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां ताम् । गरुडादिचिह्नांकिता ध्वजाः जयप्रदर्शनांकिताः पताकाः । चित्राणां

यर्ह्यंबुजाक्षापससार भो भवान्कुरून्मधून्वाऽथ सुहृद्दिदृक्षया ॥ तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाऽक्ष्णोरिव नस्तवाच्युत ॥ ९ ॥ इति चोदी-
रिता वाचः प्रजानां भक्तवत्सलः ॥ शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ १० ॥ मधुभोजदशार्हार्हकुकुरांधकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तां
नागैर्भोगवतीमिव ॥ ११ ॥ सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतपद्माकरश्रियम् ॥ १२ ॥ गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ॥
चित्रध्वजपताकाग्रैरंतः प्रतिहतातपाम् ॥ १३ ॥ संमार्जितमहामार्गरथ्यापणकचत्वराम् ॥ सिक्तां गंधजलैरुप्तां फलपुष्पाक्षतांकुरैः ॥ १४ ॥ द्वारि द्वारि
गृहाणां च दध्यक्षतफलेक्षुभिः ॥ अलंकृतां पूर्णकुंभैर्बलिभिर्धूपदीपकैः ॥ १५ ॥ निशम्य प्रेष्ठमायांतं वसुदेवो महामनाः ॥ अक्रूरश्चोग्रसेनश्च रामश्चाद्भुत-
विक्रमः ॥ १६ ॥ प्रद्युम्नश्चारुदेष्णश्च सांबो जांबवतीसुतः ॥ प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ॥ १७ ॥ वारणेंद्रं पुरस्कृत्य ब्राह्मणैः ससुमंगलैः ॥
शंखतूर्यनिनादेन ब्रह्मघोषेण चादृताः ॥ १८ ॥ प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः ॥ वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ॥ लस-
त्कुंडलनिर्भातकपोलवदनश्रियः ॥ १९ ॥ नटनर्तकगंधर्वाः सूतमागधवंदिनः ॥ गायंति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ २० ॥ भगवांस्तत्र

ध्वजापताकानामग्रैरंतः प्रतिहत आतपो यस्यां ताम् ॥ १३ ॥ संमार्जितानि निःसारितरजस्कानि महामार्गादीनि यस्यां ताम् । महामार्गा राजमार्गाः रथ्या इतरमार्गाः । आपणकाः पण्यवीथयः चत्वराण्यं-
गणानि । फलादिभिरुप्तामवकीर्णाम् ॥ १४ ॥ १५ ॥ प्रेष्ठमंतरात्मानमायांतं निशम्य श्रुत्वा वसुदेवादयः प्रत्युज्जग्मुरिति चतुर्थेनान्वयः ॥ १६ ॥ प्रहर्षवेगेनोच्छ्वसितान्युल्लंघितानि शयनादीनि यैस्ते ।
शश प्लुतगतौ ॥ १७ ॥ वारणेंद्रं मंगलार्थं पुरतः कृत्वा । ससुमंगलैः ससुमंगलं पुष्पादि तद्युक्तपाणिभिः । ब्रह्मघोषो मंत्रपाठः ॥ १८ ॥ प्रणयेन स्नेहेनागतं साध्वसं संभ्रमो येषां ते । वारमुख्या
नटादयश्च प्रत्युज्जग्मुः । लसत्कुण्डलैर्निर्भातानि यानि कपोलानि तैर्वदनेषु श्रीः शोभा यासां ताः । वारमुख्या नर्तक्यो वेश्या इति यावत् ॥ १९ ॥ अद्भुतानि चेति चकारस्य वंदिनश्चेत्यन्वयः ।
नटा नवरसाभिनयचतुराः । तालाद्यनुसारेण नृत्यंतो नर्तकाः । गंधर्वा गायकाः । सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥ ते सर्वे गायंति

हेतुः । दुरंतभावा गंभीराभिप्रायाः । तदा च तासां नेत्रयोर्निरुद्धमप्यंबु बाष्पं वैक्लव्याद्वैवश्यादास्रवदीषत्सुस्राव । अत एव धैर्यहान्या विलज्जतीनाम् । हे भृगुवर्य चित्रं सूचितं ॥ ३२ ॥ पार्श्वगतः समीपस्थस्तत्रापि रहोगत एकांते प्रवर्तते स्म । पदे पदे प्रतिक्षणं नवं नवमेव । अत्र कैमुत्यन्यायः का विरमेतेति । चला चंचलस्वभावापि ॥ ३३ ॥ उक्तं श्रीकृष्णचरितं [illegible] एवमिति द्वाभ्याम् । क्षितेर्भाराय जन्म येषाम् । अक्षौहिणीभिः करणैः परिवृत्तं सर्वतः प्रसृतं तेजः प्रभावो येषाम् । श्वसनो वायुर्वेणूनामन्योन्यसंघर्षेणानलं विधाय मिथोवधेन [illegible] तद्वत् ॥ ३४ ॥ स्त्रीरत्नकूटस्थ उत्तमस्त्रीकदंबस्थः ॥ ३५ ॥ नन्वेवं स्त्रीसंगादिभिः संसारप्रतीतेः कथं भगवानवतार इत्युच्यते तत्राह । उद्दामेति द्वाभ्याम् । [illegible] प्रायस्तस्य पिशुनः सूचकोऽमलो वल्गुः सुंदरो हासो व्रीडावलोकश्च ताभ्यां निहतोऽमदनः श्रीमहादेवोपि संमुह्य तल्लज्जया चापं पिनाकमजहात् । [illegible] यद्वा । भगवतो मोहिनीरूपेण महेशोपि मोहित एवमेताश्च तादृग्विलासा एवेति तथोक्तम् । ताः कुहकैः कपटैर्विभ्रमैर्यस्येंद्रियं मनो विमथितुं क्षोभयितुं न शेकुर्न शक्ताः । अथवा [illegible]

परिरेभिरे पतिम् ॥ निरुद्धमप्यास्रवदंबु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ३२ ॥ यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि [illegible] नवं नवम् ॥ पदे पदे का विरमेत तत्पदाच्चलापि यच्छ्रीर्न जहाति कर्हिचित् ॥ ३३ ॥ एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् । विधाय वैरं श्वसनो यथानलं मिथो वधेनोपरतो निरायुधः ॥ ३४ ॥ स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ॥ रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥ ३५ ॥ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम् ॥ संमुह्य चापमजहात्प्रमदोत्तमास्ता यस्येंद्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥ तमयं मन्यते लोको ह्यसंगमपि संगिनम् ॥ आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३७ ॥ एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ॥ न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ ३८ ॥ तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः ॥ अप्रमाणविदो [illegible] ईश्वरं मतयो यथा ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे श्रीकृष्णद्वारकाप्रवेशो नामैकादशोऽध्यायः ॥ ११ ॥ ॥ शौनक उवाच ॥ अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तराया हतो गर्भ ईशेनाजीवितः पुनः ॥ १ ॥ तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः । [illegible]

मदनोऽपि जगद्विजयी संमुह्य तत्तत्कर्तव्यतामूढः संश्चापं धनुर्लज्जयाऽजहाज्जहौ ताश्च प्रमदोत्तमाः कामविजयिन्योऽपीत्यादि पूर्ववत् ॥ ३६ ॥ तं श्रीकृष्णमयं प्राकृतो लोकः [illegible] दृश्येव संगिनं मनुजं मन्यते । अत्र हेतुः । व्यापृण्वानं व्याप्रियमाणम् । यतोऽयमबुधोऽतत्त्वज्ञः ॥ ३७ ॥ कुत इत्यपेक्षायामैश्वर्यलक्षणमाह । एतदिति । ईशनमैश्वर्यं [illegible] तत् । प्रकृतिस्थोऽपि तस्या गुणैः सुखदुःखादिभिः सदा न युज्यत इति यत् । यथात्मस्थैरानंदादिभिस्तदाश्रयापि बुद्धिर्न युज्यते तद्वत् । वैधर्म्ये दृष्टांतो वा । [illegible] यथा बुद्धिर्युज्यत इति । एवं वा । अन्यदात्मा देहस्तत्रस्थैर्गुणैस्तदाश्रया बुद्धिस्तद्गुणाभिर्जीवो यथा युज्यत एवं प्रकृतिस्थोऽपि तद्गुणैर्न युज्यत इति सर्वतोऽपीशस्येशनमिति ॥ ३८ ॥ [illegible] तस्य तत्त्वं न जानंतीत्याह । तं स्त्रैणमात्मवश्यं रह एकांतेऽनुव्रतमनुसृतं च मेनिरे । सतु प्रमाणविदः प्रमाणमियत्तां महिमानमजानंत्य इत्यर्थः । ईश्वरं [illegible] धीनं स्वधर्मयोगिनं मन्यंते तद्वत् । यद्वा । यथा यथा तासां मतयः कल्पनास्तथा तथा तमीश्वरं स्त्रैणादिरूपं मेनिर इत्यर्थः ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायामेका-

पूर्वं प्रादात् । आमान्नं वा । प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले । पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयमिति स्मृतेः । देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयांति हि नृपश्रेष्ठ पुण्याहमिति चाब्रुवन्निति च ॥ १४ ॥ हे पौरवर्षभ ! पूरूणां पूरुवंश्यानां शुक्ले शुद्धेऽस्मिन्प्रजातंतौ दैवेन कथंभूतेनाऽप्रतिघातेन दुर्वारेण संस्थां नाशमुपेयुषि गते सति वोऽनुग्रहार्थाय यस्मात्प्रभवनशीलेन श्रीविष्णुना रातो दत्तस्तस्माल्लोके विष्णुरात इति नाम्ना भविष्यति महाभागवतश्च गुणैश्च महान् भविष्यति नात्र संदेह इति तं राजानं ब्राह्मणा ऊचुरिति त्रयाणामन्वयः ॥ १५ ॥ १६ ॥ ॥ १७ ॥ महाभागवतो भविष्यतीत्युक्ते हृष्टः पृच्छति । अपिस्वित्किंस्वित् । साधुवादेन यशसा सत्कीर्त्या चानुवर्तिता भविष्यतीति पूर्वस्यैवातः परमप्यनुषंगः ॥ १८ ॥ प्रजानामविता रक्षकः । मानवो मनोः पुत्रः । ब्राह्मण्येषु हितः सत्यप्रतिज्ञश्च श्रीरामो यथा ॥ १९ ॥ उशीनरदेशाधिपतिः शिबिर्येन स्वमांसं श्येनाय दत्त्वा शरणागतः कपोतो रक्षितः । स्वानां ज्ञातीनां यज्वनां

नृपतिर्वरान् ॥ प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥ तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयान्वितम् ॥ एष ह्यस्मिन्प्रजातंतौ पूरूणां पौरवर्षभ ॥ १५ ॥ दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ॥ रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥ तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ॥ भविष्यति न संदेहो महाभागवतो महान् ॥ १७ ॥ युधिष्ठिर उवाच ॥ अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः ॥ अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥ ब्राह्मणा ऊचुः ॥ पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ॥ ब्रह्मण्यः सत्यसंधश्च रामो दाशरथिर्यथा ॥ १९ ॥ एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ॥ यशो वितनिता स्वानां दौष्यंतिरिव यज्वनाम् ॥ २० ॥ धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः ॥ हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥ मृगेंद्र इव विक्रांतो निषेव्यो हिमवानिव ॥ तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥ पितामहसमः साम्ये प्रसादे गिरिशोपमः ॥ आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥ सर्वसद्गुणमाहात्म्य एष कृष्णमनुव्रतः ॥ रंतिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥ धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ॥ आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥ राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ॥ निग्रहीता कलेरेष भुवो धर्मस्य कारणात् ॥ २६ ॥ तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ॥ प्रपत्स्यत उपश्रुत्य मुक्तसंगः पदं हरेः ॥ २७ ॥ जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ॥ हित्वेदं नृप गंगायां यास्यत्यद्धाकुतोभयम् ॥ २८ ॥ इति राज्ञ उपादिश्य विप्रा जातककोविदाः ॥ लब्धोपचितयः सर्वे प्रतिजग्मुः स्वकान्गृहान् ॥ २९ ॥ स एष लोकविख्यातः

च यशोविस्तारको दौष्यंतिर्भरत इव ॥ २० ॥ अर्जुनयोः पार्थकार्तवीर्ययोः ॥ २१ ॥ हिमवानिव सतां निषेव्योऽनन्यगतिकत्वेन । वसुधेव तितिक्षुः क्षंता । प्रीत्या मातापितराविव सहिष्णुः ॥ २२ ॥ पितामहो ब्रह्मा तेन समः । साम्ये समत्वे । रमाश्रयो हरिः ॥ २३ ॥ सर्वैः सद्गुणैर्माहात्म्यं यत्तस्मिन् श्रीकृष्णतुल्यः ॥ २४ ॥ धृत्या धैर्येण । सद्ग्रहः सन्नग्रहो ग्रहोऽभिनिवेशो यस्य सः । आहर्ता कर्ता ॥ २५ ॥ राजर्षीणां जनमेजयादीनाम् ॥ २६ ॥ द्विजपुत्रेण प्रेरितात्तक्षकादात्मनो मृत्युमुपश्रुत्य विरक्तः सन्हरेः पदं प्रपत्स्यते भजिष्यति ॥ २७ ॥ ततश्च जिज्ञासितमात्मनो याथात्म्यं येन सः । इदं शरीरं गंगायां हित्वाऽकुतोभयं पदं यास्यति । अद्धा निश्चयेन ॥ २८ ॥ लब्धापचितिः पूजा यैस्ते ॥ २९ ॥ परीक्षिदिति नाम निर्वक्ति । स एष इति । यद्य-

मुषितो वंचितोऽस्मीति ॥ ३६ ॥ एवं कंचित्कालं शोचति तस्मिन्नथ नारद आजगाम । अत्रास्ति क्वचित्पुस्तके पाठांतरं तदुल्लंघ्य यथासंप्रदायं व्याख्यायते । शोकवेगादभ्यर्चयन्निवाह राजा न त्वभ्यर्चयत् ॥३७॥ नाहं वेद वेद्मि । तपस्विनी दुःखयुक्ता । अपारे शोकार्णवे भगवांस्त्वमेव पारदर्शकः । अतो ब्रूहीति शेषः ॥३८॥ आदादेव यथावृत्तकथने शोकेन मूर्छितः पतेदिति प्रथमं तावच्छोकमुपशमयति । कंचन मा शुचो मा शोचः । न केवलं तानेव । यद्यस्मादीश्वराधीनं जगत् ॥३९॥ तदेवाह । लोका इति । संयुनक्ति संयोजयति वियुनक्ति वियोजयति च ॥४०॥ गावो बलीवर्दा नसि नासिकायां प्रोतास्तंत्यां दीर्घतंत्यां दामभिर्बद्धाः स्वामिनो बलिं वहंति यथा एवं वाक्तंत्यां कर्तव्याकर्तव्यविधायकवेदलक्षणायां नामभिर्ब्राह्मणो ब्रह्मचारीत्यादिवर्णाश्रमलक्षणैर्बद्धाः परमेश्वरस्य बलिं तेन प्रेरिताः सर्वे वहंतीत्यर्थः ॥ ४१ ॥ प्रवृत्तौ पारतंत्र्यमुक्त्वा संयोगवियोगयोरप्याह । यथेति । क्रीडोपस्कराणां क्रीडासाधनानाम् ॥ ४२ ॥ ईश्वराधीनत्वान्न शोकः कार्य इत्युक्तम् । लोकतत्त्वे च विचार्यमाणे निर्विषयोऽयं शोक इत्याह । यद्यदि लोकं जनं ध्रुवं जीवरूपेण । अध्रुवं देहरूपेण । न चेति । न ध्रुवं नाप्यध्रुवम् । शुद्धब्रह्मरूपेणानिर्वचनीयत्वेन वा । उभयं

गतिं पित्रोर्भगवन् क्व गतावितः ॥ अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी ॥ कर्णधार इवापारे भगवान्पारदर्शकः ॥३८॥ अथावभाषे भगवान्नारदो मुनिसत्तमः ॥ मा कंचन शुचो राजन्यदीश्वरवशं जगत् ॥ ३९ ॥ लोकाः सपाला यस्येमे वहंति बलिमीशितुः ॥ स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४० ॥ यथा गावो नसि प्रोतास्तंत्यां बद्धाः स्वदामभिः ॥ वाक्तंत्यां नामभिर्बद्धा वहंति बलिमीशितुः ॥ ४१ ॥ यथा क्रीडोपस्कराणां संयोगविगमाविह ॥ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥ यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम् ॥ सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४३ ॥ तस्माज्जह्यंग वैक्लव्यमज्ञानकृतमात्मनः ॥ कथं त्वनाथाः कृपणा वर्तेरंस्ते न मां विना ॥ ४४ ॥ कालकर्मगुणाधीनो देहोऽयं पांचभौतिकः ॥ कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथापरम् ॥ ४५ ॥ अहस्तानि सहस्तानामपदानि चतुष्पदाम् ॥ फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥ तदिदं भगवान् राजन्नेक आत्मात्मनां स्वदृक् ॥ अंतरोऽनंतरो भाति पश्य तं माययोरुधा ॥४७॥ सोऽयमद्य महाराज भगवान् भूतभावनः ॥ कालरूपोऽवतीर्णोऽस्यामभवाय सुरद्विषाम् ॥ ४८ ॥ निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ॥ तावद्यू-

वा चिज्जडांशतः । सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः स्नेहादन्यत्र । स्नेह एव केवलं शोकहेतुः स चाज्ञानमूल इत्यर्थः ॥४३॥ तस्मान्मां विना कथं ते वर्तेरन्नित्यात्मना मनसो वैक्लव्यं व्याकुलतां त्यज ॥ ४४ ॥ तत्र त्वद्देहतस्तेषां वृत्तिरेतत्तावन्नास्तीत्याह । कालो गुणक्षोभकः कर्म जन्मनिमित्तं गुणा उपादानं तदधीनः पांचभौतिको जडस्तद्विभागे नाशवांश्च सर्पग्रस्तोऽजगरगिलितो यथाऽन्यं न रक्षति तद्वत् ॥ ४५ ॥ ईश्वरेण विहिता वृत्तिश्च सर्वतः सुलभैवेत्याह । अहस्तानि पश्वादीनि । अपदानि तृणादीनि । तत्र तेष्वहस्तादिष्वपि फल्गून्यल्पानि । एवं जीवः सर्वोऽपि जीवस्य सर्वस्य जीवनं जीविका । एतेनैव सर्वतो मृत्युग्रासत्वं चोक्तम् ॥ ४६ ॥ मोहनिवृत्त्यर्थं द्वैतस्यावस्तुत्वमाह । तदिदमहस्तसहस्तादिरूपं जगत् स्वदृग्भगवानेव न ततः पृथक् । स चैक एव न तु नाना । ननु सजातीयविजातीयभेदे प्रत्यक्षे कुत एतत्तत्राह । आत्मनां भोक्तॄणामात्मा स्वरूपम् । अतो न सजातीयभेदः । अन्तरोऽनंतरश्चान्तर्बहिश्च भोक्तृभोग्यरूपश्च भाति । अतो न विजातीयभेदोऽपि । नन्वेकः कथं तथा प्रतीयतेऽत आह । मायया बहुधा भाति तं पश्येति ॥ ४७ ॥ क्वासावस्तीदृशो महामायावी द्वारकायामित्याह । सोऽयमिति । अस्यां

भूम्याम् । अभवाय नाशाय ॥ ४८ ॥ तर्हि श्रीकृष्णोऽत्रास्तीत्यत्रैवास्थां मा कृथा इत्याह । तच्च देवानां कार्यं तेन निष्पादितम् । केवलमवशेषं प्रतीक्षते । यदुकुलक्षयमिति हृदिस्थम् । ततो
निजं धाम यास्यति ततो यूयमपि गच्छतेत्यर्थः । तच्च भूतमपि विदुरवदेव नावर्णयत् ॥४९॥ तदेवं शोकमास्थां च निवार्य जिज्ञासवे तस्मै यथावृत्तं कथयति । धृतराष्ट्र इति षड्भिः । हिमवतो
दक्षिणे भागे ॥ ५० ॥ तदपि कुत्रेत्याह । स्रोतोभिरिति । या वै प्रसिद्धा स्वर्धुनी सा आत्मानं यत्र सप्तधा व्यधात् । किमर्थम् । नाना पृथक्सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणां प्रीतये ।
अत एव तत्तीर्थं सप्तस्रोतो वदंति ॥५१॥ तत्र तेन कृतमष्टांगयोगमाह । स्नात्वेति चतुर्भिः । तत्र स्नानं होमोऽब्भक्षणं चेति नियमा उक्ताः । भक्षस्थानेऽपां स्वीकारादब्भक्षः । उपशांत
आत्मा यस्य सः । विगताः पुत्राद्येषणा यस्मादिति यमा उक्ताः ॥ ५२ ॥ जितासन इत्यादिना आसनप्राणायामप्रत्याहारा उक्ताः । हरिभावनयेति धारणोक्ता । ध्वस्ता रजःसत्त्वतमो-
रूपा मला यस्येति फलतो ध्यानमुक्तम् ॥५३॥ समाधिमाह । विज्ञानेति द्वाभ्याम् । आत्मानं मनोऽहंकारास्पदं स्थूलदेहाद्वियोज्य विज्ञानात्मनि बुद्धौ संयोज्यैकीकृत्य तं च विज्ञानात्मानं दृश्यां-

यमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ४९ ॥ धृतराष्ट्रः सह भ्रात्रा गांधार्या च स्वभार्यया ॥ दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥ ५० ॥ स्रोतोभिः
सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात् ॥ सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते ॥ ५१ ॥ स्नात्वानुसवनं तस्मिन् हुत्वा चाग्नीन्यथाविधि ॥ अब्भक्ष उपशांता-
त्मा स आस्ते विगतैषणः ॥५२॥ जितासनो जितश्वासः प्रत्याहृतषडिंद्रियः ॥ हरिभावनया ध्वस्तरजःसत्त्वतमोमलः ॥५३॥ विज्ञानात्मनि संयोज्य क्षेत्र-
ज्ञे प्रविलाप्य तम् ॥ ब्रह्मण्यात्मानमाधारे घटांबरमिवांबरे ॥५४॥ ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ॥ निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः
॥५५॥ तस्यांतरायो मैवाभूः संन्यस्ताखिलकर्मणः ॥ स वा अद्यतनाद्राजन्परतः पंचमेऽहनि ॥ कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥५६॥
दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ॥ बहिः स्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति ॥ ५७ ॥ विदुरस्तु तदाश्चर्यं निशाम्य कुरुनंदन ॥
हर्षशोकयुतस्तस्माद्गंता तीर्थनिषेवकः ॥ ५८ ॥ इत्युक्त्वाथारुहत्स्वर्गं नारदः सहतुंबरुः ॥ युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ॥
इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ सूत उवाच ॥ संप्रस्थिते द्वारकायां जिष्णौ बंधुदिदृक्षया ॥ ज्ञातुं च

शाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य तं च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्याधार आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य घटांबरं घटोपाधेर्वियोज्य यथा महाकाशे प्रविलाप्यते तद्वत् ॥ ५४ ॥ व्युत्थानाभावमाह-
ध्वस्तेति । अंतर्गुणक्षोभाद्वा बहिरिंद्रियविक्षेपाद्वा व्युत्थानं भवेत्तदुभयं तस्य नास्ति । यतो ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य सः । निरुद्धानि करणानि चक्षुरादीन्याशयो
मनश्च यस्य सः । अत एव निवर्तितोऽखिल आहारो भोज्यमिंद्रियैर्विषयाहरणं वा येन सः । स्थाणुरिव निश्चल आस्ते ॥५५॥ तथाभूतमप्यानेतुमुद्यतं प्रत्याह । तस्येति । अंतरायो विघ्नः । मै-
वाभूरित्यडागमश्छांदसः । दर्शनमपि तावत्कुर्यामित्युद्यतं प्रत्याह । स वा अद्यतनादह्नः परत उत्तरत्र । स्वं स्वाधीनम् । तर्हि तदाहार्थं गमिष्यामि नेत्याह । तच्चेति ॥५६॥ तर्हि गांधार्यानयनाय
गमिष्यामि नेत्याह । पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निना सह गार्हपत्यादिभिर्दह्यमाने तस्य पत्नी बहिः स्थिता सती तं पतिमन्वग्निं वेक्ष्यति प्रवेक्ष्यति ॥ ५७ ॥ तर्हि विदुरानयनार्थं
गंतव्यमेव नेत्याह । विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सुगत्या हर्षस्तन्मृत्युना शोकश्च ताभ्यां युक्तस्तस्मात्स्थानात्तीर्थानि सेवितुं गंता गमिष्यति ॥ ५८ ॥ शुचः शोकान् ॥५९॥ इति श्रीमद्भा०

 चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशंकितः ॥ अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥ १ ॥ श्रीकृष्णस्य चेति चकारेणाभिप्रायं च ज्ञातुम् ॥१॥ कतिचित्सप्त । तदा कालातिक्रमेऽपि ततो द्वारकातो नायान्नागतः । निमित्तान्युत्पातान् । कुरूद्वहो युधिष्ठिरः ॥ २ ॥ रौद्रां घोराम् । तदेवाह । विपर्यस्ता ऋतुधर्मा यस्मिंस्तस्य वार्तां जीविकाम् क्रोधलोभानृतैर्युक्त आत्मा येषाम् ॥ ३ ॥ जिह्मप्रायं कपटबहुलम् । व्यवहृतं व्यवहारं शाठ्यं वंचनं तन्मिश्रं सौहृदं सख्यम् । पित्रादीनां स्वप्रतियोगिभिः कल्कनं कलहादि ॥ ४ ॥ अत्यरिष्टान्यत्यंतमशुभानि दृष्ट्वा नृणां लोभाद्यधर्मप्रकृतिं च दृष्ट्वा अनुजं भीमम् ॥ ५ ॥ ६ ॥ वेति वितर्के । कस्माद्धेतोर्नायातीत्यहं न वेद्मि ॥ ७ ॥ अपि किं यदा आत्मन आक्रीडं क्रीडासाधनमंगं मनुष्यनाट्यमुत्स्रष्टुमिच्छति स कालः प्राप्तः ॥ ८ ॥ अस्माकं सर्वपुरुषार्थत्वे हेतुः श्रीकृष्णोऽतस्तद्वियोगं विनानिष्टं न स्यादित्याशयेनाह । एतच्चोपरिष्टादर्जुनः स्पष्टीकरिष्यति । लोकाश्च

पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥ व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः ॥ ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥ २ ॥ कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ॥ पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥ जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम् ॥ पितृमातृसुहृद्भ्रातृदंपतीनां च कल्कनम् ॥ ४ ॥ निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम् ॥ लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥ युधिष्ठिर उवाच ॥ संप्रेषितो द्वारकायां जिष्णुर्बंधुदिदृक्षया ॥ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥ गताः सप्ताधुना मासा भीमसेन तवानुजः ॥ नायाति कस्य वा हेतोर्नाहं वेदेदमंजसा ॥ ७ ॥ अपि देवर्षिणादिष्टः स कालोऽयमुपस्थितः ॥ यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥ यस्मान्नः संपदो राज्यं दाराः प्राणाः कुलं प्रजाः ॥ आसन्सपत्नविजयो लोकाश्च यदनुग्रहात् ॥ ९ ॥ पश्योत्पातान्नरव्याघ्र दिव्यान् भौमान् सदैहिकान् ॥ दारुणान् शंसतोऽदूराद्भयं नो बुद्धिमोहनम् ॥१०॥ ऊर्वक्षिबाहवो मह्यं स्फुरंत्यंग पुनः पुनः ॥ वेपथुश्चापि हृदय आराद्दास्यंति विप्रियम् ॥ ११ ॥ शिवैषोद्यंतमादित्यमभिरौत्यनलानना ॥ मामंग सारमेयोऽयमभिरौति ह्यभीरुवत् ॥१२॥ शस्ताः कुर्वंति मां सव्यं दक्षिणं पशवोऽपरे ॥ वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥ मृत्युदूतः कपोतोऽयमुलूकः कंपयन्मनः ॥ प्रत्युलूकश्च कुह्वानैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥ धूम्रा दिशः परिधयः कंपते भूः सहाद्रिभिः ॥ निर्घातश्च महानासीत्साकं च स्तनयित्नुभिः ॥ १५ ॥ वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ॥ असृग्वर्षंति जलदा बीभत्समिव सर्वतः ॥१६॥ सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ॥ ससंकुलैर्भूतगणैर्ज्वलिते

यज्ञकरणानुरूपा यस्यानुग्रहात् ॥ ९ ॥ अदूरात्संनिहितं नो अस्माकं आशंसत उत्पातान् ॥ १० ॥ दैहिकानाह । ऊर्विति । ऊर्वादयो वामाः स्फुरंति । वेपथुः कंपश्च हृदये वर्तते । एते मह्यमारात्संनिहितं विप्रियं दास्यंति ॥ ११ ॥ भौमानाह । सार्धैस्त्रिभिः । शिवा क्रोष्ट्री आदित्यमभिरौत्युद्यत्सूर्यमभिमुखं क्रोशति । अनलानना अग्निं मुखेन वमंती । अंग हे भीम ! मामभिलक्ष्य सारमेयः श्वाऽभिरौति प्लुतं भषति । अभीरुवन्निःशंकम् ॥ १२ ॥ शस्ता गवादयो मां सव्यं वामं कुर्वंति । अपरे गर्दभाद्याः प्रदक्षिणं कुर्वंति । वाहानश्वान् ॥ १३ ॥ अयं कपोतो मृत्युदूतो मृत्युसूचकः उलूको घूकः प्रत्युलूकस्तत्प्रतिपक्षो घूकः काको वा कुह्वानैः कुत्सितशब्दैर्विश्वं शून्यं कर्तुमिच्छतः ॥ १४ ॥ धूम्रा धूसरा दिशः परिधयोऽग्निमिव लोकमावृण्वंति । दिव्यानाह

सार्धाभ्याम् । निर्घातो निरभ्रवज्रपातः स्तनयित्नवोऽत्र गर्जितानि तैः सह ॥ १५ ॥ तमोविशेषेण सृजन् असृग्रक्तम् ॥ १६ ॥ ग्रहाणां मर्दं युद्धम् । भूता रुद्रानुचरास्तेषां गणैः संकुलैर्व्यामिश्रैः प्राणिभिः सहितैः रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव च पश्येति ।॥ १७ ॥ पुनर्भौमानाह । नद्य इति सार्धैस्त्रिभिः । आग्निनां म ांसि च ॥ १८ ॥ दुह्यंतीति कर्मकर्तर्यार्षम् । न प्रस्नुवंतीत्यर्थः ॥ १९ ॥ दैवतानि प्रतिमाः । अघं दुःखम् ॥ २० ॥ एतैर्महोत्पातैः कृत्वा न विद्यतेऽन्येषु पुरुषेषु श्रीर्वज्रांकुशादिशोभा येषां तैर्भगवतः पदैर्हीना भूरित्यहं मन्ये ॥ २१ ॥ तस्य राज्ञ इत्येवं दृष्टान्यरिष्टानि येन तेन चेतसा चिंतयतः सतः ॥ २२ ॥ अयथापूर्वं निपतितम् । तदेवाह आतुरमित्यादि । अपां बिंदूनश्रूणि नेत्राभ्यां विसृजंतमित्यर्थः ॥२३॥ उद्विग्नं कंपितं

न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥ न पिबंति स्तनं वत्सा न दुह्यंति च मातरः ॥ रुदंत्यश्रुमुखा गावो न हृष्यंत्यृषभा व्रजे ॥१९॥ दैवतानि रुदंतीव स्विद्यंति ह्युच्चलंति च ॥ इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ॥भ्रष्टश्रियो निरानंदाः किमघं दर्शयंति नः ॥ २० ॥ मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः॥ अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥२१॥ इति चिंतयतस्तस्य दृष्टारिष्टेन चेतसा ॥ राज्ञः प्रत्यागमद्ब्रह्मन्यदुपुर्याः कपिध्वजः॥२२॥ तं पादयोर्निपतितमयथापूर्वमातुरम् ॥ अधोवदनमब्बिंदून्मुंचंतं नयनाब्जयोः॥२३॥ विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ॥ पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥२४॥ युधिष्ठिर उवाच ॥ कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ॥ मधुभोजदशार्हार्हाः सात्वतांधकवृष्णयः ॥२५॥ शूरो मातामहः कच्चित्स्वस्त्यास्ते वाथ मारिषः॥ मातुलः सानुजः कच्चित्कुशल्यानकदुंदुभिः॥ २६ ॥ सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ॥ आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥२७॥ कच्चिद्राजाहुको जीवत्यसत्पुत्रोऽस्य चानुजः ॥ हृदीकः ससुतोऽक्रूरो जयंतगदसारणाः ॥२८॥ आसते कुशलं कच्चिद्ये च शत्रुजिदादयः॥ कच्चिदास्ते सुखं रामो भगवान्सात्वतां प्रभुः॥ २९ ॥ प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः॥ गंभीररयोऽनिरुद्धो वर्धते भगवानुत ॥ ३० ॥ सुषेणश्चारुदेष्णश्च सांबो जांबवतीसुतः ॥ अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥ तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ॥ सुनंदनंदशीर्षण्या ये चान्ये सात्वतर्षभाः ॥३२॥ अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः ॥ अपि स्मरंति कुशलमस्माकं बद्धसौहृदाः ॥३३॥ भगवानपि गोविंदो ब्रह्मण्यो भक्तवत्सलः ॥

हृदयं यस्य सः विच्छायं विगतकांतिम् ॥ २४ ॥ स्वजना बांधवाः ॥२५॥ किं वक्ष्यतीति शंकया व्यवहितक्रमेण पृच्छति । शूर इत्यादिना । मारिषो मान्यो मातामहः शूरो नाम यादवः कुंत्याः पिता । आनकदुंदुभिर्वसुदेवः ॥ २६ ॥ स्वसारः परस्परम् । वसुदेवक्षेमेण तासामपि क्षेमं पृष्टमेव तथापि पृथक् पृच्छति । स्वयमिति ॥ २७ ॥ आहुक उग्रसेनः। असत्पुत्रो यस्य । अत एव जीवनमात्रमेव पृष्टम् । अनुजश्च देवकः । हृदीकः । सुतः कृतवर्मा । जयंतादयः कृष्णमातरः ॥ २८ ॥ २९ ॥ सर्ववृष्णीनां मध्ये महारथः । गंभीररयो युद्धे महावेगः वर्धते मोदत इत्यर्थः ॥ ३० ॥ कृष्णस्यापत्यानि कार्ष्णयस्तेषु प्रवराः ॥ ३१ ॥ सुनंदनंदौ शीर्षण्यौ मुख्यौ येषां ते ॥ ३२ ॥ ३३ ॥ भगवति सुखमास्त इति प्रश्नस्यानौचित्यमाशंक्याह ।

पुर इत्यादि ॥ ३४ ॥ भगवतोऽत्रावस्थाने हि लोकानां मंगलं नान्यथेत्याशयेनाह चतुर्भिः । मंगलाय शुभाय क्षेमाय लब्धपालनाय भवायोद्भवाय । अनंतसखो बलभद्रसहायः ॥ ३५ ॥ अर्चिताः सर्वैः पूजिताः परमानंदं यथा भवति तथा । महापुरुषो विष्णुस्तदीया महापौरुषिका वैकुंठनाथानुचरा इव ॥ ३६ ॥ यस्य पादशुश्रूषणमेव मुख्यं तप आदिभ्यः श्रेष्ठं यत्कर्म तेन । सत्यभामादयः । संख्ये युद्धे श्रीकृष्णबलेन त्रिदशान्देवान्निर्जित्य तदाशिषो देवभोग्यान्पारिजातादीन् वज्रायुधस्य वल्लभा शची तस्मा उचिताः ॥ ३७ ॥ यद्बाहुदंडप्रभावोपजीविनः सुधर्मा-मंघ्रिभिरधःक्रामंति स गोविंदः सुखमास्ते इति गतपंचमश्लोकेनान्वयः ॥३८॥ इदानीं तस्यैव कुशलं पृच्छति । कच्चिदिति षड्भिः । अनामयमारोग्यम् । न लब्धो मानो येन बंधुभ्यः सकाशात् किंवा तैः प्रत्युतावज्ञातस्तिरस्कृतः । यतश्चिरोषितो बहुकालं तत्र स्थितः ॥ ३९ ॥ अभावैरिति छेदः । प्रेमशून्यैः । अमंगलैः परुषैः शब्दादिभिर्नाभिहतो न ताडितोऽसि किम् । यद्वा । अर्थिभ्यः

कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥३४॥ मंगलाय च लोकानां क्षेमाय च भवाय च ॥ आस्ते यदुकुलांभोधावाद्योऽनंतसखः पुमान् ॥३५॥ यद्बाहुदंडगुप्तायां स्वपुर्यां यदवोऽर्चिताः ॥ क्रीडंति परमानंदं महापौरुषिका इव ॥३६॥ यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः ॥ निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरंति वज्रायुधवल्लभोचिताः ॥ ३७॥ यद्बाहुदंडाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः ॥ अधिक्रमंत्यंघ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥ कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ॥ अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥ कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमंगलैः ॥ न दत्तमुक्तमर्थिभ्य आशया यत्प्रतिश्रुतम् ॥ ४० ॥ कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ॥ शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥४१॥ कच्चित्त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ॥ पराजितो वाथ भवान्नोत्तमैर्नासमैः पथि ॥ ४२ ॥ अपिस्वित्पर्यभुङ्क्थास्त्वं संभोज्यान्वृद्धबालकान् ॥ जुगुप्सितं कर्म किंचित्कृतवान्न यदक्षमम् ॥ ४३ ॥ कच्चित्प्रेष्ठतमेनाथ हृदयेनात्मबंधुना ॥ शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे युधिष्ठिरवितर्को नाम चतुर्दशोऽध्यायः ॥ १४ ॥ सूत उवाच ॥ एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः ॥ नानाशंकास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥ शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ॥ विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुम् ॥ २ ॥ कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः ॥ परोक्षेण

किमपि दास्यामीति नोक्तं किम् । यद्वा । आशया सह यथा आशा भवति तथा दास्यामीति प्रतिश्रुतं यत्तन्न दत्तं किम् ॥ ४० ॥ अन्यद्वा शरणागतं सत्त्वं प्राणिमात्रं न त्यक्तवानसि किम् यतस्त्वं पूर्वं शरणप्रद आश्रयप्रदः ॥ ४१ ॥ अगम्यामिति छेदः । निंदितां स्त्रियं मागमः किं न गतवानसि । असत्कृतां मलिनवस्त्रादिना नागमः किम् । नोत्तमैर्नुत्तमैः समैरित्यर्थः । असमैरधमैर्वा किं न पराजितोऽसीत्यर्थः ॥ ४२ ॥ संभोजनार्हान्वृद्धान्बालकांश्च किंस्वित्पर्यभुङ्क्थास्त्यक्त्वा भुक्तवानसि किम् । अक्षमं कर्तुमयोग्यं यत्तन्न कृतवानसि किम् ॥ ४३ ॥ नित्यं सदा प्रेष्ठतमेन हृदयेनांतरंगेण स्वबंधुना श्रीकृष्णेन रहितः शून्योऽस्मीति मन्यसेऽन्यथा ते रुक् न पीडा न घटेत ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ कलिप्रवेशमालक्ष्य धुरं न्यस्य पराचिति ॥ आरुरोह नृपः स्वर्गमिति पंचदशेऽब्रवीत् ॥१॥ कृष्णोऽर्जुनः । आविकल्पित इति छेदः । नानाशंकास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः । प्रतिभाषितुं

नाशक्नोदित्युत्तरेणान्वयः। तत्र हेतवः। कृष्णविश्लेषेण कर्शितः कृशः कृतः॥ १ ॥ शोकेन हेतुना वदनं च हृच्च ते एव सरोजे। शुष्यती वदनहृत्सरोजे यस्य सः। हता प्रभा तेजो यस्य सः॥२॥ शुचः शोका-
नाशक्नोदित्युत्तरेणान्वयः। तत्र हेतवः। कृष्णविश्लेषेण कर्शितः कृशः कृतः॥ १ ॥

शुचः शोकान्नाशक्नोदित्युत्तरेणान्वयः ॥३॥ अश्रूणि यान्युद्गच्छंति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिनामृज्य परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धमधिकं यत्प्रेमौत्कंठ्यं तेन कातरो व्याकुलः सन्नृपमित्याहत्युत्तरेणान्वयः ॥३॥ सख्यं हितैषिताम्। मैत्रीमुपकारिताम्। सौहृदं सुहृत्त्वं चात्संबंधितां च। बाष्पेण कंठावरोधाद्गद्गदया ॥४॥ येन मां वंचयता। देवान्विस्मापयति यत् ॥५॥ यस्य क्षणवियोगेनेत्यादि यच्छब्दानां तेनाहमद्य मुषित इति सप्तमश्लोकस्थेन तच्छब्देन संबंधः। प्रियस्याप्यप्रियत्वे दृष्टांतः। उक्थेन प्राणेन। एष पित्रादिः ॥ ६ ॥ श्रीकृष्णोपकाराननुस्मरति। यत्संश्रयादिति दशभिः। यस्य संश्रयाद्बलात्स्मरेण कामेन दुर्मदानामतिमत्तानां तेजः प्रभावो हृतं धनुर्ग्रहणेनैव पश्चात्तद्धनुः सज्जीकृतं च तेन च मत्स्यो यंत्रोपरि भ्रमन्विद्धस्ततस्तान्विजित्य द्रौपदी प्राप्ता च ॥ ७ ॥ उ इति विस्मये। खांडवमिंद्रस्य वनमग्नयेऽदां दत्तवानस्मि। खांडवदाहे रक्षितेन मयेन कृता च सभा लब्धा। अद्भुतशिल्परूपा माया यस्यां सा। तेऽध्वरे यागे राजसूये ॥ ८ ॥ अनंतरश्लोको

समुन्नद्धप्रणयौत्कंठ्यकातरः ॥ ३ ॥ सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ॥ नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥४॥ अर्जुन उवाच ॥ वंचितोऽहं महाराज हरिणा बंधुरूपिणा ॥ येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥ यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ॥ उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥ यत्संश्रयाद्द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ॥ तेजो हृतं खलु मयाऽभिहतश्च मत्स्यः सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥ यत्संनिधावहमु खांडवमग्नयेऽदामिंद्रं च सामरगणं तरसा विजित्य ॥ लब्धा सभा मयकृताऽद्भुतशिल्पमाया दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ॥८॥ यत्तेजसा नृपशिरोंऽघ्रिमहन्मखार्थे आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः ॥ तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन्बलिमध्वरे ते ॥९॥ पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैः सभायाम् ॥ स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यैस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः ॥१०॥ यो नो जुगोप वनमेत्य दुरंतकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग्यः ॥ शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्ताममंस्त सलिले विनिमग्नसंघः ॥ ११ ॥ यत्तेजसाऽथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजाऽस्त्रमदान्निजं मे ॥

विगीतस्तथापि व्याख्यायते नृपशिरःस्वंघ्रिर्यस्य तं जरासंधं तवानुजो भीमो मखार्थमहन् हतवान्। तन्निर्जयं विना राजसूयमखानुपपत्तेः। गजायुतस्येव सत्त्वमुत्साहशक्तिर्वीर्यं बलं च यस्य सः तं हत्वा प्रमथनाथो महाभैरवस्तस्य मखाय ये राजानस्तेनाहृतास्ते च यद्यस्मान्मोचितास्तत्तस्मात्तेऽध्वरे बलिमानीतवंतः ॥ ९ ॥ यैः कितवैर्दुःशासनादिभिस्तव पत्न्याः कबरं विकीर्योन्मुच्य स्पृष्टमाकृष्टं तेषां स्त्रियो हतेशा अत एव वैधव्याद्विमुक्तकेशा अकृत चकार। कथंभूतं कबरम्। अधिमखं राजसूयमधिकृत्य क्लृप्तो रचितो यो महाभिषेकस्तेन श्लाघ्यतमम्। चारु रम्यम्। पदयोः पतितान्यश्रूणि मुखाद्यस्याः पत्न्याः। पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापेक्षितत्वात् ॥ १० ॥ यत्स्मरणात्तदानीमेवास्मत्कृपया प्राप्तस्य श्रीकृष्णस्य नमने पादयोः पतितान्यश्रूणि मुखाद्यस्याः पत्न्याः। ... तस्मात्सकाशान्नोऽस्मान्वनमेत्य जुगोप। किं कृत्वा। शाकमेवान्नं तस्मिन्नेव पात्रेऽवशिष्टमुपयुज्य जग्ध्वा। यत उपयोगात्सलिले विनिमग्नो मुनीनां संघस्त्रिलोकीं तृप्साममंस्त। एवं हि भारते कथा। कदाचिद्दुर्वाससो दुर्योधनेनातिथ्यं कृतम्। तेन च परितुष्टेन वरं शिष्याणामयुतस्याग्रे तत्पंक्तौ भुंक्ते यस्तस्माद्दुर्वाससो हेतोररिणा दुर्योधनेन रचितं यद्दुरंतं कृच्छ्रं शापलक्षणं

वृणीष्वेत्युक्ते दुर्वाससः शापात्पांडवा नश्येयुरिति मनसि निधाय दुर्योधनेनोक्तं युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापि भवतैवमेव शिष्यायुतसहितेनातिथिना भवितव्यं किंतु द्रौपदी यथा क्षुधा न सीदत्तथा तस्यां भुक्तवत्यां तद्गृहं गंतव्यमिति। ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसंघोऽवमर्षणाय जले निममज्ज। तत्र चिंतातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णोऽकस्यां रुक्मिणीं हित्वा तत्क्षणमेव भक्तवत्सलतया चागतः। तया चावेदिते वृत्तांते भगवतोक्तं हे द्रौपद्यहं च बुभुक्षितोऽस्मि। प्रथमं मां भोजयेति। तया चातिलज्जयोक्तं स्वामिन् मद्भोजनपर्यंतमक्षयमप्यन्नं सूर्यदत्तस्थाल्यां मया च सर्वान्संभोज्य भुक्तमतो नास्त्यन्नमिति। तथाऽप्यतिनिर्बंधेन स्थालीमानाय्य तत्कंठलग्नं किंचिच्छाकान्नं प्राश्योक्तमनेन विश्वात्मा भगवान्प्रीयताम्। अथ भोक्तुं मुनिसंघमाह्वयेति भीमं प्रहितवान्। स च तावतातितृप्तो वृथापाकभयेन पलायित इति ॥ ११ ॥ गिरिजासहितो विस्मापितः सन्निजं पाशुपतमस्त्रम्। अन्येऽपि लोकपाला निजान्यस्त्राण्यदुः। अन्यदप्याश्चर्यमाह। अमुनेति। महत इंद्रस्यासनार्धम् ॥ १२ ॥ तत्रैव स्वर्गे क्रीडतः। गांडीवं लक्षणं चिह्नं यस्य तत्। अरातयो निवातकवचा दैत्यास्तेषां वधार्थमाश्रितवंतः। येनानुभावितं प्रभावयुक्तं कृतम्। हे आजमीढ युधिष्ठिर! तेन मुषितो वंचितोऽस्मि। कथंभूतेन। भूम्ना निजमहिमावस्थानेन ॥ १३ ॥ यद्बांधव

अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ १२ ॥ तत्रैव मे विहरतो भुजदंडयुग्मं गांडीवलक्षणमरातिवधाय देवाः ॥ सेंद्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥ यद्बांधवः कुरुबलाब्धिमनंतपारमेको रथेन ततरेऽहमतीर्यसत्त्वम् ॥ प्रत्याहृतं बहुधनं च मया परेषां तेजास्पदं मणिमयं च हृतं शिरोभ्यः ॥ १४ ॥ यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमंडलमंडितासु ॥ अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥ १५ ॥ यद्दोष्षु मा प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैंधवबाह्लि- काद्यैः ॥ अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृशुर्नृहरिदासमिवासुराणि ॥ १६ ॥ सौत्ये वृतः कुमतिनात्मद ईश्वरो मे यत्पादपद्ममभवाय भजंति भव्याः ॥ मां श्रांतवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्तचित्ताः ॥ १७ ॥ नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ हेऽर्जुन

इत्यादिश्लोकत्रयस्यापि तेन मुषितोऽहमिति पूर्वेणैव संबंधः। श्रीकृष्णबांधव एक एवाहं कौरवसैन्याब्धिं नास्त्यंतो गांभीर्येण पारं च देशतो यस्य तं ततरे तीर्णवानुत्तरगोग्रहे। अतीर्याणि दुस्तराणि सत्त्वानि तिमिंगिलादीनि भीष्मादिरूपाणि यस्मिन्। परैर्नीतं गोधनं प्रत्याहृतम्। परेषां च शिरोभ्यः सकाशात्तेजास्पदं प्रभावस्यास्पदमुष्णीषरूपं मणिमयं मुकुटरत्नरूपं च बहुधनं तान्मोहनास्त्रेण मोहयित्वा हृतं यद्बांधवेन मया ॥१४॥ अदभ्रा अनल्पा ये राजन्यवर्यास्तेषां रथमंडलैर्मंडितासु भीष्मादीनां चमूषु सारथिरूपेण ममाग्रेचरः सन् हे विभो! तेषां रथयूथपानामायुरादीनि यो दृशा दृष्ट्यैवार्च्छद्धृतवान्। मनांसीत्युत्साहादिशक्तिम्। सहो बलम्। ओजः शस्त्रादिकौशलम् ॥ १५ ॥ तस्य दोष्षु भुजेषु मा मां प्रणिहितं स्थापितं तैरेव गुर्वादिभिर्निरूपितानि प्रयुक्तान्यस्त्राणि न स्पृशंति स्म। गुरुर्द्रोणः। त्रिगर्तस्त्रिगर्तदेशाधिपतिः सुशर्मा। शलः शल्यः। सैंधवः सिंधुदेशाधिपतिर्जयद्रथः। बाह्लिकः शंतनोर्भ्राता। अमोघो महिमा येषां तथाभूतान्यपि। पाठांतरेऽपि स एवार्थः। प्रतीकाराकरणेऽप्यस्पर्शे दृष्टांतः। नृहरिदासं प्रह्लादमिवेति ॥ १६ ॥ स्वपराधमनुस्मरन् संतप्यमाद आह। सौत्ये सारथ्ये कुमतिना मे मया स वृतः। कुमतित्वमेवाह। आत्मद इत्यादिना। अभवाय मोक्षाय। भव्याः श्रेष्ठाः श्रांता वाहा अश्वा यस्य तं माम्। जयद्रथवधे हि जलपानं विनाश्वाः श्रांतास्ततो रथादवतीर्य बाणैर्भुवं भित्त्वा मया जलं संपादितं

तदा यस्यानुभावेन निरस्तचित्ता अरयो मां न प्रहृतवंतः स सौत्ये वृत इति कुमतित्वम् ॥ १७ ॥ हे नरदेव ! उदारं गंभीरं रुचिरं च यस्मिंस्तेन शोभितानि नर्माणि परिहासवाक्यानि तथा कार्यप्रस्तावेषु हे पार्थेत्यादीनि मधुराक्षराणि संजल्पितानि च हृदिस्पृशानि मनोज्ञानि माधवस्य यान्येतानि तानीदानीं स्मर्तुर्मम हृदयं लुठंति लोठयंति क्षोभयंति । णिजभाव आर्षः ॥ १८ ॥ विकत्थनं स्वगुणश्लाघनादि । शय्यादिष्वैक्यादव्यतिरेकाद्धेतोः कदाचिद्व्यभिचारं दृष्ट्वा हे वयस्य ! ऋतवान् सत्ययुक्तस्त्वमिति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि। ऋभुमानिति पाठे ऋभवो देवाः सेवकाः संति यस्य सः । असौ महानपि मयो वयस्य इति मत्वा विप्रलब्धस्तिरस्कृत इत्यर्थः । ऋतमानिति पाठे वत्वाभाव आर्षः। मेऽघमपराधमसहत । महितया महत्त्वेन । ऐकपद्येऽति-महत्त्वेनेत्यर्थः । सख्युरघं सखेव तनयस्याघं पितेव ॥ १९ ॥ त्वया शंकितं पराजयं चापि प्राप्तोऽहमित्याह । तेन सख्या रहितोऽतो हृदयेन शून्यः । अंग हे राजन् ! उरुक्रमस्य परिग्रहं षोडश-सहस्रस्त्रीलक्षणम् । असद्भिर्नीचैः । अबला योषेव ॥ २० ॥ श्रीकृष्णवियोग एवात्र हेतुर्नान्य इत्याह। तदिति । यतो येभ्यो नृपतय आनमंति । ईशेन रिक्तं शून्यमसत्कार्याक्षमं सन्मंत्रविधानैरपि

सखे कुरुनंदनेति ॥ संजल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठंति हृदयं मम माधवस्य ॥ १८ ॥ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ॥ सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया कुमतेरघं मे ॥ १९ ॥ सोऽहं नृपेंद्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः ॥ अध्वन्युरुक्रमपरिग्रहमंग रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥ तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमंति ॥ सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥ राजंस्त्वयाभिपृष्टानां सुहृदां नः सुहृत्पुरे ॥ विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥ वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ॥ अजानतामिवान्योऽन्यं चतुष्पंचावशे-षिताः ॥२३॥ प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम् ॥ मिथो निघ्नंति भूतानि भावयंति च यन्मिथः॥२४॥ जलौकसां जले यद्वन्महांतोऽदंत्यणीयसः ॥ दुर्बलान्बलिनो राजन्महांतो बलिनो मिथः ॥२५॥ एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योऽन्यं भूभारान्संजहार ह ॥ २६ ॥ देशकालार्थयुक्तानि हृत्तापोपशमानि च॥ हरंति स्मरतश्चित्तं गोविंदाभिहितानि मे ॥२७॥ एवं चिंतयतो जिष्णोः कृष्णपादसरोरुहम् ॥ सौहा-र्देनातिगाढेन शांतासीद्विमला मतिः ॥२८॥ वासुदेवांघ्र्यनुध्यानपरिबृंहितरंहसा ॥ भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥२९॥ गीतं भगवता

भस्मनि हुतमिव । अतिप्रीतादपि कुहकान्मायाविनः सकाशाद्राद्धं लब्धं यथा असत्सम्यक्कर्षणादिनाप्यूषरभूमावुप्तं बीजमिव ॥ २१ ॥ सुहृत्पुरे त्वया पृष्टानां नः सुहृदां मध्ये चत्वारः पंच वाव-शेषिताः । तत्र हेतुर्विप्रशापेत्यादि । वारुणीमन्नमयीम् । अजानतामिवान्योन्यमेरकामुष्टिभिर्निघ्नताम् ॥ २२ ॥ २३ ॥ अवशेषिता इत्यनेनोक्तं हेतुकर्तारमाह त्रिभिः । प्रायेणेति । भावयंति पालयन्ति ॥ २४ ॥ जलौकसां मत्स्यादीनां मध्ये महांतः स्थूला अणीयसः सूक्ष्मान्यथा अदंति भक्षयंति ॥ २५ ॥ एवं बलिष्ठैर्महद्भिः पांडवैर्दुर्योधनजरासंधादीन्निहत्य यदुभिरितरान् शा-ल्वादीन्निहत्य यदून्यदुभिरन्योन्यं निहत्य भगवान् भुवो भारभूतान् संहृतवान् ॥ २६॥ अतः परं वक्तुं न शक्नोमीति सूचयन्नाह । देशकालोचितार्थयुक्तानि मनःपीडोपशमकराणि च गोविंद-स्य वचनानि स्मरतो मे मम चित्तं हरंत्याकर्षंति ॥ २७ ॥ एवमिति सूतोक्तिः । अतिदृढेन स्नेहेन कृष्णपादसरोरुहं चिन्तयतोऽर्जुनस्य मतिः शांता विशोका विमला विरक्ता चासीत् ॥ २८ ॥

मतिवैमल्यफलमाह । वासुदेवांघ्र्यनुध्यानेन परिबृंहितं रंहो वेगो यस्यास्तया भक्त्या निर्मथिता उन्मूलिता अशेषाः कषायाः कामादयो यस्याः सा धिषणा बुद्धिर्यस्य स ज्ञानं पुनरध्यगमदित्युत्तरेणान्वयः ॥ २९ ॥ कालेन कर्मभिस्तमसा भोगाभिनिवेशेन च रुद्धमावृतं सत् ॥ ३० ॥ ज्ञानफलमाह । विशोक इति । एतदेव शोकहेत्वभावेनोपपादयति शोकस्य हि हेतुर्द्वैतभ्रमस्तस्य देहस्तस्य लिंगं तस्य गुणास्तेषामविद्या । तत्र ब्रह्मसंपत्त्या वेदान्तश्रवणेन ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिंस्तन्नैर्गुण्यं भवति नतु सुषुप्तिप्रलययोरिवाविद्याशेषः । तस्मान्नैर्गुण्याद्गुणकार्यलिंगनाशः । अलिंगत्वाचासंभवः सम्यग्भोगाय भवति पुनः पुनिरिति संभवः । स्थूलदेहस्तद्रहितस्ततश्च तत्परिच्छेदाभावात्संछिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य स विशोको जात इति ॥ ३१ ॥ भगवतो मार्गमालक्ष्य यदुकुलस्य संस्थां नाशं श्रुत्वा नारदोक्तं चानुस्मृत्य स्वःपथाय स्वर्गमार्गाय निभृतात्मा निश्चलचित्तः ॥ ३२ ॥ तां दुर्विज्ञेयाम् । वक्ष्यति ह्येकादशे । सौदामन्या यथाकाशे यांत्या हित्वाभ्रमंडलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैरिति । संसृतेरुपरराम जीवन्मुक्तो बभूव । देहं जहाविति वा ॥ ३३ ॥ तदेवमुक्तमपि यादवेभ्यो भगवतो

ज्ञानं यत्तत्संग्राममूर्धनि ॥ कालकर्मतमोरुद्धं पुनरध्यगमत्प्रभुः ॥ ३० ॥ विशोको ब्रह्मसंपत्त्या संछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ॥ ३१ ॥ निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ॥ स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥३२॥ पृथाप्यनुश्रुत्य धनंजयोदितं नाशं यदूनां भगवद्गतिं च ताम् ॥ एकांतभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः ॥३३॥ ययाऽहरद्भुवो भारं तां तनुं विजहावजः ॥ कंटकं कंटकेनेव द्वयं चापीशितुः समम् ॥ ३४ ॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ॥ भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥ यदा मुकुंदो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ॥ तदाहरेवाप्रतिबुद्धचेतसामधर्महेतुः कलिरन्ववर्तत ॥ ३६ ॥ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तदात्मनि ॥ विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥ ३७ ॥ स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः ॥ तोयनीव्याः पतिं भूमेरभ्यषिंचद्गजाह्वये ॥ ३८ ॥ मथुरायां तथा वज्रं शूरसेनपतिं ततः ॥ प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ३९ ॥ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ॥ निर्ममो निरहंकारः संछिन्नाशेषबंधनः ॥ ४० ॥ वाचं जुहाव मनसि तत्प्राण इतरे च

वैलक्षण्यमबुद्ध्वा तत्साम्यं वदतो मंदमतीन्प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम् । यया यादवरूपया तन्वा भुवो भारं कंटकेन कंटकमिवाहरत् । यादवतनुर्भूभारतनुश्चेति द्वयमपीश्वरस्य संहार्यत्वेन सममेव ॥ ३४ ॥ श्रीकृष्णमूर्तेर्विशेषमाह । यथेति । तान्यपि यथा धत्ते जहाति च । तदाह । यथा नटो निजरूपेण स्थितो रूपांतराणि धत्तेऽन्तर्धत्ते च तथा तदपि कलेवरं जहौ । अंतरधादित्यर्थः ॥ ३५ ॥ युधिष्ठिरस्य स्वर्गारोहप्रसंगाय कलिप्रवेशमाह । यदेति । स्वतन्वा जहौ सतनोरेव वैकुंठारोहात् । श्रवणार्हा सती कथा यस्य तदा यदहस्तस्मिन्नेव । अहरिति लुप्तसप्तम्यंतं पदम् । अप्रतिबुद्धचेतसामविवेकिनामिति विवेकिनां तु न प्रभुरित्युक्तम् । अन्ववर्ततेति पूर्वमेवांशेन प्रविष्टस्य तेन रूपेणानुवृत्तिरुक्ता ॥ ३६ ॥ बुधो युधिष्ठिरस्तस्य कलेः परिसर्पणं प्रसरणं विलोक्य । कथंभूतम् । लोभाद्यधर्मचक्रं यस्मिन् । जिह्मं कौटिल्यम् । पर्यधात्तदुचितं परिधानमकरोत् ॥ ३७ ॥ आत्मनः स्वस्य गुणैः सुसममतिसदृशं तोयं सर्वतः स्थितं समुद्रोदकमेव नीवी परिधानविशेषो यस्यास्तस्या भूमेः पतित्वेनाभिषिक्तवान् ॥ ३८ ॥ वज्रमनिरुद्धस्य पुत्रम् । निरूप्य कृत्वेत्यर्थः । अपिबदात्मन्यारोपयामास । ईश्वरः समर्थः ॥ ३९ ॥ संछिन्नान्यशेषाणि बंधनान्युपा-

धयो येन ॥ ४० ॥ तदेव दर्शयति द्वाभ्याम् । वाचमित्युपलक्षणम् । सर्वेन्द्रियाणि मनसि प्रविलापितवानित्यर्थः । तच्च मनः प्राणे प्राणाधीनवृत्तित्वात् । तं च प्राणमितरेऽपाने तेनाकर्षणात् । अपानव्यापार उत्सर्गस्तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् । अनेनैव वागादिष्वपि तत्तत्कर्मसाहित्यं ज्ञेयम् । तं मृत्युं पंचत्वे पंचभूतानामैक्ये देहे देहस्यैव मृत्युर्नात्मन इति भावितवानित्यर्थः । अजोहवीदिति यङ्लुगंतलुङि रूपम् ॥४१॥ त्रित्वे गुणत्रये पंचत्वं देहम् । तच्च त्रित्वमेकत्वेऽविद्यायाम् । सर्वं सर्वारोपहेतुमविद्यामात्मनि जीवे । अजोहवीदिति वक्तव्येऽजुहवीदित्यार्षम् । एवं शोधितमात्मानं ब्रह्मण्यव्यये कूटस्थे न तस्यान्यत्र लय इत्यर्थः ॥ ४२ ॥ तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह । चीरवासा इति द्वाभ्याम् । बद्धवाङ्मौनी ॥ ४३ ॥ अनवेक्षमाणोऽनुजादिप्रतीक्षामकुर्वन् । आशां दिशम् । गतपूर्वां पूर्वं प्रविष्टाम् । महात्मभिर्विवेकवद्भिः । यतो यां दिशम् ॥ ४४ ॥ अधर्मो मित्रं यस्य तेन ॥ ४५ ॥ साधुकृताः सर्वेऽर्था

तम् ॥ मृत्यावपानं सोत्सर्गं तं पंचत्वे ह्यजोहवीत् ॥ ४१ ॥ त्रित्वे हुत्वाऽथ पंचत्वं तच्चैकत्वेऽजुहोन्मुनिः ॥ सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥ चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः ॥ दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥४३॥ अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा ॥ उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ॥ हृदि ब्रह्म परं ध्यायन्नावर्तेत यतो गतः ॥ ४४ ॥ सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ॥ कलिनाधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥ ते साधुकृतसर्वार्था ज्ञात्वात्यंतिकमात्मनः ॥ मनसा धारयामासुर्वैकुंठचरणांबुजम् ॥ ४६ ॥ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ॥ तस्मिन्नारायणपद एकांतमतयो गतिम् ॥ ४७ ॥ अवापुर्दुरवापां तेऽसद्भिर्विषयात्मभिः ॥ विधूतकल्मषास्थानं विरजेनात्मनैव हि ॥ ४८ ॥ विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् ॥ कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ ४९ ॥ द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम् ॥ वासुदेवे भगवति ह्येकांतमतिराप तम् ॥ ५० ॥ यः श्रद्धयैतद्भगवत्प्रियाणां पांडोः सुतानामिति संप्रयाणम् ॥ शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥ ५१ ॥ इति श्रीमद्भा० म० प्र० पांडवस्वर्गारोहणं नाम पंचदशोऽध्यायः ॥ १५ ॥ सूत उवाच ॥ ततः परीक्षिद् द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ॥ यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा ॥ १ ॥ स उत्तरस्य तनयामुपयेम इरावतीम् ॥ जनमेजयादींश्चतुरस्तस्यामुत्पा-

धर्मादयो यैः अतएव वैकुंठस्य चरणांबुजमेवात्यंतिकं शरणं ज्ञात्वा ॥ ४६ ॥ कथंभूते पदे । विधूतकल्मषाणामास्थानं निवासस्थानं यत्तस्मिन् । विरजेनात्मनैव गतिं प्रापुर्नतु षोडशकलेन लिंगेन । गतेर्वा विशेषणम् । विरजेनात्मनैवावस्थानरूपां गतिं ते विधूतकल्मषाः प्रापुरिति ॥ ७ ॥ ४८ ॥ विदुरोऽपि तीर्थान्यटन्प्रभासे श्रीकृष्णावेशेन कृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्त एव संस्तदानीं नेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥ ४९ ॥ आत्मानं प्रत्यनपेक्षतां तदा ज्ञात्वा तमाप ॥ ५० ॥ इति एवं यत्संप्रयाणम् । अलमतिशयेन स्वस्त्ययनं मंगलास्पदम् । अलं पवित्रं च ॥ ५१ ॥ इति श्रीमद्भागवते प्रथमस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयोः ॥ संवादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १ ॥ द्विजवर्याणां शिक्षया । सूत्यां जन्मनि । अभिजातकोविदा जातकर्मविदः । हे विप्र ! महतां गुणा यस्मिन्सः ॥ १ ॥

जनमेजयादीनित्यक्षराधिक्यं छांदसम् । उत्पादयन्निति पाठे हेतौ शतृप्रत्ययः । सुतानुत्पादयितुमिरावतीमुपयेम इति वाक्ययोजना ॥ २ ॥ आजहार कृतवानित्यर्थः । शारद्वतं कृपम् । यत्र येष्वश्वमेधेषु देवा दृष्टिगोचरा बभूवुः ॥ ३ ॥ निजग्राह निगृहीतवान् । कलिमेव निर्दिशति । नृपेति ॥ ४ ॥ कस्य हेतोरिति । अयमर्थः । कलिं कस्माद्धेतोः केवलं निजग्राह नतु हतवान्यतोऽसौ शूद्रः कोऽतिकुत्सितः यो गां पदाहनदहन्निति ॥ ५ ॥ अस्य विष्णोः पदांभोजयोर्यो मकरंदस्तं लिहंत्यास्वादयंति ये तेषां सतां महतां वा कथाश्रयमिति समासानिष्कृष्टस्यानुषंगस्तर्हि कथ्यताम् ॥ ६ ॥ नोचेत्किमन्यैरसद्भिरालापैर्यद्यैरायुषो वृथा क्षयः । अस्माकमयं सत्रप्रयत्नोऽपि हरिकथामृतपानार्थ एवेत्याह सार्धाभ्याम् । क्षुद्रमल्पमायुर्येषाम् । तथाप्यमृतं सत्यं मोक्षमिच्छताम् ॥ ७ ॥ यो मृत्युः स इह सत्रे शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः । ततः किमत आह । न कश्चिदिति ॥ ८ ॥ ततोऽपि किमत आह । अहो नृलोके हरिलीलामृतं वचः

दयत्सुतान् ॥ २ ॥ आजहाराश्वमेधांस्त्रीन् गंगायां भूरिदक्षिणान् ॥ शारद्वतं गुरुं कृत्वा देवा यत्राक्षगोचराः ॥ ३ ॥ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ॥ नृपलिंगधरं शूद्रं घ्नंतं गोमिथुनं पदा ॥ ४ ॥ शौनक उवाच ॥ कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ॥ नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ॥ ५ ॥ तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् ॥ अथवास्य पदांभोजमकरंदलिहां सताम् ॥ ६ ॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः ॥ क्षुद्रायुषां नृणामंग मर्त्यानामृतमिच्छताम् ॥७॥ इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ॥ न कश्चिन्म्रियते तावद्यावदास्त इहांतकः ॥ ८ ॥ एतदर्थं हि भगवानाहूतः परमर्षिभिः ॥ अहो नृलोके पीयेत हरिलीलाऽमृतं वचः ॥ ९ ॥ मंदस्य मंदप्रज्ञस्य वयो मंदायुषश्च वै ॥ निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥ १० ॥ सूत उवाच ॥ यदा परीक्षित्कुरुजांगले वसन् कलिं प्रविष्टं निजचक्रवर्तिते ॥ निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौंडिराददे ॥ ११ ॥ स्वलंकृतं श्यामतुरंगयोजितं रथं मृगेंद्रध्वजमाश्रितः पुरात् ॥ वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥१२॥ भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून् ॥ किंपुरुषादीनि वर्षाणि विजित्य जगृहे बलिम् ॥ १३ ॥ तत्रतत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ॥ प्रगीयमानं च यशः कृष्णमाहात्म्यसूचकम् ॥ १४ ॥ आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ॥ स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥ १५ ॥ तेभ्यः परमसंतुष्टः प्रीत्युज्जृंभितलोचनः ॥ महाधनानि वासांसि ददौ हारान्महामनाः ॥ १६ ॥ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामम् ॥ स्निग्धेषु पांडुषु जगत्प्रणतिं च विष्णोर्भक्तिं करोति

पीयेतेत्येतदर्थम् । हरिलीलैवामृतं यस्मिंस्तत् ॥ ९ ॥ तदभावे वृथैव जीवनमित्याह । मंदस्यालसस्य । नक्तं रात्रौ यद्वयश्चायुस्तन्निद्रया ह्रियते । दिवा अह्नि च यद्वयस्तद्व्यर्थकर्मभिरपह्रियते ॥ १० ॥ तत्र तावत्कलिनिग्रहप्रसंगमाह । यदेति । यदा निजचक्रवर्तिते स्वसेनया पालिते देशे कलिं प्रविष्टं शुश्राव तदा तामनतिप्रियां वार्तां किंचित्प्रियां च युद्धकौतुकसंपत्त्वनिशम्य ततः शरासनं दुष्टनिग्रहार्थमाददे । संयुगे शौंडिर्युद्धे प्रगल्भः । पाठांतरे युद्धे शौरिः कृष्णतुल्यः ॥ ११ ॥ ततश्च दिग्विजयाय निर्गतः ॥ १२ ॥ भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि । मेरोः सर्वत इलावृतम् । तत उत्तरतो रम्यकं हिरण्मयं च दक्षिणतो हरिवर्षं किंपुरुषं च तानि विजित्य ॥ १३ ॥ प्रगीयमानं यशः आदीनि शृण्वंस्तेभ्यो

ददाविति तृतीयेनान्वयः ॥ १४ ॥ १५ ॥ १६ ॥ किंच स्निग्धेषु पांडवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि तानि शृण्वन् तथा विष्णोर्जगत्कर्तृकां प्रणतिं च शृण्वन् । नृपतिः परीक्षिद्विष्णोश्चरणारविंदे भक्तिं करोति स्म । पारषदमिति रेफषकारयोर्विश्लेषश्छांदसः । तत्र पार्षदं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥१७॥ वृत्तिमनुवर्तमानस्य सतः । नातिदूरे शीघ्रमेव ॥ १८ ॥ धर्मो वृषरूपः । विच्छायां हतप्रभाम् । गां गोरूपां पृथ्वीम् । विवत्सां नष्टापत्याम् ॥ १९ ॥ ते आत्मनो देहस्य यद्यपि बहिरामयो न लक्ष्यते तथाप्यंतर्मध्ये आधिः पीडा यस्यास्तां त्वामालक्षये केन यतो विच्छायासि । अत ईषन्म्लायता वैवर्ण्यं भजता मुखेन लिंगेन तत्र कारणानि कल्पयन्पृच्छति । दूरेबंधुमित्यादिपंचभिः । दूरे स्थितं बंधुम् ॥ २० ॥ त्रिभिः पादैर्न्यूनमत एवैकपादं मा मां मल्लक्षणं जनमित्यर्थः । वृषलैरित ऊर्ध्वं भोक्ष्यमाणाम् । पुंस्त्वमात्मपदविशेषणत्वात् । हृता यज्ञभागा येषां तान् । यज्ञाद्यकरणात् ॥ २१ ॥ हे उर्वि पृथ्वि भर्तृभिररक्ष्यमाणाः स्त्रियः पितृभिररक्ष्यमाणान्बालान्प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्तान् क्लिष्टान् । वाचं देवीं सरस्वतीं कुकर्मणि दुराचारे स्थिताम् ।

नृपतिश्चरणारविंदे ॥ १७ ॥ तस्यैवंवर्तमानस्य पूर्वेषां वृत्तिमन्वहम् ॥ नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥ १८ ॥ धर्मः पदैकेन चरन्विच्छायामुपलभ्य गाम् ॥ पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥ १९ ॥ धर्म उवाच ॥ कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायासि म्लायतेषन्मुखेन ॥ आलक्षये भवतीमंतराधिं दूरेबंधुं शोचसि कंचनांब ॥ २० ॥ पादैर्न्यूनं शोचसि मैकपादमात्मानं वा वृषलैर्भोक्ष्यमाणम् ॥ अथो सुरादीन् हृतयज्ञभागान्प्रजा उतस्विन्मघवत्यवर्षति ॥२१॥ अरक्ष्यमाणाः स्त्रिय उर्वि बालान् शोचस्यथो पुरुषादैरिवार्तान् ॥ वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥ २२ ॥ किं क्षत्रबंधून्कलिनोपसृष्टान् राष्ट्राणि वातैरवरोपितानि ॥ इतस्ततो वाऽशनपानवासःस्नानव्यवायोन्मुखजीवलोकम् ॥२३॥ यद्वाऽम्ब ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ॥ अंतर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलंबितानि ॥२४॥ इदं ममाचक्ष्व तवाधिमूलं वसुंधरे येन विकर्षिताऽसि ॥ कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमंब सौभगम् ॥२५॥ धरण्युवाच ॥ भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ॥ चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥ सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम् ॥ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ॥ स्वातंत्र्यं कौशलं कांतिर्धैर्यं मार्दवमेव च

कुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् ॥ २२ ॥ उपसृष्टान् व्याप्तान् । अवरोपितान्युद्वासितानि । व्यवायो मैथुनम् । इतस्ततो निषेधानादरेण सर्वतोऽशनादिषून्मुखं प्रवर्तमानं जीवलोकं वा ॥ २३ ॥ हे अंब मातर्हे धरित्रि ! ते तव यो भूरिभारस्तस्यावतारणार्थं कृतावतारस्य कर्माणि स्मरंती तेन विसृष्टा सती सोचसि । निर्वाणं विलंबितमाश्रितं येषु तानि । पाठांतरे निर्वाणं विडंबितमुपहसितं यैः । मोक्षादप्यधिकसुखानीत्यर्थः ॥२४॥ हे अंब ! ते सौभाग्यं कालेन वा हृतम् ॥ २५ ॥ भवान् जानात्येव तथापि वक्ष्यामीत्याह । येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्तसे यत्र च सत्यादयो महागुणा न वियंति तेन श्रीनिवासेन रहितं लोकं शोचामीति पष्ठेनान्वयः ॥२६ ॥ सत्यं यथार्थभाषणम् । शौचं शुद्धत्वम् । दया परदुःखासहनम् । क्षांतिः क्रोधप्राप्तौ चित्तसंयमनम् । त्यागोऽर्थिषु मुक्तहस्तता । संतोषोऽलंबुद्धिः । आर्जवमवक्रता । शमो मनोनैश्चल्यम् । दमो बाह्येंद्रियनैश्चल्यम् । तपः स्वधर्मः । साम्यमरिमित्राद्यभावः । तितिक्षा परापराधसहनम् ।

उपरतिर्लाभप्राप्तावौदासीन्यम् । श्रुतं शास्त्रविचारः ॥ २७ ॥ ज्ञानमात्मविषयम् । विरक्तिर्वैतृष्ण्यम् । ऐश्वर्यं नियंतृत्वम् । शौर्यं संग्रामोत्साहः । तेजः प्रभावः । बलं दक्षत्वम् । स्मृतिः कर्तव्याकर्तव्यार्थानुसंधानम् । स्वातंत्र्यमपराधीनता । कौशलं क्रियानिपुणता । कांतिः सौंदर्यम् । धैर्यमव्याकुलता । मार्दवं चित्ताकाठिन्यम् ॥ २८ ॥ प्रागल्भ्यं प्रतिभातिशयः । प्रश्रयो विनयः । शीलं सुस्वभावः । सहओजोबलानि मनसो ज्ञानेंद्रियाणां कर्मेंद्रियाणां च पाटवानि । भगो भोगास्पदत्वम् । गांभीर्यमक्षोभ्यत्वम् । स्थैर्यमचंचलता । आस्तिक्यं श्रद्धा । कीर्तिर्यशः । मानः पूज्यत्वम् । अनहंकृतिर्गर्वाभावः ॥ २९ ॥ एते एकोनचत्वारिंशदन्ये च ब्रह्मण्यशरण्यत्वादयो महांतो गुणा यस्मिन्नित्याः सहजा न वियंति न क्षीयंते स्म ॥ ३० ॥ तेन गुणपात्रेण गुणालयेन । पाप्मना पापहेतुना ॥ ३१ ॥ ३२ ॥ तस्य विरहो दुःसह इत्याह चतुर्भिः । ब्रह्मादयो यस्याः श्रियोऽपांगमोक्षः स्वस्मिन् दृष्टिपातस्तत्कामाः संतो बहुतिथं बहुकालं तपः समचरन्सम्यक् चरंतिस्म । भगवद्भिरुत्तमैः प्रपन्ना आश्रितापि सा श्रीर्यस्य पादलावण्यमलमनुरक्ता सती सेवते ॥ ३३ ॥ तस्य भगवतः श्रीमद्भिः पदैः । केतुर्ध्वजः । अजादयः केतोश्चिह्नानि येषां तैः ।

॥ २८ ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ॥ गांभीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ २९ ॥ एते चान्ये च भगवन्नित्या यत्र महागुणाः ॥ प्रार्थ्या महत्त्वमिच्छद्भिर्न वियंति स्म कर्हिचित् ॥ ३० ॥ तेनाहं गुणपात्रेण श्रीनिवासेन सांप्रतम् ॥ शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥ आत्मानं चानुशोचामि भवंतं चामरोत्तमम् ॥ देवान् पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान् ॥ ३२ ॥ ब्रह्मादयो बहुतिथं यदपांगमोक्षकामास्तपः समचरन्भगवत्प्रपन्ना ॥ सा श्रीः स्ववासमरविंदवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥३३॥ तस्याहमब्जकुलिशांकुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलंकृतांगी ॥ त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान्स मां व्यसृजदुत्स्मयतीं तदंते ॥ ३४ ॥ यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः ॥ त्वां दुःस्थमूनपदमात्मनि पौरुषेण संपादयन्यदुषु रम्यमबिभ्रदंगम् ॥ ३५ ॥ का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ॥ स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदंघ्रिविटंकितायाः ॥ ३६ ॥ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ॥ परीक्षिन्नाम राजर्षिः प्रातः प्राचीं सरस्वतीम् ॥ ३७ ॥ इति श्रीम० म० प्र० पृथ्वीधर्मसंवादो नाम षोडशोऽध्यायः ॥ १६ ॥ सूत उवाच ॥ तत्र गोमिथुनं राजा हन्यमानमनाथवत् ॥ दंडहस्तं च वृषलं ददृशे नृपलांछनम् ॥ १ ॥ वृषं मृणाल-

यद्वा । अब्जादीनामाश्रयैः । सम्यगलंकृतमंगं यस्याः साहं ततो भगवतो विभूतिं संपदमुपलभ्य प्राप्य त्रीन् लोकानतिक्रम्यारोचे शोभितवत्यस्मि । पश्चात्तस्य विभूतेरंते नाशकाले प्राप्ते सत्युत्स्मयंतीं गर्वं कुर्वाणां मां स व्यसृजत्त्यक्तवान् ॥ ३४ ॥ किंच । यो वै आसुरो वंशो येषां तेषां राज्ञामक्षौहिणीशतरूपं ममातिभरं भारमपनीतवान् । त्वां चोनपदत्वाद्दुःस्थं संतं पौरुषेण पुरुषकारेणात्मनि स्वस्मिन्न संपूर्णपदं सुस्थं संपादयन् । लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययः । संपादयितुमित्यर्थः । अबिभ्रत् धृतवानित्यर्थः ॥ ३५ ॥ तस्य विरहं का वा सहेत प्रेमावलोकश्च रुचिरस्मितं च वल्गुजल्पश्च तैर्मधुमानिनीनां सत्यभामादीनां समानं गर्वसहितं स्थैर्यस्तब्धत्वं योऽहरत् । यस्यांघ्रिणा रजस्युत्थितेन विटंकितायाः सस्यादिमिषेण रोमोत्सवो भवति ॥ ३६ ॥ कथयतोः सतोः प्राचीं पूर्ववाहिनीं सरस्वतीं कुरुक्षेत्रे ॥ ३७ ॥ इति प्रथमे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे राज्ञः कलेर्निग्रह उच्यते ॥ तस्यैवं वीर्यभाजोऽपि

वैराग्यं वक्तुमद्भुतम् ॥ १ ॥ हन्यमानं ताड्यमानम् ॥ १ ॥ मृणालं पद्मकंदस्तद्वद्धवलम् । भयान्मेहंतं मूत्रयंतम् । इवेत्यनेन पदावशेषो धर्मो भयान्मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशस्तस्याप्य- निर्वाहात्कंपमान इवेति दर्शितम् ॥२॥ धर्मदुघां हविर्दोग्ध्रीम् । क्षामां कृशाम् । यवसं तृणम् । अत्र सस्यादिप्रसवक्षयाद्वित्सेव । यज्ञाद्यभावात्कृशा । अत एव यज्ञभागमिच्छंती पृथ्वीति सूचि- तम् ॥ ३ ॥ कार्तस्वरं सुवर्णं तन्मयः परिच्छदः परिकरो यस्य । स्वर्णनिबद्धमित्यर्थः । सज्जीकृतकार्मुकः ॥ ४ ॥ हंसि घातयसि । राजाहमिति चेत्तत्राह । नट इव वेषमात्रेण नरदेवोऽसि कर्मणा त्वद्विजः शूद्रः ॥ ५ ॥ अशोच्यान्निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽस्यतो वधमर्हसि ॥ ६ ॥ वृषं प्रत्याह । त्वं वा कः । स्वयमेव संभावयति । किं कश्चिद्देवो वृषरूपेणास्मान् परिखेदयन् वर्तसे ॥ ७ ॥ दोर्दंडैः परिरंभिते परिरंभितवत्सुरक्षिते ते शुचोऽश्रूणि विनान्येषामश्रूणि नानुपतंतीति खेदहेतुत्वं दर्शितम् ॥ ८ ॥ एवमुक्ते पुनरपि शोचंतं

धवलं मेहंतमिव बिभ्यतम् ॥ वेपमानं पदैकेन सीदंतं शूद्रताडितम् ॥ २ ॥ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ॥ विवत्सां साश्रुवदनां क्षामां यवसमिच्छतीम् ॥ ३ ॥ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् ॥ मेघगंभीरया वाचा समारोपितकार्मुकः ॥ ४ ॥ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली ॥ नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ॥ ५ ॥ कस्त्वं कृष्णे गते दूरं सह गांडीवधन्वना ॥ शोच्योऽस्यशोच्यान् रहसि प्रहरन्वधमर्हसि ॥ ६ ॥ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ॥ वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥ न जातु पौरवेंद्राणां दोर्दंडपरिरंभिते ॥ भूतलेऽनुपतंत्यस्मिन्विना ते प्राणिनां शुचः ॥ ८ ॥ मा सौरभेयानुशुचो व्येतु ते वृषलाद्भयम् ॥ मारोदीरंब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यंते साध्व्यसाधुभिः ॥ तस्य मत्तस्य नश्यंति कीर्तिरायुर्भगो गतिः ॥ १० ॥ एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः ॥ अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पद ॥ मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ १२ ॥ आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ॥ आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ॥ १३ ॥ जनेऽनागस्यघं युंजन्सर्वतोऽस्य च मद्भयम् ॥ साधूनां भद्रमेव स्यादसाधुदमने कृते ॥ १४ ॥ अनागःस्विह भूतेषु य आगस्कृन्निरंकुशः ॥ आहर्तास्मि भुजं साक्षादमर्त्यस्यापि सांगदम् ॥ १५ ॥ राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् ॥ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथा-

प्रत्याह । भो सुरभेः पुत्र मा शुचः शोकं मा कुरु । व्येत्वपयातु । गां प्रत्याह । अंब मातः शास्तरि मयि जीवति सति ते भद्रमेवातो मा रोदीः ॥ ९ ॥ मद्धितार्थमेवैनं हनिष्यामि न तवो- पकारायेत्याह यस्येति द्वाभ्याम् । हे साध्वि सर्वा याः काश्चिदपीत्यर्थः । असाधुभिस्त्रस्यंते पीड्यंत इत्यर्थः । भगो भाग्यम् । गतिः परलोकः ॥ १० ॥ ११ ॥ पुनरपि शोचंतं वृषं प्रत्याह । कोऽवृश्चच्चिच्छेद । त्वादृशास्त्वद्विधा दुःखिताः ॥ १२ ॥ वो भद्रमस्तु । आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवंतं कीर्तिं दूषयतीति तथा तमाख्याहि ॥ १३ ॥ ननु तदाख्याने कृते कथं भद्रं स्यादित्यत आह । यस्मादनागसि जने योऽघं दुःखं युंजन् भवत्यस्यैवंभूतस्य मत्तः सकाशात्सर्वत्रापि भयं भवति ततः साधूनां भद्रं भवेदेवेति ॥ १४ ॥ एतस्य दंडेऽहमसमर्थ इति मा शंकीरित्याह । अनागःस्विति । आगस्कृदपराधकर्ता । तस्यामर्त्यस्य देवस्यापि भुजमाहर्तास्म्याहरिष्यामि । सांगदमित्यनेन मूलत उत्पाट्याहरिष्यामीति दर्शितम् ॥ १५ ॥ नन्वेकस्य निग्रहेणा-

न्यस्यानुग्रहे तव किं प्रयोजनं तत्राह । राज्ञो हीति अन्यानधर्मिष्ठान् । शासतो दंडयतः ॥ १६ ॥ आर्तानामभयं यस्मात्तद्वचो वो युष्माकं युक्तमुचितमेव ॥ १७ ॥ वयं तु यतः पुरुषात्प्रा-
न्यस्यानुग्रहे तव किं प्रयोजनं तत्राह । राज्ञो हीति अन्यानधर्मिष्ठान् । शासतो दंडयतः ॥ १६ ॥ आर्तानामभयं यस्माद्वचो वो युष्माकं युक्तमुचितमेव ॥ १७ ॥ वयं तु यतः पुरुषात्प्रा-
णिनां क्लेशहेतवो भवेयुस्तं पुरुषं न विजानीमः । यतो वादिनां वाक्यभेदैर्विमोहिताः ॥ १८ ॥ वाक्यभेदानेवाह । विकल्पं भेदं वसत आच्छादयंति ये योगिनस्ते आत्मानमेवात्मनः प्रभुं सुखदुःख-
प्रदमाहुः । तदुक्तम् । आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मन इति । यद्वा विकल्पैः कुतर्कैः प्रावृता नास्तिकाः । एवं हि ते वदंति । न तावद्देवतादीनां प्रभुत्वं कर्माधीनत्वात् । न च कर्मणः स्वा-
धीनत्वादचेतनत्वाच्च । अतः स्वयमेव प्रभुर्न चान्यः कश्चिदिति । अन्ये दैवज्ञा दैवं ग्रहादिरूपां देवताम् । परे तु मीमांसकाः कर्म । अपरे लौकायतिकाः स्वभावम् ॥ १९ ॥ क्वचिदपि सेश्वरेषु मध्ये ।
केष्वपीति दुर्लभत्वं दर्शितम् । निश्चय इति सिद्धांतत्वम् । अप्रतर्क्यान्मनोऽगोचरादनिर्देश्याद्वचनागोचरात्परमेश्वरात्सर्वं भवतीति विमृश विचारय स्वबुद्ध्या ॥ २० ॥ विखेदो गतमोहः । पर्यचष्ट
प्रत्यभाषत ज्ञातवानिति वा ॥ २१ ॥ अनिर्धारितमिव ब्रुवन्घातकं जानन्नपि न सूचयेदित्येवंरूपं धर्मं ब्रवीष्यतो धर्मोऽसि । सूचने को दोष इत्यत आह । यदिति स्थानं नरकादि ॥२२॥ यद्वा।

निह ॥ १६ ॥ धर्म उवाच ॥ एतद्वः पांडवेयानां युक्तमार्ताभयं वचः ॥ येषां गुणगणैः कृष्णो दौत्यादौ भगवान्कृतः ॥ १७ ॥ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ॥ पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १८ ॥ केचिद्विकल्पवसना आहुरात्मानमात्मनः ॥ दैवमन्येऽपरे कर्म स्वभावमपरे प्रभुम् ॥ १९ ॥ अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ॥ अत्रानुरूपं राजर्षे विमृश स्वमनीषया ॥ २० ॥ एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ॥ समाहितेन मनसा विखेदः पर्यचष्ट तम् ॥ २१ ॥ राजोवाच ॥ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ॥ यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥ २२ ॥ अथवा देवमायाया नूनं गतिरगोचरा ॥ चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २३ ॥ तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ॥ अधर्मांशैस्त्रयो भग्नाः स्मयसंगमदैस्तव ॥ २४ ॥ इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः ॥ तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥ २५ ॥ इयं च भूर्भगवता न्यासितोरुभरा सती ॥ श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २६ ॥ शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताधुना ॥ अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यंति मामिति ॥ २७ ॥ इति धर्मं महीं चैव सांत्वयित्वा महारथः ॥ निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ २८ ॥ तं जिघांसुमभिप्रेत्य विहाय नृपलांछनम् ॥ तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥

धर्मोऽसाविति ज्ञात्वा तस्य पादानु-
अज्ञानादप्यकथनं भवतीत्याह । अथवेति । देवस्य मायाया गतिर्वध्यघातकलक्षणा वृत्तिर्भूतानां चेतसो वचसश्चागोचरा सुज्ञेया न भवतीति निश्चयः ॥२३॥ धर्मोऽसाविति ज्ञात्वा तस्य पादानु-
वादेन व्यवस्थामाह । तप इति द्वाभ्याम् । अधर्मपादैस्तव त्रयः पादास्त्रिभिरंशैर्भग्नाः । स्मयो विस्मयः ॥ २४ ॥ इदानीं कलौ हे धर्म ते पादश्चतुर्थोऽशस्तत्रापि सत्यमेवास्ति यतः सत्याद्भवा-
नात्मानं निर्वर्तयेत्कथंचिद्धारयेत् । यद्वा । पुरुषस्त्वां साधयेत् । तमपि पादमनृतेन संवर्धितः कलिरूपोऽयधर्मो ग्रहीतुमिच्छति । तत्रेयं स्थितिः । कृतयुगे प्रथमं संपूर्णश्चतुष्पाद्धर्मस्त्रेतायां चतु-
र्णामपि पादानां मध्ये स्मयेन तपःसंगेन शौचं मदेन दया अनृतेन सत्यमित्येवं चतुर्थोऽशो ह्रीयते । द्वापरे त्वर्धम् । कलौ चतुर्थोऽशोऽवशिष्यते सोऽप्यंते नंक्ष्यतीति ॥ २५ ॥ न्यासितोऽ-
न्योन्येद्वारेणावतारित उरुर्भरो भारो यस्य सः । कृतं कौतुकं मंगलं यस्याः सा ॥ २६ ॥ अश्रूणि कलयति मुंचतीत्यश्रुकला तेन त्यक्ता सती शूद्रा भोक्ष्यंति मामिति शोचति ॥ २७ ॥

निशातं निशितम् । अधर्मस्य हेतुर्यः कलिस्तं हंतुमित्यर्थः ॥ २८ ॥ अभिप्रेत्य ज्ञात्वा ॥ २९ ॥ शरण्य आश्रयार्हः श्लोक्यः सत्कीर्त्यर्हः ॥ ३० ॥ गुडाकेशोऽर्जुनस्तस्य यशोधरा ये वयं तेषां तान्प्रति बद्धोऽञ्जलिर्येन तस्य ते । किं कथंचन केनाप्यंशेन न वर्तितव्यम् । यस्मात्त्वमधर्मस्य बंधुः ॥ ३१ ॥ तदेवाह । राजदेहेषु वर्तमानं त्वामनु सर्वतः प्रवृत्तः । अनार्यं दौर्जन्यम् । अंहः स्वधर्मत्यागः । ज्येष्ठा अलक्ष्मीः । माया कपटम् ॥ ३२ ॥ तत्तस्माद्धर्मेण सत्येन च वर्तितव्ये वर्तितुमर्हे ब्रह्मावर्ते देशे । यज्ञस्य वितानं विस्तारस्तत्र विज्ञा निपुणाः ॥ ३३ ॥ इज्या यागस्तद्रूपा मूर्तिर्यस्य । शं क्षेमं कामांश्च । नन्विंद्रादयो देवा इज्यंते नतु हरिस्तत्राह । एष स्थावरादीनामात्मेति । तथापि जीववन्न परिच्छिन्न इत्याह । अंतर्बहिरिति । यथा वायुः प्राणरूपेणांतस्थोऽपि बहिरप्यस्ति तद्वत्सर्वांतर्यामीश्वरोऽपीति ॥ ३४ ॥ उद्यतासिमुद्धृतखड्गम् । दंडपाणिं यमम् । उद्यतमुद्युक्तम् ॥ ३५ ॥ अत्र न वस्तव्यमिति या तवाज्ञा तया यत्र क्वापि वत्स्यामि किंतु

॥ २९ ॥ पतितं पादयोर्वीक्ष्य कृपया दीनवत्सलः ॥ शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ ३० ॥ राजोवाच ॥ न ते गुडाकेशयशोधराणां बद्धांजलेर्वै भयमस्ति किंचित् ॥ न वर्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्मबंधुः ॥ ३१ ॥ त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः । लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दंभः ॥ ३२ ॥ न वर्तितव्यं तदधर्मबंधो धर्मेण सत्येन च वर्तितव्ये ॥ ब्रह्मावर्ते यत्र यजंति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३३ ॥ यस्मिन्हरिर्भगवानिज्यमान इज्यामूर्तिर्यजतां शं तनोति ॥ कामानमोघान् स्थिरजंगमानामंतर्बहिर्वायुरिवैष आत्मा ॥ ३४ ॥ सूत उवाच ॥ परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ॥ तमुद्यतासिमाहेदं दंडपाणिमिवोद्यतम् ॥ ३५ ॥ कलिरुवाच ॥ यत्र क्वचन वत्स्यामि सार्वभौम तवाज्ञया ॥ लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम् ॥ ३६ ॥ तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि ॥ यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥३७॥ सूत उवाच ॥ अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ॥ द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥३८॥ पुनश्च याचमानाय जातरूपमदात्प्रभुः ॥ ततोऽनृतं मदं कामं रजो वैरं च पंचमम् ॥ ३९ ॥ अमूनि पंच स्थानानि ह्यधर्मप्रभवः कलिः ॥ औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ४० ॥ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ॥ विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः

तत्र तत्राप्यात्तो गृहीत इषुः शरासनं च येन तं त्वामेव लक्षये ॥ ३६ ॥ तत्तस्मात् । नियतो निश्चलः । वत्स्ये वत्स्यामि ॥ ३७ ॥ पानं मद्यादेः । सूनाः प्राणिवधाः । द्यूतेऽनृतम् । पाने मदः । पूर्वं मदो दयानाशकत्वेनोक्तोऽत्र तु गर्वद्वारा तपोनाशकत्वेन । स्त्रीषु संगः । हिंसायां क्रौर्यं दयानाशकमिति ज्ञेयम् । यद्यपि सर्वं सर्वत्र संभवति तथापि प्राधान्येनानृतादीनां द्यूतादिषु यथासंख्यं ज्ञेयम् । द्वादशस्कन्धे तु सत्यं दया तपो दानमिति पादा विभोर्नृपेत्यत्र दानशब्देन शौचमेवोक्तम् । मनःशुद्धिरूपत्वाद्धृताभयदानस्य । त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसासंतोषविग्रहैरित्यत्र चासंतोषशब्देन तस्य हेतुर्गर्वो लक्ष्यते विग्रहशब्देन च तद्धेतुः स्त्रीसंग इत्यविरोधः ॥ ३८ ॥ चतुर्विधस्याप्येकत्रैवावस्थानं देहीति पुनर्याचमानाय जातरूपं सुवर्णं दत्तवान् । ततः सुवर्णदानादनृतं मदम् । काममिति स्त्रीषु संगम् । रज इति रजोमूलां हिंसाम् । एतानि चत्वारि पंचमं वैरं चादादिति ॥ ३९ ॥ औत्तरेयेण परीक्षिता अमून्यमीषु स्थानेषु न्यवसदि-

त्यर्थः ॥ ४० ॥ अथ इति हेतोः बुभूषुरुद्भवितुमिच्छुः । स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः ॥ ४१ ॥ एवं कलिं निगृह्य वृषस्य पादान्प्रतिसंदधे तपआदीनि प्रवर्तितवानित्यर्थः ॥ ४२ ॥ युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादेवेत्याह त्रिभिः । एतर्हीदानीं युधिष्ठिरेणारण्यं प्रवेष्टुमिच्छतोपन्यस्तं समर्पितमासनमध्यास्ते । अधुना आस्ते पालयत इति वर्तमानसामीप्ये वर्तमानवन्निर्देशः स्मेत्यध्याहारो वा ॥ ४३ ॥ ४४ ॥ सत्राय सत्रं कर्तुं दीक्षिता दीक्षां कृतवंतः ॥ ४५ ॥ इति प्र० टी० सप्तदशोऽध्यायः ॥ १७ ॥ राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ॥ स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥ १ ॥ परीक्षितो निर्याणमत्याश्चर्यं वक्तुं तत्संभावनाय जन्माश्चर्यमनुस्मारयति । यो वा इति । विप्लुष्टो निर्दग्धः सन् ॥ १ ॥ ब्रह्मकोपादुत्थितात्तक्षकाद्यः प्राणविप्लवः प्राणनाशस्तस्माद्यदुरुभयं तस्मान्न संमुमोह । तत्र हेतुर्यस्तु भगवत्येवार्पिताशय इति ॥ २ ॥ किंतु । उत्सृज्येति । वैयासकेः शुकस्य शिष्यः सन् । विज्ञाताऽजितस्य हरेः संस्थि-

॥४१॥ वृषस्य नष्टांस्त्रीन्पादांस्तपः शौचं दयामिति ॥ प्रतिसंदध आश्वस्य महीं च समवर्धयत् ॥४२॥ स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् ॥ पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षिता ॥ ४३ ॥ आस्तेऽधुना स राजर्षिः कौरवेंद्रश्रियोल्लसन् ॥ गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४४ ॥ इत्थंभूतानुभावोऽयमभिमन्युसुतो नृपः ॥ यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे कलिनिग्रहो नाम सप्तदशोऽध्यायः ॥ १७ ॥ सूत उवाच ॥ यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ॥ अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥१॥ ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् ॥ न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ २ ॥ उत्सृज्य सर्वतः संगं विज्ञाताजितसंस्थितिः ॥ वैयासकेर्जहौ शिष्यो गंगायां स्वं कलेवरम् ॥ ३ ॥ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ॥ स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदांबुजम् ॥ ४ ॥ तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः ॥ यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥ यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ॥ तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः ॥ ६ ॥ नानुद्वेष्टि कलिः सम्राट् सारंग इव सारभुक् ॥ कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥ किं नु बालेषु शूरेण कलिना धीरभीरुणा ॥ अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ॥ वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥ ९ ॥ या याः कथा भगवतः कथनीयोरुकर्मणः ॥ गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥ ऋषय

तिस्तत्त्वं येन सः ॥ ३ ॥ न चैतच्चित्रमित्याह । उत्तमश्लोकस्यैव वार्ता येष्वत एव नित्यं तत्कथारूपममृतं जुषतां संभ्रमो मोहो न स्यात् ॥ ४ ॥ तस्मिन् राज्ञि सुतरां तन्न चित्रमित्याशयेनाह । तावदिति । अभिमन्योः पुत्र एकराट् चक्रवर्तीशः पतिर्यावत् ॥ ५ ॥ ननु तदा कलेरप्रवेश एवास्तु प्रविष्टोऽपि न प्राभावदिति कुतस्तत्राह । यस्मिन्नहनि यर्हि यस्मिन्नेव क्षणे गां पृथ्वीमनुवृत्तः प्रविष्टः । अधर्मस्य प्रभवो यस्मिन् ॥ ६ ॥ नन्वधर्महेतुं कलिं सर्वथा किं न हतवांस्तत्राह । नानुद्वेष्टीति । सारंगे भ्रमर इव सारग्राही । सारमाह । यद्यस्मिन्कुशलानि पुण्यान्याशु संकल्पमात्रेण फलंति इतराणि पापान्याशु न सिद्ध्यन्ति यतस्तानि कृतान्येव सिद्ध्यन्ति नतु संकल्पितमात्राणीति ॥ ७ ॥ ननु दोषाधिक्याद्द्वेष एव युक्तः । न धीरेषु तस्याकिंचित्करत्वादित्याह । किं न्विति । किं नु तेन भवेत् । बालेष्वधीरेषु प्रमत्तोऽवहितः सन्यो वृक इव वर्तते ॥ ८ ॥ पारीक्षितमाख्यानमपृच्छत पृष्टवंतो यूयम् ॥ ९ ॥ किं बहुना वरैरेतावदेव कर्तव्यमिति

सर्वशास्त्रार्थसारं कथयति यो या इति । कथनीयान्युरूणि कर्माणि यस्य तस्य गुणकर्मविषयाः । बुभूषुभिः सद्भावमिच्छद्भिः ॥ १० ॥ पुनर्विस्तरेण कथनार्थं सूतोक्तिं तत्संगं चाभिनंदंति । सूतेति त्रिभिः । शाश्वतीः समा अनंतान्वत्सरान् जीव । अत्यंतसंयोगे द्वितीया । विशुद्धं यशः कीर्तयसि । तच्चास्माकं मर्त्यानाममृतं मरणनिवर्तकम् ॥ ११ ॥ किंच । अस्मिन्कर्मणि सत्रेऽनाश्वासेऽविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात् । धूमेन धूम्रो विवर्ण आत्मा शरीरं येषां तानस्मान् । कर्मणि षष्ठी । आसवं मकरंदम् । मधु मधुरम् ॥ १२ ॥ भगवत्संगिनो विष्णुभक्तास्तेषां संगस्य यो लवोऽत्यल्पः कालस्तेनापि स्वर्गं न तुलयाम समं न पश्याम न चापवर्गम् । संभावनायां लोट् । मर्त्यानां तुच्छा आशिषो राज्याद्या न तुलयामेति किमु वक्तव्यम् ॥ १३ ॥ एवं सत्संगमभिनंद्य श्रवणौत्सुक्यमाविष्कुर्वंति । को नामेति । रसविद्रसज्ञः । महत्तमानामेकांतेन परमयनमाश्रयो यस्तस्य कथायाम् । अगुणस्य प्राकृतगुणरहितस्य । कल्याणगुणानामंतं ये योगेश्वरास्तेऽपि न जग्मुरेतावंत इति न परिगणयांचक्रुः । भवः शिव पाद्मो ब्रह्मा च मुख्यौ येषां ते ॥ १४ ॥ नोऽस्माकं मध्ये भगवान्प्रधानं सेव्यो

ऊचुः ॥ सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ॥ यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥ ११ ॥ कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ॥ आपाययति गोविंदपादपद्मासवं मधु ॥ १२ ॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ १३ ॥ को नाम तृप्येद्रसवित्कथायां महत्तमैकांतपरायणस्य ॥ नांतं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥ तन्नो भवान्वै भगवत्प्रधानो महत्तमैकांतपरायणस्य ॥ हरेरुदारं चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन् ॥ १५ ॥ स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ॥ ज्ञानेन वैयासकिशब्दितेन भेजे खगेंद्रध्वजपादमूलम् ॥ १६ ॥ तन्नः परं पुण्यमसंवृतार्थमाख्या[illegible]मत्यद्भुतयोगनिष्ठम् ॥ आख्याह्यनंताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥ सूत उवाच ॥ अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्याऽपि विलोमजाताः ॥ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥ कुतः पुनर्गृणतो नाम तस्य महत्तमैकांतपरायणस्य ॥ योऽनंतशक्तिर्भगवाननंतो महद्गुणत्वाद्यमनंतमाहुः ॥ १९ ॥ एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ॥ हित्वेतरान्प्रार्थयतो विभूतिर्यस्यांघ्रिरेणुं जुषतेऽ

यस्य स भवान्नः शुश्रूषतां हरेश्चरितं विस्तारयतु ॥ १५ ॥ तच्च शुकपरीक्षित्संवादेन कथयेत्याहुः । स वा इति द्वाभ्याम् । वैयासकिना श्रीशुकेन शब्दितेन कथितेन येन ज्ञानेन ज्ञानसाधनेनापवर्ग इत्याख्या यस्य तत् खगेंद्रध्वजस्य हरेः पादमूलं भेजे ॥ १६ ॥ तदसंवृतार्थं यथा तथा आख्याहि । तदेव निर्दिशंति । परीक्षिते कथितं पारीक्षितमाख्यानं श्रीभागवतं पुराणम् । परं पुण्यं सत्त्वशोधकम् । अत्यद्भुते योगे निष्ठा यस्य । अनंतस्याचरितैरुपपन्नं युक्तम् । अत एव भागवतानामभिरामं प्रियम् । एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम् ॥ १७ ॥ श्रीभागवतव्याख्याने लब्धप्रसंगं महतामादरपात्रमात्मानं श्लाघते द्वाभ्याम् । अहो इत्याश्चर्ये । ह इति हर्षे । वयमिति बहुवचनं श्लाघायाम् । प्रतिलोमजा अप्यद्य जन्मभृतः सफलजन्मान आ जाताः । वृद्धानामनुवृत्त्या आदरेण । ज्ञानवृद्धः शुकस्तस्य सेवयेति वा । यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडां महत्तमानामभिधानयोगो लौकिकोऽपि संभाषणलक्षणः सम्बन्धो विधुनोत्यपनयति ॥ १८ ॥ कुतः पुनः किं पुनर्वक्तव्यं तस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो दौष्कुल्यं विधुनोतीति । यद्वा । नाम गृणतः पुनः कुतो दौष्कुल्यमिति ।

यद्वा । गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमिति कैमुत्यन्यायमेवाह । अनंताः शक्तयो यस्य । स्वतोऽप्यनंतः । किंच । महत्सु गुणा यस्य स महद्गुणस्तस्य भावस्तस्मात् । यं गुणतोऽप्यनंतमाहुः ॥ १९ ॥ एतत्प्रपंचयति त्रिभिः । एतावतेति । तस्य यदसाम्यमनतिशायनं च गुणैस्तत्साम्ये तदाधिक्यं चान्यस्य नास्तीत्यस्यार्थस्य ज्ञानमेतावता सूचितेनालं पर्याप्तं कस्तद्विस्तरतो वक्तुं शक्नोति । तदेवाह । इतरान्ब्रह्मादीन्प्रार्थयमानान् हित्वा विभूर्विर्लक्ष्मीरनभीप्सोरपि यस्यांघ्रिरेणुं सेवत इति ॥ २० ॥ अथेत्यर्थांतरे । यस्य पादनखादवसृष्टं निःसृतमपि विरिंचेनोपहृतं समर्पितमर्हणांभोऽर्घोदकमीशसहितं जगत्पुनाति । विरिंचोपहृतं सेशमिति च तयोरप्युपासकत्वमुक्तम् । तस्मान्मुकुंदव्यतिरिक्तः को नाम भगवत्पदस्यार्थः स एव सर्वेश्वर इत्यर्थः ॥ २१ ॥ धीराः संतः । ऊढं धृतम् । अंत्यं परमकाष्ठापन्नम् । तदाह । यस्मिन्नहिंसोपशमश्च स्वाभाविको धर्मः ॥ २२ ॥ एवं स्वमाग्यमभिनंद्य पारीक्षितोपाख्यानं वक्तुमाह । अहं हीति । हे अर्यमणो हे सूर्यास्त्वयीशूर्तयोऽत्र यावानात्मावगमो मम ज्ञानं तावदाचक्षे प्रवक्ष्यामि । तथा हि । यथा पक्षिणो नभ आत्मसमं स्वशक्त्यनुरूपमेवोत्पतंति न कृत्स्नं तथा विपश्चितोऽपि विष्णोर्गतिं

नभीप्सोः ॥ २० ॥ अथापि यत्पादनखावसृष्टं जगद्विरिंचोपहृतार्हणांभः ॥ सेशं पुनात्यन्यतमो मुकुंदात्को नाम लोके भगवत्पदार्थः ॥ २१ ॥ यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु संगमूढम् ॥ व्रजंति तत्पारमहंस्यमंत्यं यस्मिन्नहिंसोपशमः स्वधर्मः ॥ २२ ॥ अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ॥ नभः पतंत्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥ एकदा धनुरुद्यम्य विचरन्मृगयां वने ॥ मृगाननुगतः श्रांतः क्षुधितस्तृषितो भृशम् ॥ २४ ॥ जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ॥ ददर्श मुनिमासीनं शांतं मीलितलोचनम् ॥ २५ ॥ प्रतिरुद्धेंद्रियप्राणमनोबुद्धिमुपारतम् ॥ स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥ विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ॥ विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥ अलब्धतृणभूम्यादिरसंप्राप्तार्घसूनृतः ॥ अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ॥ ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च ॥ २९ ॥ स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ॥ विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत् ॥ ३० ॥ एष किं निभृताशेषकरणो मीलितेक्षणः ॥ मृषासमाधिराहोस्वित्किं नु स्यात्क्षत्रबंधुभिः ॥ ३१ ॥ तस्य पुत्रोऽतितेजस्वी विहरन्बालकोऽर्भकैः ॥ राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२ ॥ अहो अधर्मः पालानां पीव्नां बलिभुजामिव ॥ स्वामिन्यघं

लीलां समं स्वमत्यनुरूपमेव वदंतीत्यर्थः ॥ २३ ॥ संप्रति कथामुपक्षिपति । एकदेति ॥ २४ ॥ अचक्षाणोऽपश्यन् तं प्रसिद्धमाश्रमम् । तस्मिंश्च मुनिं शमीकम् ॥ २५ ॥ प्रतिरुद्धाः प्रत्याहृता इंद्रियादयो येन तम् । अत एवोपरतम् । स्थानत्रयाज्जाग्रदादिलक्षणात्परं तुरीयं पदं प्राप्तम् । अत एव ब्रह्मभूतत्वादविक्रियम् ॥ २६ ॥ विप्रकीर्णाभिर्जटाभिराच्छन्नम् । रुरुर्मृगविशेषस्तस्य चर्मणा चाच्छन्नम् । विशेषेण शुष्यत्तालु यस्य सः तथाभूतं मुनिमुदकमयाचत ॥ २७ ॥ न लब्धं तृणं तृणासनं भूम्याद्युपवेशस्थानं च येन सः । न संप्राप्तोऽर्घः सूनृतं प्रियवचनं च येन सः ॥ २८ ॥ मत्सरस्तदुत्कर्षासहनम् ॥ २९ ॥ गतासुं मृतम् । धनुष्कोट्या चापाग्रेण ॥ ३० ॥ सर्पनिधाने राज्ञोऽभिप्रायमाह । एष किं प्रत्याहृतसर्वेंद्रियः सन्मीलितेक्षणः स्थितो यद्वा क्षत्रबंधुभिरागतैर्गर्वैर्वा किं नु स्यादित्यवज्ञया मृषासमाधिः सन्निति जिज्ञासयेत्यर्थः ॥ ३१ ॥ तस्य पुत्रः शृंगीनामा । अतितेजस्वी तपोबलसंपन्नः । अघं दुःखम् । तत्रार्भकमध्ये ॥ ३२ ॥ पालानां राज्ञाम् ।

पीव्यां पुष्टानाम् अवमवेव निर्दिशति । स्वामिनि दासानां यद्धं पापाचरणं बलिभुजां काकानामिव शुनामिव चेति ॥ ३३ ॥ दासत्वं दर्शयति । ब्राह्मणैरिति । सभांडं भांडे एव स्थितम् ॥ ३४ ॥ तत्तदनंतरम् । अहं शास्मि दंडयामि ॥ ३५ ॥ इति वयस्यानुक्त्वा रोषेण ताम्रे अक्षिणी यस्य सः । कौशिकी नदी तस्या अपः संधिरार्षः । वाग्वज्रं शापम् ॥ ३६ ॥ इत्येवं सर्पनिक्षेपेण । दंक्ष्यति भक्षयिष्यति । पाठांतरे भस्मीकरिष्यति । स्मेति पादपूरणे । कुलस्यांगारतुल्यं मे मया । ततेति ह्रस्वत्वमार्षम् ॥ ३७ ॥ गले सर्पकलेवरं यस्येत्यलुक्समासः । मुक्तकंठ उच्चैस्त्यर्थः ॥३८॥३९॥ तं सर्पं विसृज्य केनापकारः कृतः ॥४०॥ अनभिनंदनवाक्यमहो इत्यादि । बत कष्टम् ॥ त्वया महत्पापं कृतम् । द्रोहेऽपराधे । दमो दंडः ॥४१॥ परो विष्णुरित्याख्या ख्यातिर्यस्य तं नरदेवं नृभिः संमातुं सम्यं द्रष्टुम् ॥ ४२ ॥ अलक्ष्यमाणेऽदृश्यमाने । अविवरूथवन्मेषसंघवत् ॥ ४३ ॥ नष्टो नाथो यस्य लोकस्य तस्य वसोर्वसुनो धनस्य विलुंपकादपहर्तु-

यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥ ब्राह्मणैः क्षत्रबंधुर्हि द्वारपालो निरूपितः ॥ स कथं तद्गृहे द्वास्थः स भांडं भोक्तुमर्हति ॥ ३४ ॥ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ॥ तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् ॥ कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥ इति लंघितमर्यादं तक्षकः सप्तमेऽहनि ॥ दंक्ष्यति स्म कुलांगारं चोदितो मे ततद्रुहम् ॥३७॥ ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम् ॥ पितरं वीक्ष्य दुःखार्तो मुक्तकंठो रुरोद ह ॥ ३८ ॥ स वा आंगिरसो ब्रह्मन् श्रुत्वा सुतविलापनम् ॥ उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् ॥ ३९ ॥ विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि ॥ केन वा ते प्रतिकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥ निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनंदत् ॥ अहो बतांहो महदद्य ते कृतं स्वल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४१ ॥ न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे ॥ यत्तेजसा दुर्विषहेण गुप्ता विंदंति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥ अलक्ष्यमाणे नरदेवनाम्नि रथांगपाणावयमंग लोकः ॥ तदा हि चोरप्रचुरो विनंक्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥ ४३ ॥ तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुंपकात् ॥ परस्परं घ्नंति शपंति वृंजते पशून्स्त्रियोऽर्थान्पुरुदस्यवो जनाः ॥ ४४ ॥ तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ॥ ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसंकरः ॥ ४५ ॥ धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः ॥ साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ॥ क्षुत्तृट्श्रमयुतो दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥ अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना ॥

श्चोरादेर्हेतोर्यत्पापं भविष्यति तदस्मन्निमित्तत्वादस्मानुपैष्यति । अनन्वयं संबंधशून्यमेव । तदेव पापं दर्शयति । परस्परमिति । शपंति परुषं वदंति । पश्वादीन्वृंजतेऽपहरंति । पुरुदस्यवश्चोरबहुलाः ॥ ४४ ॥ आर्यधर्मः सदाचारः शुनां कपीनामिवार्थकामयोरेवाभिनिवेशितचित्तानाम् ॥ ४५ ॥ एवं राजमात्रस्य शापानर्हत्वमुक्त्वा प्रस्तुते विशेषमाह । धर्मपाल इति सार्धेन । हयमेधयाडश्वमेधयाजी । नन्वेवंभूतश्चेत्तत्कुतोऽपकृतवांस्तत्राह । क्षुत्तृडिति । स्वागतप्रश्नाद्यभावेनावज्ञातः प्रत्युत शापं कथमर्हतीत्यर्थः ॥ ४६ ॥ अस्य महापापस्यान्यत्प्रायश्चित्तमदृष्ट्वा पापमावेदयन् भगवंतं प्रार्थयते । अपापेष्विति । राजा चेत्प्रतिशापं दद्यात्तर्हि निष्कृतिर्भवेदपि तत्तु न संभवति तस्य महाभागवतत्वादित्याह । तिरस्कृता निंदिताः । विप्रलब्धाः

सतः प्रपंचस्य उद्भवादिषु निमित्तभूता या लीला तया गृहीतं ब्रह्मादिरूपेण रज नित्यर्थः ॥ ११ ॥ तदेवाह त्रयोदशभिः । परस्मै सर्वोत्तमाय । तत्र हेतुः भूयसेऽपरिमितमहिम्ने । तद्दर्शयति । आदिशक्तित्रितयं॰येन तस्मै । अंतर्भवायांतर्यामिणे अत एव सर्वांतरत्वादनुपलक्ष्यं वर्त्म यस्य ॥ १२ ॥ विचित्रफलदातृत्वमनुस्मरन् प्रणमति भूयः पुनश्च नमः सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहंत्रे असतामधर्मशीलानामसंभवायानुद्भवहेतवे । अखिलसत्त्वमूर्तये तत्तद्देवतादिरूपेण तत्तत्फलदायेत्यर्थः । समग्रसत्त्वमूर्तये इति वा । पुनरिति पूर्वोक्तोभयवैलक्षण्यमाह । पारमहंस्ये प्रत्यङ्नि-ष्ठारूपे आश्रमे व्यवस्थितानां पुंसामनुमृग्यमतन्निरसनेन पुनःपुनर्मृग्यं यदात्मतत्त्वं तस्य दाशुषे दात्रे ॥ १३ ॥ सात्वतां भक्तानामृषभाय पालकाय । कुयोगिनां भक्तिहीनानां विदूरा काष्ठा दिगपि यस्य दुर्ज्ञेयायेत्यर्थः । तदेवं वैषम्यप्रतीतावपि निर्दोषत्वायाचिंत्यमैश्वर्यमाह । निरस्तं साम्यमतिशयश्च यस्य यदपेक्षयान्यस्य साम्यमतिशयश्च नास्ति तेन राधसा ऐश्वर्येण स्वधामनि स्व-स्वरूपे ब्रह्मणि रममाणाय ॥ १४ ॥ सर्वसाधनेभ्यो भक्तेः श्रैष्ठ्यमनुस्मरन् प्रणमति । यत्कीर्तनमिति द्वाभ्याम् । अर्हणं पूजनम् । सुभद्रं मंगलं श्रवो यशो यस्य तस्मै ॥ १५ ॥ विचक्षणा विवे-

॥११॥ श्रीशुक उवाच ॥ नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ॥ गृहीतशक्तित्रितयाय देहिनामंतर्भवायानुपलक्ष्यवर्त्मने ॥ १२ ॥ भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाऽखिलसत्त्वमूर्तये ॥ पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥ नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥ निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ १४ ॥ यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वंदनं यच्छ्रवणं यदर्हणम् ॥ लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥ १५ ॥ विचक्षणा यच्चरणोपसादनात् संगं व्युदस्योभयतोऽन्तरात्मनः ॥ विंदंति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥ १६ ॥ तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्र-विदः सुमंगलाः ॥ क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥ १७ ॥ किरातहूणांध्रपुलिंदपुल्कसा आभीरकंका यवनाः खसा-दयः ॥ येऽन्ये च पापा यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ॥ १८ ॥ स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ॥ गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिंगो भगवान् प्रसीदताम् ॥ १९ ॥ श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ॥ पतिर्गतिश्चांधक-वृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥ २० ॥ यदंघ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यंति हि तत्त्वमात्मनः ॥ वदंति चैतत्कवयो यथारुचं

किनो यस्य चरणयोरुपसादनादुपसत्तेर्भजनात् । अंतरात्मनो मनसः उभयत्रेह च परत्र च संगं व्युदस्य निरस्य गतक्लमाः प्रयासरहिताः ॥ १६ ॥ भक्तिशून्यानां सर्वसाधनवैफल्यं दर्शयन्नमति । तपस्विन इति । मनस्विनो योगिनः । सुमंगलाः सदाचाराः । यस्मिंस्तप आद्यर्पणं विना सुभद्रश्रवस इत्यस्यावृत्तिर्यशःश्रवणादेः प्राधान्यज्ञापनाय ॥ १७ ॥ भक्तेः परमशुद्धिहेतुत्वं दर्शयन्नाह । किरातादयो ये पापजातयः अन्ये च ये कर्मतः पापरूपास्ते यदुपाश्रया भागवतास्तदाश्रयाः संतः शुद्ध्यन्ति । असंभावनाशंकां परिहरति । प्रभविष्णवे प्रभवनशीलायेति ॥ १८ ॥ सर्वोपास्यत्वमनु-स्मरन्प्रार्थयते । स एष आत्मवतां धीराणामात्मा आत्मत्वेनोपास्य इत्यर्थः । त्रयीमयत्वादिविशेषणैस्तत्तन्मार्गेणोपास्यत्वं विवक्षितम् । गतव्यलीकैर्निष्कपटैर्भक्तैर्वितर्क्यमत्याश्चर्येण वीक्षणीयं लिंगं मूर्तिर्यस्य सः प्रसीदतु ॥ १९ ॥ सर्वपालकत्वमनुस्मरन्नाह । श्रिय इति । गतिश्च सर्वापत्सु रक्षकः ॥२०॥ ज्ञानप्रदत्वमनुस्मरन्नाह । यदंघ्रीति द्वाभ्याम् । यस्यांघ्र्योरनुध्यानमेव समाधिस्तेन धौतया

शोधितया । यथारुचं रुच्यनुसारेण सगुणनिर्गुणादिभेदैः यद्वा रुक् प्रतिभा यथामतीत्यर्थः ॥ २१ ॥ किंच । पुरा कल्पादावजस्य हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती सरस्वती तस्य मुखतः किल प्रादुर्भूता । स्वानि लक्षणानि शिक्षाद्युक्तानि यस्याः सा । ऋषीणां ज्ञानप्रदानामृषभः श्रेष्ठः ॥ २२ ॥ इदानीं स्ववाचं श्रोतृजनाह्लादिनीं शृंगारकरुणादिशोभां प्रार्थयते । भूतैरिति । स मे वचांसि अलंकृषीष्टालंकरोतु । अन्यस्य वचसामन्येनालंकारासंभवमाशंक्य तस्यांतर्यामितामाविष्करोति । यो महद्भिर्भूतैरिमाः पुरः शरीराणि सृष्ट्वाऽमूषु पूर्ष्वंतर्यामितया शेते वसति । अत्र पुरुषसमाख्यां प्रमाणयति । यद्यस्मात्पूरुष इति । अत एव य एकादशेंद्रियपंचभूतरूपान्षोडशगुणान्कला भुंक्ते प्रकाशयति पालयतीति वा । तदा त्वात्मनेपदमार्षम् । अत्र हेतुः । यतः षोडशानामात्मा चेतयिता स्वार्थे कः । नत्वत्र जीवत्वमुच्यते प्रार्थनाविरोधात् ॥२३॥ श्रीव्यासं नमस्करोति । नम इति । सौम्याः भक्ताः यस्य मुखांबुरुहे आसवो मकरंदस्तम् ॥२४॥ इदानीं प्रश्नोत्तरतया ब्रह्मनारदसंवादं प्रस्तौति । एतदिति । उत्पत्तिसमय एव वेदा गर्भे यस्य । साक्षाद्धरिर्यदाह ॥२५॥ इति द्वितीयस्कंधे टीकायां चतुर्थोऽध्यायः ॥४॥ पंचमे नारदेनाथ पृष्टः सृष्ट्यादि वक्त्यजः ॥

स मे मुकुंदो भगवान्प्रसीदताम् ॥ २१ ॥ प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ॥ स्वलक्षणा प्रादुरभूत्किलाऽस्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ २२ ॥ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ॥ भुंक्ते गुणान्षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान्वचांसि मे ॥ २३ ॥ नमस्तस्मै भगवते व्यासायामिततेजसे ॥ पपुर्ज्ञानमयं सौम्या यन्मुखांबुरुहासवम् ॥ २४ ॥ एतदेवात्मभू राजन् नारदाय विपृच्छते ॥ वेदगर्भोऽभ्यधात्साक्षाद्यदाह हरिरात्मनः ॥२५॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे चतुर्थोऽध्यायः ॥४॥ नारद उवाच ॥ देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ॥ तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥ यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ॥ यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥ २ ॥ सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः ॥ करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ॥ एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥ आत्मन्भावयसे तानि न पराभावयन्स्वयम् ॥ आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः ॥ ५ ॥ नाहं वेद परं ह्यस्मिन् नापरं न समं विभो ॥ नामरूपगुणैर्भाव्यं सदसत्किंचिदन्यतः ॥ ६ ॥ स भवानचरद्घोरं यत्तपः सुसमाहितः ॥

हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ १ ॥ नारदाय विपृच्छते वेदगर्भोऽभ्यधादित्युक्तं तत्र नारदप्रश्नमाह । देवदेवेति । हे भूतभावन ! अत एव सर्वेषां पूर्वज अनादे । ज्ञायतेऽनेनेति ज्ञानं तत्साधनं यत्तद्विजानीहि विशेषेण ज्ञापयेत्यर्थः । कथंभूतं आत्मतत्त्वं नितरां दृश्यते येन तत् ॥ १ ॥ उपलक्षणभूतं विश्वमेवात्मज्ञानसाधनमतस्तद्विशेषं पृच्छति । यद्रूपं येन रूप्यते प्रकाश्यते । यदधिष्ठानं यदाश्रयम् । यतो येन सृष्टं यत्संस्थं यस्मिन् लीयते यत्परं यदधीनं यच्चेति यदात्मकं स्वतः सत्कारणतो वेत्यर्थः । तस्य तत्त्वं याथार्थ्यं तत्त्वतो वद ॥ २ ॥ न जानामीति नच वक्तव्यमित्याह । सर्वमिति । भूतं जातं भव्यं जनिष्यमाणं भवत् जायमानं तेषां प्रभुर्यतोऽतो विशिष्टेन ज्ञानेनावसितं निश्चितम् ॥ ३ ॥ आस्तामिदं आदौ तावत्त्वमेव कथयेत्याह । यतो यस्य विज्ञानम् । कस्तव विज्ञानद इत्यर्थः । यदाधारः कस्तवाश्रयः यत्परो यदधीनः यदात्मको यत्स्वरूपः । मम तु त्वमेव स्वतंत्रः परमेश्वर इति बुद्धिः तव तपश्चरणेन तु परशंकया पृच्छामीत्याह सार्धैश्चतुर्भिः । एकोऽसहायः ॥ ४ ॥ आत्मनि भावयसे पालयसि स्वयमेव पराभवमप्रापयन्नक्लमः श्रमरहितः यथोर्णनाभिरात्मन एव शक्तिमवष्टभ्य सृजति तद्वत् ॥ ५ ॥ तस्मादहं त्वस्मिन्विश्वस्मिन्परमुत्तममपर-

मध्यमं समं मध्यमं च तत्रापि नाम मनुष्यादि रूपं द्विपदत्वादि गुणः शुक्लत्वादि तैर्भाव्यं साध्यं तत्रापि सदसत्स्थूलं सूक्ष्मं च किंचिदप्यन्यतो न वेद किंतु त्वत्त एव सर्वं भवतीति मन्ये ॥ ६ ॥ स तथाविधोऽपि भवांस्तपोऽचरदिति यत्तेन नोऽस्मान्खेदयसे मोहयसि । यतः पराशंकां ईश्वरांतराशंकां प्रयच्छसि ॥ ७ ॥ तथैवाहं त्वयानुशासितः शिक्षितः सन् बुद्ध्ये बुद्ध्येयं तथा विजानीहि विशेषेण ज्ञापय ॥ ८ ॥ प्रश्नमभिनंदति । वत्स हे पुत्र ! तवेदं विचिकित्सितं संदेहः तत्पूर्वकः प्रश्नोऽयं सम्यगित्यर्थः। यतः कारुणिकस्य तवायं प्रश्नः । अत्र हेतुः । यद्यतो भगवद्वीर्यप्रकाशने धर्मे प्रवर्तितोऽस्मि अतस्त्वं जिज्ञासुरपि मयि कृपामेव कृतवानित्यर्थः ॥ ९ ॥ ननु त्वमेव भगवानित्युक्तं त्वया एकः सृजसि भूतानीत्यादिना । सत्यम् । यथा मामीश्वरत्वेन प्रभाषसे तदपि तव भाषणं नात्यंतमनृतं यतः कारणादेतावत्प्रभावस्य भाव एतावत्त्वं मेऽस्ति किंतु मत्तः परमीश्वरमविज्ञाय ब्रूषे अतः सादृश्यात्तवेयं भ्रांतिर्नतु बुद्धिपूर्वमनृतमित्यर्थः । यत ईश्वरान्ममैतावत्त्वं तमविज्ञायेति वान्वयः ॥१०॥ तर्हि कोऽसावीश्वर इत्यपेक्षायां भक्त्या नमस्कुर्वन्नेव तं कथयति त्रिभिः । येन स्वप्रकाशेन रोचितं प्रकाशितमेव प्रकाशयामि सृष्ट्याभिव्यक्तं करोमि । यथार्कादयश्चैतन्यप्रकाश्यमेव प्रकाशयंति । तथा च श्रुतिः । न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति ॥ ११ ॥ तस्मै नमो धीमहि

तेन खेदयसे नस्त्वं पराशंकां प्रयच्छसि ॥ ७ ॥ एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर ॥ विजानीहि यथैवेदमहं बुद्ध्येऽनुशासितः ॥ ८ ॥ ब्रह्मोवाच ॥ सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ॥ यदहं चोदितो धर्मे भगवद्वीर्यदर्शने ॥ ९ ॥ नानृतं तव तच्चापि यथा मां प्रब्रवीषि भोः ॥ अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥ येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ॥ यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥ तस्मै नमो भगवते वासुदेवाय धीमहि ॥ यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुम् ॥ १२ ॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ॥ विमोहिता विकत्थंते ममाहमिति दुर्धियः ॥ १३ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः ॥ १४ ॥ नारायणपरा वेदा देवा नारायणांगजाः ॥ नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥ नारायणपरो योगो नारायणपरं तपः ॥ नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १६ ॥ तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ॥ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥ सत्त्वं

यस्य मायया विमोहिताः संतो युष्मदादयो मां जगद्गुरुं जगत्कारणं वदंति तस्मै ॥१२॥ यन्माययेति मायासंबंधोक्तेस्तस्य दुर्जयत्वोक्तेश्च तस्यापि किमस्ति संसारो नैवेत्याह । मत्कपटमसौ जानातीति यस्य दृष्टिपथे स्थातुं विलज्जमानयैव तस्मिन्स्वकार्यमकुर्वंत्याऽमुया मायया विमोहिता अस्मदादयो दुर्धियोऽविद्यावृतज्ञाना एव केवलं विकत्थंते श्लाघंते अनेन यद्रूपमित्यस्य प्रश्नस्योत्तरमुक्तं भवति ॥ १३ ॥ तदेवं स्वस्मादन्यं परमेश्वरं निरूप्येदानीं यदधिष्ठानमित्यादिनवप्रश्नानां स एवाधिष्ठानादिकं सर्वमित्युत्तरं वक्तुं तद्व्यतिरेकेणान्यस्यामत्त्वमाह । द्रव्यमिति । द्रव्यं महाभूतान्युपादानरूपाणि कर्म जन्मनिमित्तं कालस्तत्क्षोभकः स्वभावस्तत्परिणामहेतुः जीवो भोक्ता वासुदेवात्परोऽन्योऽर्थो नास्ति कारणाव्यतिरेकात्कार्यस्य ॥ १४ ॥ तत्प्रपंचयति द्वाभ्याम् । नारायणः परः कारणं येषां ते । अनेनैव शास्त्रयोनित्वप्रतिपादनेनेश्वरे प्रमाणं सर्वज्ञत्वादिकं चोक्तम् । देवाश्च तदंगाज्जाता अतो न तद्व्यतिरिक्ताः । लोकाः स्वर्गादयस्तदानंदांशाः । मखास्तत्साधनभूताः ॥ १५ ॥ योगः प्राणायामादिः तपस्तत्साध्यं चित्तैकाग्र्यं ज्ञानं तत्साध्यं गतिस्तत्फलम् । अनेनैव सर्वं तदधीनमित्युक्तम् ॥१६॥ तर्हि त्वं किं करोषीत्यपेक्षायामाह । तस्य सृज्यमपि तेन सृष्टोऽहं

सृजामि । ईचया कटाचेण तत्र हेतवो द्रष्टुरित्यादयः ॥ १७ ॥ ननु कुतोऽयं जीवेश्वरविभागो यतस्त्वं प्रेर्यः स च प्रेरकः स्यादित्यपेचायां जीवेश्वरविभागहेतुमाह त्रिभिः । सत्त्वमिति । निर्गुणस्यापीश्वरस्यैते त्रयो गुणा बध्नंतीत्युत्तरेणान्वयः । कथंभूताः । तेनैव स्वातंत्र्येण स्थित्याद्यर्थं मायया गृहीताः ॥ १८ ॥ वस्तुतः सर्वदा मुक्तमपि मायाविषयं पुरुषं जीवं बध्नंति । क्व । कार्यमधिभूतं कारणमध्यात्मं कर्ताधिदैवतं तेषां भावस्तत्त्वं तस्मिन् । द्रव्यं महाभूतानि ज्ञानशब्देन देवताः क्रिया इंद्रियाणि तदाश्रयास्तेषां कारणभूतास्तत्तदभिमानेन बध्नंति ॥ १९ ॥ अतः स एष वश्यमाय एभिर्गुणैर्लिंगैर्जीवानामावरकैरुपाधिभिः सुष्ठलचिता गतिस्तत्त्वं यस्य सः स्वैर्भक्तैरेव लचिता गतिस्तत्त्वं यस्येति वा ॥ २० ॥ तस्य सृष्टिप्रकारमाह । कालमिति । कर्म जीवादृष्टम् । विबुभूषुर्विविधं भवितुमिच्छन् ॥ २१ ॥ गुणानां व्यतिकरः चोभः साम्यत्यागः स्वभावतः परिणामो रूपांतरापत्तिः पुरुष ईश्वरस्तेनाधिष्ठितत्वं त्रयाणां विशेषणम् । महतो महत्तत्त्वस्य ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्विक्रियमाणात् । तस्य च क्रियाज्ञानशक्तित्वात्रिगुणत्वेऽपि रजःसत्त्वाभ्यामुपबृंहितत्वं अहंकारस्य त्वावरकत्वात्तमःप्रधानत्वम् । अत एवाहंकारकार्येषु तामसमाकाशादिकं बहु राजसं

रजस्तम इति निर्गुणस्य गुणास्त्रयः ॥ स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥ कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ॥ बध्नंति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥ स एष भगवाँल्लिंगैस्त्रिभिरेभिरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ॥ २० ॥ कालं कर्म स्वभावं च मायेशो मायया स्वया ॥ आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥ कालाद्गुणव्यतिकरः परिणामः स्वभावतः ॥ कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥ महतस्तु विकुर्वाणाद्रजः सत्त्वोपबृंहितात् ॥ तमः प्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः ॥ २३ ॥ सोऽहंकार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥ द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥२४॥ तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ ॥ तस्य मात्रा गुणः शब्दो लिंगं यद्द्रष्टृदृश्ययोः ॥ २५ ॥ नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ॥ परान्वयाच्छब्दवाँश्च प्राण ओजः सहो बलम् ॥ २६ ॥ वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥ २७ ॥ तेजसस्तु विकुर्वाणादासीदंभो रसात्मकम् ॥ रूपवत्स्पर्शवच्चांभो घोषवच्च परान्वयात् ॥ २८ ॥ विशेषस्तु विकुर्वाणादंभसो गंधवानभूत् ॥ परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ २९ ॥ वैकारिकान्मनो जज्ञे देवा वैकारिका दश ॥ दिग्वातार्कप्रचेतोऽश्विवह्नींद्रोपेंद्रमित्रकाः ॥ ३० ॥ तैजसात्तु विकु-

सात्त्विकं चाल्पं एवं तदुपाधिकेषु जीवेष्वपि तथैव तामसाधिक्यम् ॥ २३ ॥ स च विकुर्वन्रूपांतरं गच्छन् । त्रैविध्यमेवाह । वैकारिकः सात्त्विकस्तैजसो राजसः यद्भिदा यस्य भेदः द्रव्यशक्तिरित्यादीनि प्रातिलोम्येन त्रयाणां लक्षणानि द्रव्ये महाभूताख्ये शक्तिर्यस्य क्रियास्विंद्रियेषु शक्तिर्यस्य ज्ञानेषु शक्तिर्यस्य । हे प्रभो बोद्धुं शक्त ॥ २४ ॥ भूतादेरिति तामसस्य विशेषणम् । ननु तामसात्प्रथमं शब्दो भवतीति प्रसिद्धम् । सत्यं स तु तस्य नभसो मात्रा सूक्ष्मं रूपं गुणाश्चासाधारणो व्यावर्तको धर्मः शब्दद्वारा नभ उत्पद्यत इत्यर्थः । एवमेव स्पर्शादिष्वपि द्रष्टव्यं शब्दस्य लक्षणं लिंगमिति कुड्याद्यंतरितेन केनचिदुच्चैर्गजो गज इत्युक्ते यो गजद्रष्टा यश्च तेन दृश्यो गजस्तयोर्लिंगं बोधकम् । लिंगविशेषणत्वाद्यच्छब्दस्य षंढत्वम् ॥ २५ ॥ परस्य नभसः कारणत्वेनान्वयाच्छब्दवांश्च वायुस्तस्यैव लक्षणं प्राणो देहधारणम् । ओजःसहोबलानींद्रियमनःशरीराणां पाटवानि तेषां हेतुरित्यर्थः ॥ २६ ॥ उदपद्यत उत्पन्नं स्वतो रूपवत्तेजो वायुनभसोः कारणभूतयोर-

न्वयात्स्पर्शशब्दवच्च । एवमंभसः पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥ २७ ॥ घोषः शब्दः ॥ २८ ॥ विशेषः पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥ २९ ॥ मनःशब्देनैव तदधिष्ठाता चंद्रोऽपि द्रष्टव्यः । अन्ये च दश देवा वैकारिकाः सात्विकाहंकारकार्याः । तानाह । दिशश्च वातश्च अर्कश्च प्रचेताश्च अश्विनौ च एते पंच श्रोत्रत्वक्चक्षुजिह्वाघ्राणानामधिष्ठातारः । वह्निश्च इंद्रश्च उपेंद्रश्च मित्रश्च कश्च प्रजापतिः एते पंच वाक्पाणिपादपायूपस्थानामधिष्ठातारः ॥ ३० ॥ यतो ज्ञानशक्तिर्बुद्धिः क्रियाशक्तिः प्राणश्च तैजसाहंकारकार्यौ अतो ज्ञानक्रियाविशेषरूपाणींद्रियाण्यपि तैजसादभवन्नित्यर्थः । तान्याह । श्रोत्रमिति । दोः पाणिः मेढ्रमुपस्थः । क्रमस्त्वत्र न विवक्षितः ॥ ३१ ॥ एवं कारणसृष्टिमुक्त्वा कार्यसृष्टिमाह । यदा एते असंगता अमिलिता आसन् अत एव यदा आयतनस्य शरीरस्य निर्माणे न शेकुः ॥ ३२ ॥ तदा सदसत्त्वं प्रधानगुणभावमुपादाय स्वीकृत्य उभयं समष्टिव्यष्ट्यात्मकं शरीरम् ॥ ३३ ॥ कालकर्मस्वभावानधिष्ठाय स्थितो जीव-

र्णादिंयाणि दशाभवन् ॥ ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ ॥ श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायवः ॥ ३१ ॥ यदैतेऽसंगता भावा भूतेंद्रियमनोगुणाः ॥ यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः ॥ ३३ ॥ वर्षपूगसहस्रांते तदंडमुदकेशयम् ॥ कालकर्मस्वभावस्थो जीवोऽजीवमजीवयत् ॥ ३४ ॥ स एव पुरुषस्तस्मादंडं निर्भिद्य निर्गतः ॥ सहस्रोर्वंघ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥ ३५ ॥ यस्येहावयवैर्लोकान्कल्पयंति मनीषिणः ॥ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ॥ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥ ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ॥ मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥ ३९ ॥ तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ॥ जानुभ्यां सुतलं शुद्धं जंघाभ्यां तु तलातलम् ॥ ४० ॥ महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ॥ पातालं पादतलत इति लोकमयः पुमान् ॥ ४१ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे पंचमोऽध्यायः ॥ ५ ॥ ब्रह्मोवाच ॥ वाचां वह्नेर्मुखं क्षेत्रं छंदसां

यतीति जीवः परमात्माऽजीवमचेतनं अजीवयच्चेतयति स्म ॥ ३४ ॥ निर्भिद्य पृथक्कृत्य स्थित इत्यर्थः ॥ ३५ ॥ तदवयवैर्लोकरचनामाह । यस्येति । कटिरित्यूरुमूलयोः पश्चाद्भागः जघनं पुरोभागः अधः सप्तलोकानतलादीन् । ऊर्ध्वं भूरादीन्सप्त ॥ ३६ ॥ वर्णानां तत उत्पत्तिं दर्शयति । पुरुषस्येति । ब्रह्म ब्राह्मणो मुखमिति कार्यकारणयोरभेदविवक्षयोक्तं बाहव इति च क्षत्रं क्षत्रियः ॥ ३७ ॥ इदानीमुपासनार्थं लोककल्पनाभेदान्दर्शयन्सप्तलोकपक्षमाह द्वाभ्याम् । भूर्लोकः पातालमारभ्य पद्भ्यां कटिपर्यंताभ्याम् ॥ ३८ ॥ स्तनद्वयादित्युपासनार्थत्वादूर्ध्वाधोभाववैपरीत्यं न दोषः । यद्वा । स्तनच्छब्दं कुर्वद्यदोष्ठद्वयं तस्मादित्यर्थः । ब्रह्मलोको वैकुंठाख्यः । सनातनो नित्यः । नतु सृज्यप्रपंचांतर्वर्तीत्यर्थः ॥ ३९ ॥ इदानीं चतुर्दशलोकपक्षं दर्शयति । तत्र जघनादिभिर्भूरादयः पूर्वोक्ता एव सप्त । कट्यादिभिरधः सप्त लोकानाह । तत्कट्यामिति द्वाभ्याम् । शुद्धं हरिभक्तनिवासत्वात् ॥ ४० ॥४१॥ त्रिलोकपक्षमाह । भूर्लोकः पातालादिसहितः ॥ ४२ ॥ इति द्वितीयस्कंधे टीकायां

पंचमोऽध्यायः ॥ ५ ॥ षष्ठे विराड्विभूतिश्च प्रोक्ताध्यात्मादिभेदतः ॥ दृढीकृतं च पूर्वोक्तं सर्वं पुरुषसूक्ततः ॥ १ ॥ इदानीं वैराजस्य विभूतिः सप्रपंचमनुवर्ण्यते । वाचामस्मदादिवागिंद्रियाणां तदधिष्ठातुर्वह्नेश्च तस्य मुखं क्षेत्रमुत्पत्तिस्थानम् । छंदसां गायत्र्यादीनां सप्तानां तस्य सप्त धातवस्त्वगादयः क्षेत्रम् । हव्यं देवानामन्नं कव्यं पितॄणां अमृतं तदुभयशेषो मनुष्याणां तेषामन्नानां सर्वरसस्य मधुरादेः षड्विधस्य चकारादस्मदादिरसनेंद्रियस्य तदधिष्ठातुर्वरुणस्य चैतस्य जिह्वा क्षेत्रमुत्पत्तिस्थानम् । एवं सर्वत्रानुक्तमुन्नेयम् ॥ १ ॥ सर्वासूनामस्मदादिप्राणानां तस्य नासे नासारंध्रे परमायने उत्तमक्षेत्रे । मोदप्रमोदयोश्च सामान्यविशेषगंधयोर्घ्राणो घ्राणेंद्रियं परमायनम् ॥ २ ॥ रूपाणां तेजसां रूपप्रकाशानां चक्षुरिंद्रियम् । अक्षिणी नेत्रगोलके सर्वत्र षष्ठ्यंतानां प्रथमांतं क्षेत्रं द्रष्टव्यम् । कर्णौ श्रोत्राधिष्ठाने श्रोत्रमिंद्रियं तस्य गात्रं शरीरं वस्तूनां ये सारांशास्तेषां भाजनं स्थानम् ॥ ३ ॥ अस्य त्वक् स्पर्शस्य वायोश्चेत्यर्थः । सर्वस्य मेधस्य यज्ञस्य उद्भिज्जजातीनां

सप्त धातवः ॥ हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥ सर्वासूनां च वायोश्च तन्नासे परमायने ॥ अश्विनोरोषधीनां च घ्राणो मोदप्रमोदयोः ॥ २ ॥ रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ॥ कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम् ॥ ३ ॥ त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि ॥ रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु संभृतः ॥ ४ ॥ केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ॥ ५ ॥ विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च ॥ सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥ ६ ॥ अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ॥ पुंसः शिश्न उपस्थस्तु प्रजात्यानंदनिर्वृतेः ॥ ७ ॥ पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ ८ ॥ पराभूतेरधर्मस्य तमसश्चापि पश्चिमः ॥ नाड्यो नदनदीनां तु गोत्राणामस्थिसंहतिः ॥ ९ ॥ अव्यक्तरससिंधूनां भूतानां निधनस्य च ॥ उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ १० ॥ धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ॥ विज्ञानस्य च सत्त्वस्य परस्यात्मा परायणम् ॥ ११ ॥ अहं भवान्भवश्चैव त इमे मुनयोऽग्रजाः ॥ सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥ १२ ॥ गंधर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ॥ पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ १३ ॥ अन्ये च विविधा जीवा जलस्थलनभौकसः ॥ ग्रहर्क्षकेतवस्तारा-

सर्ववृक्षाणाम् । यैर्वृक्षैर्यज्ञः सम्यक् साधितस्तेषामेव वा ॥ ४ ॥ केशा मेघानां क्षेत्रं पूर्वं तथोक्तेः श्मश्रूणि विद्युतां पादकरनखानि शिलालोहानामिति सादृश्यादूह्यम् । क्षेमकर्मणां पालनकर्तॄणाम् ॥ ५ ॥ विक्रमः पादन्यासो भूरादिलोकानामास्पदमाश्रयः भूरादिशब्दानामव्ययत्वात्षष्ठ्या लुक् । क्षेमो लब्धरक्षणं शरणं भयाद्रक्षणम् । सर्वेषां कामानां वरस्य वरणस्यापि हरेरंघ्रिरास्पदम् ॥ ६ ॥ वीर्यस्य शुक्रस्य शिश्नोऽधिष्ठानं उपस्थस्त्विंद्रियं प्रजात्यानंदः संतानार्थः संभोगस्तेन या निर्वृतिस्तापहानिस्तस्याः ॥ ७ ॥ परिमोक्षस्य मलत्यागस्य पायुरिंद्रियं गुदस्थानम् । निर्ऋतेरलक्ष्म्याः ॥ ८ ॥ तमसोऽज्ञानस्य पश्चिमः पृष्ठभागः गोत्राणां गिरीणामस्थिसंघातः ॥ ९ ॥ अव्यक्तं प्रधानं रसोऽन्नादिसारः सिंधवः समुद्रास्तेषां निधनस्य लयस्य उदरं स्थानं विदितं ज्ञानिभिर्मनसोऽस्मदादिलिंगशरीरस्य ॥ १० ॥ तुभ्यं तव कुमाराणां सनकादीनां भवस्य श्रीरुद्रस्य आत्मा चित्तं परमयनम् ॥ ११ ॥ एवं तावत्परमेश्वराज्जातं विश्वं ततो न भिन्नम् । यथा कुंडलं सुवर्णान्न पृथक् । स तु सर्वनियंता सर्वप्रकाशको नित्यमुक्त इत्यर्थादुक्तम् । एतदेव पुरुषसूक्तार्थकथनेन द्रढयति । तत्र सहस्रशीर्षेत्यर्धर्चस्य ब्राह्मणोऽस्य मुखमासीदित्यादेश्च ऋक्त्रयस्यार्थः पूर्वाध्याय एव

दर्शितः । पुरुष एवेद ᳡ सर्वमित्यस्यार्थं दर्शयति । अहं भवानिति सार्धैस्त्रिभिः । ते अग्रजा इमे सनकादयो मरीच्यादयश्च नागा गजाः ॥ १२ ॥ १३ ॥ जलं च स्थलं च नभश्चौकांसि येषां ते । ऋचाणि अश्विन्यादीनि केतवो धूमकेतुप्रभृतय औत्पातिकाः । नभौकस इति संधिरार्षः ॥ १४ ॥ सर्वं पुरुष एव न ततः पृथगित्यर्थः । प्रपंचेन तस्यापरिच्छेदं वक्तुं स भूमिमित्यस्यार्थमाह । तत्पदं विभक्तिव्यत्ययेन व्याचष्टे । तेनेति । तेन पुरुषेण विश्वमिति भूमिपदस्यार्थः । वितस्तिमिति दशांगुलपदस्य अधीत्यतिशब्दस्य आवृतमिति वृत्वेत्यस्य स च वितस्तिमधिकं व्याप्य तिष्ठतीत्याधिक्यमात्रं विवक्षितं न परिमाणम् । अनुपयोगादपरिच्छिन्नत्वाच्च ॥ १५ ॥ एतत् सदृष्टांतमाह । असौ प्राण आदित्यः । असौ वा आदित्यः प्राण इति श्रुतेः । स्वधिष्ण्यं मंडलं प्रकाशयन्यथा बहिश्च प्रकाशयति एवं विराट् देहं प्रकाशयन् ब्रह्मांडमंतर्बहिश्च प्रकाशयति ॥ १६ ॥ नित्यमुक्तत्वं दर्शयितुमुतामृतत्वस्येत्यस्यार्थमाह । स इति । अभयस्येति मंत्रगतामृतपदव्याख्या । अन्नेनेति पदं विभक्तिव्यत्ययेन व्याचष्टे । मर्त्यं मरणधर्मकमन्नं कर्मफलं यस्मादत्यगादतिक्रांतवान् । अतो न केवलं सर्वात्मकः किंतु अमृतत्वस्य निजानंदस्यापीश्वर इत्यर्थः । ननु प्रपंचात्मकस्य कुतो नित्यमुक्तत्वमित्याशंक्य तत्परिहाराय एतावानस्येत्यस्यार्थमाह । महिमेति । प्रपंचात्मकस्याप्यमृतेशत्वमित्येष महिमा दुरत्ययोऽपारः प्रपंचानभिभूतत्वादिति भावः । मंत्रेण च एतावानस्य महिमा विभूतिः स तु ज्यायान् महत्तर इति वदताऽयमेवार्थ उक्तः ॥१७॥ तदेवमीश्वरो नित्यमुक्त इत्युक्तं तदाश्रितानां भूतानां बंधमोक्षौ व्यवस्थयेति दर्शयन् पादोऽस्य विश्वाभूतानीत्यस्यार्थमाह । पादे-

स्तडितः स्तनयित्नवः ॥ १४ ॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥ तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ १५ ॥ स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ॥ एवं विराजं प्रतपंस्तपत्यंतर्बहिः पुमान् ॥ १६ ॥ सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥ महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः ॥ १७ ॥ पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ॥ अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १८ ॥ पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ॥ अंतस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥ १९ ॥ सृती विचक्रमे विष्वङ् साशनानशने उभे ॥ यदविद्या च विद्या च पुरुषस्तूभ-

ष्विति । तिष्ठंत्यत्रेति स्थितयो भूरादिलोकास्ते पादा इव पादा अंशा यस्य स स्थितिपात्तस्य पादेष्वंशभूतेषु लोकेषु सर्वभूतानि जीवान् विदुः । मंत्रे तु पादोऽस्य विश्वा भूतानीति सामानाधिकरण्यमधिष्ठानाधिष्ठेयाभेदविवक्षया पाद इत्येकवचनं च सामान्याभिप्रायेणेति व्याख्यातं भवति । भूतेषु फलवैचित्र्यं दर्शयंस्त्रिपादस्यामृतं दिवीत्यस्यार्थमाह । अस्येश्वरस्य संबंधि त्रिपादमृतं नित्यसुखं दिव्यूर्ध्वलोकेषु न त्रिलोक्यामित्यर्थः । तदेव त्रिपाच्छब्दोक्तं त्रैविध्यं दर्शयन्नाह । त्रयाणां लोकानां मूर्धा महर्लोकस्तस्य मूर्धानस्तदुपरितनलोकास्तेषु यथाक्रमममृतादिकमधायि निहितम् । तत्र त्रिलोक्यां नश्वरमेव सुखम् । महर्लोकस्य क्रममुक्तिस्थानत्वेऽपि कल्पांते तत्रत्यानां स्थानत्यागान्नाविनाशि सुखम् । जनलोके त्वमृतमविनाशि सुखं यावज्जीवं स्वस्थानापरित्यागात् । किंतु महर्लोकवासिनां कल्पांते त्रिलोकदाहोष्मपीडितानां तदा तत्र गमनादक्षेमदर्शनमस्ति । तपोलोके तस्याभावात्क्षेममेव । वक्ष्यति हि । त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना । यांत्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिता इति । सत्यलोके त्वभयं मोक्षः तत्प्रत्यासत्तेः ॥ १८ ॥ एतदेव वैचित्र्यमधिकारिभेदेनोपपादयंस्त्रिपादूर्ध्व इत्यस्यार्थमाह । न प्रजायंते पुत्रादिरूपेणेत्यप्रजा नैष्ठिकब्रह्मचारिवानप्रस्थयतयस्तेषामाश्रमास्त्रिलोक्या बहिरासन् गृहमेधस्त्वंतः यस्मादबृहद्व्रतो ब्रह्मचर्यव्रतरहितः ॥१९॥ अयं चाधिकारभेद एकस्यैवावस्थाभेदेन नत्वत्यंतभिन्नविषय इति दर्शयंस्ततो विष्वङ्ङित्यस्यार्थमाह । विविधं सुष्ठु अंचतीति विष्वङ् पुरुषः क्षेत्रज्ञः सृती मार्गौ दक्षिणोत्तरौ विचक्रमे चलतिस्म । कथंभूते सृती । साशनानशने भोगापवर्गप्राप्तिसाधनभूते । अत्र हेतुत्वेन पुनर्विशेषणम् ।

श्री

अ

॥

यद्यतः अविद्याकर्मरूपा एका विद्या च तत्साधनोपासनारूपाऽन्या ॥ २० ॥ तदेवं विराडंतर्वर्तिनां फलवैचित्र्यमुक्त्वा तत्कारणस्येश्वरस्य तद्वैलक्षण्यं दर्शयितुं तस्माद्विराडजायतेत्यस्यार्थमाह । यस्मादंडं जज्ञे तत्र च भूतेंद्रियगुणात्मको विराट् च जज्ञे स ईश्वरस्तद्विश्वं विराड् देहं द्रव्यमंडं चातिक्रांतवान् । सूर्य इवेति पूर्वोक्त एव दृष्टांतः ॥ २१ ॥ नन्वेवं पुरुष एव चेत्सर्वं तर्हि यज्ञस्य तत्साधनानां चापृथग्भावाद्यज्ञैः पुरुषाराधनं न सिद्ध्येदित्याशंक्य तत्परिहाराय यत्पुरुषेण हविषेत्यादिमंत्रार्थं संगृह्य दर्शयति । यदेत्यादिना । अस्येति विराडंतर्यामिणः तस्यैव प्रकृतत्वात् नाभौ भवं नाभ्यं तस्मात् यज्ञसंभारान् साधनानि नापश्यम् ॥ २२ ॥ तदा तेषु संभारेषु साध्येषु सत्सु पुरुषावयवैरेते संभृता इति चतुर्थेनान्वयः । वनस्पतयो यूपाः । देवयजनं यज्ञभूमिः । इदं चेति वचनाद्यज्ञार्हे स्थाने उपविष्टः कथयतीति गम्यते । बहुगुणान्वितो वसंतादिकालः ॥ २३ ॥ वस्तूनि पात्रादीनि । ओषधयो व्रीह्यादयः स्नेहा घृतादयः । रसा मधुरादयः । सुवर्णादीनि लोहानि । मृदश्च चातुर्होत्रं होत्रादिकं कर्म ॥ २४ ॥ नामधेयानि ज्योतिष्टोमादीनि ऋगादीनामुक्तत्वान्मंत्रा इति स्वाहाकारादयः देवतानामनुक्रम उद्देशः । कल्पो बौधायनादिकर्मपद्धतिग्रंथः । अनेनाहं यच्च

याश्रयः ॥ २० ॥ यस्मादंडं विराड् जज्ञे भूतेंद्रियगुणात्मकः ॥ तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन् ॥ २१ ॥ यदाऽस्य नाभ्यान्नलिनादहमासं महात्मनः ॥ नाविदं यज्ञसंभारान् पुरुषावयवादृते ॥ २२ ॥ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ॥ इदं च देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥ वस्तून्योषधयः स्नेहा रसा लोहमृदो जलम् ॥ ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥ २४ ॥ नामधेयानि मंत्राश्च दक्षिणाश्च व्रतानि च ॥ देवतानुक्रमः कल्पः संकल्पस्तंत्रमेव च ॥ २५ ॥ गतयो मतयश्चैव प्रायश्चित्तं समर्पणम् ॥ पुरुषावयवैरेते संभाराः संभृता मया ॥ २६ ॥ इति संभृतसंभारः पुरुषावयवैरहम् ॥ तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ २७ ॥ ततस्ते भ्रातर इमे प्रजानां पतयो नव ॥ अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥ ततश्च मनवः काले ईजिरे ऋषयोऽपरे ॥ पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥ नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥ ३० ॥ सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ॥ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥ ३१ ॥ इति तेऽभिहितं तात यथेदमनुपृच्छसि ॥ नान्यद्भगवतः किंचिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥ न भारती मेंऽग मृषोपलक्ष्यते न

इति संकल्पः । तंत्रमनुष्ठानप्रकारः ॥ २५ ॥ गतयो विष्णुक्रमाद्याः । मतयो देवताध्यानानि । प्रायश्चित्तं भूर्भुवःस्वरादिकृतस्य भगवति समर्पणम् ॥ २६ ॥ संभृताः संपादिताः संभारा येन सोऽहं तेनैव यज्ञेनैव । अनेन अज्ञेन यज्ञमयजंतेति मंत्रार्थः सूचितः ॥ २७ ॥ तेन देवा अयजंतेत्यस्यार्थं सप्रपंचं दर्शयति । तत इति द्वाभ्याम् । व्यक्तमिंद्रादिरूपेण अव्यक्तं स्वतः । अनेन पुरुषं जातमग्रत इत्यस्यार्थो दर्शितः ॥ २८ ॥ काले स्वस्वावसरे ॥ २९ ॥ यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति । नारायण इति । आहितमधिष्ठितम् । भगवत्त्वे हेतुः । यः स्वतोऽगुणः सर्गादौ गृहीता मायया उरवो गुणा येन तस्मिन् ॥ ३० ॥ तत्परस्त्वमित्येतत्प्रश्नोत्तरं यदुक्तं स एष भगवान् सर्वेषां मम चेश्वर इति तदुपसंहरति । सृजामीति । पालनं तु स्वयमेव करोतीत्याह । विश्वमिति । पुरुषरूपेण विष्णुरूपेण त्रिशक्तिर्माया तां धारयतीति तथा सः ॥ ३१ ॥ यच्चेदं विश्वं यदात्मकश्च त्वमित्येवमादिसर्वप्रश्नानां सामान्योत्तरम् । यदुक्तम् । वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वत इति । पुरुष एवेदं सर्वमिति श्रुत्या च यद्दृढीकृतं तदुपसंहरति । इतीति । सदसदात्मकं कार्यकारणात्मकं भाव्यं सृज्यं भगवतः सकाशादन्यत् पृथक् न भवतीत्यभिहितम् ॥ ३२ ॥ यदुक्तं एतावत्त्वं

यतो हि मे तमविज्ञाय मामीश्वरं प्रब्रवीषि इति तदुपपाद्योपसंहरति । न भारतीति । यद्यस्मान्मे मया औत्कंठ्यं भक्त्युद्रेकस्तद्युक्तेन हृदा हरिर्धृतो ध्यातः । अंग हे नारद! अतो मे वाङ्मनइंद्रियाणां वृत्तयः सत्यार्था नतु मत्प्रभावेनेत्यर्थः ॥ ३३ ॥ अत्र स्वानुभवमेवान्वयव्यतिरेकाभ्यां प्रमाणयति द्वाभ्याम् । सोऽहं समाम्नायादिभिः सर्वोत्कृष्टोऽपि योगमाश्रित्यापि यत आत्मनो मम संभवो जन्म तमेव न ज्ञातवान् कुतोऽन्यस्य वार्ता । एतच्च तृतीयस्कंधे पद्मोद्भवे वक्ष्यते ॥ ३४ ॥ तदा समीयुषां शरणागतानां संसारनिवर्तकं मंगलावहं सुसेव्यं च तस्य चरणं नतोऽस्मि ततोऽचिंत्यमहिमत्वेन ज्ञातवानस्मीति कैमुत्यन्यायेनाह । यो हीति । स्वमायाविस्तारं यः स्वयमपि पर्यगात् । परिशब्दो निषेधे । एतावानिति न ज्ञातवानित्यर्थः । अपरे कुतो जानीयुः । तस्य चरणं नतोऽस्मीति पूर्वेण संबंधः । ननु सर्वज्ञः कथं न जानाति अंताभावादिति दृष्टांतेनाह । यथा स्वस्यांतं नभो नाप्नोति तद्वत् । नहि खपुष्पादर्शनं सार्वज्ञं विहंतीति भावः । तथा च वक्ष्यति । द्युपतय एव ते न ययुरंतमनंततया त्वमपि यदंतरांडनिचया ननु सावरणा इत्यादि । श्रुतिश्च । योऽस्याध्यक्षः परमे व्योमन्त्सो अंग वेद यदि वा न वेदेति ॥ ३५ ॥ एतत् प्रपंचयति । नाहमिति द्वाभ्याम् । वामदेवो रुद्रः यस्य ऋतां गतिं परमार्थस्वरूपम् । किंतु इदं प्रपंचरूपं तस्य मायया विनिर्मितं विचक्ष्महे विद्मः तदपि आत्मसमं स्वज्ञानानुरूपमेव नतु कृत्स्नम् । मोहितबुद्धय इत्ययं तदज्ञाने प्रपंचज्ञाने च हेतुः

**वै क्वचिन्मे मनसो मृषा गतिः ॥ न मे हृषीकाणि पतंत्यसत्पथे यन्मे हृदौत्कंठ्यवता धृतो हरिः ॥ ३३ ॥ सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवंदितः पतिः ॥ आस्थाय योगं निपुणं समाहितस्तन्नाध्यगच्छं यत आत्मसंभवः ॥ ३४ ॥ नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमंगलम् ॥ यो ह्यात्ममायाविभवं स्म पर्यगाद्यथा नभः स्वांतमथापरे कुतः ॥ ३५॥ नाहं न यूयं यदृतां गतिं विदुर्न वामदेवः किमुताऽपरे सुराः ॥ तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्ष्महे ॥ ३६ ॥ यस्यावतारकर्माणि गायंति ह्यस्मदादयः ॥ न यं विदंति तत्त्वेन तस्मै भगवते नमः ॥ ३७ ॥ स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ॥ आत्माऽऽत्मन्यात्मनात्मानं संयच्छति च पाति च ॥ ३८ ॥ विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम् ॥ सत्यं पूर्णमनाद्यंतं निर्गुणं नित्यमद्वयम् ॥ ३९ ॥ ऋषे विदंति मुनयः प्रशांतात्मेंद्रियाशयाः ॥ यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥ आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ॥ द्रव्यं विकारो गुण इंद्रियाणि विराट् स्वराट् स्थास्नु**

॥ ३६ ॥ ननु सर्वेऽपि तं वर्णयंतो दृश्यंते तत्राह । यस्येति ॥३७॥ अवतारकर्माणि संक्षेपतो दर्शयति । स एष आद्यो भगवान् यः पुरुषावतारः सन् सृष्ट्यादि करोति आत्मात्मन्यात्मनात्मनात्मानमिति कर्ता अधिकरणं साधनं कर्म च स्वयमेवेत्यर्थः । पुरुषावतारः सृष्ट्यादीनि च कर्माणीति संक्षेपोक्तिः ॥ ३८ ॥ न यं विदंति तत्त्वेनेत्युक्तं किं तत्तत्त्वमित्यपेक्षायामाह । ज्ञानं केवलं सत्यं तत्त्वम् । घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थं विशेषणानि । विशुद्धं विषयाकारशून्यम् । यतः प्रत्यक् सर्वांतरं अत एव सम्यक् संदेहादिरहितं अवस्थितं स्थिरं यतो निर्गुणम् । गुणकार्यं हि गुणव्यतिकराच्चंचलं भवति । यद्यपि वृत्तिज्ञानमपि स्वरूपज्ञानमेवेति न चांचल्यादिदोषयुक्तं तथाप्यंतःकरणवृत्तिदोषैस्तथा तथा भवतीति व्यवच्छिद्यते । एभिरेव विशेषणैः सत्यत्वमपि समर्थितम् । किंच यद्विकारवत्तदसत्यं दृष्टम् । न चास्य जन्मादयः षड्विकाराः संतीत्याह । अनाद्यंतं जन्मनाशरहितम् । अत एव जन्मानंतरास्तित्वलक्षणोऽपि विकारो नास्ति वृद्धिविपरिणामापक्षयाश्च न संति । यतः पूर्णम् । सर्वत्र हेतुः नित्यमद्वयम् । नित्यं सर्वदा द्वैतप्रतीतिसमयेऽपि परमार्थतोऽद्वयमिति ॥ ३९ ॥ अत्र विद्वदनुभवं प्रमाणयति । हे ऋषे नारद ! प्रशांतान्मेंद्रियाशयाः प्रसन्नदेहेंद्रियमनसो यदा भवंति तदा

विदंति । अन्यदा तदज्ञाने कारणमाह । यदा तदेव प्रकाशमानमेवासतां तर्कैर्विप्लुतं स्यात्तदा तिरोधीयेतेति ॥ ४० ॥ कल्पे कल्पे आत्मानं सृजतीत्युक्तं के तेऽस्य सृज्यमाना अवतारास्तानवतारान् विस्तरेणाह । आद्य इत्यादि यावत्समाप्ति । परस्य भूम्नः पुरुषः प्रकृतिप्रवर्तकः यस्य सहस्रशीर्षेत्युक्तो लीलाविग्रहः स आद्योऽवतारः । वक्ष्यति हि । भूतैर्यदा पंचभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् । स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः । यथोक्तम् । विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वंडसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत इति । यद्यपि सर्वेषामविशेषेणावतारत्वमुच्यते तथापि कालश्च स्वभावश्च सदसदिति कार्यकारणात्मिका प्रकृतिश्चैताः शक्तयः मन आदीनि कार्याणि ब्रह्मादयो गुणावताराः दक्षादयो विभूतय इति विवेक्तव्यम् । मनो महत्तत्त्वं द्रव्यं महाभूतानि । क्रमोऽत्र न विवक्षितः । विकारोऽहंकारः गुणः सत्त्वादिः विराट् समष्टिशरीरं स्वराट् वैराजः स्थास्नु स्थावरं चरिष्णु जंगमं च व्यष्टिशरीरम् ॥ ४१ ॥ अहं ब्रह्मा भवो रुद्रः यज्ञो विष्णुः दक्षादयो य इमे प्रजेशाः तललोकपालाः पातालाधिपतयः ॥ ४२ ॥ गंधर्वादीनामीशाः यक्षादीनां नाथाः रक्षोरगेति संधिरार्षः । ऋषीणां पितॄणां च श्रेष्ठाः प्रेतादीनामधीशाः ॥ ४३ ॥ किं बहुना यत्किंचिद्भगवदादि तत्सर्वं परमेव तत्त्वमित्यन्वयः । भगवदैश्वर्ययुक्तं महस्वत्तेजोयुक्तं ओजःसहसी इंद्रियमनःशक्ती तद्युक्तं

चरिष्णु भूम्नः ॥ ४१ ॥ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ॥ स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः ॥४२॥ गंधर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ॥ ये वा ऋषीणामृषभाः पितॄणां दैत्येंद्रसिद्धेश्वरदानवेंद्राः ॥ अन्ये च ये प्रेतपिशाचभूतकूष्मांडयादोमृगपक्ष्यधीशाः ॥ ४३ ॥ यत्किंच लोके भगवन्महस्वदोजः सहस्वद्बलवत् क्षमावत् ॥ श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम् ॥ ४४ ॥ प्राधान्यतो यानृष आमनंति लीलावतारान्पुरुषस्य भूम्नः ॥ आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान्सुपेशान् ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे षष्ठोऽध्यायः ॥ ६ ॥ ब्रह्मोवाच ॥ यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत् क्रौडीं तनुं सकलयज्ञमयीमनंतः ॥ अंतर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाद्रिमिव वज्रधरो ददार ॥ १ ॥ जातो रुचेरजनयत्सुयमान्सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ॥ लोकत्रयस्य महतीमहरद्यदाऽऽर्तिं स्वायंभुवेन मनुना हरिरित्यनूक्तः ॥ २॥ जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ॥

बलं दाक्ष्यं श्रीः शोभा ह्रीरकर्म जुगुप्सा विभूतिः संपत्तिः आत्मा बुद्धिस्तद्युक्तं अर्णो वर्णः अद्भुतार्णमाश्चर्यवर्णमित्यर्थः । रूपमेव स्वरूपं रूपवदस्वरूपं च यत्तत्सर्वं परं तत्त्वं तद्विभूतिरित्यर्थः ॥४४॥ हे ऋषे! ते तुभ्यं अनुक्रमिष्ये तदनुक्रमशुद्धसत्त्वावतारान्वक्तुमाह । प्राधान्यत इति । असत्कथाश्रवणैर्ये कर्णयोः कषाया मलास्तान् शोषयंतीति तथा तान् । सुपेशान् सुंदरान् । सकारलोपश्चार्षः । पीयतामिति शत्रंतं आपिबतां कर्णकषायशोषानित्यर्थः ॥४५॥ इति श्रीमद्भागवते द्वितीयस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ सप्तमे भगवल्लीलावतारा ब्रह्मणामृतं त्वया पीयतामित्यर्थः । यद्वा । णोदिताः । नारदाय तु तत्कर्मप्रयोजनगुणैः सह ॥ १ ॥ यत्र यदा क्षितितलोद्धरणार्थं वाराहीं तनुं बिभ्रत्सन्नुद्यातोऽनंतः तदा तं सुप्रसिद्धं हिरण्याक्षं दंष्ट्रया ददार ॥ १ ॥ यज्ञावतारमाह । रुचेः प्रजापतेः सकाशात्तद्भार्याया आकूतेः सूनुः सुतः सुयज्ञो नाम जातः स च स्वभार्यायां दक्षिणायां सुयमान् देवानजनयत् । स एवेंद्रः सन् यदार्तिमहरत्तदा पूर्वं सुयज्ञ इत्युक्तोऽप्यनु पश्चान्मनुना मातामहेन हरिरित्युक्तः । अनेन देवोत्पादनं लोकत्रयार्तिहरणं च तस्य कर्म दर्शितम् । एवं सर्वत्रावतारस्तत्कर्म च ज्ञेयम् ॥ २ ॥ कपिलावतारमाह । कर्दमस्य प्रजापतेर्गृहे च तद्भा-

र्यायां देवहूत्यां जज्ञे नवभिः स्त्रीभिर्भगिनीभिः सह । स च स्वमात्रे आत्मगतिं ब्रह्मविद्यामुक्तवान् । ययात्मगत्या सात्मनः शमलं मलिनीकरणं गुणसंगरूपं पंकमस्मिन्नेव जन्मनि विधूय कपिलस्य गतिं मुक्तिं प्राप्तवती ॥ ३ ॥ दत्तात्रेयावतारमाह । मया अहमेव तुभ्यं दत्त इति यद्यत आह ततः स नाम्ना दत्तो जातः । स्वभक्तेभ्यो योगैश्वर्यदानं तच्चरितं दर्शयति । यस्य पादपंकजयोः परागस्तेन पवित्रा देहा येषां ते उभयीमैहिकीमामुष्मिकीं च भुक्तिमुक्तिरूपां वा ॥४॥ कुमारावतारमाह । मे मयादौ यत्तपस्तप्तं तस्मात्स्वतपसो मत्तपसो हेतोः स हरिश्चतुःसनोऽभूत् सनत्कुमारः सनकः सनंदनः सनातन इति चत्वारः सनशब्दा नाम्नि यस्य सः । कथंभूतात्स्वतपसः सनादखंडितात् । यद्वा । स्वतपसः सनाद्दानात् समर्पणादित्यर्थः । षणुदाने । स च पूर्वकल्पस्य संप्लवे प्रलये विनष्टमुच्छिन्नसंप्रदायमात्मतत्त्वमिहास्मिन् कल्पे सम्यक् जगादोक्तवान् । सम्यक्त्वं दर्शयति । यद्गदितमात्रमेव मुनय आत्मन् आत्मनि मनस्यचक्षत साक्षादपश्यन् ॥ ५ ॥ नरनारायणावतारमाह । धर्मस्य पत्न्यां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन जातः । कथंभूतः । स्वोऽसाधारणस्तपःप्रभवो यस्य । तदेवाह । अनंगस्य पृतना देव्योऽप्सरसो भगवतः सकाशादात्मनः स्वप्रतिरूपा उर्वश्याद्याः स्त्रीर्दृष्ट्वा तस्य नियमावलोपं व्रतभंगं घटितुं साधयितुं न शेकुः । यद्वा । आत्मनः स्वस्य यो नियमस्तपोनाशनरूपस्तस्यावलोपं तत्र दृष्ट्वा भगवतस्तं घटयितुं न शेकुरिति ।

ऊचे ययाऽऽत्मशमलं गुणसंगपंकमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥ ३ ॥ अत्रेरपत्यमभिकांक्षत आह तुष्टो दत्तो मयाहमिति यद्भगवान्स दत्तः ॥ यत्पादपंकजपरागपवित्रदेहा योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ॥ ४ ॥ तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् ॥ प्राक्कल्पसंकल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥ ५ ॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः ॥ दृष्ट्वाऽऽत्मनो भगवतो नियमावलोपं देव्यस्त्वनंगपृतना घटितुं न शेकुः ॥ ६ ॥ कामं दहंति कृतिनो ननु रोषदृष्ट्या रोषं दहंतमपि ते न दहंत्यसह्यम् ॥ सोऽयं यदंतरमलं निविशन्बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥ विद्धः सपत्न्युदितपत्रिभिरंति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि ॥ तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवंति मुनयो यदुपर्यधस्तात् ॥ ८ ॥ यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतंतम् ॥ त्रात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥ नाभेरसावृषभ आस सुदेविसूनुर्यो वै

एतच्चाख्यानमेकादशे भविष्यति ॥ ६ ॥ यत्र कामविजयी क्रोधोऽपि बिभेति तत्र कामो न प्रभवतीति किं वक्तव्यमित्याह । काममिति । कृतिनः श्रीरुद्रप्रमुखा रोषयुक्तया दृष्ट्या कामं दहंति । रोषं त्वात्मानं दहंतमपि ते न दहंति क्रोधेनाभिभूयंत इत्यर्थः । नु अहो सोऽयं रोषो यदंतरं मन्मध्यं प्रविशन्नलं बिभेति । यद्वा । यस्यांतर्मनः कथंभूतं अमलं निर्मलं प्रविशन्निति ॥ ७ ॥ चरित्रेणैव कमप्यवतारं सूचयति । मातुः सपत्न्याः उदितान्युक्तानि वाक्यान्येव पतत्रिणो बाणास्तैर्विद्धो ध्रुवो राज्ञ उत्तानपदोऽन्ति समीपे तपसे तपस्तप्तुं ध्रुवगतिं ध्रुवपदम् । यत् यामुपरि स्थितामधस्तात्स्थिताः दिवि भवा दिव्याः सप्तर्षयः स्तुवंति । यद्वा । उपरि भृग्वादयः अधस्तात्सप्तर्षय इति ॥ ८ ॥ पृथ्ववतारमाह । यद्यदा ऋषिभिरर्थिनस्तदा वेनं त्रात्वा अन्वर्थं तत्पुत्र इति पदं नाम लेभे । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा इति हि पुत्रपदव्युत्पत्तिः ॥ कथंभूतं द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं दग्धं पौरुषं भगमैश्वर्यं च यस्य तम् । चरित्रांतरमाह । येन च जगति जगदर्थं वसूनि अन्नादिद्रव्याणि दुग्धा ॥ ९ ॥ ऋषभावतारमाह । असौ हरिर्नाभेराग्नीध्रपुत्रात्सुदेव्याः सूनुरास । नाभेर्भार्याया मेरुदेव्या एव सुदेवीत्यपि

संज्ञा । जडवद्योगेन नित्यसमाधिना चर्याम् । यदिति याम् । तत्र हेतुः समदृक् । तत्रापि हेतुः स्वस्थः स्वस्वरूपे स्थितः । यतः प्रशांतेंद्रियः । तत्कुतः यतः परितो मुक्तसंगः ॥ १० ॥ हयग्रीवाव-
तारमाह । सत्र इति । अथो इत्यर्थांतरे स एव साक्षाद्भगवान्मम ब्रह्मणः सत्रे यज्ञे हयशीर्षा आस । तपनीयं सुवर्णं तद्वद्वर्णो यस्य । छंदोमयो वेदमयस्तद्विधेया ये मखास्तन्मयः अमृतमय इति
वा पाठः । मखैर्यजनीया अखिला देवतास्तदात्मा च । अस्य श्वसतः श्वासं मुंचतो नस्तो नासापुटादुशतीरुशत्यः कमनीया वेदलक्षणा वाचो बभूवुः ॥ ११ ॥ मत्स्यावतारमाह । मत्स्यो भाविना
वैवस्वतेन मनुना दृष्टः क्षोणीमयः पृथ्वीप्रधानः तदाश्रय इत्यर्थः । अत एव निखिलजीवनिकायानामाश्रयः मे मुखाद्विस्रंसितान् गलितान्वेदस्य मार्गान्वेदानादाय तत्र युगांतसलिले विजहार । ह
हर्षेण ॥ १२ ॥ कूर्मावतारमाह । क्षीरोदधौ कच्छपवपुः सन्गोत्रं मंथनार्थं मंदरगिरिं पृष्ठेन धृतवान् । कदा अमृतलब्धये क्षीराब्धिमुन्मथ्नतां सताम् । निद्रायाः क्षणोऽवसर उत्सवो वा यस्य सः ।
निद्रावसरः कुतस्तत्राह । अद्रेः परिवर्तः परिभ्रम एव कषाणः कषणं घर्षणं सुखप्रदो यस्यां सा कंडूर्यस्य सः । यद्वा । अद्रिपरिवर्त एव कषाणः कषणं तेन अणति अपयातीति कषाणा कंडूर्यस्य ॥१३॥

**सत्रे ममास भगवान् हयशीरषाऽथो साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ॥ छंदोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥ मत्स्यो युगांतसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥ क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ॥ पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकंडूः ॥ १३ ॥ त्रैविष्टपोरुभयहासनृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येंद्रमाशु गदयाऽभिपतंतमाराद्रूरौ निपात्य विददार नखैः स्फुरंतम् ॥ १४ ॥ अंतःसरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरंबुजहस्त आर्तः ॥ आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमंगलनामधेय ॥ १५ ॥ श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ॥ चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥ ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां लोकान्विचक्रम इमान्यदथाधियज्ञः ॥ क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः ॥ १७ ॥ नार्थो बलेरयमुरु-**

<Note: the verse block above is printed as the following lines:>

चचार समदृग्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयः पदमामनंति स्वस्थः प्रशांतकरणः परिमुक्तसंगः ॥ १० ॥ सत्रे ममास भगवान् हयशीरषाऽथो
साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ॥ छंदोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥ मत्स्यो युगांतसमये मनुनोप-
लब्धः क्षोणीमयो निखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥ क्षीरोदधावमरदान-
वयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ॥ पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकंडूः ॥ १३ ॥ त्रैविष्टपोरुभयहासनृसिं-
हरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येंद्रमाशु गदयाऽभिपतंतमाराद्रूरौ निपात्य विददार नखैः स्फुरंतम् ॥ १४ ॥ अंतःसरस्युरुबलेन पदे
गृहीतो ग्राहेण यूथपतिरंबुजहस्त आर्तः ॥ आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमंगलनामधेय ॥ १५ ॥ श्रुत्वा हरिस्तमरणार्थिनम-
प्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ॥ चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥ ज्यायान्गुणैरवरजोऽप्यदितेः
सुतानां लोकान्विचक्रम इमान्यदथाधियज्ञः ॥ क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः ॥ १७ ॥ नार्थो बलेरयमुरु-

श्रीनृसिंहावतारमाह । त्रैविष्टपा देवास्तेषामुरुभयं हंतीति तथा स भगवान् । यद्वा । त्रैविष्टपा देवास्तेषामप्युरुभयं यस्मात्तादृशो हासो यस्य तन्नृसिंहरूपं अथवा हिरण्यकशिपो राज्यकाले त्रैविष्टपा
दैत्यास्तेषामुरुभयजनको हासो यस्मिंस्तत्त्रैविष्टपोरुभयहासं तच्च तन्नृसिंहरूपं कृत्वा कथंभूतं भ्रमंत्यो भ्रुकुट्यो दंष्ट्राश्च यस्मिंस्तत् करालं वक्त्रं यस्मिंस्तत् दैत्येंद्रं स्फुरंतमारात्समीप एव गदयोपलक्षित-
मभिपतंतं नखैर्विददार ॥ १४ ॥ हरिसंज्ञकावतारमाह । अंतरिति युगलेन । गजयूथस्य पतिः तीर्थरूपं श्रवो यशो यस्य स तीर्थश्रवाः । हे तीर्थश्रवः ! श्रवणेनैव मंगलं नामधेयं यस्य सः ॥ १५ ॥
तद्वचनं श्रुत्वा शरणार्थिनं तं हस्ते शुंडायां प्रगृह्य । किं कृत्वा । नक्रस्य ग्राहस्य वदनं विनिपाट्य विदार्य तस्मात्तद्वदनात् ॥ १६ ॥ वामनावतारमाह । अदितेः सुतानां द्वादशादित्यानां मध्ये
अधियज्ञः यज्ञाधिष्ठाता विष्णुः अवरजः कनीयानपि गुणैर्ज्यायान् ज्येष्ठः । गुणानेवाह । यद्यत इमाँल्लोकान् विचक्रमे पादन्यासैः क्रांतवान् । अथ प्रतिश्रुतानंतरमेव । तत्र हेतुः । बलेः क्ष्मां वाम-
नरूपेण जगृहे । नन्वीश्वरः स्वयं किमिति दुर्बलवत्तथा चक्रे तत्राह । याच्ञां विना धर्ममार्गे वर्तमानो न चाल्यः ऐश्वर्यान्न भ्रंशनीय इति ॥१७॥ ननु तर्हि याच्ञयापि चालनमनुचितमेवेत्याशंक्य

ततोऽधिकं स्वसालोक्यादि दास्यामीत्याशयेन हृतवानित्याह । नार्थ इति । यद्विबुधाधिपत्यमिदानीं बलात्प्राप्तमग्रे दीयमानं चायं बलेः पुरुषार्थो न भवति । कुत इत्यत आह । आ अप इति छेदः । उरुक्रमस्य पादशौचं चरणक्षालनरूपा अपः आ सर्वतो धृतवतः क शिखा शिखायां मूर्ध्नीत्यर्थः । किंच शुक्रेण वारितः शप्तोऽपि अंग हे नारद ! यः प्रतिश्रुतं विनाऽन्यत्र चिकीर्षत् कर्तुं नैच्छत् । यश्च तृतीयपादपूरणार्थं हरये आत्मानं देहमप्यभिमेनेंऽगीकृतवान् । एवं सदेहं त्रैलोक्यं श्रद्धया दत्तवतो विबुधाधिपत्यमर्थो न भवतीत्यर्थः ॥ १८ ॥ हंसावतारमाह । तुभ्यमिति । भृशं विवृद्धेन भावेनात्युद्रिक्तया भक्त्या परितुष्टः सन् भक्तियोगं साधु यथा तथोवाच। ज्ञानं चेति ज्ञानसाधनं किं तत् भागवतं नाम कथंभूतं तत्त्वमेव सतत्त्वमात्मतत्त्वदीपकम्। विवृद्धभावेनेति विशेषणस्य फल-माह । यदिति ॥ १९ ॥ तत्तन्मन्वंतरावतारमाह । चक्रमिति । स्वतेजो निजं प्रभावमेव चक्रं सुदर्शनं बिभर्ति । चक्रवदप्रतिहतं प्रभावं बिभर्तीत्यर्थः । तदेवाह । मनुवंशपालकः सन् त्रयाणां लोकानां पृष्ठे उपरि स्थिते सत्यलोकेऽपि कमनीयां स्वकीर्तिं विस्तारयन् राजसु दंडं विधत्ते ॥ २० ॥ धन्वंतर्यवतारमाह । लोकेऽवतीर्य धन्वंतरिः सन् पुरुरुजां महारोगिणां स्वनाम्नैव रुजो रोगान् हंति । स्वयमेव कीर्तिरिति कीर्त्यतिशयोक्तिः । अमृतं मरणशून्यमायुर्यस्मात्सः । अव अवसन्नं पूर्वं दैत्यैः प्रतिबद्धं यज्ञे भागमवरुंधे लभते । अवाप रुद्धमिति पाठेऽप्ययमेवार्थः । आयुर्विषयं वेदं चानुशा-

क्रमपादशौचमापः शिखा धृतवतो विबुधाधिपत्यम् ॥ यो वै प्रतिश्रुतमृतेन चिकीर्षदन्यदात्मानमंग शिरसा हरयेऽभिमेने ॥ १८ ॥ तुभ्यं च नारद भृशं भगवान्विवृद्धभावेन साधु परितुष्ट उवाच योगम् ॥ ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरंजसैव ॥ १९ ॥ चक्रं च दिक्ष्व-विहतं दशसु स्वतेजो मन्वंतरेषु मनुवंशधरो बिभर्ति ॥ दुष्टेषु राजसु दमं व्यदधात्स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ॥ २० ॥ धन्वंतरिश्च भगवान्स्वयमेव कीर्तिर्नाम्ना नृणां पुरुरुजां रुज आशु हंति ॥ यज्ञे च भागममृतायुरवावरुंध आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥ ॥ २१ ॥ क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु ॥ उद्धंत्यसाववनिकंटकमुग्रवीर्यस्त्रिःसप्तकृत्व उरुधारपरश्वधेन ॥ २२ ॥ अस्मत्प्रसाद-सुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे॥ तिष्ठन्वनं सदयितानुज आविवेश यस्मिन्विरुध्य दशकंधर आर्तिमार्च्छत् ॥ २३॥ यस्मा अदादुदधिरूढभयांगवेपो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ॥ दूरे सुहृन्मथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥ वक्षःस्थलस्पर्श-

स्ति प्रवर्तयति ॥ २१ ॥ परशुरामावतारमाह । जगतः क्षयाय विधिना दैवेनोपभृतं संवर्धितं मृत्यवे समर्पितमिति वा । ब्राह्मणेभ्यो द्रुह्यतीति तथा अतः उज्झितः पंथा वेदमार्गो येन । अत एव नरकार्तिं लिप्सतीव एवंभूतमवनेः कंटकतुल्यं क्षत्रमसौ महात्मा हरिरुद्धंत्युत्पाटयति । दीर्घतीक्ष्णधारेण परशुना ॥ २२ ॥ रामावतारमाह त्रिभिः । अस्मदिति । अस्माकं ब्रह्मादीनां प्रसादे सुमुखः कलया भरतादिरूपया सह कला माया तस्या ईशो गुरोर्दशरथस्याज्ञायां तिष्ठन् सीतालक्ष्मणाभ्यां सहितो वनमाविवेश । यस्मिन् विरोधं कृत्वा रावणो नाशं प्राप्तः ॥ २३ ॥ यस्मै रामायोदधि-र्मार्गं ददौ । सपदि शीघ्रं हरो यथा त्रिपुरं दिधक्षुस्तद्वदरिपुरं लंकां दग्धुमिच्छोः षष्ठी चतुर्थ्यर्थे । यद्वा पंचमीयम् । दिधक्षोः रामाद्धयं प्राप्तं तेनांगे कंपो यस्येति । कथंभूत उदधिः । ऊढं प्राप्तं यद्भयं तेनांगेषु वेपः कंपो यस्य । अत्र हेतुः । दूरे वर्तमाना सुहृत्सीता तया निमित्तभूतया मथितः क्षुभितो रोषस्तेन सुशोणात्यरुणा दृष्टिस्तयात्यंतं तप्यमानं मकराणामुरगाणां नक्राणां च चक्रं यस्मिन् ॥ २४ ॥ किंच युद्धे रावणस्य वक्षःस्थलस्पर्शेन रुग्णा भग्ना ये महेंद्रवाहस्यैरावतस्य दंतास्तैर्विडंबिताः स्वधवलिम्ना धवलीकृताः । तत्तद्दिक्षु पतितैः प्रकाशिता इत्यर्थः । या एवंभूताः

ककुभो दिशस्ताः जुषते सेवते पालयतीति वा। तथा तस्य दारहृत् रावणस्य। अहो मत्समः कोऽन्योऽस्तीति महागवर्णोढं प्राप्तं हासमसुभिः प्राणैः सह सद्यः शीघ्रं विनेष्यत्यपनेष्यति। कैः धनुषो विस्फूर्जितैष्टंकारघोषैरेव। कथंभूतस्य। अधिसैन्ये स्वपरसैन्यमध्ये उच्चरत उत्कर्षेण विचरतः। ककुब्जयरूढहासमिति पाठे दंतैरुज्ज्वलितानां ककुभां जयेन यो रूढहासः संजातगर्वस्तमपनेष्यतीत्यर्थः॥ २५॥ श्रीकृष्णावतारमाह भूमेरिति दशभिः। सुरेतरा असुरांशसंभूता राजानस्तेषां वरूथैः सैन्यैर्विमर्दितायाः भारेण पीडितायाः कलया रामेण सह जातः सन्। ननु कोऽसौ जातः। सितकृष्णौ केशौ यस्य भगवतः स एव साक्षात्। सितकृष्णकेशत्वं शोभैव नतु वयःपरिणामकृतं अविकारित्वात्। यत्तूक्तं विष्णुपुराणे। उज्जहारात्मनः केशौ सितकृष्णौ महामुने। इति॥ यच्च भारते। स चापि केशौ हरिरुच्चजहे शुक्लमेकमपरं चापि कृष्णम्॥ तौ चापि केशावाविशेतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च॥ तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः॥ कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ वर्णतः कृष्ण उक्तः इति। तत्तु न केशमात्रावताराभिप्रायं किंतु भूभारावतारणरूपं कार्यं कियदेतन्मत्केशावेवैतत्कर्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्णसूचनार्थं च केशोद्धरणमिति गम्यते अन्यथा तत्रैव पूर्वापरविरोधापत्तेः। कृष्णस्तु भगवान्स्वयमित्येतद्विरोधाच्च। कथंभूतः परमेश्वरतया जनैरनुपलक्ष्यो मार्गो यस्य। तर्हीश्वरत्वे किं प्रमाणम्। अतिमानुष-

रुग्णमहेंद्रवाहदंतैर्विडंबितककुब्जुष ऊढहासम्॥ सद्योऽसुभिः सह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये॥ २५॥ भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः॥ जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबंधनानि॥ २६॥ तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः॥ यद्रिंगतांतरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्॥ २७॥ यद्वै व्रजे व्रजपशून्विषतोयपीथान् पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या॥ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम्॥ २८॥ तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निना शुचि वने परिदह्यमाने॥ उन्नेष्यति व्रजमतोऽवसितांतकालं नेत्रे पिधाप्य सबलोऽनधिगम्यवीर्यः॥ २९॥ गृह्णीत यद्यदुपबंधममुष्य माता शुल्बं सुतस्य न तु तत्तदमुष्य माति॥ यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शंकितमनाः प्रतिबोधिताऽसीत्॥ ३०॥ नंदं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान्बिलेषु पिहितान्मयसूनुना च। अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुंठ

कर्मान्यथानुपपत्तिरेवेत्याह। आत्मनो महिमोपनिबद्ध्यतेऽभिव्यज्यते येषु तानि॥ २६॥ एतदेव प्रपंचयति। तोकेनेत्यादिना। बालेन पूतनाया जीवहरणं यत् रिंगता जानुभ्यां गच्छतांतरगतेन मध्यं प्राप्तेन दिविस्पृशोरत्युच्चयोः इतरथानीश्वरत्वे तन्न भवितव्यम्॥ २७॥ विषतोयपीथान् विषमयतोयस्य पीथं पानं येषां तान् पालान् गोपांश्च कृपादृष्टिसुधावृष्ट्या जीवयिष्यतीति यमुनायां क्रीडन्नुरगं कालियमुच्चाटयिष्यति। तच्छुद्धये तस्या ह्रदिन्या निर्विषत्वाय अतिविषवीर्येण विलोलातिचंचला जिह्वा यस्य॥ २८॥ दिव्यमलौकिकमिवेति लोकोक्तिः। उन्नेष्यत्युद्धरिष्यति। शुचिर्ग्रीष्मस्तत्संबंधिनि वने शुष्क इत्यर्थः। अतो दावाग्नेर्हेतोरवसितो निश्चितोऽन्तकालो यस्य तम्। सबलः सरामः अनधिगम्यं दुर्ज्ञेयं वीर्यं यस्य। तत्र निशि निःशयानमिति कालियदमने रात्र्यां यमुनातीरे नेत्रे पिधाप्य पिहिते कारयित्वेति मुंजाटव्यामिति ज्ञेयम्॥ २९॥ उपबद्ध्यतेऽनेनेत्युपबंधं तत्साधनम्। शुल्बं दाम अमुष्य माता यशोदाऽग्रहीत् अमुष्य उदरे न माति बंधनसंमितं न भवति न पूर्यत इत्यर्थः। गोपी यशोदा संवीक्ष्य दृष्ट्वा प्रतिबोधिता निजैश्वर्यं ज्ञापितासीदिति यत् तच्च कर्म दिव्यमिवेति सर्वत्र पूर्वेणैवान्वयः॥ ३०॥ वरुणस्य पाशाद्भयं तस्मान्मोचयिष्यति

मासक्तां तनुम् । शब्दब्रह्मतनुस्तु सदाऽस्त्येव । तन्वंतरग्रहणे कारणमाह ऋषीणामित्यादिना ॥ ४९ ॥ ५० ॥ युक्तकृतः यथोचितं कुर्वतः ॥ ५१ ॥ अतएव कस्य ब्रह्मण इदं द्विधाभूतमित्याश्च-र्यात्कायमद्याप्यभिचक्षते ॥ ५२ ॥ या स्त्री साऽस्य महिष्यासीत् ॥ ५३ ॥ एधांबभूविरे वृद्धिं प्राप्ताः । तदेवाह । स चापीति ॥ ५४ ॥ ५५ ॥ यतः यासां संततिभिः ॥५६॥ इति तृतीये टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम् ॥ धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १ ॥ १ ॥ स्वयंभुवः पुत्रस्तदेहांशत्वात् सः ॥२॥ विष्वक्सेनो हरिरेवाश्रयो यस्य सः ॥ ३ ॥ अतस्तस्य चरितं श्रोतव्यमित्याह । सुचिरं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्यांजसा मुख्यत्वेनायमेवार्थ ईडितः स्तुतः । ननु मुकुंदपादारविंदं येषां हृदयेष्वस्ति तेषां भागवतानां गुणानु-

स्वराट् ॥ स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ ५३ ॥ तदा मिथुनधर्मेण प्रजा ह्येधांबभूविरे ॥ स चापि शतरूपायां पंचापत्यान्यजीजनत् ॥ ५४ ॥ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥ ५५ ॥ आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम् ॥ दक्षायादात्प्रसूतिं च यत आपूरितं जगत् ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीशुक उवाच ॥ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ॥ भूयः प्रपच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥ विदुर उवाच ॥ स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ॥ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥ चरितं तस्य राजर्षेरादिराजस्य सत्तम ॥ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोऽर्थः ॥ तत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥ ४ ॥ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ॥ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥ ॥ मैत्रेय उवाच ॥ यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ॥ प्रांजलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥ त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ॥ अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु ॥ यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥ ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहं तात स्वस्ति स्ताद्वां क्षितीश्वर ॥ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम् ॥ ९ ॥ एतावत्याऽऽत्मजैर्वीर कार्या ह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥ स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ॥ उत्पाद्य शास धर्मेण गां यज्ञैः

श्रवणम् ॥ ४ ॥ सहस्रशीर्षा श्रीकृष्णस्तस्य चरणावुपधीयेते यस्मिन् । श्रीकृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थः । तमभ्यचष्ट अभ्यभाषत । मुनिर्मैत्रेयः प्रणीयमानस्तेन प्रवर्त्यमानः ॥ ५ ॥ वेदगर्भं ब्रह्माणम् ॥ ६ ॥ त्वमेवैकः पिता सर्वेषां यतो जन्मकृत् वृत्तिदः पोषकश्च त्वमेव अतस्तव यद्यप्यन्यापेक्षा नास्त्यथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ हे ईड्य आत्मशक्तिष्वस्मच्छक्तिष्वस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत्तद्विधेहीदं कर्तव्यमिति कथय । यत्कृत्वा यस्मिन् कृते सति । विष्वक् सर्वतः । अमुत्र परलोके ॥ ८ ॥ वां युवाभ्यां स्वस्ति भद्रं स्ताद्भूयात् । यद्यतो मा मां शाध्यनुशिक्षयेति आत्मना स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥ अपचितिः पूजा गृह्येत आज्ञेति शेषः । सनकादयो न कुर्वंति वयं

किमिति करिष्याम इत्येवंभूतो गतो मत्सरो येभ्यः ॥ १० ॥ गां शास शाधि पालयेत्यर्थः । पुरुषं हरिम् ॥ ११ ॥ प्रजापालकस्य ते तुष्टो भविष्यति ॥ १२ ॥ यज्ञलिंगो यज्ञमूर्तिः । अपगतोऽर्थो यस्मात् केवलं श्रमायैवेत्यर्थः । यद्यस्मादात्मैव स्वयं नादृतः तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वाच्च तस्य ॥ १३ ॥ वर्तेय वर्तिष्ये । अमीवसूदन पापनाशन । अनुजानीह्यत्र स्थातव्यमित्यनुज्ञां देहि ॥ १४ ॥ महीति चेदत आह । यदोकः स्थानं सा मही । हे देव । अस्या देव्याः ॥ १५ ॥ पूर्वं पाने कृतेऽपि पुनरकांड एवोद्भूतानामपां मध्ये सन्नामवसन्नां निमग्नाम् । समुन्नेष्ये उद्धरिष्यामि ॥ १६ ॥ चिंतामेवाह । सृजतः सतः । वार्भिरद्भिः । रसां रसातलम् । ईश्वरेण सर्गे नियुक्तैः । मेऽनुष्ठेयं स एव विदधातु संपादयतु ॥ १७ ॥ वराहतोकः सूक्ष्मो वराहः ॥ १८ ॥ खस्थ

पुरुषं यज ॥ ११ ॥ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ॥ भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनु तुष्यति ॥ १२ ॥ येषां न तुष्टो भगवान्यज्ञलिंगो जनार्दनः ॥ तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥ मनुरुवाच ॥ आदेशेऽहं भगवतो वर्तेयामीवसूदन ॥ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥ यदोकः सर्वसत्त्वानां मही मग्ना महांभसि ॥ अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥ १५ ॥ मैत्रेय उवाच ॥ परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ॥ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥ सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता ॥ अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ यस्याहं हृदयादासं स ईशो विदधातु मे ॥ १७ ॥ इत्यभिध्यायतो नासाविवरात्सहसाऽनघ ॥ वराहतोको निरगादंगुष्ठपरिमाणकः ॥ १८ ॥ तस्याभिपश्यतः खस्थः क्षणेन किल भारत ॥ गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ १९ ॥ मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह ॥ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥ २० ॥ किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ॥ अहो बताश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २१ ॥ दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गंडशिलासमः ॥ अपिस्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥ २२ ॥ इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ॥ भगवान्यज्ञपुरुषो जगर्जागेंद्रसन्निभः ॥ २३ ॥ ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥ २४ ॥ निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ॥ जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २५ ॥ तेषां सतां वेदवितानमूर्तिर्ब्रह्माऽवधार्यात्मगुणानुवादम् ॥ विनद्य भूयो विबुधोदयाय गजेंद्रलीलो जलमाविवेश ॥ २६ ॥ उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन्खररोमशत्वक् ॥ खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २७ ॥ घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्

आकाशे स्थितः सन् ॥ १९ ॥ चित्रधा अनेकधा ॥ २० ॥ २१ ॥ पूर्वमंगुष्ठाग्रप्रमाणो दृष्टः । गंडशिला स्थूलपाषाणस्तत्समः । यज्ञो विष्णुः । निजरूपतिरोधानेन मे मनः खेदयन् ॥ २२ ॥ इति मीमांसमानस्य सतः । जगर्जागर्जत् । गिरींद्रतुल्यः ॥ २३ ॥ गर्जनप्रयोजनमाह । ब्रह्माणमिति ॥ २४ ॥ घर्घरितं तज्जात्यनुकरणध्वनिम् । अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु क्षपयिष्णु नाशकम् । ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था । त्रिभिः पवित्रैर्ऋग्यजुःसाममंत्रैरगृणन्नस्तुवन् ॥ २५ ॥ वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः अतएवात्मनो गुणाननुवदति तथा तत्तेषां ब्रह्म उच्चारितं वेदमवधार्य ज्ञात्वा ॥ २६ ॥ कथंभूतः सन्नाविवेशेत्यपेक्षायामाह । द्वाभ्याम् । उच्चैः क्षिप्तो वालः पुच्छं येन । खचर आकाशचारी । कठोरः कठिनः । सटाः स्कंधवालान् । खराणि तीक्ष्णानि

रोमाणि यस्याः सा त्वग्यस्य । खुरैराहतान्यभ्राणि येन । सितदंष्ट्रोऽतिशुक्लदंष्ट्रः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य । तदा प्रकाशांतराभावात् बभासेऽशोभत । महीध्रः पृथिव्या उद्धर्ता ॥२७॥ क्रोडापदेशो वराहच्छद्मा अतः स्वयमध्वरांगोऽपि पशुरिव घ्राणेन विजिघ्रन् गृणतः स्तोतॄन्विप्रानुद्वीक्ष्योर्ध्वं वीक्ष्य कं जलमाविशत् ॥ २८ ॥ तदानींतनसमुद्रध्वनिमुत्प्रेक्षते । स उदन्वान्समुद्र आर्त इव स्तनयन् शब्दं कुर्वन्भो यज्ञेश्वर मा मां पाहि मामवेत्येवं चुक्रोश । आर्तसादृश्यमाह । उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः । आर्तत्वे हेतुः । वज्रकूटो वज्रमयः पर्वतस्तद्वदंगं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य ॥ २९ ॥ तदा रसायां रसातले गां पृथ्वीं ददर्श । कः त्रिपरुस्त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य । यज्ञमूर्तिरित्यर्थः । किं कुर्वन् । क्षुरप्रा आयताग्राः शरास्तत्सदृशैः खुरैरपो दरयन् । कथम् । उत्पारपारं उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथाभवति तथा विदारयन् । कथंभूतः । अग्रे प्रलयसमये तत्र नाख्वप्सु सुषुप्सुः शिशयिषुः सन् जीवा धीयंते यस्यां सर्वजीवाधारभूतां यां स्वय मभ्यधत्ताभिमुख्येन दधार । जठरे धृतवानित्यर्थः । अनेन तदुद्धरणेऽनायासं द्योतयति ॥ ३० ॥ रसायाः सकाशादुत्थितः संरुरुचे

क्रोडापदेशः स्वयमध्वरांगः ॥ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम् ॥ २८ ॥ स वज्रकूटांगनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ २९ ॥ खुरैः क्षुरप्रैर्दरयंस्तदाऽऽप उत्पारपारं त्रिपरू रसायाम् ॥ ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३० ॥ स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः ॥ तत्रापि दैत्यं गदयापतंतं सुनाभसंदीपिततीव्रमन्युः ॥ ३१ ॥ जघान रुंधानमसह्यविक्रमं स लीलयेभं मृगराडिवांभसि ॥ तद्रक्तपंकांकितगंडतुंडो यथा गजेंद्रो जगतीं विभिंदन् ॥ ३२ ॥ तमालनीलं सितदंतकोट्या क्ष्मामुत्क्षिपंतं गजलीलयांग ॥ प्रज्ञाय बद्धांजलयोऽनुवाकैर्विरिंचिमुख्या उपतस्थुरीशम् ॥ ३३ ॥ ॥ ऋषय ऊचुः ॥ जितं जितं तेऽजित यज्ञभावन त्रयीं तनूं स्वां परिधुन्वते नमः ॥ यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ ३४ ॥ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् ॥ छंदांसि यस्य त्वचि बर्हि रोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रम् ॥ ३५ ॥ स्रुक् तुंड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरंध्रे ॥ प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३६ ॥ दीक्षाऽनुजन्मोपसदः शिरोधरं

सम्यगशोभत । तत्राप्यंभसि गदामुद्यम्यागच्छंतं रुंधानं प्रतिघ्नंतं असह्यः सहनानर्हो विक्रमो यस्य तं दैत्यम् । सुनाभं चक्रं तद्वत्संदीपितस्तीव्रो मन्युर्यस्य । यद्वा । मयि विद्यमाने किमिति परिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान् सिंहो गजमिव लीलया जघानेन्युत्तरेणान्वयः ॥ ३१ ॥ गजेंद्रो जगतीं क्रीडया विदारयन् गैरिकया यथा अरुणगंडतुंडो भवति तथा । तस्य रक्तमेव पंकस्तेनांकितौ गंडौ तुंडं च यस्य सः ॥ ३२ ॥ प्रज्ञायालक्ष्य । अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥ भो अजित ते त्वया जितं जितमिति संभ्रमे वीप्सा । यज्ञैर्भाव्यते आक्रियत इति तथा । त्रयीं वेदमयीम् । निलिल्युर्लीनप्रायाः । कारणं पृथिव्युद्धरणं तेन सूकराय ॥ ३४ ॥ यज्ञात्मतां प्रपंचयंतः स्तुवंति । रूपमित्यादिचतुर्भिः । छंदांसि गायत्र्यादीनि । यज्ञांगभूतच्छंदआद्यनुवादेन भगवदवयवता विधीयते बर्हिःशब्दे दीर्घाभाव आर्षः । दृशि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयम् ॥ ३५ ॥ स्रुक् जुहूस्तुंडे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षणपात्री । चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रम् । ग्रस्यतेऽनेनेति ग्रसनं मुखांतर्वर्ति छिद्रम् । चर्वणं भक्षणम् ॥ ३६ ॥ दीक्षा दीक्षणीयेष्टिः । अनुजन्म वाग्वाग्मभिव्यक्तिः । उपसदस्तिस्र

इष्टयः । शिरोधरं ग्रीवा प्रायणीया दीक्षाऽनंतरेष्टिः । उदयनीय समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदं पूर्वं क्रियते । सभ्यो होमरहितोऽग्निः । आवसथ्यमौपासनाग्निः तयोर्द्वंद्वं-
क्यम् । तत्तव क्रतुरूपस्य शीर्षं शिरः चितय इष्टकाचयनानि पंचासवः प्राणाः ॥ ३७ ॥ प्रातःसवनादीन्यवस्थितिरासनं शल्याद्यवस्था वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र
आप्तोर्याम इति सप्तसंस्था विभेदास्त्वङ्मांसादिसप्तधातवः । सत्राणि द्वादशाहादीनि बहुयागसंघातरूपाणि । असोमाः यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वम् । इष्टिर्यजनमनुष्ठानं तदेव बंधनं यस्य सः
॥ ३८ ॥ पूर्वोक्तमेव सपरिकरं कीर्तयंतः प्रणमंति । नमो नम इति । अखिलमंत्रादिरूपाय क्रियात्मने सामान्यव्यापाररूपाय । किंच । वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिस्ततो भक्तिस्ततः आत्मज-
यश्चित्तस्थैर्यं तेनानुभावितं साक्षात्कृतं यज्ज्ञानं तस्मै । एवंभूतज्ञानप्रदाय गुरवे च ॥ ३९ ॥ हे भूधर ! सभूधरा सपर्वता । वनादुदकान्निर्गच्छतो गजेंद्रस्य । दता दंतेन ॥ ४० ॥ त्वया धृता
भूर्विराजत इत्युक्तमिदानीं भूमंडलेन त्वद्रूपं विराजत इत्याहुः । त्रयीति । अथेत्यर्थांतरे । ते इदं रूपं दंतेन धृतं यद्भूमंडलं तेन चकास्ति शोभते । शृंगेणोढो धृतो यो घनस्तेन भूयसाऽतिमहता ।

त्वं प्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ३७ ॥ सोमस्तु रेतः सवनान्यवस्थितिः संस्था-
विभेदास्तव देव धातवः ॥ सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ॥ ३८ ॥ नमो नमस्तेऽखिलमंत्रदेवताद्रव्याय सर्वक्रतवे क्रिया-
त्मने ॥ वैराग्यभक्त्यात्मजयाऽनुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ३९ ॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा ॥
यथा वनान्निःसरतो दता धृता मतंगजेंद्रस्य सपत्रपद्मिनी ॥ ४० ॥ त्रयीमयं रूपमिदं च सौकरं भूमंडलेनाथ दता धृतेन ते ॥ चकास्ति शृंगोढघनेन
भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ॥ ४१ ॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ॥ विधेम चास्यै नमसा सह त्वया
यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४२ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ॥ न विस्मयोऽसौ त्वयि विश्वविस्मये यो
माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ॥ सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमाना भृश-
मीश पाविताः ॥ ४४ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ॥ यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम्
॥ ४५ ॥ मैत्रेय उवाच ॥ ॥ इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ सलिले स्वखुराक्रांत उपाधत्तावितावनिम् ॥ ४६ ॥ स इत्थं भगवानुर्वीं

विभ्रमो विलासः ॥ ४१ ॥ लोकाय वासस्थानार्थम् । ते पत्नीं जगतां मातरम् । यतस्त्वं पिताऽसि एवं सति तत्र स्थिताः संतस्त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमनं करिष्यामः । नमस्का-
रेण परिचरेमेति वा । स्वतेजो धारणशक्तिं याज्ञिका मंत्रतोऽग्निमरणाविवाधाः निहितवानसि ॥ ४२ ॥ इदं च त्वयाऽतिदुष्करं कृतमित्याहुः । क इति । हे प्रभो तव त्वया कृतं भुव उद्विबर्हण
मुद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत् । अध्यवस्येदित्यर्थः । त्वयि पुनरसौ विस्मयो न भवति यतो विश्वे सर्वे विस्मया यस्मिन् । कुतः । यो भवान् अतिविस्मयमत्यद्भुतमिदं विश्वं क्रियाविशे-
षणं वा । ससृजे सृष्टवान् ॥ ४३ ॥ विस्मयं दर्शयंतः प्रार्थयंते । विधुन्वतेति द्वाभ्याम् । सटानां शिखाभिरग्रैरुद्धूता उच्छालिता ये शिवा अंबुबिंदवस्तैः सिच्यमाना वयं पवित्रीकृताः ॥ ४४ ॥ तव
कर्मणां पारं य एष तेऽवलोकयति ज्ञातुमिच्छतीत्यर्थः । यस्य तव योगमायया यो गुणैः सह योगस्तेन मोहितम् । अतो विश्वस्य शं मंगलं विधेहि । यथा त्वामचिंत्यानंतशक्तिं ज्ञात्वा भजेत्तथा-

ऽनुगृहाणेत्यर्थः ॥ ४५ ॥ उपस्थीयमानः स्तूयमानः । स्वखुराक्रांत इति जलेऽपि धारणशक्त्याधानं दर्शयति । अविता रक्षकः ॥ ४६ ॥ ४७ ॥ कथनीयानि मायीनि मायावंति चरित्राणि यस्य । श्रवयेत श्रावयेत ह्रस्वत्वमार्षम् । उशतीं कमनीयाम् । हृदि प्रसीदति स्वमनसि संतुष्यतीत्यर्थः ॥ ४८ ॥ आशिषो यद्यपि सुलभास्तथापि न प्रार्थनीया इत्याह । ताभिराशीर्भिरलम् । लवात्मभिस्तुच्छाभिः । न च तदा भजनस्य वैफल्यं शंकनीयमित्याह । भगवद्भजनव्यतिरेकेण फलांतरदृष्टिं विना भजतां स्वपदप्राप्तिं स्वयमेव विधत्ते । गुहाशयत्वादहैतुकीं भक्तिं जानन् ॥ ४९ ॥ अतः को नाम पुराकथानां पूर्ववृत्तानां मध्ये । कथंचिदापीय विरज्येत विरमेत् । नरेतरं पशुं विना ॥ ५० ॥ इति श्रीमद्भागवते तृतीयस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ॥ संध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः ॥ १ ॥ १ ॥ तेनैव येन भूमिरुद्धृता । अनुशुश्रुम त्वन्मुखात् ॥ २ ॥ मृधो युद्धम् ॥ ३ ॥ साधुत्वे हेतुः । यद्यस्मात्त्वं हरेरवतार-

विष्वक्सेनः प्रजापतिः ॥ रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४७ ॥ य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ॥ शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ४८ ॥ तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ॥ अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९ ॥ को नाम लोके पुरुषार्थसारवित्पुराकथानां भगवत्कथासुधाम् ॥ आपीय कर्णांजलिभिर्भवापहामहो विरज्येत विना नरेतरम् ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे वराहप्रादुर्भावे त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीशुक उवाच ॥ निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ॥ पुनः स पप्रच्छ तमुद्यतांजलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥ विदुर उवाच ॥ तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ॥ आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥ तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया ॥ दैत्यराजस्य च ब्रह्मन् कस्माद्धेतोरभून्मृधः ॥ ३ ॥ मैत्रेय उवाच ॥ साधु वीर त्वया पृष्टमवतारकथां हरेः ॥ यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥ ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ॥ मृत्योः कृत्वैव मूर्ध्न्यंघ्रिमारुरोह हरेः पदम् ॥ ५ ॥ अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ॥ ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ॥ अपत्यकामा चकमे संध्यायां हृच्छयार्दिता ॥ ७ ॥ इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ॥ निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम् ॥ ८ ॥ दितिरुवाच ॥ एष मां त्वत्कृते

कथां पृच्छसीति । मृत्योः पाशं विशातयति मोचयतीति तथा ॥४॥ तदेव दर्शयति । यया कथया । उत्तानपदः पुत्रो ध्रुवः । मुनिना नारदेन । अर्भक एव यदा ध्रुवाय सुनंदादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज किंतु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः । वक्ष्यति हि । परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः ॥ इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् । इति ॥ ५ ॥ तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति । अथेति अनुपृच्छतां देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः ॥ ६॥ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसंगमाह । दितिरित्यादिना यावदध्यायपरिसमाप्ति । मरीचेः पुत्रं कश्यपम् । हृच्छयः कामस्तेनार्दिता अतः संध्यायामेव कामितवती ॥ ७॥ तदप्यग्निहोत्रशालायां तत्रापि समाहितम् । अग्निर्जिह्वा यस्य । यजुषां यज्ञानां पतिं पुरुषं श्रीविष्णुम् ॥ ८ ॥ कृपणां बहुभाषिणीमिति वक्ष्यति तत्र एषमामिति द्वाभ्यां कार्पण्यं भर्तरीति चतुर्भिश्च

बहुभाषणं वर्ण्यते । दुनोति पीडयति । विक्रम्य शौर्यमाविर्भाव्य । रंभां कदलीम् ॥ ९ ॥ आयुक्तां सर्वतो युनक्तु सम्यक्करोतु ॥ १० ॥ भर्तरि प्राप्तबहुमानानां स्त्रीणां यशो लोकानाविशते व्याप्नोति । प्रजया पुत्ररूपेण । तज्जाया जाया भवति यदस्यां जायते पुनः इति श्रुतेः ॥ ११ ॥ नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत । अयं भावः । त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये वैषम्याचरणं तवानुचितमिति ॥ १२ ॥ १३ ॥ मोघं न भवति हि । महीयसि त्वादृशे महत्तमे ॥ १४ ॥ प्रवृद्धानंगेन कश्मलं मोहो यस्यास्ताम् ॥ १५ ॥ संध्याकालवंचनाय भार्याप्रशंसा । एष इति पंचभिः । यतो यस्याः सकाशात् ॥ १६ ॥ सर्वाश्रमानुपादायेति तानप्यन्नादिदानेन कृच्छ्रतस्तारयन्स्वयं तरतीत्यर्थः ॥ १७ ॥ आत्मनो देहस्यार्धं कर्मसु द्वयोः सहाधिकारात् । यच्छब्दानां तां त्वामिति तृतीयश्लोकेन संबंधः । स्वधुरं दृष्टादृष्टकर्मभारम् । विज्वरो निश्चिंतः ॥ १८ ॥ हेलाभिर्लीलाभिः जयेमेति सभार्यस्येंद्रियाणि प्रायेणेतस्ततो न सर्पंतीति भावः ॥ १९ ॥ नामनेकोपका-

विद्धन्काम आत्तशरासनः ॥ दुनोति दीनां विक्रम्यरंभामिव मतंगजः ॥ ९ ॥ तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः ॥ प्रजावतीनां भद्रं ते मय्यायुंक्तामनुग्रहम् ॥ १० ॥ भर्तर्याप्तोरुमानानां लोकानाविशते यशः ॥ पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥ पुरा पिता नो भगवान्दक्षो दुहितृवत्सलः ॥ कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥ १२ ॥ स विदित्वाऽऽत्मजानां नो भावं संतानभावनः ॥ त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः ॥ १३ ॥ अथ मे कुरु कल्याण कामं कंजविलोचन ॥ आर्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥ इति तां वीर मारीचः कृपणां बहुभाषिणीम् ॥ प्रत्याहानुनयन्वाचा प्रवृद्धानंगकश्मलाम् ॥ १५ ॥ एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ॥ तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ॥ व्यसनार्णवमत्येति जलयानैर्यथाऽर्णवम् ॥ १७ ॥ यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि ॥ यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥ यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रमैः ॥ वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा ॥ १९ ॥ न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ॥ अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः ॥ २० ॥ अथापि काममेतं ते प्रजात्यै करवाण्यलम् ॥ यथा मां नातिवोचंति मुहूर्तं प्रतिपालय ॥ २१ ॥ एषा घोरतमा वेला घोराणां घोरदर्शना ॥ चरंति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥ एतस्यां साध्वि संध्यायां भगवान्भूतभावनः ॥ परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥ श्मशानचक्रानिधूलिधूम्रविकीर्णविद्योतजटाकलापः ॥ भस्मावगुंठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥ न यस्य लोके स्वजनः परो वा

रकर्त्रीं त्वां कार्त्स्न्येनानुकर्तुं प्रत्युपकारैस्त्वत्सदृशा भवितुं न प्रभवो न समर्थाः । ये चान्ये गुणगृध्नवो गुणप्रियास्तेऽपि न समर्थाः । संपूर्णेनाप्यायुषा । वाशब्दाज्जन्मांतरैरपि न प्रभव इत्युक्तम् ॥ २० ॥ यद्यपि त्वदनुकरणमशक्यम् । प्रजात्यै पुत्रोत्पत्त्यै । नातिवोचंति न निंदंति । प्रतिपालय प्रतीक्षस्व ॥ २१ ॥ स्वनिंदामगणयंतीं भीषयन् श्रीरुद्रमनुवर्णयति । एषेति सप्तभिः । घोराणामेषा वेला स्वयं च घोरदर्शना ॥ २२ ॥ भूतपर्षद्भिर्भूतगणैः ॥ २३ ॥ तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह । श्मशाने यश्चक्रानिलो वातमंडली तस्मिन् या धूलिस्तया धूम्रो विकीर्णो विक्षिप्तो विद्योतो द्युतिमान् जटाकलापो यस्य । भस्मनाऽवगुंठः प्रावृतोऽमलो रुक्मवद्देहो यस्य । स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेऽप्यनुषंगः । एकस्य जामातरः

परस्परं भ्रातरौ व्यवहृयंते अतो मम भ्राता असौ तव देवर इति लज्जार्थमुक्तम् ॥ २४ ॥ ननु तथापि महत्त्वेनादरणीयस्य स्वजनस्य च तव स सर्वं क्षमेतैव तत्राह । यस्य स्वजनादिर्नास्ति सम त्वात् । ईश्वरस्य ऐश्वर्यमेवाह । येन चरणेनापविद्धां निर्माल्यवद्दूरतस्त्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं महाप्रसाद इत्याशास्महे । व्रतैस्तमाराध्य ॥ २५ ॥ अनिषिद्धसुखत्यागादसौ पिशाच इत्युपहासो न कार्य इत्याह द्वाभ्याम् । यस्यानवद्यं विषयासक्तिशून्यमाचरितम् । बिभित्सवो भेत्तुमिच्छवः ॥ २६ ॥ समीहितमभिप्रेतं लोकशिक्षारूपं अविदुषोऽविद्वांसः । यद्वा । न विद्वानन्यो यस्मादिति तस्य सर्वज्ञस्येत्यर्थः । दुर्भगानेवाह । यैरिति । श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतयाऽयमेवात्मेति बुद्ध्या ॥ २७ ॥ अहो अतर्क्यं तस्याचरणमित्याह । ब्रह्मादयो येन कृतान्सेतून्स्व स्वाधिकारान्पालयंति यः कारणं यस्य येन कृतमिदं विश्वम् । माया च यस्याज्ञाकारी । विभूम्नः परमेश्वरस्य विडंबनमतर्क्यमित्यर्थः ॥ २८ ॥ भर्त्रा निरूपकेणैवं संविदिते ज्ञापितेऽ-

नात्यादृतो नोत कश्चिद्विगर्ह्यः ॥ वय व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥ यस्यानवद्याचरितं मनीषिणो गृणंत्यविद्यापटलं बिभित्सवः ॥ निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥ हसंति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम् ॥ यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥ ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ॥ आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडंबनम् ॥ २८ ॥ ॥ मैत्रेय उवाच ॥ सैवं संविदिते भर्त्रा मन्मथोन्मथितेंद्रिया ॥ जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥ स विदित्वाऽथ भार्यायास्तं निर्बंधं विकर्मणि ॥ नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ॥ ३० ॥ अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ॥ ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥ दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ॥ उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥ दितिरुवाच ॥ मा मे गर्भमिमं ब्रह्मन्भूतानामृषभोऽवधीत् ॥ रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥ नमो रुद्राय महते देवायोग्राय मीढुषे ॥ शिवाय न्यस्तदंडाय धृतदंडाय मन्यवे ॥ ३४ ॥ स नः प्रसीदतां भामो भगवानुर्वनुग्रहः ॥ व्याधस्याप्यनुकंप्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥ मैत्रेय उवाच ॥ स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम् ॥ निवृत्तसंध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥ ॥ कश्यप उवाच ॥ अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ॥ मन्निदेशातिचारेण देवानां चातिहेलनात् ॥ ३७ ॥ भविष्यतस्तवाभद्रा-

पि सति वृषलीव वेश्येव ॥ २९ ॥ विकर्मणि निषिद्धे कर्मणि दिष्टाय दैवरूपायेश्वराय । उपविवेशेति मैथुनं लक्ष्यते ॥ ३० ॥ उपस्पृश्य स्नात्वा भगशब्दवाच्यं विरजं ज्योतिर्ध्यायन्सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप ॥ ३१ ॥ कर्मावद्येन कर्मदोषेण ॥ ३२ ॥ मावधीन्माहंत्वित्यर्थः । वधशंकाबीजमाह । रुद्र इति । अंहसमंहोऽपराधमकरवं कृतवत्यस्मि ॥ ३३ ॥ रुत् दुःखं तद्द्रावयतीति रुद्रस्तस्मै उग्रायानतिलंघ्याय मीढुषे सकामेषु फलसेचनकर्त्रे निष्कामेषु शिवाय वस्तुतो न्यस्तदंडाय दुष्टेषु धृतदंडाय संहारे मन्यवे ॥ ३४ ॥ भामो भगिनीभर्ता उरुरनुग्रहो यस्य व्याधस्य निर्दयस्यापि सतीपतिरित्यनेन स्त्रीणां स्वभावं स्वयमपि वेत्तीति सूचयति ॥३५॥ स्वसर्गस्य स्वसंतानस्याशिषं शुभं लोक्यां लोकद्वयार्हां संध्यायां यो नियमः स निवृत्तो यस्य ॥३६॥ ते आत्मनश्चित्तस्याप्रायत्यादशुचित्वात् मौहूर्तिकात्संध्यारूपात् उत अपि मम निदेशस्याज्ञाया अतिचारेणातिक्रमेण देवानां रुद्रानुचराणाम् ॥ ३७ ॥ एतैश्चतुर्भिर्हेतुभिर्जाठराधमौ पुत्रावमहौ हेचंडि कोपने

॥ ३८ ॥ हन्यमानानां सताम् ॥ ३९ ॥ शतपर्वधृक् वज्रधर इंद्रः ॥ ४० ॥ सुनाभेनोदारो बाहुर्यस्य । मह्यं मम । कोपितेष्विन्युक्तत्वाच्छंकितचित्ता सती प्रार्थयते ब्राह्मणान्माभूदिति ॥ ४१ ॥ नारका अपि तथा यां यांयोनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णंति कृपां न कुर्वंति ॥ ४२ ॥ कृतो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन प्रत्यवमर्शनाद्युक्तायुक्तविचारात् भगवति हरौ भवे श्रीरुद्रे एतैः पंचभिः कारणैः ॥ ४३ ॥ पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति । तमेव वर्णयति गास्यंतीति सार्धैः पंचभिः । समं सह सदृशं वा ॥ ४४ ॥ हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगंतुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यंति शोधयिष्यंति ॥ ४५ ॥ विश्वप्रसादे हेतुर्यदात्मकं स्वदृगात्मसाक्षी यस्याऽनन्यया भगवानेव सत्य इत्येवंभूतया दृशा तोष्यते तोषं प्राप्स्यते ॥ ४६ ॥ तत्र हेतुः । सवा इति महात्माऽपरिच्छिन्नदृष्टिः महानुभावो महाप्रभावः महतामपि मध्ये महिष्ठोऽतिशयेन महान् प्रवृ-

वमद्रे जाठराधमौ ॥ लोकान्सपालांस्त्रींश्चंडि मुहुराक्रंदयिष्यतः ॥ ३८ ॥ प्राणिनां हन्यमानानां दीनानामकृतागसाम् ॥ स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥ तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः ॥ हनिष्यत्यवतीर्यासौ यथाऽद्रीन् शतपर्वधृक् ॥ ४० ॥ दितिरुवाच ॥ वधं भगवता साक्षात्सुनाभोदारबाहुना ॥ आशासे पुत्रयोर्मह्यं माक्रुद्धाद्ब्राह्मणाद्विभो ॥ ४१ ॥ न ब्रह्मदंडदग्धस्य न भूतभयदस्य च ॥ नारकाश्चानुगृह्णंति यां यां योनिमसौ गतः ॥ ४२ ॥ ॥ कश्यप उवाच ॥ कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ॥ भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥ पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः ॥ गास्यंति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥ योगैर्हेमेव दुर्वर्णं भावयिष्यंति साधवः ॥ निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ॥ स स्वदृग्भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥ ४६ ॥ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ॥ प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुंठमिमं विहास्यति ॥ ४७ ॥ अलंपटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु ॥ अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥ अंतर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छाऽनुगृहीतरूपम् ॥ पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुंडलमंडिताननम् ॥ ४९ ॥ मैत्रेय उवाच ॥ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ॥ पुत्रयोश्च वधं कृष्णाद्विदित्वाऽऽसीन्महामनाः ॥ ५० ॥ इति श्रीमद्भागवते तृतीयस्कंधे दितिकश्यपसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥ मैत्रेय उवाच ॥ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ॥ दधार वर्षाणि शतं शंकमाना सुरार्दनात् ॥ १ ॥ लोके तेन हतालोके लोकपाला हतौजसः ॥ न्यवेद-

द्धया भक्त्यानुभाविते शोधिते चित्ते वैकुंठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ॥ ४७ ॥ महाभागवतत्वमाह । अलंपट इति । शीलधरः सुस्वभावः गुणानां धैर्यादीनामाकरो जन्मभूमिः परेषां समृद्ध्या हृष्टः परेषु दुःखितेषु सत्सु न भूतो जातः शत्रुर्यस्य निदाघे भवं तापं चंद्रो यथा हरत्येवं जगतः शोकहर्ता भविष्यति ॥ ४८ ॥ अपरिच्छिन्नदृष्टित्वमाह । अंतरिति । स्वपुरुषाणामिच्छया पुनः पुनर्गृहीतानि रूपाणि येन । श्रीरेव ललना सुंदरी तस्या ललामं मंडनम् । द्रष्टा द्रक्ष्यति ॥ ४९ ॥ महामनाः सोत्साहचित्ता हरिणा सह युद्धेन मरणे पुत्रयोः कीर्तिः सद्गतिश्च भवेदिति ॥ ५० ॥ इति तृतीयस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ हतप्रभैः सुरैः पृष्टः प्राह पंचदशे विधिः ॥ तद्बीजविप्रशापादि वैकुंठे विष्णुभृत्ययोः ॥ १ ॥ तदेवं देवानां ब्रह्मणश्च संवादप्रस्ताव-

मुक्त्वेदानीं तं संवादं वक्तुमाह । प्राजापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हंतीति तथा आर्षः । स्वपुत्राभ्यां करिष्यते यत्सुराणामर्दनं पीडनं तस्माच्छंकमाना ॥ १ ॥ तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभावाः ध्वांतेन व्यतिकरं संकरम् ॥ २ ॥ वेत्थ जानासि किं विचारयसि यद्यतो वयं संविग्ना भीताः अव्यक्तमज्ञातम् । न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ॥ ३ ॥ ब्रह्माणं परमेश्वरत्वेन स्तुवंतः प्रार्थयंते । देवदेवेति सप्तभिः । लोकनाथानां शिखामणे भावविदभिप्रायज्ञोऽसि । केनाभिप्रायेण । दितेर्गर्भो वर्धत इति जानासीत्यर्थः ॥ ४ ॥ विज्ञानं वीर्यं बलं यस्य । इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गृहीतो गुणभेदो रजोगुणो येन । व्यक्तस्य प्रपंचस्य योनये कारणाय न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्येति वा ॥ ५ ॥ सकामतया प्रतिक्षणं दुःखमनुभवंतो निष्कामभक्तान् स्तुवंत आहुर्द्वाभ्याम् । ये त्वा त्वामनन्येन निष्कामेन भावेन भक्त्या ध्यायंति आत्मनो जीवान्भावयतीति तथा । स्वस्मिन्प्रोतानि ग्रथितानि भुवनानि येन । चेत-

यन्विश्वसृजे ध्वांतव्यतिकरं दिशाम् ॥ २ ॥ देवा ऊचुः ॥ तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम् ॥ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेव जगद्धातर्लोकनाथ शिखामणे ॥ परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥ नमो विज्ञानवीर्याय माययेदमुपेयुषे ॥ गृहीत-गुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥ ये त्वाऽनन्येन भावेन भावयंत्यात्मभावनम् ॥ आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥ तेषां सुपक्व-योगानां जितश्वासेंद्रियात्मनाम् ॥ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥ यस्य वाचा प्रजाः सर्वा गावस्तंत्येव यंत्रिताः ॥ हरंति बलि-मायत्तास्तस्मै मुख्याय ते नमः ॥ ८ ॥ स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम् ॥ अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ९ ॥ एष देव दितेर्गर्भ ओजः काश्यपमर्पितम् ॥ दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि ॥१०॥ ॥ मैत्रेय उवाच ॥ स प्रहस्य महाबाहो भगवान् शब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवान् प्रीणम् रुचिरया गिरा ॥ ११ ॥ ब्रह्मोवाच ॥ मानसा मे सुता युष्मत्पूर्वजाः सनकादयः ॥ चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥ त एकदा भगवतो वैकुंठस्यामलात्मनः ॥ ययुर्वैकुंठनिलयं सर्वलोक नमस्कृतम् ॥ १३ ॥ वसंति यत्र पुरुषाः सर्वे वैकुंठ-मूर्तयः ॥ येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम् ॥ १४ ॥ यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ॥ सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥ यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥ वैमानिकाः सललनाश्चरितानि यत्र

नाचेतनप्रपंचकारणमित्यर्थः । तत्र हेतुः । सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परम् ॥ ६ ॥ जितः श्वास इंद्रियाण्यात्मा मनश्च यैः अतः सुपक्वयोगाः अतएव प्राप्तो युष्मत्प्रसादो यैस्तेषाम् ॥ ७ ॥ अन्ये तु नित्यं कर्मक्लेशिन इत्याहुः । यस्येति । तंत्या दामन्या आयत्ता अधीनाः । मुख्याय नियंत्रे प्राणरूपायेति वा । तथा च श्रुतिः । तस्य वाक्तंतिर्नामानि दामानि इत्यादिः ॥ ८ ॥ तमसा अहोरात्रविभागाभावेन लुप्तानि कर्माणि येषाम् । आपन्नानापद्गतानस्मान् ॥ ९ ॥ आपत्कारणमाहुः । एष गर्भः तस्य विशेषणम् । अर्पितं निषिक्तं काश्यपमोजो वीर्यं दिश-स्तिमिरयंस्तमो व्याप्ताः कुर्वन् ॥ १० ॥ दितेः कुचेष्टितं ज्ञात्वा प्रहस्य देवानां ये शब्दा विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतः प्रत्यभाषत ॥ ११ ॥ युष्मत्सकाशात्पूर्वं जाताः ॥ १२ ॥ वैकुंठा-ख्यं लोकं ययुः ॥१३॥ तं वर्णयति । वसंती त्यादिद्वादशभिः । वैकुंठस्य हरेरिव मूर्तिर्येषां ते । निमित्तं फलं न निमित्तं प्रवर्तकं यस्मिन् । निष्कामेन धर्मेणेत्यर्थः । आराधयन्नाराधितवंतः ॥१४॥

यत्रेति । शब्दगोचरो वेदांतैकवेद्यः विरजं सत्त्वमूर्तिं विष्टभ्य धृत्वा वृषो धर्ममूर्तिः स्वानां स्वान् ॥ १५ ॥ तत्रत्यं वनं विशिनष्टि । यत्रेति चतुर्भिः । सर्वेष्वप्यृतुषु श्रीः पुष्पादिसंपत्त्येषां तैः ॥१६॥ चरितानि चरित्राणि भर्तुः प्रभोः अनुविकसंत्यो मधु मकरंदस्तद्युक्ता माधव्यो वासंत्यो लताः यद्वा अनुविकसन्मधवः प्रसरन्मकरंदा माधव्यो मधुकालीनाः सुमनसस्तासां गंधेन खंडिता विच्छिन्ना धीर्येषां तेऽपि तद्गंधप्रापकमनिलं क्षिपंतस्तिरस्कुर्वंतो गायंति । अनेन भगवत्पार्षदानां निरतिशयविषयसुखेऽपि भगवद्गुणजनानंदासक्तिर्दर्शिता ॥ १७ ॥ अन्यभृताः कोकिलाः दात्यूहश्चातकः अचिरमात्रं क्षणमात्रं विरमति अनेन तत्रत्यपक्षिणामपि हरिकथाश्रवणादिपरमानंदो दर्शितः ॥ १८ ॥ मंदारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः उत्पलं रात्रिविकासि अंबुजं दिनविकासि नागो नागकेसरः एताः सुमनसः पुष्पजातयः सुगंधा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गंधेऽर्चिते सति यस्मिन्वने तस्यास्तपो बहु मानयंति । अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तम् । एवंभूतं वनं यत्र तद्वैकुंठं ययुरिति पूर्वेणान्वयः ॥ १९ ॥ पुनर्वैकुंठमेव विशिनष्टि । यत्संकुलं व्याप्तं भवति कैः हरिपदयोरानतिः प्रणामस्तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न कर्मादिप्राप्यैर्वैदूर्यमारकतैर्हेममयैश्च विमानैः बृहंति कटितटानि यासाम् । स्मितशोभीनि मुखानि यासां ता अपि कृष्णे आत्मा येषां रजः काममुत्स्मयाद्यैः परिहासादिभिर्न आदधुर्न जनयामासुः ॥ २० ॥ श्रीलक्ष्मीः

गायंति लोकशमलक्षपणानि भर्तुः ॥ अंतर्जलेऽनुविकसन्मधुमाधवीनां गंधेन खंडितधियोऽप्यनिलं क्षिपंतः ॥ १७ ॥ पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ॥ कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृंगाधिपे हरिकथामिव गायमाने ॥ १८ ॥ मंदारकुंदकुरवोत्पलचंपकार्णपुन्नागनागबकुलांबुजपारिजाताः ॥ गंधेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयंति ॥ १९ ॥ यत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥ श्रीरूपिणी क्वणयती चरणारविंदं लीलांबुजेन हरिसद्मनि मुक्तदोषा ॥ संलक्ष्यते स्फटिककुड्य उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥ वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ॥ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमतांगयच्छ्रीः ॥ २२ ॥ यन्न व्रजंत्यघभिदो रचनानुवादाच्छृण्वंति येऽन्यविषयाः कुकथा मतिघ्नीः ॥ यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान्क्षिपंत्यशरणेषु तमस्सु हंत ॥ २३ ॥ येऽभ्य-

रूपिणी मनोहरमूर्तिधारिणी सती श्रीहरेः सद्मनि संमार्जनं कुर्वंतीव यस्मिन् लोके संलक्ष्यते चरणारविंदं क्वणयती नूपुरेण शब्दयंती मुक्तो दोषश्चांचल्यं यया यद्वा मुक्तेन दोषा प्रसारितेन बाहुना । कीदृशे सद्मनि । स्फटिकमयानि कुड्यानि यस्मिन् मध्ये मध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिन् यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा । अयं भावः । यद्यपि तत्र रजो नास्त्येव तथाऽपि स्वर्णपट्टिकाऽवच्छिन्नभित्तिभागेषु बहुधा प्रतिबिंबिता सती लीलांऽबुजं भ्रामयंती विनयभक्तिभ्यां तथा लक्ष्यत इति ॥ २१ ॥ अंग हे देवाः । यद्यस्मिंल्लोके श्रीरेवं अमत अमंस्त मेने किंकुर्वती विद्रुममयानि तटानि यासां अमला अमृततुल्या आपो यासां तासु वापीषु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयंती तदोदके प्रतिबिंबितं शोभनालकयुक्तमुत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुंबितमित्यमन्यत अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥ २२ ॥ पुनः कथंभूतं तत् । यद्वैकुंठं न व्रजंति के ये कुकथाः शृण्वंति कास्ताः अघं भिनत्तीत्यघभित्तस्य हरेः रचना सृष्ट्यादिलीला तस्या अनुवादादन्यविषया अर्थकामादिवार्ता मतिभ्रंशिकाः तेषामव्रजने हेतुः । यास्तु हतभा-

ग्यैर्नरैः श्रुताः सत्यस्तांस्तान् श्रोतॄनशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपंति । हंत खेदे कथंभूताः आत्तः सारः श्रोतॄणां पुण्यं याभिस्ताः ॥ २३ ॥ प्रसंगात्तान् शोचंति नोऽस्माभिर्ब्रह्मादिभिर-प्यभ्यर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः संतोऽपि हरेराराधनं न कुर्वंति कीदृशीं नृगतिम् । यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति । तदुभयसाधकत्वात्तस्याः तेऽमुष्य भगवतो विस्तृतया मायया ननु संमोहिताः । बतेति खेदे । यदिवैवं संबंधः । केवलं त एव न व्रजंति किंतु ये भगवदाराधनं न कुर्वंति तेऽपि तेषां मायामोहितत्वादिति ॥ २४ ॥ पुनः कथंभूतम् । यच्च नः उपरि स्थितं व्रजंति । के अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या दूरे यमो येषाम् । यद्वा । दूरीकृतयमनियमाः पाठांतरे दूरीकृताहंकारा इत्यर्थः । स्पृहणीयं करुणादि शीलं येषाम् । किंच भर्तुर्हरेर्यत्सुयशस्तस्य मिथःकथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला तया सह पुलकीकृतमंगं येषाम् । यद्वा नः उपरीति व्रजतां विशेषणम् । निरहंकारत्वादसक्तोऽपि येऽधिकास्ते

थिंतामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ॥ नाराधनं भगवतो वितरंत्यमुष्य संमोहिता विततया बत मायया ते ॥ २४ ॥
यच्च व्रजंत्यनिमिषामृषभानुवृत्त्या दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ॥ भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृतांगाः ॥ २५ ॥
तद्विश्वगुर्वधिकृतं भुवनैकवंद्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥ आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुंठम् ॥ २६ ॥
तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् ॥ देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुंडलकिरीटविटंकवेषौ ॥ २७ ॥
मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ॥ वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ ॥२८॥
द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः ॥ सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये संचरंत्यविहता विगताभिशंकाः ॥ २९ ॥
तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्वृद्धान्दशार्धवयसो विदितात्मतत्त्वान् ॥ वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥ ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ॥ ऊचुः सुहृत्तमदिदृक्षितभंग ईषत्कामानुजेन सहसा त

यद्व्रजंतीत्यर्थः ॥ २५ ॥ तत्तदा तदपूर्वं विकुंठं अथो अनंतरमुपेत्य मुनयः परामुत्कृष्टां मुदमापुः अपूर्वत्वे हेतवः विश्वगुरुणा हरिणाऽधिकृतमधिष्ठितम् । भुवनानामेकमेव वंद्यम् । दिव्यमलौकिकम् । विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन् । योगमायाबलेनेति अष्टांगयोगप्रभावेणोपेत्य परमेश्वरे तु योगमायेति चिच्छक्तिविलास इति द्रष्टव्यम् ॥ २६ ॥ तस्मिन्वैकुंठे षट् कक्षाः प्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कंठया तत्तदद्भुतदर्शने आसक्तिमकुर्वाणाः द्वारपालौ देवावपश्यन् । समानं वयो ययोः गृहीते गदे याभ्याम् । परार्ध्यैः केयूरादिभिर्विटंकः सुंदरो वेषो ययोः ॥ २७ ॥ तावेव वर्णयति । मत्ता द्विरेफा यस्यां तया वनमालया निवीतौ कंठलंबिन्या अलंकृतौ असिता नीलाश्चतुष्टयं चतुःसंख्याका बाहवस्तेषां मध्ये विन्यस्तया वक्रं च मनाग्रभसं किं-चित्क्षुब्धं दधानौ स्फुटावुत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याम् ॥ २८ ॥ एतयोर्मिषतोः पश्यतोस्तावनादृत्यापृष्ट्वैव याः पूर्वाः षट् द्वारः पुरटालंकृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथा सप्तमायामपि द्वारि ते निविविशुः । अप्रश्ने हेतुः सर्वत्र ये अविहता अनिवारिताः संचरंति निःशंकत्वे हेतुः अविषमया स्वदृष्ट्येति ॥ २९ ॥ वातारशनान्नग्नान्वृद्धानपि पंचवर्षबा-लकवत्प्रतीयमानान् चकारादाज्ञया च अस्खलयतां निवारितवंतौ न तत्स्खलनमर्हंतीति तथा तान् । अहो अत्रापि धार्ष्ट्यमित्येवं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोः

॥ ३० ॥ हरेर्द्वारपालपतिभ्यां देवेषु पश्यत्सु वार्यमाणास्ते मुनयः को वामित्यादिश्लोकत्रयीमूचुः । सुहृत्तमः श्रीहरिस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भंगे सति कामस्यानुजः क्रोधस्तेन सहसाऽकस्माद्देवोपप्लुतानि क्षुभितान्यक्षीणि येषां ते सुष्ठु पूज्यतमा अपीति निषेधानर्हत्वे क्रोधानर्हत्वे वा हेतुः ॥ ३१ ॥ उच्चैर्महत्या भगवत्परिचर्यया एत्य प्राप्य इह वैकुंठे निवसतां तद्धर्मिणां भगवद्धर्मिणां समदर्शिनां मध्ये वां युवयोरेवे कोऽयं विषमः स्वभावः कैश्चित्प्रवेष्टव्यं कैश्चिन्नेत्येवंभूतः । ननु स्वामिनो रक्षार्थं द्वारपालयोरेष स्वभावो गुण एवेति चेदत आहुः । तस्मिन्निति । कुहकयोः कपटयोः आत्मवत्स्वदृष्टांतेन यथा आवां कपटौ तथान्योऽपि कश्चित्कपटः प्रवेक्ष्यतीति । अयं भावः । नह्यत्र भगवद्भक्तं विना कश्चिदागच्छति नचेश्वरं प्रशांतत्वादविद्यमानविरोधं भयशंका अतो युवां केवलं धूर्ताविवेति ॥ ३२ ॥ भयशंकाबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः । नहीति । समस्तं विश्वं कुक्षौ यस्य यत्र यदेह भगवति धीरा विद्वांस आत्मनोऽन्तरं भेदं न पश्यंति किंत्वस्मिन्परमात्मन्यात्मानमंतर्भूतं पश्यंति महाकाशे घटाकाशमिव तदा यथाऽन्यस्य राजादेरुदरभेद्युदरभेदयुक्तं भयं भवति तथाऽस्य श्रीहरेस्तादृग्भयं यतो येन कारणेन सुरवेषधारिणोर्युवयोर्विशेषेणोत्पादितं तत्किम् । न किंचिदित्यर्थः ॥ ३३ ॥ तत्तस्मादमुष्य वैकुंठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे यद्युक्तं तद्धीमहि चिंतयेम । तदेवाहुः । अंतरस्य भेदस्य

उपप्लुताक्षाः ॥ ३१ ॥ मुनय ऊचुः ॥ को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ॥ तस्मिन्प्रशांतपुरुषे गतविग्रहे वां को वात्मवत्कुहकयोः परिशंकनीयः ॥ ३२ ॥ नह्यंतरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः ॥ पश्यंति यत्र युवयोः सुरलिंगिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥ तद्वाममुष्य परमस्य विकुंठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मंदधीभ्याम् ॥ लोकानितो व्रजतमंतरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥ तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदंडमनिवारणमस्त्रपूगैः ॥ सद्यो हरेरनुचरावुरुबिभ्यतस्तत्पादग्रहावपततामतिकातरेण ॥ ३५ ॥ भूयादघोनि भगवद्भिरकारि दंडो यो नौ हरेत् सुरहेलनमप्यशेषम् ॥ मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥ एवं तदैव भगवानरविंदनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ॥ ३७ ॥ तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम् ॥ हंसश्रियो-

भावः सत्ता तद्दर्शनेन इतो वैकुंठलोकाद्व्रजतम् । यत्र येषु लोकेष्वस्य पापीयसोऽतरभावद्रष्टुरिमे । कामः क्रोधस्तथा लोभ इति गीतोक्तास्त्रयो रिपवो भवंति । इतो वैकुंठात्पापीयसो लोकानिति वा ॥ ३४ ॥ इति तेषामीरितं भाषणं घोरमवधार्य तं च ब्रह्मदंडं ब्रह्मशापमवधार्य तं चास्त्रसमूहैरप्यनिवार्यमवधार्य हरेरनुचरावतिकातरेणातिकातर्येण भयेन तत्पादग्रहणं कुर्वंतौ संतौ दंडवदपतताम् । कथंभूतस्य हरेः । एवंभूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं बिभ्यतो भयं भावयतः ॥ ३५ ॥ अहो अपराद्धमस्माभिरित्यनुतप्यमानान्प्रत्यूचतुः । अघोन्यघवति य उचितो दंडः स एव भगवद्भिरकारि नात्र भवतामपराधः कश्चित् । अतोऽसौ नौ आवयोर्भूयात् । योऽशेषमपि सुरहेलनमीश्वराज्ञातिक्रमरूपं पापं हरेत किंतु युष्माकं यः कृपानिमित्तोऽनुतापस्तस्य लेशेन नौ अधोऽधो मूढयोनीर्व्रजतोरपि भगवत्स्मृतिप्रतिघातको मोहो मा भवेत्किंतु मोहोऽपि स्मृतिमेव प्रवहतामिति प्रार्थना ॥ ३६ ॥ एवं स्वानां महत्स्वतिक्रममपराधं तत्क्षणमेव विबुध्य तस्मिन्यत्र ते रुद्धास्तं देशं ययौ आर्याणां हृद्यो मनोज्ञः । चरणौ चलयन्निति । अयं भावः । मच्चरणदर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ श्रीसाहित्यं च निष्कामानपि विभूतिभिः

पूरयित्वा क्षमापयितुम् ॥ ३७ ॥ तत्र तैर्दृष्टं देवमनुवर्णयति पंचभिः। तं त्वागतं तेऽचक्षत अपश्यन् आपंचमादिदमेव क्रियापदम्। स्वपुंभिः शीघ्रं प्रतिहतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य। कथंभूतम्। स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवाक्षविषयम्। हंसवच्छ्रीर्ययोस्तयोरुभयतश्चलतोर्व्यंजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलंतश्चलंतः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशिसादृश्याच्छशी तस्य केसरा मुक्ताहारविलंबास्तेभ्यो गलंति सीकरांबूनि यस्मिंस्तम्। सीकरोंऽबुकणः ॥ ३८ ॥ कृत्स्नस्य द्वारपालमुनिवृंदस्य प्रसादे सुमुखम्। स्पृहणीयानां गुणानां धाम स्थानम्। स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशंतं सुखयंतम्। त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यंतः स्वर्गस्तस्य चूडामणिवत्स्थितं स्वधिष्ण्यं वैकुंठं सुभगयंतं शोभयंतम् ॥ ३९ ॥ पृथुर्नितंब आश्रयत्वेन विद्यते यस्य तस्मिन्पीतांशुके अलिभिर्नादितया वनमालया च युक्तम्। सुभगयंतमिति पूर्वेणैव वा संबंधः। वल्गुषु प्रकोष्ठेषु वलयानि यस्य गरुडस्य स्कंधे विन्यस्त एको हस्तो येन इतरेणान्येनाब्जं लीलाकमलं धुनानं भ्रामयंतम्। विन्यस्येति पाठे च वल्वित्यादि हस्तस्य विशेषणम् ॥ ४० ॥ स्वकांत्या विद्युतः क्षिपतीये मकराकारे कुंडले तयोर्मंडनस्यार्हे गंडस्थले यस्मिंस्तच्च तदुन्नसं च मुखं यस्य मणियुक्तं किरीटं यस्य दोर्दंडानां षंडं समूहस्तस्य विवरे मध्ये स्थितेन हरता मनोहरेण विहरतेति वा परार्घ्यं उत्कृष्टस्तेन हारेण कंध-

र्व्यंजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकरांबुम् ॥ ३८ ॥ कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशंतम् ॥ श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयंतमिवात्मधिष्ण्यम् ॥ ३९ ॥ पीतांशुके पृथुनितंबिनि विस्फुरंत्या कांच्यालिभिर्विरुतया वनमालया च ॥ वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥ विद्युत्क्षिपन्मकरकुंडलमंडनार्हगंडस्थलोन्नसमुखं मणिमत्किरीटम् ॥ दोर्दंडषंडविवरे हरता परार्घ्यहारेण कंधरगतेन च कौस्तुभेन ॥ ४१ ॥ अत्रोपसृष्टमिति चोत्स्मितमिंदिरायाः स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ॥ मह्यं भवस्य भवतां च भजंतमंगं नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः ॥ ४२ ॥ तस्यारविंदनयनस्य पदारविंदकिंजल्कमिश्रतुलसीमकरंदवायुः ॥ अंतर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥ ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुंदरतराधरकुंदहासम् ॥ लब्धाशिषः पुनरवेक्ष्य तदीयमंघ्रिद्वंद्वं नखारुणमणिश्रयणं निदध्युः ॥ ४४ ॥ पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं

रायां स्थितेन ॥ ४१ ॥ किंबहुना इंदिराया उत्स्मितमहमेव सर्वसौंदर्यनिधिरित्यहंकरणमत्र भगवत्सौंदर्ये उपसृष्टमस्तंगतमिति स्वानां भक्तानां धिया विरचितम्। भृत्यैः स्वमनस्येवं वितर्कितमित्यर्थः। कुतः। बहुसौष्ठवेन सौंदर्येणाढ्यं युक्तम्। किंच। मह्यं मम भवस्येश्वरस्य भवतां च कृतेऽगं भजंतं मूर्तिं प्रकटयंतमचक्षत। निरीक्ष्य च कैः शिरोभिर्मुदा नेमुर्नमश्चक्रुः। न विशेषेण तृप्ता दृशो नेत्राणि येषां ते ॥ ४२ ॥ स्वरूपानंदादपि तेषां भजनानंदाधिक्यमाह। तस्य पदारविंदयोः किंजल्कैः केसरैर्मिश्रा या तुलसी तस्या मकरंदेन युक्तो वायुः स्वविवरेण नासाछिद्रेण अक्षरजुषां ब्रह्मानंदसेविनामपि संक्षोभं चित्तेऽतिहर्षं तनौ रोमांचम् ॥ ४३ ॥ हर्षकारितं संभ्रममाह। द्वाभ्याम्। ते वै किलामुष्य वदनमेवासितपद्मस्य कोशोंऽतर्भागस्तम्। असितपद्मकोशमित्यभूतोपमा। सुंदरतरे अरुणे अधरोष्ठे कुंदवद्धासो यस्मिंस्तम्। उत् ऊर्ध्वं वीक्ष्य लब्धमनोरथाः संतो नखा एवारुणमणयस्तेषां श्रयणमाश्रयभूतमंघ्रिद्वंद्वं पुनरवेक्ष्याधोदृष्ट्या वीक्ष्य पुनः पुनरेवं निरीक्ष्य युगपत्सर्वांगलावण्यग्रहणाशक्ताः पश्चान्निदध्युर्ध्यातवंतः ॥ ४४ ॥ योगमार्गैर्गतिं मृगयतां पुंसां ध्यानस्य विषयभूतम्। बहुमनमत्यादरास्पदम्। बहूनां तत्त्वदृशां संमतमिति वा। पौंस्नं पौरुषं वपुर्दर्शयं-

तम् अन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैर्नित्यैरणिमाद्यष्टैश्वर्यैर्युतम् । समगृणन्सम्यगस्तुवन् ॥ ४५ ॥ नित्यं ब्रह्मरूपेण प्रकाशसे नैतच्चित्रम् । इदानीं तु परममंगलविशुद्धसत्त्वश्रीमूर्त्या प्रत्यक्षोऽसि अहो भाग्यमस्माकमित्याहुः । हे अनंत ! यस्त्वं हृद्गतोऽपि दुरात्मनामंतर्हितो न स्फुरसि स नोऽस्माकमंतर्हितो न भवसि नयनमूलं त्वद्यैव गद्धः प्राप्तोऽसि । अंतर्धानाभावे हेतुः । भवतः सकाशादुद्भवो यस्य तेनास्मत्पित्रा यर्हि यदैवानुवर्णितरहा उपदिष्टरहस्यस्तदैव नः कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसीति ॥ ४६ ॥ ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमात्मतत्त्वमहं त्वन्य एव स्यां दृश्यत्वात् । नैवम् । अस्मत्प्रत्यभिज्ञया भेदनिरासादित्याहुः । तामिति । हे भगवन्नात्मतत्त्वमेव परं तं त्वां विदाम विद्मः प्रत्यभिजानीमः । ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशमैश्वर्यं स्यादत आहुः । सत्त्वेन विशुद्धसत्त्वमूर्त्या एषां भक्तानां सम्यक् प्रतिक्षणं संप्रति रतिः प्रीतिस्तां रचयंतम् । आत्मतत्त्वमेवाहुः । तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः । कीदृशाः । उद्ग्रंथयो निरहंमाना अतएव विगतरागाः ॥ ४७ ॥ स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः । आत्यंतिकं मोक्षाख्यमपि तव प्रमादं ते न गणयंति नाद्रियंते । किंतु

नयनाभिरामम् ॥ पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन्युतमष्टभोगैः ॥ ४५ ॥ कुमारा ऊचुः ॥ योंऽतर्हितो हृदिगतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनंतराद्धः ॥ यर्ह्येव कर्णविवरेण गुहां गतो नः पित्राऽनुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥ तं त्वा विदाम भगवन्परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयंतमेषाम् ॥ यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रंथयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥ नात्यंतिकं विगणयंत्यपि ते प्रसादं किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ॥ येंऽग त्वदंघ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥ कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत ॥ वाचश्च नस्तुलसिवद्यदि तेंऽघ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरंध्रः ॥ ४९ ॥ प्रादुश्चकर्थ यदिदं पुरुहूत रूपं तेनेश निर्वृतिमवापुरलं दृशो नः ॥ तस्मा इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान्प्रतीतः ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे पंचदशोऽध्यायः ॥ १५ ॥ ब्रह्मोवाच ॥ ॥ इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् ॥ प्रतिनंद्य जगादेदं विकुंठनिलयो विभुः ॥ १ ॥ श्रीभगवानुवाच ॥ एतौ तौ पार्षदौ मह्यं जयो विजय एव च ॥ कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥ २ ॥ यस्त्वेतयोर्धृतो

किमुतान्यदिंद्रादि पदम् । ते भ्रुव उन्नयैरुज्जृंभैरर्पितं निहितं भयं यस्मिंस्तत् । ते के । अंग हे भगवन् ! ये भवतः कथाया रसज्ञाः । कथंभूतस्य । रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं पवित्रं च यशो यस्य ॥ ४८ ॥ इदानीं स्वीयापराधं द्योतयंतो भक्तिं प्रार्थयंते । काममिति । हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत् इदानीं सर्वाण्यपि जातानि यतस्त्वद्भक्तौ शप्तौ अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्म स्तात्स्यात् । नु वितर्के । यदि तु नश्चेतस्ते पदयो रमेत । अलिर्यथा कंटकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नानविगणय्य यदि रमेत । अंघ्रिभ्यां शोभा यासाम् । यथा च तुलसी गुणनैरपेक्ष्येण त्वदंघ्रिसंबंधेनैव शोभते तथा यदि नो वाचः शोभेरन् । यदि च ते गुणगणैरापूर्येत कर्णरंध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयंते । अयं तु गूढोऽभिप्रायः । कर्णरंध्रस्याकाशत्वाद्गुणगणानां चामूर्तत्वान्न कदाचित्पूरणमतो नित्यमेव श्रवणं फलिष्यतीति ॥ ४९ ॥ अद्य वयं कृतार्थाः स्मेत्याहुः । हे पुरुहूत विपुलकीर्ते यदिदं प्रादुश्चकर्थ प्रकटितवानसि । दृशो नेत्राणि । अनात्मनामजितेंद्रियाणां दुरुदयोऽप्रकटोऽपि इव इत्थं यः प्रतीतोऽसि तस्मै तुभ्यमिदं नमो विधेम ॥ ५० ॥ इति तृतीयस्कंधे टीकायां पंचदशोऽध्यायः

॥ १५ ॥ हरिणा सांत्वितैर्विप्रैरनुतप्तैस्तु षोडशे ॥ तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥ १ ॥ इति गृणतां तेषां तद्वाक्यं प्रतिनंद्येदं जगाद एतावित्येकादशभिः ॥ १ ॥ यद्यस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा भवति तथा अतिक्रमं वः कृतवंतौ ॥ २ ॥ तस्मात्स एव दंडोंऽगीकृतः ॥ ३ ॥ हि यस्माद्ब्रह्म ब्राह्मणा एव मे परमं दैवं दैवतं तत्तस्मादद्य वः प्रसादयामि । तव कोऽपराध इति चेत्तत्राह । तद्वीति । मदीयैः पुंभिरसत्कृतास्तिरस्कृता इति यत्तदात्मकृतमेव मन्ये ॥ ४ ॥ किंच । ममैवैताभ्यामनिष्टं कृतमित्याह । यस्य स्वामिनो नामानि तस्य कीर्तिम् । आमयोऽत्र श्वेतकुष्ठम् ॥ ५ ॥ यस्य मेऽमृतरूपेऽमले यशसि श्रवणेनावगाहः प्रवेशः । श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेव पुनाति सोऽहं विकुंठो भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्तिर्येन सः स्वबाहुस्थानीयं लोकेश्वरमपि हन्यां काऽन्यस्य कथेत्यर्थः । स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव ॥ ६ ॥ चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अतएव क्षतो निरस्तोऽखिलस्य लोकस्य मलो येन । यद्वा । चरणपद्माल्लग्नः पवित्रो रेणुर्यस्मिन्निति क्षतोऽखिलो मलो यस्येति च विग्रहः । प्रतिलब्धं प्राप्तं शीलं येन येषां सेवया एते गुणा ममातएव श्रीर्मां न विजहाति प्रेक्षालवार्थेऽवलोकनलेशार्थम् । इतरे ब्रह्मादयः तेषां वः प्रतिकूलवृत्तिं छिंद्यामिति पूर्वेणैव संबंधः ॥ ७ ॥ किंच ब्राह्मणो ममैव श्रेष्ठं मुखमतो युष्मदवज्ञया मन्मुखतिरस्कार एव कृत इत्याह । नाहमिति । वितानो यज्ञे यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेनादन्नश्नन्नपि तथा नाद्मि नाश्नामि । यद्यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि प्रतिग्रासं रसास्वादपूर्वकं चरतो भुंजानस्य ज्ञानिनो ब्राह्मणस्य मुखतोऽश्नामि । मयि समर्पितैः कर्मफलैस्तुष्टस्य निष्कामस्येत्यर्थः ॥ ८ ॥ किंच येषाममलमंघ्रिरजोऽहं किरीटैर्बिभर्मि तान्विप्रानपकुर्वतोऽपि कोऽन्यो न विषहेत । कथंभूतोऽहम् । अखंडाऽनवच्छिन्ना विकुंठाऽप्रतिहता च योगमायाविलासभूता विभूतिर्यस्य सः । तथा यस्य ममार्हणांभः पादोदकं चंद्रललामेनेश्वरेण सहितांल्लोकान्सद्यः पुनाति एवं परमेश्वरः परमपावनोऽपि सन्नहं बिभर्मीति ॥ ९ ॥ किंच । मे तनूरधिष्ठानानि कास्ताः द्विजवरान्दुहतीर्दोग्ध्रीः गा इत्यर्थः । दुहितॄरिति पाठेऽपि गा एव विष्णुरूपान्सूर्यादुत्पन्नत्वात् । सूर्यसुताश्च गाव इति वचनात् । अलब्धशरणानि रक्षकहीनानि भेदबुद्ध्या मदधिष्ठानं न भवंतीति पृथग्दृष्ट्या ये द्रक्ष्यंति अघेन क्षता नष्टा दृष्टिर्येषां तान् । मदीयोऽधिकृतो दंडनेता यो यमस्तस्य गृध्राकारा ये दूताः अहिव-

दंडो भवद्भिर्मामनुव्रतैः ॥ स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥ ३ ॥ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ॥ तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ॥ ४ ॥ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ॥ सोऽसाधुवादस्तत्कीर्तिं हंति त्वचमिवामयः ॥ ५ ॥ यस्यामृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुंठः ॥ सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिंद्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥ यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ॥ न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थमितरे नियमान्वहंति ॥ ७ ॥ नाहं तथाऽद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥ येषां बिभर्म्यहमखंडविकुंठयोगमायाविभूतिरमलांघ्रिरजः किरीटैः ॥ विप्रांस्तु को न विषहेत यदर्हणांभः सद्यः पुनाति सहचंद्रललामलोकान् ॥ ९ ॥ ये मे तनूर्द्विजवरान्दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ॥ द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्गृध्रा रुषा मम कुषंत्यधिदंडनेतुः ॥ १० ॥ ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयंतस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्यानुरागकलयात्मजवद्गृणंतः संबोधयंत्यहमिवाहमुपा-

न्मन्युर्येषाम् । रुषा क्रोधेन कुर्वंति चंचुभिश्छिंदंति ॥ १० ॥ एवंभूतास्तु मां वशीकुर्वंतीत्याह । ये क्षिपतः परुषं भाषमाणानपि ब्राह्मणान्संतोषयंति मयि या धीस्तया वासुदेवदृष्ट्याऽर्चयंतः संतः तुष्यद्धृदः प्रीयमाणचित्ताः स्मितमेव सुधा तयोक्षितं सिक्तं पद्मतुल्यं वक्त्रं येषां अनुरागकलया प्रेमशोभया वाचा गृणंतः स्तुवंतः यथा कुपितमात्मजं स्निग्धः पिता सत्पुत्रो वा पितरम् । अहमिव भृगुं युष्मान्वा तैरहमुपाहृतो वशीकृतः ॥ ११ ॥ तत्तस्मान्मेऽस्वमायमभिप्रायमलक्षमाणावजानंतौ युष्मदपराधोचितां गतिं सद्यः प्राप्य मदन्तिकमपि इतौ प्राप्नुताम् । तदिति । तन्मेऽनुग्रहः । मत्सेवक । यत् भृतयोर्विवासोऽचिरतः शीघ्रं कल्पतां संपद्यतां समाप्यतामिति ॥ १२ ॥ उशतीं कमनीयां प्रियां देवीं द्योतमानामृषिकुल्यां ऋषयो मंत्रास्तत्प्रवाहरूपामृषिकुल्यायोग्यामिति वा । सरस्वतीं वाग्-मास्वाद्य तन्माधुर्यमनुभूय सर्पप्रायेण मन्युना दष्टानामपि क्रोधविषव्याप्तानां हि मनो रसानुभवाभावात्प्रियभाषणमपि न सहते तेषां त्वात्मा मनो नातृप्यदलमिति नामन्यत ॥ १३ ॥ सतीं श्रेष्ठां व्यादाय प्रसार्य कर्णं दत्त्वेत्यर्थः । लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशां अगाधामभिप्रायतः गंभीरामर्थतः विगाह्य विचार्यापि किमस्मानभिनंदति निंदति वाऽस्मत्कृतं दंडं वा संकोचयतीति न विदुः ॥ १४ ॥ ततश्चाभिनंदतीति ज्ञात्वा ते प्रहृष्टाः संतः प्रोचुः । क्षुभिता रोमांचिता त्वक् येषां । कुपितेति पाठे संजातरोमकूपोक्त्या रोमांचितत्वमेवोक्तं आरब्ध आविष्कृतः पारमेष्ठ्यस्य पर-

हृतस्तैः ॥ ११ ॥ तन्मे स्वभर्तुरवमायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ॥ भूयो ममांतिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः ॥ १२ ॥ ब्रह्मोवाच ॥ अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ॥ नास्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ॥ १३ ॥ सतीं व्यादाय शृण्वंतो लघ्वीं गुर्वर्थगह्वराम् ॥ विगाह्यागाधगंभीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥ ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुः प्रांजलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥ १५ ॥ ऋषय ऊचुः ॥ न वयं भगवन्विद्मस्तव देव चिकीर्षितम् ॥ कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥ ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ॥ विप्राणां देवदेवानां भगवानात्मदैवतम् ॥१७॥ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ॥ धर्मस्य परमो गुह्यो निर्विकारो भवान्मतः ॥ १८ ॥ तरंति ह्यंजसा मृत्युं निवृत्ता यदनुग्रहात् ॥ योगिनः स भवान् किंस्विदनुगृह्येत यत्परैः ॥ १९ ॥ यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ॥ धन्यार्पितांघ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना

मैश्वर्यस्य महोदयः परमोत्कर्षो येन तम् । अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान्मानयतीति ज्ञात्वेत्यर्थः ॥ १५ ॥ अध्यक्षः सर्वेश्वरः संस्तद्धीत्यात्मकृतं मन्य इत्युक्त्या मयापराधः कृत इति तथा तदनुग्रहो मे इत्यादिवचनेन ममानुग्रहश्चेति यत्प्रभाषसे तेन तव यच्चिकीर्षितं तन्न विद्मः ॥ १६ ॥ किलेति लोकशिक्षार्थं सूचितम् । परमार्थमाहुः । विप्राणामिति । देवदेवानां देवपूज्यानामपि भगवांस्त्वमात्मा च दैवतं च ॥ १७ ॥ लोकशिक्षार्थताप्रपंचस्त्वत्त इत्यष्टभिः । धर्मस्त्वत्त एव भवति रक्ष्यते च त्वदवतारैः परमः फलरूपोऽत एव गुह्यो गोप्यः न च स्वर्गादिफलवद्विकारी भवान्किंतु निर्विकारो मतः अत एवंभूतस्य तवेदं लोकशिक्षामात्रमिति भावः ॥ १८ ॥ विपरीतं चेदमित्याहुः । तरंतीति । यस्यानुग्रहादेव निवृत्ता विरक्ता योगिनश्च संतो मृत्युं तरंति स भवान्परैरनुगृह्येतेति किंस्वित् । न किंचिदित्यर्थः ॥ १९ ॥ यच्चोक्तं यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलं इत्यादि तदत्यंतमसंभावितमित्याहुर्द्वाभ्याम् । यं वै विभूतिर्लक्ष्मीरनुवेलमवसरेऽवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः धन्यैः सुकृतिभिरर्पितमंघ्रौ यत्तुलस्या नवं दाम माला तद्धाम स्थानं यस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकं स्थानमंघ्रिं कामय-

मानेव ॥२०॥ विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि यो नात्याद्रियन्नातीवादृतवान् । स एवंभूतस्त्वम् । अयं भावः । इत्थं नामातिलंपटतया लक्ष्मीस्त्वां सेवते । कथम् । एवं हि सा मेने । अयं हि सारग्राही मधुव्रतश्चंचलश्च स चांघ्रिगतायां तुलस्यां स परिवारो निश्चलः सन् रमतेऽतोंघ्रिलावण्यमत्यधिकं स्यात्ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघर्षमंगीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्यामीति तदेवमत्यौत्सुक्येनानुवर्तमानामपि तां त्वं नातीवाद्रियसे । यतः परमभागवतेष्वेव प्रकृष्टसंगवान् । स एवं परमसौभाग्यनिधिस्त्वम् । अतो ब्राह्मणप्रसादान्मां श्रीर्न विजहातीत्यलभ्यलाभत्वेन निर्देशो न समंजस इति । किंच स्वत एव त्वं भगभाजनो भजनीयानां गुणानामाश्रयः परमशुद्धश्च तं त्वां द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तथा श्रीवत्सलक्ष्म च किं पुनीतः पवित्रीकुरुतः । किं किमर्थं च ते उभे अगाः प्राप्तो भूषणत्वेन स्वीकृतवानसि । अतो यत्सेवया चरणपद्मपवित्ररेणुमित्यादिवचनं लोकसंग्रहमात्रमित्यर्थः ॥ २१ ॥ धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः । धर्मस्येति त्रिभिः । त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः । यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणा भगशब्दवाच्याः संत्यस्येति त्रियुगः । हे त्रियुग ! धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैस्तपःशौचदयाभिः सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात्त्रिभिरित्युक्तम् । भृतं पालितम् । किं कृत्वा नोऽस्माकं वरदया सत्त्वेन तनुवा

॥ २० ॥ यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसंगः ॥ स त्वं द्विजानुपथपुण्यरजःपुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ॥ नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥ न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन ॥ तर्ह्येव नंक्ष्यति शिवस्तव देव पंथा लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥ २३ ॥ तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ॥ नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः ॥ २४ ॥ यं वाऽनयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम् ॥ अस्मासु वा य उचितो ध्रियतां स दंडो येऽनागसौ वयमयुंक्ष्महि किल्बिषेण ॥ २५ ॥ श्रीभगवानुवाच ॥ एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरंभसंभृतसमाध्यनुबद्धयोगौ ॥ भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ॥ २६ ॥ ब्रह्मोवाच ॥ अथ ते मुनयो दृष्ट्वा नयनानंदभाजनम् ॥ वैकुंठं

तन्वा सत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निरस्य निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भृतम् । यद्वा । हिलोपे रूपं निरस्येति । अस्माकं तन्निवर्तयेत्यर्थः ॥ २२ ॥ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलम् । यदि ह स्फुटं त्वं न गोप्ता न रक्षिता तृन्प्रत्ययांतत्वान्न षष्ठीप्रयोगः । वृषः श्रेष्ठः हे देव ! पंथा वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात्तदनर्हणमसूनृतं चाग्रहीष्यत् । तदुक्तं गीतासु । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तत इति ॥ २३ ॥ नश्यत्विति चेत्तत्राहुः । तद्वेदमार्गनाशनम् । इवेति लोकोक्तिः सत्त्वनिधित्वाज्जनाय क्षेमं शं विधातुमिच्छोरत एव निजशक्तिभी राजादिभिरुत्पाटितधर्मप्रतिपक्षस्य अतस्तव ब्रह्मकुलेऽवनतिर्युक्तैव । ननु महतोऽन्येष्ववनतिस्तेजोहानिकरो तत्राहुः । एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं न क्षीणं यतः स नमनादिस्ते विनोदः ॥ २४ ॥ शापाग्रहं परित्यज्य विज्ञापयंति यं वाऽन्यं दंडं विधास्यति भवान्वृत्तिं तु अधिकजीविकां वा तत्सर्वमनुमन्यामहे ये वयं निरपराधावेतौ किल्बिषेण शापेनायुंक्ष्महि योजितवंतः ॥ २५ ॥ मत्कारितत्वाच्छापस्य युष्माकं नापराध इत्याश्वासय-

माह । एतौ सद्य एवासुरयोनिं प्राप्य भूयोऽप्याशु मत्समीपमागमिष्यतः । संरंभेण क्रोधावेशेन संवृद्धो यः समाधिरेकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोः । हे विप्रा ! यो वः शापो युष्मत्कृतः शापस्तदिति स मयैव निमितो निर्मित इत्यवैत जानीत ॥ २६ ॥ नेत्रोत्सवजनकं विकुंठं हरिं तन्निवासं च वैकुंठलोकम् । स्वयंप्रकाशं प्रकाशांतरानपेक्षम् । सत्त्वपरिणामत्वात् ॥ २७ ॥ अनुमान्यानुज्ञाप्य परिक्रम्य प्रदक्षिणीकृत्य वैष्णवीं श्रियं वैकुंठे वर्णिताम् ॥ २८ ॥ ममैव तु मतं संमतम् । इदमत्र तत्त्वम् । यद्यपि सनकादीनां क्रोधो न संभवति न च भगवत्पार्षदयोस्तेषु प्रातिकूल्यं नच भगवतः स्वभक्तोपेक्षा नच वैकुंठगतानां पुनर्जन्म तथापि भगवतः सिसृक्षादिवत्क्रीडानिवृत्युक्त्या सर्वज्ञेन तदाऽन्येषामत्यल्पबलत्वात्स्वपार्षदानां युद्धकौतुकेऽपि प्रातिकूल्यं युद्धसंभवादेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपत्तौ विधाय युद्धकौतुकं संपादनीयमिति भगवतैव स्वयमितमनः सर्वं संपन्नमिति तदेतदुक्तं शापो मयैव निमित इति सार्धश्लोके

तदधिष्ठानं विकुंठं च स्वयंप्रभम् ॥ २७ ॥ भगवंतं परिक्रम्य प्रणिपत्यानुमान्य च ॥ प्रतिजग्मुः प्रमुदिताः शंसंतो वैष्णवीं श्रियम् ॥ २८ ॥ भगवाननुगावाह यातं माभैष्टमस्तु शम् ॥ ब्रह्मतेजः समर्थोऽपि हंतुं नेच्छे मतं तु मे ॥ २९ ॥ एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा ॥ पुराऽपवारिता द्वारि विशंती मय्युपारते ॥ ३० ॥ मयि संरंभयोगेन निस्तीर्य ब्रह्महेलनम् ॥ प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥ द्वाःस्थावादिश्य भगवान्विमानश्रेणिभूषणम् ॥ सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥ तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः ॥ हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥ तदा विकुंठधिषणात्तयोर्निपतमानयोः ॥ हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ॥ दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥ तयोरसुरयोरद्य तेजसा यमयोर्हि वः ॥ आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥ विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ॥ क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे षोडशोऽध्यायः ॥ १६ ॥ मैत्रेय उवाच ॥ निशम्यात्मभुवा गीतं कारणं शंकयोज्झिताः ॥ ततः सर्वे न्यवर्तंत त्रिदिवाय दिवौकसः ॥ १ ॥ दितिस्तु भर्तुरादेशादपत्यपरिशंकिनी ॥ पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥ उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ॥ दिवि भुव्यंतरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥ सहाचला भुवश्चेलुर्दिशः

अस्तु शमिति हंतुं नेच्छे मतं तु म इत्यादि च ॥ २९ ॥ यदा मयि उपारते योगनिद्रां गतवति सति द्वारि विशंती युवाभ्यां पुराऽपवारिता तदा क्रुद्धया रमया एतद्ब्राह्मणैरिदानीमुक्तं तत्पुरैव निर्दिष्टम् ॥ ३० ॥ प्रत्येष्यतं प्रत्येष्यथः निकाशं समीपम् ॥ ३१ ॥ ३२॥ दुस्तराद्ब्रह्मशापात् हरिलोकतः पतताविति शेषः । हरिलोकत एव हतश्रियावभूतामिति वा विगतस्मयौ नष्टगर्वौ च॥३३॥ विकुंठस्य धिषणात्स्थानात् । पुत्रका हे देवाः ॥ ३४ ॥ काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥ सहैव गर्भे प्रविष्टौ यमौ तयोस्तेजसा वस्तेज आक्षिप्तं तिरस्कृतम् । नचात्र प्रतिविधिः शक्यः यत एतर्हीदानीं भगवानेव तदेवं विधातुमिच्छति ॥ ३६ ॥ तथापि कोऽप्युपायो विचार्यतामिति चेत्तत्राह । विश्वस्येति । त्रयाणां गुणानामीशः स एव सत्त्वोत्कर्षकाले नः क्षेमं विधास्यति विमृशेन विमर्शनेन ॥ ३७ ॥ इति श्रीमद्भा० टी० षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे जन्म तयोर्लोकभयंकरम् ॥ हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥ १ ॥ क्षेमं विधास्यतीति ब्रह्मवचनानंतरं

शंकया त्यक्ताः ॥ १ ॥ भर्तुरादेशात् । लोकान्सपालांस्त्रींश्चंडि मुहुराक्रंदयिष्यत इति वाक्यात् । स्वापत्याभ्यां परिशंकिनी देवोपद्रवं शंकमाना ॥ २ ॥ तत्र तदा निपेतुरुद्बभूवुः उरुभयमासमंताद्वहंतीति ॥ ३ ॥ अचलैः सहिता भुवः प्रदेशाः केतवश्चोदयं चक्रुरिति शेषः ॥ ४ ॥ फूत्कारानिति तीव्रवायुशब्दानुकरणम् । नगपतीन्महावृक्षान् वात्या एवानीकं यस्य रज एव ध्वजो यस्य ॥ ५ ॥ उच्चैर्हसंत्य इव तडितो येषु तेषामंबुदानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिन् । पदं स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥ वार्धिः समुद्रो विमना इव उद्गता ऊर्मयो यस्मात् क्षुभिता उदरस्था मकरादयो यस्मिन् उदपानैर्वापीकूपादिभिः सहिताः शुष्काणि पंकजानि यासु ॥ ७ ॥ परिधयः परिवेषाः सराह्वो राहुग्रस्तयोः निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यो गिरिगुहाभ्यः ॥ ८ ॥ सृगालानामुलूकानां च टंकारैर्ध्वनिभिः सह शिवाः सृगाल्यः ॥ ९ ॥ ग्रामसिंहाः श्वानः ॥ १० ॥ कर्कशैस्तीक्ष्णैः । हे क्षत्तः ! खार्कारो

सर्वाः प्रजज्वलुः ॥ सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥ ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः ॥ उन्मूलयन्नगपतीन्वात्याऽनीको रजोध्वजः ॥ ५ ॥ उद्धसत्तडिदंभोदघटया नष्टभागणे ॥ व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥ चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः ॥ सोदपाश्च सरितश्चुक्षुभुः शुष्कपंकजाः ॥ ७ ॥ मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः ॥ निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥ अंतर्ग्रामेषु मुखतो वमंत्यो वह्निमुल्बणम् ॥ सृगालोलूकटंकारैः प्रणेदुरशिवं शिवाः ॥ ९ ॥ संगीतवद्रोदनवदुन्नमय्य शिरोधराम् ॥ व्यमुंचन्विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥ खराश्च कर्कशैः क्षत्तः खुरैर्घ्नंतो धरातलम् ॥ खार्काररभसा मत्ताः पर्यधावन्वरूथशः ॥ ११ ॥ रुदंतो रासभत्रस्ता नीडादुदपतन्खगाः ॥ घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ॥ व्यरुदन्देवलिंगानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥ ग्रहान्पुण्यतमानन्ये भगणांश्चापि दीपिताः ॥ अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥ दृष्ट्वाऽन्यांश्च महोत्पातानतत्त्वविदः प्रजाः ॥ ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥ तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ॥ ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदंगदाभुजौ ॥ गां कंपयंतौ चरणैः पदे पदे कट्या सुकांच्यार्कमतीत्य तस्थतुः ॥१७॥ प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत ॥ तं वै हिरण्यकशिपुं विदुः प्रजा

गर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमो येषाम् । वरूथशः संघशः ॥ ११ ॥ रासभशब्दात्त्रस्ताः सर्वतः क्रोशंतः ॥ १२ ॥ गावोऽत्रसन् त्रस्ताः असृग्दोहाश्च बभूवुः देवलिंगानि व्यरुदन् प्रतिमानामश्रुस्राव आसीदित्यर्थः ॥ १३ ॥ पुण्यतमान्गुरुबुधादीन्भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा मंगलादयोऽतिचेरुरतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥ १४ ॥ ब्रह्मपुत्रानृते विना तेषां स्वशापादिज्ञानात् ॥ १५ ॥ व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोः ॥ १६ ॥ निरुद्धा व्याप्ताः काष्ठा दिशो याभ्याम् । स्फुरंत्यंगदानि येषु ते भुजा ययोः अंगदेति टावंतत्वमार्षम् । शोभना कांची यस्यां तया कट्या ॥ १७ ॥ यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं विदुः सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः । अयं भावः । यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादिपश्चाद्भावेन प्रविशति तदा यमौ भवतस्तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः । यदा विशेद्द्विधाभूतं बीजं

पुष्पं परिचरत् ॥ द्वौ तदा भवतो गर्भौ सूतिवशाद्विपर्ययात् ॥ इति पिंडसिद्धिस्मरणात् । अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितिः प्रथमं यमसूत तस्य हिरण्याक्ष इति नाम कृत-
वानिति ॥ १८ ॥ दोर्भ्यामुद्धतो ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥ रणं युद्धम् ॥ २० ॥ दुःसहो जवो वेगो यस्य रणंतौ कांचनमयौ नूपुरौ यस्य अंसे न्यस्ता महती गदा येन ॥ २१ ॥ मनसा
शौर्येण वीर्येण बलेन वरेण चोत्सिक्तं गर्वितम् । असृण्यं निरंकुशम् । निलिल्यिरे लीना बभूवुः ॥ २२ ॥ स्वेन महसा तेजसा तिरोहितान्दृष्ट्वा तान्सेन्द्रान्देवगणानपश्यन् [illegible] क्षीबानिति
पाठे पौरुषहीनान् ॥ २३ ॥ २४ ॥ सन्ना अवसन्ना धीर्येषाम् । वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तः ॥ २५ ॥ महोर्मीनभिजघ्ने मौर्व्या मूर्व्यमयीति सैव [illegible]

यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥ चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ॥ वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥ हिरण्या-
क्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ॥ गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥ तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम् ॥ वैजयं-
त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥ मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् ॥ भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥ स
वै तिरोहितान्दृष्ट्वा महसा स्वेन दैत्यराट् ॥ सेंद्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम् ॥ २३ ॥ ततो निवृत्तः क्रीडिष्यन्गंभीरं भीमनिस्वनम् ॥
विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥ तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ॥ अहन्यमाना अपि
तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥ स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीञ्छ्वसनेरितान्मुहुः ॥ मौर्व्याऽभिजघ्ने गदया विभा-
वरीमासेदिवांस्तात पुरीं प्रचेतसः ॥ २६ ॥ तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ॥ स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे
देह्यधिराज संयुगम् ॥ २७ ॥ त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ॥ विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूयेन
पुराऽयजत्प्रभो ॥ २८ ॥ स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपांपतिः ॥ रोषं समुत्थं शमयन्स्वया धिया व्यवोचदंगोपशमं गता
वयम् ॥ २९ ॥ पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ॥ आराधयिष्यत्यसुरर्षभेहि तं मनस्विनो यं गृणते भवादृशाः
॥ ३० ॥ तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः ॥ यस्त्वद्विधानामसतां प्रशांतये रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे हिरण्याक्षदिग्विजये सप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेय उवाच ॥ तदेवमाकर्ण्य जलेशभाषितं महामनास्त-
द्विगणय्य दुर्मदः ॥ हरेर्विदित्वा गतिमंग नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्र-

मूर्वा नाम तृणविशेषः तन्मयरज्ज्वा दृढनिबद्धयेत्यर्थः । विभावरीसंज्ञाम् । आसेदिवान् प्राप्तः ॥ २६ ॥ असुराणां लोकः पातालं तत्पालकम् । प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥ यद्यस्माद्रा-
जसूयेन भवानयजत् ॥ २८ ॥ उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥ युद्धमार्गनिपुणं त्वां यस्तोषयिष्यति तमिहि गच्छ । गृणते स्तुवंति ॥ ३० ॥ आराच्छीघ्रम् । विस्मयो नष्टगर्वः वीरशये
रणांगणे रूपाणि वराहाद्यवतारान् ॥ ३१ ॥ इति श्री० तृ० टी० सप्तदशो० ॥ १७ ॥ अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः ॥ निर्विशेषं महायुद्धं देवत्रोभि निरूप्यते ॥ १ ॥ प्रतियोद्धारं श्रुत्वा

महामनाः शयिष्यस इति यदुक्तं तद्विगणय्यागणयित्वा यतो दुर्मदः ॥ १ ॥ अभितो जयतीत्यभिजित्तं श्रीहरिम् । प्रकर्षेणोर्ध्वं नीयमाना अवनिर्येन अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचोहिरण्याक्षते-
जांस्यरुणश्रिया युक्तं यत्तेनाक्ष्णा नेत्रेण मुष्णंतं तिरस्कुर्वंतम् । अहो चित्रं वनगोचरो मृगो वारिचरो वराहः ॥ २ ॥ एह्यागच्छ रसौकसां पातालवासिनां नोऽस्माकं समर्पिता अन्यथा पाताला-
वतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्ताऽपि भारती वस्तुतो भगवंतं स्तौति । तथा हि । वनगोचरो जले शयानः श्रीनारायणः स एव योगिभिर्मृग्यते दुष्टान्वा हंतुं मृगयत
इति मृगः अज्ञः नास्ति ज्ञो यस्मात्सर्वज्ञेत्यर्थः । सुरा अधमा यस्मात् हे सुरोत्तम ! ममेक्षमाणस्यापि सतो मामनादृत्यापि त्वमनया सह वर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मंगलं राज्यं यास्यसि
प्राप्स्यसि नात्र संदेहस्तथाप्यस्मत्कृपया विमुंचेत्यर्थः । आसादिता लीलया स्वीकृतः सूकराकृतिर्येन ॥ ३ ॥ अभवाय नाशाय भृतः पुष्टः वस्तुतस्तु मोक्षाय भृतो धृत आश्रित इत्यर्थः । यो
भवान्परोक्षेण चौर्येण जयतीति तथा । वस्तुतस्तु दूरत एव स्थित्वा जयतीति संस्थाप्य हत्वा वस्तुतस्तु योगमायारूपमचिंत्यं बलं यस्य अल्पं पौरुषं यस्मात् तं त्वां सम्यक् स्थापयित्वा भक्त्या
हृदि स्थिरीकृत्येत्यर्थः । हे मूढप्र ! मूढान्प्रात्याप्याययतीति तथा । प्रापूर्ताविति धातुः । सुहृदां शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्मर्तुर्बांधवानपि मोचयसीति भावः ॥ ४ ॥ अस्मद्भुज-

दंष्ट्रया ॥ मुष्णंतमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः ॥ २ ॥ आहैनमेह्यज्ञ महीं विमुंच नो रसौकसां विश्वसृजेयमर्पिता ॥
न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते ॥ ३ ॥ त्वं नः सपत्नैरभवाय किं भृतो यो मायया हंत्यसुरान्परोक्षजित् ॥ त्वां
योगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृच्छुचः ॥ ४ ॥ त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ॥ बलिं हरं-
त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यंत्यमूलाः ॥ ५ ॥ स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ॥ तोदं मृषन्निरगादंबुमध्या-
द्ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥ तं निःसरंतं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः ॥ करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतह्रियां किं
त्वसतां विगर्हितम् ॥ ७ ॥ स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् ॥ अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः

च्युतयापि गदयाऽशीर्णं शीर्षं यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरंति नवीना भक्ता ये च पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैवामूला न भविष्यंति ।
किंतु दृढमूला एव भविष्यंतीत्यर्थः ॥ ५ ॥ स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदं दुरुक्तव्यथां मृषन्सहमान एव निर्गतः करेणु-
र्हस्तिनी वस्तुतस्त्वरिदुरुक्ततोमरैर्निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वाऽनुकंपया पीड्यमान इत्यर्थः । तोदं मृषन्नित्यस्याप्ययमेवार्थः ॥ ६ ॥ सलिलान्निर्गच्छंतमनुगतः
सन् हिरण्यवत्कपिशाः केशा यस्य दैत्यस्य झषो मकरः करालास्तुंगा दंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जानामसतां किं विगर्हितमस्ति निंदाभयाभावात्पलायनमपि नायुक्तमित्यर्थः ।
वस्तुतस्तु गतह्रियः प्राप्तह्रियः न संतो येभ्यस्तेषां कृपालूनां किं विगर्हितं न किंचित् । अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किंचित्पलायनमपि न निंदितमित्यर्थः । यद्वा । लोकोपकाराय सुब-
हुदूरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति । गतह्रियां स्वार्थैकपराणामसतामस्माकं किं विगर्हितगणनास्त्यपितु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥ स भगवान्विश्व-
सृजाऽभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाणः पाठांतरे विश्वसृजां प्रसूनैर्विबुधैरभिष्टुत इति सलिलस्यादेस्तदुपरि व्यवहारगोचरे देशे गां पृथ्वीं विन्यस्य तस्यां स्वसत्त्वमाधारशक्तिं निहितवान् अरेस्तस्य

पश्यत एव ॥ ८ ॥ परा पराक् पृष्ठतोऽनुषक्तं लग्नम् । तपनीयोपकल्पं सुवर्णाभरणम् । कांचनमयश्चित्रो दंशः कवचं यस्य तं दैत्यम् । प्रचंडमन्युत्वमधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां
देवानां भयनिवृत्तये वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥ ग्रामसिंहान् शुनः प्रतिमुक्तस्य बद्धस्य विकत्थनं श्लाघाम् ॥ १० ॥ न्यासहरा निक्षेपहराः द्राविताः पलायनं कारिताः
अथाप्यसमर्था अपि तिष्ठामः । तत्किम् । यतः स्थेयं स्थातव्यमेवास्माभिः तत्किमित्यत आह क्व यामः गंतव्यदेशाभावात् ॥ ११ ॥ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः मुख्य इत्यर्थः ।
अस्वस्तये पराभवार्थमाशु घटस्व यतस्व अनूहो निर्वितर्कः यो नातिपिपर्ति न पूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥ सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्धश्च उप-
हसितश्च एते वयमिति द्वाभ्याम् । क्रीडां कार्यमाणोऽहिराण्महासर्प इव ॥ १३ ॥ मन्युना प्रचलितानि क्षुभितानींद्रियाणि यस्य ॥ १४ ॥ अंतकं मृत्युम् ॥ १५ ॥ १६ ॥ सौम्य विदुर तां गदा-

पश्यतोऽरेः ॥ ८ ॥ परानुषक्तं तपनीयोपकल्पं महागदं कांचनचित्रदंशम् ॥ मर्माण्यभीक्ष्णं प्रतुदंतं दुरुक्तैः प्रचंडमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥
श्रीभगवानुवाच ॥ सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ॥ न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णंत्यभद्र
॥ १० ॥ एते वयं न्यासहरां रसौकसा गतह्रियो गदया द्राविताास्ते ॥ तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥
त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ॥ संस्थाप्य चास्मान्प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥१२॥
मैत्रेय उवाच ॥ सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ॥ आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥ सृजन्नमर्षितः श्वासान्मन्यु-
प्रचलितेंद्रियः ॥ आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरिम् ॥ १४ ॥ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ॥ अवंचयत्तिरश्चीनो योगारूढ
इवांतकम् ॥ १५ ॥ पुनर्गदां स्वामादाय भ्रामयंतमभीक्ष्णशः ॥ अभ्यधावद्धरिः क्रुद्धः संरंभाद्दष्टदच्छदम् ॥ १६ ॥ ततश्च गदयारातिं दक्षिणस्यां
भ्रुवि प्रभुः ॥ आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥ १७ ॥ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ॥ जिगीषया सुसंरब्धावन्योन्यम-
भिजघ्नतुः ॥ १८ ॥ तयोः स्पृधोस्तिग्मगदाहतांगयोः क्षतास्रवघ्राणविवृद्धमन्व्योः ॥ विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणो-
र्मृधः ॥ १९ ॥ दैत्यस्य यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः ॥ कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥
आसन्नशौंडीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ॥ विलक्ष्य दैत्यं भगवान्सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥ ब्रह्मोवाच ॥ एष

मप्राप्तामेवाहनत् ॥ १७ ॥ हर्यक्षो हिरण्याक्षः ॥ १८ ॥ स्पृधोः स्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतान्यंगानि ययोः क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः
विचित्रान्मार्गान्गदायुद्धभ्रमणभेदान् इला गौस्तस्यां निमित्तभूतायां शुष्मिणोर्मत्तयोर्वृषभयोः प्रस्तुतेऽपि इला पृथ्वी तदर्थम् । वृषभौ हि खलु बहूनि दिनानि संग्रथितोत्तुंगशृंगसंघर्षविदीर्णागगल-
द्रुधिरौ परस्परोपमर्दव्यग्रोग्रसंरंभौ चमत्कारितगजयूथपौ युध्यमानौ तिष्ठत इति प्रसिद्धम् ॥ १९ ॥ यज्ञा एवावयवा यस्य तस्य च मह्यां महीनिमित्तं द्विषतोः एवंविधं विमर्दनं युद्धं दिदृक्षुः स्वराट्
ब्रह्मा तत्रागात् ॥ २० ॥ आगत्य च नारायणमाह । किं कृत्वा दैत्यं विलक्ष्य । कथंभूतम् । आसन्नं प्राप्तं शौंडीरं शौर्यं मदो वा येन अपेतं साध्वसं यस्मात् कृतः प्रतीकारो येन अहार्योऽप्रती-

कार्यो विक्रमो यस्य सहस्रणीः सहस्राणामृषिसहस्राणां नेता ॥ २१ ॥ हे देव ! तेंऽघ्रिमूलं प्राप्तानां देवादीनाम् । एषोऽसुरः ॥ २२ ॥ आगस्कृद्भयैवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतं ज्ञात्वा दुष्कृदर्थप्राणादिहर्त्ता अस्मत्तो राद्धो लब्धो वरो येन अन्वेषन्प्रतिरथमवलोकयन् अप्रतिरथः प्रतिपक्षशून्यः ॥ २३ ॥ यद्यस्मादेवंभूतोऽयं तस्मादेनं माक्रीड माक्रीडय । हेदेव ! यथोत्थितं क्षुभितमाशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीडयति तद्वत् ॥ २४ ॥ स्वामासुरीम् । हेदेव ! स्वां मायाम् । अघं पापरूपम् ॥ २५ ॥ वेलामेवाह । एष इति । लोकानां छंबट्करी विनाशकरी छंबडित्यव्ययं विनाशे वर्तते ॥ २६ ॥ अभिजिन्मध्याह्नः स एव मौहूर्तिको योगः सन् मुहूर्तः शुभदः कालः अगाद्गतप्रायः अतो यावन्मुहूर्तशेषोऽस्ति तावदेव सुदुस्तरमेनं निस्तर जहि ॥ २७ ॥ त्वां मृत्युं त्वयैव शापानुग्रहकाले विहितं निर्मितम् । आसादितः प्राप्तः शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे तृतीये टीकायामष्टादशोऽध्यायः ॥ १८ ॥

ते देवदेवानामंघ्रिमूलमुपेयुषाम् ॥ विप्राणां सौरभेयीणां भूतनामप्यनागसाम् ॥ २२ ॥ आगस्कृद्भयकृदस्मद्राद्धवरोऽसुरः ॥ अन्वेषन्नप्रतिरथो लोकानटति कंटकः ॥ २३ ॥ मैनं मायाविनं दृप्तं निरंकुशमसत्तमम् ॥ आक्रीड बालवद्देव यथाशीविषमुत्थितम् ॥ २४ ॥ न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ॥ स्वां देवमायामास्थाय तावज्जह्यघमच्युत ॥२५॥ एषा घोरतमा सन्ध्या लोकच्छंबट्करी प्रभो ॥ उपसर्पति सर्वात्मन्सुराणां जयमावह ॥ २६ ॥ अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ॥ शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥ दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् ॥ विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥ इति श्रीमद्भागवते तृतीयस्कंधे हिरण्याक्षवधेऽष्टादशोऽध्यायः ॥ १८ ॥ मैत्रेय उवाच ॥ अवधार्य विरिंचस्य निर्व्यलीकामृतं वचः ॥ प्रहस्य प्रेमगर्भेण तदपांगेन सोऽग्रहीत् ॥ १ ॥ ततः सपत्नं मुखतश्चरंतमकुतोभयम् ॥ जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥ सा हता तेन गदया विहता भगवत्करात् ॥ विघूर्णिताऽपतद्रेजे तदद्भुतमिवाभवत् ॥ ३ ॥ स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ॥ मानयन्स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥ गदायामपविद्धायां हाहाकारे विनिर्गते ॥ मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः ॥ ५ ॥ तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ॥ चित्रा वाचोऽतद्विदां खेचराणां तत्रास्मासन्स्वस्ति तेऽमुं जहीति ॥ ६ ॥ स तं निशाम्यात्तरथांगमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ॥ विलोक्य चामर्षपरिप्लुतेंद्रियो

ऊनविंशे विरिंच्यादिप्रार्थितेन महामृधे ॥ वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ १ ॥ निर्व्यलीकं च तदमृतं च पाठांतरे निष्कपटाभिप्रायं च तद्वतं च कालात्मनोऽपि मम मुहूर्तवलमुपदिशतीति प्रहस्यापांगालोकनेन स्वीकृतत्वात् ॥ १ ॥ मुखतः अभिमुखे हनौ कपोलस्याधोभागे अक्षजो ब्रह्मणो घ्राणेंद्रियादाविर्भूतः ॥ २ ॥ सा स्वगदया तेन हता ततो विहता विच्युता सती विघूर्णिता भूत्वाऽपतद्रेजे च । तद्भगवत्करात्पतनम् । यद्वा तत्पदस्यावृत्त्या रेज इत्यनेनापि संबंधः तदैत्यपौरुषं रेज इति ॥ ३ ॥ लब्धतीर्थो लब्धावसरः स च न बबाधे न प्राहरत् स मानयन्बभूवेति वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् ॥ ४ ॥ ५ ॥ व्यग्रं ससंभ्रमं चक्रं यस्य विषज्जमानं विशेषेण संगं प्राप्नुवंतं प्रति अतद्विदां तत्प्रभावमजानताम् । आसमंतादासन्स्म ॥ ६ ॥ स दैत्यस्त-

मात्तचक्रं निशाम्य दृष्ट्वाऽग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानींद्रियाणि यस्य सः आदशद्दष्टवान् ॥ ७ ॥ चक्षुर्भ्यां दहन्निव मंचक्षाणः पश्यन् इवेति । वस्तुतः क्रोधाभावमाह । हतोऽसि ज्ञातोऽसीति वास्तवोऽर्थः ॥ ८ ॥ वातरंहसं वायुवेगाम् ॥ ९ ॥ घटस्वोद्यमं कुरु यतस्त्वं जेतुमिच्छसि ॥ १० ॥ ११ ॥ हतो मानो गर्वो यस्य ॥ १२ ॥ ज्वलन्यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रम् । यज्ञाय विष्णुमालक्ष्य अकार्यकरत्वे दृष्टांतः । विप्रमुद्दिश्याभिचारं कुर्वन्यथा ॥ १३ ॥ अंतःखे आकाशमध्ये चकासत्प्रकाशमानम् । उदीर्णोत्कटा दीधितिर्दीप्तिर्यस्य निशातनेमिना शितधारेण हरिरिंद्रो यथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद देवान्विनिर्जित्यामृतकलशं नयता गरुडेनेंद्रप्रयुक्तवज्रस्यामोघस्य मानं दातुं पिच्छमेकं त्यक्तं तद्यथेंद्रश्चिच्छेद छिन्नं च

रुषा स्वदंतच्छदमादशच्छ्वसन् ॥ ७ ॥ करालदंष्ट्रश्चक्षुर्भ्यां मंचक्षाणो दहन्निव ॥ अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥ पदा सव्येन तां साधो भगवान्यज्ञसूकरः ॥ लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥ ९ ॥ आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ॥ इत्युक्तः स तदा भूयस्ताडयन्व्यनदद्भृशम् ॥ १० ॥ तां स आपततीं वीक्ष्य भगवान्समवस्थितः ॥ जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥ स्वपौरुषे प्रतिहते हतमानो महासुरः ॥ नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥ जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ॥ यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा ॥ १३ ॥ तदोजसा दैत्यमहाभटार्पितं चकासदंतः ख उदीर्णदीधिति ॥ चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥ वृक्णे स्वशूले बहुधारिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ॥ प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहृत्यांतरधीयतासुरः ॥ १५ ॥ तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः ॥ नाकंपत मनाक् क्वापि स्रजा हत इव द्विपः ॥ १६ ॥ अथोरुधा सृजन्मायां योगमायेश्वरे हरौ ॥ यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥ प्रववुर्वायवश्चंडास्तमः पांसवमैरयन् ॥ दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥ द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः ॥ वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥ गिरयः प्रत्यदृश्यंत नानायुधमुचोऽनघ ॥ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥ बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुंजरैः ॥ आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥ प्रादुष्कृतानां मायानामासुरीणां विनाशयत् ॥ सुदर्शनास्त्रं भगवान् प्रायुंक्त दयितं त्रिपात् ॥ २२ ॥ तदा दितेः

तद्यथा खे प्रचकाशे तद्वत्प्रकाशमानमित्यभिसंधिः ॥ १४ ॥ अराः संत्यस्येत्यरिचक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्याभिमुखमागत्य हरेरुरो वक्षः प्रहृत्य ॥ १५ ॥ मनागीषदपि क्वाप्यंशे ॥ १६ ॥ अस्य जगतः उपसंयमं प्रलयम् ॥ १७ ॥ पांसुकृतं तमश्च प्रेरितवंतः क्षेपणैर्यंत्रैः ॥ १८ ॥ नष्टो भगणो नक्षत्रसमूहो यस्याम् । अनेन दैत्यबलातिरेकाद्ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते अह्नि नक्षत्राणामसंभवात ॥ १९ ॥ नानाआयुधानि मुंचंतीति तथा यातुधान्श्च प्रत्यदृश्यंत ॥ २० ॥ हिंस्राहिंस्रिधिर्भिधीत्येवंभूता अतिवैशसा अत्युग्रा वाच उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः ॥ २१ ॥ प्रादुष्कृतानामिति प्रकटिता माया विनाशयत् । विनाशनमिति पाठे यथाश्रुतैव षष्ठी । त्रीणि सवनानि पादा यस्य यज्ञमूर्तिरित्यर्थः । त्रयो अस्य पादा इति श्रुतेः ॥ २२ ॥ भर्तुरादेशं त्वत्पुत्रौ

भगवान् हनिष्यतीत्येवंभूतम् ॥ २३ ॥ उपगूहमानो बाह्वोरंतर्निधाय संघट्टयन् ॥ २४ ॥ अहन् जघान त्वाष्ट्रं वृत्रम् । मरुत्पतिरिंद्रः ॥ २५ ॥ परितो भ्रमद्गात्रं शरीरं यस्य उदस्ते बहिर्निर्गते लोचने यस्य विशीर्णा बाह्वादयो यस्य नगेंद्रो महाद्रुमः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥ संस्थितिं मृत्युम् ॥ २७ ॥ असत आरोपितालिंगाल्लिंगशरीरान्मोक्तुमिच्छया वराहस्य पूर्वपादयो- रेव करत्वात्करेणाहन्निति पदाहत इति चाविरुद्धम् ॥ २८ ॥ २९ ॥ अखिलयज्ञानां तंतवे विस्ताराय कारणायेति वा अरुंतुदो मर्मभेत्ता ॥ ३० ॥ सादयित्वा हत्वेत्यर्थः । पुष्करविष्टरादिभिर्ब्रह्मा-

समभवत्सहसा हृदि वेपथुः ॥ स्मरंत्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् ॥ रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥ तं मुष्टिभिर्विनिघ्नंतं वज्रसारैरधोक्षजः ॥ करेण कर्णमूलेऽहन्यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥ स आहतो विश्व- जिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ॥ विशीर्णबाह्वंघ्रिशिरोरुहोऽपतद्यथा नगेंद्रो लुलितो नभस्वता ॥ २६ ॥ क्षितौ शयानं तमकुंठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ॥ अजादयो वीक्ष्य शशंसुरागता अहो इमां कोऽनु लभेत संस्थितिम् ॥ २७ ॥ यं योगिनो योगसमाधिना रहो ध्यायंति लिंगादसतो मुमुक्षया ॥ तस्यैष दैत्यापसदः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥ एतौ तौ पार्षदावस्य शापाद्यातावसद्ग- तिम् ॥ पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥ देवा ऊचुः ॥ नमो नमस्तेऽखिलयज्ञतंतवे स्थितौ गृहीतामलसत्त्वमूर्तये ॥ दिष्ट्या हतोऽयं जगतामरुंतुदस्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥ मैत्रेय उवाच ॥ एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ॥ जगाम लोकं स्वमखंडितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥ मया यथाऽनूक्तमवादि ते हरेः कृतावतारस्य सुमित्र चेष्टितम् ॥ यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥ सूत उवाच ॥ इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम् ॥ क्षत्ताऽऽनंदं परं लेभे महाभागवतो द्विज ॥ ३३ ॥ अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ॥ उपश्रुत्य भवेन्मोदः श्रीवत्सांकस्य किं पुनः ॥ ३४ ॥ यो गजेंद्रं झषग्रस्तं ध्यायंतं चरणांबुजम् ॥ क्रोशंतीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम् ॥ ३५ ॥ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ॥ कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥ यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः ॥ शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्म- वधादपि द्विजाः ॥ ३७ ॥ एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम् ॥ प्राणेंद्रियाणां युधि शौर्यवर्धनं नारायणोऽते गतिरंग शृण्व-

दिभिः संस्तुतः ॥ ३१ ॥ यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मयाऽवादि तव कथितम् । हे सुमित्र ! यथा येन प्रकारेण ॥ ३२ ॥ हे द्विज शौनक ॥ ३३ ॥ कथामुपश्रुत्य ॥ ३४ ॥ भक्तिमात्रेण पशू- नामपि सुलभोऽन्यथा देवानामपि दुर्लभ इति तत्कथाश्रवणे कस्यानंदो न स्यादित्याह । इति द्वाभ्याम् । झषो ग्राहः क्रोशंतीनां सतीनामिति कृपालुत्वमुक्तम् । सकटादमोचयत् ॥ ३५ ॥ ३६ ॥ कारणेन पृथिव्युद्धरणादिना सूकररूपस्य हरेः ॥ ३७ ॥ एतद्धरेर्विक्रीडितं शृण्वतामंते श्रीनारायणो गतिर्भवति । महापुण्यं स्वर्गादिप्रदं अलं पवित्रमतिशयेन शोधकम् । धन्यं धनावहम् । यशस्यं

कीर्तिकरम् । आयुषश्चाशिषां च पदं स्थानं परित्राणं वा प्राणानामिंद्रियाणां च पदम् । अंग हे विदुर ॥ ३८ ॥ इति तृतीये टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे वराहजन्मादिव्यवधानाद-
थादितः ॥ सर्गोऽनुस्मार्यते वक्तुमन्वयं मनोः ॥ १ ॥ प्रतिष्ठां स्थानम् । अध्यस्य प्राप्य सौते ! सूतस्य रोमहर्षणस्य पुत्र ! अवरमर्वाचीनं जन्म येषां तेषामीश्वरे लीनानां मार्गाय निर्गमाय कानि
द्वाराणि कृतवान् । अर्वाचीनान्प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ विदुरमैत्रेयसंवादेनैवैनज्ज्ञास्यत इति तमेव संवादं प्रष्टुमाह । क्षत्तेति पंचभिः । श्रीकृष्णसुहृत्त्वे हेतुः । य इति । दुर्योध-
नादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रमघवान्कृतापराध इति हेतोः श्रीकृष्णोक्तमंत्रानादराद्यस्तत्याज ॥ २ ॥ अनवरोऽन्यूनः सहित्वे महिम्नि ॥ ३ ॥ कुशावर्ते गंगाद्वारे ॥ ४ ॥ यत्किमपि पृच्छतु
किं तवेति चेत्तत्राह । तयोरिति । अघघ्नीरघघ्न्यो नूनं कथाः प्रवृत्ताः ॥ ५ ॥ कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि यस्य हरेः ॥ ६ ॥ एवमिति व्यासवाक्यम् । उग्रश्रवा रोमहर्षणपुत्रः

ताम् ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे हिरण्याक्षवधो नाम एकोनविंशोऽध्यायः ॥ १९ ॥ शौनक उवाच ॥ महीं प्रतिष्ठामध्यस्य सौते स्वायंभुवो मनुः ॥ कान्यन्वतिष्ठद्द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥ क्षत्ता महाभागवतः कृष्णस्यैकांतिकः सुहृत् ॥ यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥ द्वैपायनादनवरो महित्वे तस्य देहजः ॥ सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥ किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया ॥ उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥ तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ॥ आपो गांगा इवाघघ्नीर्हरेः पादांबुजाश्रयाः ॥ ५ ॥ ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ॥ रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥ एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः ॥ भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥ सूत उवाच ॥ हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात् ॥ लीलां हिरण्याक्षमवज्ञया हतं संजातहर्षो मुनिमाह भारतः ॥ ८ ॥ विदुर उवाच ॥ प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ॥ किमारभत मे ब्रह्मन्प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥ ये मरीच्यादयो विप्रा यस्तु स्वायंभुवो मनुः ॥ ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥१०॥ सद्वितीयाः किमसृजन्स्वतंत्रा उत कर्मसु ॥ आहोस्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥ मैत्रेय उवाच ॥ दैवेन दुर्वितर्क्येण परेणानिमिषेण च ॥ जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ १२ ॥ रजःप्रधानान्महतस्त्रिलिंगो दैवचोदितात् ॥ जातः ससर्ज भूतादिर्वियदादीनि पंचशः ॥१३॥

नैमिषमयनमाश्रयो येषाम् । अर्पितमध्यात्मं मनो येन ॥ ७ ॥ गोरुद्धरणं लीलां हिरण्याक्षं चावज्ञया हतं निशम्य । भारतो विदुरः ॥ ८ ॥ यस्मात्त्वमव्यक्तमार्गवित् । ब्रह्मणो वा विशेषणम्
॥ ९ ॥ एतज्जगत् । अभावयन्नुत्पादयामासुः ॥ १० ॥ सद्वितीयाः सभार्याः स्वतंत्रा भार्यानपेक्षाः कर्मसु प्रजासर्गादिषु संहताः परस्परापेक्षाः । इदं जगत् ॥ ११ ॥ ब्रह्मा किमारभतेति प्रश्नस्य
यन्महदादीन्सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति । दैवेनेति सप्तभिः । मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति दुर्वितर्क्येण दैवेन जीवादृष्टेन परेण प्रकृत्यधिष्ठात्रा महापुरुषेणा-
निमिषेण कालेन च हेतुना भगवतो निर्विकाराज्जातक्षोभं यद्गुणत्रयं प्रधानं तस्मान्महानासीत् । तदुक्तं तंत्रे । विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं
त्वंडसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत इति ॥ १२ ॥ महतो जातो भूतादिरहंकारस्त्रिलिंगस्त्रिगुणः रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतोऽहंकारोत्पत्तिकाले कार्या-

नुरूपं रजःप्रधानत्वं भवतीति भावः । पंचशस्तन्मात्राणि महाभूतानि ज्ञानेंद्रियाणि कर्मेंद्रियाणि तत्तद्देवताश्चेति पंच पंच ससजत्यर्थः ॥ १३ ॥ भौतिकं हैममंडमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि संति संहत्य ससृजुः ॥ १४ ॥ अन्ववात्सीदधिष्ठितवान् ॥ १५ ॥ सहस्रार्काणामिवोरुदीधितिः यस्य तत् । सर्वजीवनिकायानामोकः स्थानं पद्मम् । स्वराट् ब्रह्मा ॥ १६ ॥ यः सलिलाशये गर्भोदकस्यांतः शेते तेन भगवताऽनुविष्टोऽधिष्ठितः सन् स स्वराट् स्वया संस्थया नामरूपादिक्रमेण ॥ १७ ॥ छाया प्रभाप्रतियोगिनी तया अबुद्ध्येत्यर्थः । यस्त्वबुद्धिकृतः प्रभोरित्युक्तत्वात् । महातम इति महामोहः स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः ॥ १८ ॥ तदेवं प्रथमोक्तां साधारणां सृष्टिमनूद्य केनचिद्विशेषेणासाधारणां सृष्टिमाह । विससर्जेत्यादिना यावत्समाप्ति । तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः क्षुत्तृषोः समुद्भवो यस्यां ताम् । अत्र च या अस्य सा तनूरासीत्तामपाहत सा तमिस्राऽभवत् इत्यादिश्रुतिरनुसंधेया ॥ १९ ॥ उपसृष्टा

तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ॥ संहत्य दैवयोगेन हैममंडमवासृजन् ॥ १४ ॥ सोऽशयिष्टाब्धिसलिले आंडकोशो निरात्मकः ॥ साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ॥ सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥ सोऽनुविष्टो भगवता यः शेते सलिलाशये ॥ लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥ ससर्ज च्छाययाऽविद्यां पंचपर्वाणमग्रतः ॥ तामिस्रमंधतामिस्रं तमो मोहो महातमः ॥ १८ ॥ विससर्जात्मनः कायं नाभिनंदंस्तमोमयम् ॥ जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥ क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ॥ मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥ देवस्तानाह संविग्नो मा मां जक्षत रक्षत ॥ अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥ २१ ॥ देवताः प्रभया या या दीव्यन्प्रमुखतोऽसृजत् ॥ ते अहार्षुर्देवयंतो विसृष्टां तां प्रभामहः ॥ २२ ॥ देवोऽदेवाञ्जघनतः सृजतिस्मातिलोलुपान् ॥ त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥ ततो हसन्स भगवानसुरैर्निरपत्रपैः ॥ अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥ स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ॥ अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥ पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ॥ ता इमा यभितुं पापा उपाक्रामंति मां प्रभो ॥ २६ ॥ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ॥ त्वमेकः

अभिभूताः जग्धुमत्तुं भक्षयितुं यतो वयं क्षुत्तृड्भ्यामर्दिता अत एनं पितेति कृपया मा रक्षतेत्येके अन्ये तु जक्षध्वं भक्षयतेति ब्रुवंतः जक्षभक्षहसनयोरिति धातुः ॥ २० ॥ देवो ब्रह्मा संविग्नो भीतः सन्मां मा जक्षत मा भक्षयत किंतु रक्षत अहो हे यक्षरक्षांसि ! यूयं मे प्रजाः सुता बभूविथ जाताः स्थ । एवमुग्रस्वभावा यक्षराक्षसा जाता इत्यर्थः । तत्र ये जक्षध्वमित्यूचुस्ते यक्षा ये तु मा रक्षतेति राक्षसा इति ज्ञेयम् । एतच्च तिर्यगादितामससर्गस्याप्युपलक्षणम् ॥ २१ ॥ प्रभया दीव्यन् द्योतमानो या या देवता द्युतिमत्यः सात्विक्यस्तास्ताः प्रमुखतः प्राधान्येनासृजत् । ते देवा देवता इति स्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षया त इति पुंस्त्वेन प्रतिनिर्देशः । एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम् । तेन विसृष्टां त्यक्तां प्रभामहः दिवसरूपां सतीं देवयंतः क्रीडयंतोऽहार्षुर्जगृहुः ॥ २२ ॥ अदेवानिति छेदः । स जघनादसुरानसृजत इति श्रुतेः । अतिलोलुपान्स्त्रीलंपटान् अभिपेदिरे प्राप्ताः ॥ २३ ॥ परापतदपलायत ॥ २४ ॥ भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा तमुपव्रज्य

॥ २५ ॥ पाहीति द्वाभ्यां प्रार्थितवान् । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥ लोकानां जनानाम् । तत्रानासन्नावनाश्रितौ पादौ यैस्तेषाम् ॥ २७ ॥ विविक्तममंदिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य हरेः घोरां कामकश्मलां स्वतनुं विमुंचेति उक्तवानिति शेषः । इत्युक्तश्च ब्रह्मा तां तनुं विमुमोच सर्वत्र तनुत्यागो नाम तत्तन्मनोभावत्यागो विवक्षितः । ग्रहणं च तत्तद्भावापत्तिरिति द्रष्टव्यम् ॥ २८ ॥ साऽहोरात्रयोः संधिरभवदिति श्रुतेः । सा तेन विसृष्टा तनुः सायंतनी संध्या बभूव । सा च कामोद्रेकवेला असुराश्च राजसत्वात्स्त्रीलंपटा अतस्तां संध्यामेव स्त्रियं कल्पयित्वा ते संमोहं प्राप्ता इत्याह । तामिति त्रिभिः । नूपुराभ्यां क्वणती चरणांभोजे यस्याः मदेन विह्वले लोचने यस्याः कांचीकलापेन विलसद्दुकूलं तेन छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥ अन्योन्यमाश्लेषयोपमर्दन हेतुनोत्तुंगौ निरंतरौ पयोधरौ यस्याः सुद्विजां सुदतीम् । स्निग्धो हासो लीलाऽवलोकनं च यस्याः ॥ ३० ॥ गूहंतीं वस्त्रांचलेनावृण्वानाम् । नीलानामलकानां वरूथः स्तोमो विद्यते यस्याः हे धर्म विदुर तां स्त्रियमुपलभ्य मत्वा ॥ ३१ ॥ संमूढानां विभावनाक्रममाह । अहो इति ॥ ३२ ॥ अभिसंभाव्य सत्कृत्य विश्रंभात्प्रणयात् । कुबुद्धयस्ते तां पप्रच्छुः ॥ ३३ ॥ काऽसी-

क्लेशदस्तेषामनासन्नपदां तव ॥ २७ ॥ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ॥ विमुंचात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥ तां क्वणच्चरणांभोजां मदविह्वललोचनाम् ॥ कांचीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥ अन्योन्याश्लेषयोत्तुंगनिरंतरपयोधराम् ॥ सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥ ३० ॥ गूहंतीं व्रीडयात्मानं नीलालकवरूथिनीम् ॥ उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रियम् ॥ ३१ ॥ अहो रूपमहो धैर्यमहो अस्या नवं वयः ॥ मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥ वितर्कयंतो बहुधा तां संध्यां प्रमदाकृतिम् ॥ अभिसंभाव्य विश्रंभात्पर्यपृच्छन्कुमेधसः ॥ ३३ ॥ काऽसि कस्यासि रंभोरु को वार्थस्तेऽत्र भामिनि ॥ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥ या वा काचित्त्वमबले दिष्ट्या संदर्शनं तव ॥ उत्सुनोषीक्षमाणानां कंदुकक्रीडया मनः ॥ ३५ ॥ नैकत्र ते जयति शालिनि पादपद्मं घ्नंत्या मुहुः करतलेन पतत्पतंगम् ॥ मध्यं विषीदति बृहत्स्तनभारभीतं शांतेव दृष्टिरमला सुशिखासमूहः ॥ ३६ ॥ इति सायंतनीं संध्यामसुराः प्रमदायतीम् ॥ प्रलोभयंतीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥ प्रहस्य भावगंभीरं जिघ्रंत्यात्मानमात्मना ॥ कांत्या ससर्ज भगवान् गंधर्वाप्सरसां गणान् ॥ ३८ ॥ विससर्ज तनुं तां वै ज्योत्स्नां कांतिमतीं प्रियाम् ॥ त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥ सृष्ट्वा भूतपिशाचांश्च भगवाना-

तित्रिभिः । काऽसि जात्या कस्य वा कन्या हे भामिनि कोपने रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तदसमर्पणेन नो विबाधसे ॥ ३४ ॥ किं जातिकुलादिप्रश्नेन या वा काचिद्भव दिष्ट्येदं तावद्भद्रं जातं यत्तव दर्शनं किंतु केवलं नो मन उत्सुनोषि विमथ्नासि ॥ ३५ ॥ क्षुभितचित्तानां वाक्यं नैकत्रेति । हे शालिनि श्लाघ्ये एकत्र न जयति न स्थिरीभवति यद्वा नैकत्रानेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते । पतत्पतंगमुच्चलंतं कंदुकम् । बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यं विषीदति श्राम्यति शांता मंथरेव प्रसरति सुशिखासमूहः शोभनः केशकलापस्ते पाठांतरे सुशिखाः शोभनान्केशानवकीर्यमाणान्समूह बधानेति । अत्र चास्तंगच्छन्सूर्य एव पतत्पतंगः मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एव केशा इत्याद्यूह्यम् ॥ ३६ ॥ प्रमदेवाचरंतीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ प्रहस्यात्मानमात्मना जिघ्रंत्या कांत्या सौंदर्येण प्रहसनमात्मावघ्राणं च सौंदर्यानुभावचातुर्यविकारः ॥ ३८ ॥ ज्योत्स्नां चंद्रिकारूपाम् । एव गंधर्वादिगणाः विश्वा-

वसुः पुरोगमो मुख्यो येषु ॥ ३९ ॥ आत्मनस्तंद्रिणा आलस्येन तांश्च मुक्तकेशान्वीक्ष्य नेत्रे निमीलितवान् ॥ ४० ॥ इंद्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते येनेंद्रियविक्लेदेन हेतुनो-च्छिष्टांश्च सतो धर्षयंति भ्रांतान्कुर्वंति तं भूतादिगणमुन्मादं प्रचक्षते तंद्रा जृंभिका निद्रोन्मादहेतुत्वेन भूतादीनां तनूनां च चातुर्विध्यमुक्तम् ॥ ४१ ॥ ऊर्जस्वंतं बलवंतम् । परोक्षेणा-दृश्यरूपेण ॥ ४२ ॥ आत्मनः सर्गो यस्मात्तम् । यद्येन कायेन संप्रदानत्वनिमित्तेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च स्वपितृरूपेभ्यः वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ तिरोधानेन दृश्यत्वे सत्यप्यंतर्धानशक्त्या ॥ ४४ ॥ प्रत्यात्म्येन प्रतिबिंबेन आत्मभासं प्रतिबिंबमात्मनाऽऽत्मनो मानः प्रतिबिंबदर्शिनः सुंदरस्य शिरःकंपादिचेष्टा अत एव तत्सृष्टानां मिथः संमाननेन नित्यं मिथुनीभावः ॥ ४५ ॥ तत्प्रतिबिंबरूपम् । कर्मभिस्तत्पराक्रमानुवर्णनैः ॥ ४६ ॥ भोग आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन अनुपचिते वृद्धिम्

त्मतंद्रिणा ॥ दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद्दृशौ ॥ ४० ॥ जगृहुस्तद्विसृष्टां तां जृंभणाख्यां तनुं प्रभोः ॥ निद्रामिंद्रियविक्लेदो यया भूतेषु दृश्यते ॥ येनोच्छिष्टान्धर्षयंति तमुन्मादं प्रचक्षते ॥ ४१ ॥ ऊर्जस्वंतं मन्यमान आत्मानं भगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणा-सृजत्प्रभुः ॥ ४२ ॥ त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे ॥ साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥ सिद्धान्विद्याधरांश्चैव तिरो-धानेन सोऽसृजत् ॥ तेभ्योऽददात्तमात्मानमंतर्धानाख्यमद्भुतम् ॥ ४४ ॥ स किन्नरान्किंपुरुषान्प्रत्यात्म्येनासृजत्प्रभुः ॥ मानयन्नात्मनाऽऽत्मनमात्मा-भासं विलोकयन् ॥ ४५ ॥ ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना ॥ मिथुनीभूय गायंतस्तमेवोषसि कर्मभिः ॥ ४६ ॥ देहेन वै भोगवता शयानो बहुचिंतया ॥ सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः ॥ ४७ ॥ येऽहीयंतामुतः केशा अहयस्तेऽग जज्ञिरे ॥ सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकं-धराः ॥ ४८ ॥ स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ॥ तदा मनून्ससर्जांते मनसा लोकभावनान् ॥ ४९ ॥ तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुषमात्मवान् ॥ तान्दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥ अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ॥ प्रतिष्ठिताः क्रिया यस्मि-न्साकमन्नमदामहे ॥ ५१ ॥ तपसा विद्यया युक्तो योगेन सुसमाधिना ॥ ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥ तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ॥ यत्तत्समाधियोगर्धितपोविद्याविरक्तिमत् ॥ ५३ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे विंशतितमोऽध्यायः ॥ २० ॥

प्राप्ते तद्भोगक्रोधादियुक्तम् ॥ ४७ ॥ अमुतोऽमुष्माद्देहाद्ये केशा अहीयंत प्रच्युतास्तेऽहयो जाताः प्रसर्पतः पादाद्याकुंचनैः प्रचलतोऽमुष्मात्सर्पाः अत एव अगा न भवंतीति नागाः अतिवेग-वंत इत्यर्थः । भोगवतो जातत्वाद्भोगेन फणेनोरुर्विस्तीर्णा कंधरा येषाम् । सर्वे चैते तत्क्रोधयोगात्क्रूराः तेषामवांतरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥ ४८ ॥ यदा मन्यमानोऽभूत्तदा मनू-न्ससर्ज ॥ ४९ ॥ तेभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहमत्सृजद्ददौ तान्मनून् ॥ ५० ॥ ते त्वया यत्कृतं तत्सुकृतम् । सुकृतत्वमाहुः । यस्मिन्मनुसर्गे क्रिया अग्निहोत्राद्याः । अतोऽस्मिन्सर्वे वयं साकं सहान्नं हविर्भागाद्यदाम भक्षयाम हे ब्रह्मन् ॥ ५१ ॥ कायसृष्टिमुक्त्वा ऋषीणां सृष्टिमाह । तपसेति । विद्या उपासना योगोऽत्रासनादिः सुसमाधिर्वैराग्यैश्वर्यादियुक्तः समाधिः तेन च युक्तः हृषीकेशः स्ववशेंद्रियः सन् ऋषिर्ब्रह्मा ऋषीन्प्रजाः ससर्ज ॥ ५२ ॥ किं तद्देहं यस्यांशमदादित्यत आह । यदिति । समाधिश्च योगश्च ऋद्धिश्च ऐश्वर्यं तपश्च विद्या च विरक्तिश्च विद्यंते

यस्मिंस्तत् ॥ ५३ ॥ इति तृतीयस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥ एकविंशे तपोविद्यातोषितेन तु विष्णुना ॥ कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ १ ॥ एधिरे एधांचक्रिरे ॥ १ ॥ धर्मं महीं च यथा जुगुपतुः ररक्षतुस्तन्मे वदेति तृतीयेनान्वयः ॥ २ ॥ तस्य मनोः ॥ ३ ॥ योगलक्षणैर्यमादिभिर्युक्तायाम् । कतिधा वीर्यं ससर्ज कति पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ मानवीं मनोः कन्यामाकूतिं च प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारस्यार्थः ॥ ५ ॥ सहस्राणां समा दश दशसहस्राणि संवत्सरानित्यर्थः ॥ ६ ॥ ततस्तस्मिंस्तपसि क्रियायोगेन पूजाप्रकारेण संप्रपेदे सिषेवे प्रपन्नेभ्यो भक्तेभ्यो वरदातारम् ॥ ७ ॥ शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्तं प्रत्यात्मानं दर्शयामास ॥ ८ ॥ स कर्दमस्तं खेऽवस्थितं दृष्ट्वा मूर्ध्ना क्षितावपतत् । गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः । पद्मोत्पले दिनरात्रिविकासे सितानां पद्मानामुत्पलानां च स्रक् यस्य तम् । स्निग्धा नीलाश्च येऽलकास्तेषां व्रातो वक्त्राब्जे यस्य ॥ ९ ॥

॥ विदुर उवाच ॥ स्वायंभुवस्य च मनोर्वंशः परमसंमतः ॥ कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥ प्रियव्रतोत्तानपादौ सुतौ स्वायंभुवस्य वै ॥ यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥ तस्य वै दुहिता ब्रह्मन् देवहूतीति विश्रुता ॥ पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयाऽनघ ॥ ३ ॥ तस्यां स वै महायोगी युक्तायां योगलक्षणैः ॥ ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥ रुचिर्यो भगवान्ब्रह्मन्दक्षो वा ब्रह्मणः सुतः ॥ यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥ मैत्रेय उवाच ॥ प्रजाः सृजेति भगवान्कर्दमो ब्रह्मणोदितः ॥ सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ६ ॥ ततः समाधियुक्तेन क्रियायोगेन कर्दमः ॥ संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥ तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे ॥ दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥ स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ॥ स्निग्धनीलालकव्रातवक्त्राब्जं विरजोंऽबरम् ॥ ९ ॥ किरीटिनं कुण्डलिनं शंखचक्रगदाधरम् ॥ श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥ विन्यस्तचरणांभोजमंसदेशे गरुत्मतः ॥ दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकंधरम् ॥ ११ ॥ जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ॥ गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृतांजलिः ॥ १२ ॥ ऋषिरुवाच ॥ जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः ॥ यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥ ये मायया ते हतमेधसस्त्वत्पादारविंदं भवसिंधुपोतम् ॥ उपासते कामलवाय तेषां रासीश कामान्निरयेऽपि ये स्युः ॥ १४ ॥ तथा स

श्वेतोत्पलं क्रीडनकं यस्य मनःस्पर्शं मनस्यानंदजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥ वक्षसि श्रीर्यस्य कौस्तुभः कंधरायां यस्य ॥ ११ ॥ प्रीतिरेव स्वभावः स्वतःसिद्धो धर्मो यस्य तथाविध आत्मा मनो यस्य ॥ १२ ॥ त्वामृते परमानंदं धिगन्यवरकामुकम् ॥ अथापि कृपणं मानुगृहाण वरदानतः ॥ १ ॥ बतेति हर्षे । हे ईड्य ! नोऽस्माभिः समग्रसत्त्वनिधेस्तव दर्शनादद्याक्ष्णोः सांसिध्यं साफल्यं जुष्टं सेवितम् । त्वद्दर्शनमेव महाफलमित्युपपादयति । यस्य तव दर्शनं सद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभी रूढो विरूढो योगो यैस्तेऽपि ॥ १३ ॥ सकामभक्तान्विगर्हयन्नाह । य इति । हे ईश! ये निरयेऽपि स्युस्तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते त्वं तु तेषां तान्कामानपि रासि ददासि ॥ १४ ॥ यः सकामान्निंदामि सोऽहमपि

तादृश एवेत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्कामदुघांघ्रिपस्य कल्पद्रुमस्य तव मूलमंघ्रिमुपेयिवानुपगतोऽस्मि । ननु कामाद्यर्थम-न्यत्किमप्युपास्यतां न यतोऽशेषस्य पुरुषार्थस्य मूलमेतदेव ॥ १५ ॥ ननु तर्हि मुक्त्यर्थमेव किं न भजसि अनधिकारादित्याह । हे अधीश ! यस्त्वं प्रजापतिस्तस्य तव वचसा तंत्या अयं कामहतो लोकः पशुवद्बद्धः हे शुक्ल ! शुद्धधर्ममूर्तेऽहं च किल लोकानुगतोऽतस्तुभ्यं बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते अनिमिषाय कालात्मने तदर्थं भार्यां चेच्छामीति चकार-स्यार्थः । न केवलं लोकानुगतो बलिं वहामि किंतु ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥ १६ ॥ अनिमिषायेत्यनेन कालात्मकात्त्वत्तो भीतः कर्म करोमीत्युक्तमेतत्तु भयं त्वद्भक्तानां नास्तीत्याह । द्वाभ्यां लोकान्कामाभिभूतांस्ताननुसृतान्पशूंश्च विवेके सत्यपि पुनः कर्मजडान्मादृशान्हित्वा अनादृत्य ये तव चरणरूपमातपत्रं श्रिताः । तानेवाह । त्वद्गु-णानां वादः कथा तदेव सीधु मदिरा संसारविस्मारकत्वात् । पीयूषं रुचिकरत्वात् । तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासादयो यैः । एषामित्युत्तरेणान्वयः ॥ १७ ॥ तव यत्त्रिणाभि कालचक्रं तज्जगदाच्छिद्याकृष्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथंभूतम् । अजरं ब्रह्म तस्मिन्नक्षररूपे भ्रमिर्भ्रमणम् । भ्रमदिति वक्तव्येऽतिभ्रमणशीलत्वादुपचारेण भ्रमि-

चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम् ॥ उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघांघ्रिपस्य ॥ १५ ॥ प्रजापतेस्ते वचसाऽधीश तंत्या लोकः किलायं कामहतोऽनुबद्धः ॥ अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥ लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते चरणातपत्रम् ॥ परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥ न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व ॥ षण्नेम्यनंतच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥ एकः स्वयं सन्जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया ॥ सृजस्यदः पासि पुनर्ग्रसि-ष्यसे यथोर्णनाभिर्भगवन्स्वशक्तिभिः ॥ १९ ॥ नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ॥ अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥ तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमाययावर्तितलोकतंत्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि काम-

रित्यभेदनिर्देशः । अधिकमासेन सह त्रयोदश मासा अरा यस्य त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य । शतशब्दे विभक्तेरलुगार्षः । षड् ऋतवो नेमयो यस्य अनंताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः संति यस्य त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव संवत्सरात्मकं चक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥ ननु निरुपाधि-मुदासीनं मां किं याचसे तथाऽपि मायया विश्वसृष्ट्यादिकर्तृत्वात्त्वमेव याच्य इत्याह । स्वयमेक एव सन्नप्यात्मन्यधिकृतया योगमायया हेतुभूतया याः स्वीकृताः शक्तयः सत्त्वाद्यास्ताभिः । अदो विश्वम् स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टांतः । यथेति ॥ १९ ॥ यद्यपि मायिकत्वाद्भक्तेभ्यो विषयसुखं दातुं नेच्छसि तथाऽप्यस्मदभिप्रायानुसारेण तत्संपादयेत्याह । नैतदिति । हे अधीश ! नोऽ-स्माकं भजतां भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया तनुषे विस्तारयसीति यदेतत्तव यद्यपीप्सितं न भवति तथाऽप्यस्मदनुग्रहायास्तु ऋणत्रयापाकरणानंतरमेवापवर्गाय भवत्वित्यर्थः । यर्हि यतो मायया परिच्छिन्न इव लसंत्या तुलस्या युक्तस्त्वं विलक्षितोऽसि एवंभूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥ २० ॥ तं त्वा त्वां भुक्तिमुक्तिप्रदं नमामि । मुक्तिदत्वे हेतुः । अनु-भूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् । भोगदत्वे हेतुः । स्वमायया आवर्तितं लोकतंत्रं विश्वोपकरणं येन अतः सकामैर्निष्कामैश्च मननीयं पादसरोजं यस्य तम् । तत्राल्पीयसि

सकामे पुंसि भजने वा कामान्वर्षतीति तथा तम् ॥ २१ ॥ अमृतेन सुखकरेण प्रेमस्मिताभ्यामीक्षणेन विभ्रमंती भ्रूर्यस्य ॥ २२ ॥ चैत्यं हार्दं भावम् । मे मया समयोजि संघटितम् । यदर्थमेवाहं समर्चितस्तत् ॥ २३ ॥ मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् । त्वादृशेष्वतितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥ विख्यातं मंगलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ हे विप्र ! महिष्या सह ॥ २६ ॥ २७ ॥ यत्र यस्यां भार्यायाम् । समाहितमभिसंधानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥ ते वीर्यमात्मनि भृतं धृतं या प्रसविष्यति सा भजिष्यति वीर्ये वीर्यप्रसूतासु कन्यासु अंजसा आत्मनः पुत्रानाधास्यंति ॥ २९ ॥ निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः तीर्थं पात्रं तेन दानं लक्ष्यते । मयि समर्पितसर्वकर्मफल इत्यर्थः

वर्षम् ॥ २१ ॥ ऋषिरुवाच ॥ इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमावभाषे वचसामृतेन ॥ सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥ श्रीभगवानुवाच ॥ विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ॥ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् ॥ भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥ प्रजापतिसुतः सम्राण्मनुर्विख्यातमंगलः ॥ ब्रह्मावर्तं योऽधिवसञ्शास्ति सप्तार्णवां महीम् ॥ २५ ॥ स चेह विप्र राजर्षिर्महिष्या शतरूपया ॥ आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥ आत्मजामसितापांगीं वयःशीलगुणान्विताम् ॥ मृगयंतीं पतिं दास्यत्यनुरूपाय ते प्रभो ॥ २७ ॥ समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ॥ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥ या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ॥ वीर्ये त्वदीये ऋषय आधास्यंत्यंजसाऽऽत्मनः ॥ २९ ॥ त्वं च सम्यगनुष्ठाय निदेशं न उशत्तमः ॥ मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ॥ मय्यात्मानं सहजगद्द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥ सहाहं स्वांशकलया त्वद्वीर्येण महामुने ॥ तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥ मैत्रेय उवाच ॥ एवं तमनुभाष्याथ भगवान्प्रत्यगक्षजः ॥ जगाम बिंदुसरसः सरस्वत्या परिश्रितात् ॥३३॥ निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेंद्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ॥ आस्ते स्म बिंदुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥ मनुः स्यंदनमास्थाय शातकौंभपरिच्छदम् ॥ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥ तस्मिन्सुधन्वन्नहनि भगवान्य-

॥ ३० ॥ गार्हस्थ्येन दयां कृत्वा संन्यासेनाभयं दत्त्वा मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः ॥ ३२ ॥ प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ अशेषैस्तपोमंत्रादिसिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुंठमार्गो यस्य । यद्वा । अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ पत्ररथेंद्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं सामाकर्णयन् । बृहद्रथंतरे पक्षाविति श्रुतेः । उच्चारितं स्तोमं च सामाधारभूतानामृचां समुदायं शृण्वन् । स्तोम आत्मा इति श्रुतेः । समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य साम्न इति ॥ ३४ ॥ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥ शातकौंभाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य

वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ हे सुधन्वन्विदुर ! यदहः ॥ ३७ ॥ तत्प्रवेशमात्रेण परमानंदं प्राप्त इति दर्शयितुमाश्रमं वर्णयति । यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ शिवमारोग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥ कूजंतः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥ घुष्टं नादितम् । मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । आह्वयंतो मिथो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ कदंबादिभिर्वृक्षैरलंकृतम् ॥ ४२ ॥ कारंडवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥ हरिणादिभिर्वृतम् । तत्र क्रोडः सूकरः श्वाविच्छल्लकः मर्की मर्कटः तद्विशेषा गोपुच्छाः हरिर्वानरः सिंहो वा नाभिः कस्तूरीमृगः ॥ ४४ ॥ हुतो हुताशनो ब्रह्मचारियोग्यो येन ॥ ४५ ॥ उग्रा युक् योगो यस्य तेन वपुषा विद्योतमानं तस्य भगवता व्याहृतं भाषणमेवामृतकला अमृतमयस्य चंद्रस्य कला तन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं संतमप्यकृशम्

त्समादिशत् ॥ उपायादाश्रमपदं मुनेः शांतव्रतस्य तत् ॥ ३७ ॥ यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिंदवः ॥ कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥ तद्वै बिंदुसरो नाम सरस्वत्या परिप्लुतम् ॥ पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥ मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥४१॥ कदंबचंपकाशोककरंजबकुलासनैः ॥ कुंदमंदारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥ कारंडवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्च चकोरैर्वल्गु कूजितम् ॥ ४३ ॥ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः ॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥ प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः ॥ ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम् ॥ ४५ ॥ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ॥ नातिक्षामं भगवतः स्निग्धापांगावलोकनात् ॥ तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६॥ प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ उपसंसृत्य मलिनं यथाऽर्हणमसंस्कृतम् ॥४७॥ अथोटजमुपायातं नृदेवं प्रणतं पुरः ॥ सपर्यया पर्यगृह्णात्प्रतिनंद्यानुरूपया ॥ ४८ ॥ गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥ नूनं चंक्रमणं देव सतां संरक्षणाय ते ॥ वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥ योऽर्केन्दुग्नींद्रवायूनां यमधर्मप्रचेतसाम् ॥ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥ न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ॥ विस्फूर्जच्चंडकोदंडो रथेन त्रासयन्नघान् ॥ ५२ ॥ स्वसैन्यचरणक्षुण्णं वेपयन्मंडलं भुवः ॥ विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥ तदैव सेतवः

॥ ४६ ॥ प्रांशुमुन्नतं उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वत्र क्रिया अर्ह्यते अनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभिनंद्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ४९ ॥ ते चंक्रमणं पर्यटनम् । हि यस्मात् ॥ ५० ॥ मनुस्थं विष्णुं प्रणमति य इति । स्थाने तत्तत्कार्यावसरे । शुक्लाय विष्णवे ॥ ५१ ॥ नयदेति पंचानामयमर्थः । यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसंगादप्यागमनं भवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति । जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मंडलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । विस्फूर्जन्नादं कुर्वच्चंडं कोदंडं धनुर्यस्य ॥ ५२ ॥ स्वसैन्यस्य चरणैः क्षुण्णं मंघट्टितम् ॥ ५३ ॥

वर्णाश्रमाणां निबंधनं यैः । बत अहो ॥ ५४ ॥ निरंकुशैर्नृभिर्निमित्तभूतैः शयाने निश्चिंते ॥ ५५ ॥ निर्व्यलीकेन सहर्षेण प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥ इति श्रीमद्भागवते तृतीयस्कंधे टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥ एवमाविष्कृतोऽभिष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः सव्रीड इव स्वकीर्तिश्रवणात् । प्रत्याख्यानशंकया वा तं मुनिमुवाच उपारतं निवृत्तिनिरतम् ॥ १ ॥ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन्युष्मदस्मत्संबंधस्तावदीश्वरेण पूर्वमेव घटित इत्याह । ब्रह्मेति सार्धाभ्याम् । आत्मनः परीप्सया पर्याप्तुमिच्छया छंदोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया युष्मान्ब्राह्मणान् ॥ २ ॥ ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ॥ ३ ॥ एवं स देव एव रक्षतिस्म । कोऽसौ । यः सदसदात्मकः सर्वात्मकः तथाऽप्यव्ययो निर्विकारः ॥ ४ ॥ तं विज्ञापयितुमेव तद्दर्शनादिकमभिनंदति । तवेति त्रिभिः ॥ ५ ॥ अकृतात्मनामवशीकृतचित्तानाम् ॥ ६ ॥ अनुग्रहोऽनुशासनादिरूप एव । उशतीरुशत्यः ॥ ७ ॥ विज्ञापयति । स भवानिति सप्तभिः । दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य श्रावितं विज्ञापनम् ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशंका निरस्ता मम सुतेति क्षत्रकन्या तव योग्येति दर्शितम् ॥ ९ ॥ एषा देवहूतिः ॥ १० ॥ प्रतीच्छ स्वीकुरु ॥ ११ ॥ उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानम् ॥ १२ ॥ कीनाशं कृपणम् । अवज्ञया परापमानेन ॥ १३ ॥ यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः मे प्रत्तां मया दत्ताम् ॥ १४ ॥ अप्रत्ता चेति

सर्वे वर्णाश्रमनिबंधनाः ॥ भगवद्रचिता राजन्भिद्येरन्बत दस्युभिः ॥ ५४ ॥ अधर्मश्च समेधेत लोलुपैर्व्यंकुशैर्नृभिः ॥ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनंक्ष्यति ॥ ५५ ॥ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ॥ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे एकविंशतितमोऽध्यायः ॥२१॥ मैत्रेय उवाच ॥ एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् ॥ सव्रीड इव तं सम्राडुपारतमुवाच ह ॥ १ ॥ मनुरुवाच ॥ ब्रह्माऽसृजत्स्वमुखतो युष्मानात्मपरीप्सया ॥ छंदोमयस्तपोविद्यायोगयुक्तानलंपटान् ॥ २ ॥ तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपात् ॥ हृदयं तस्य हि ब्रह्म क्षत्रमंगं प्रचक्षते ॥ ३ ॥ अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ॥ रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥ तव संदर्शनादेव छिन्ना मे सर्वसंशयाः ॥ यस्त्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम् ॥ दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥ दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ॥ अपावृतैः कर्णरंध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥ स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम ॥ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ॥ अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥ यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया ॥ सर्वात्मनाऽनुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥ उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ॥ अपि निर्मुक्तसंगस्य कामरक्तस्य किं पुनः ॥ १२ ॥ य उद्यतमनादृत्य कीनाशमभियाचते ॥ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥ अहं त्वाऽशृणवं विद्वन्विवाहार्थं समुद्यतम् ॥ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥ ऋषिरुवाच ॥ बाढमुद्वोढुका-

मय्येव कृतनिश्चयत्वात्कस्मैचित्प्रतिश्रुता च न भवतीत्यर्थः । आद्यः प्रथमः ततः पूर्वं विवाहाभावात् । मुख्य इति वा ॥ १५ ॥ भूयाद्भवेत् प्रतीतः गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या इत्यादिमंत्रप्रसिद्धः स्वयांगकांत्यैव श्रियं भूषणादिशोभाम् ॥ १६ ॥ यां विलोक्य न्यपतत् संमोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्भ्यामंघ्रिभ्यां शोभा यस्याः ॥ १७ ॥ तां ललनानां ललामं भूषणभूतां असेवितौ श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्यां उच्चपदः उत्तानपादस्य अभियातां स्वयं प्राप्ताम् ॥ १८ ॥ भजिष्ये स्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यास इति । भाषाबंधः समयः । तमेवाह । यावदात्मनो मम तेजो गर्भं बिभृयात् । यद्वा ममात्मनो देहाच्च्युतं तेजो वीर्यं बिभृयादिति । अतः परं पारमहंस्यं ज्ञानं तस्मिन्मुख्यान् शुक्लेन विष्णुना साक्षात्प्र-

मोऽहमप्रत्ता च तवात्मजा ॥ आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥ कामः स भूयान्नरदेव तस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ॥ क एव ते तनयां नाद्रियेत स्वयैव कांत्या क्षिपतीमिव श्रियम् ॥ १६ ॥ यां हर्म्यपृष्ठे क्वणदंघ्रिशोभां विक्रीडतीं कंदुकविह्वलाक्षीम् ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७ ॥ तां प्रार्थयंतीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥ अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे ॥ अतो धर्मान्पारमहंस्यमुख्याञ्शुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान् ॥ १९ ॥ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाऽवतिष्ठते ॥ प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननंतः ॥ २० ॥ मैत्रेय उवाच ॥ स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविंदनाभम् ॥ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥ सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ॥ तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥ शतरूपा महाराज्ञी पारिबर्हान्महाधनान् ॥ दंपत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥ २३ ॥ प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ॥ उपगुह्य च बाहुभ्यामौत्कंठ्योन्मथिताशयः ॥ २४ ॥ अशक्नुवंस्तद्विरहं मुंचन्बाष्पकलां मुहुः ॥ आसिंचदंब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥ आमंत्र्य तं मुनिवरमनुज्ञातः सहानुगः ॥ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥ उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ॥ ऋषीणामुपशांतानां पश्यन्नाश्रमसंपदः ॥ २७ ॥ तमायांतमभिप्रेत्य ब्रह्मावर्तात्प्रजाः पतिम् ॥ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥ बर्हिष्मती नाम पुरी सर्वसंपत्सम-

कर्षेणोक्तानविहिंस्रान्हिंसारहितान् शमादीन्बहु यथाभवत्येवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह । यत इति । संस्थास्यते च लयं यास्यति । वावेति एवार्थे । ऋणत्रयापाकरणानंतरं संन्यास एव मादृशानां भगवतोक्त इत्यर्थः ॥ २० ॥ हे उग्रधन्वन्विदुर ! लुलुभे मुनेर्मुखेन प्रलोभ्यतेस्म यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥ स मनुः अन्वनंतरं महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा ॥ २२ ॥ पारिबर्हान्विवाहकाले प्रदेयान् भूषाः भूषणानि वासांसि परिच्छदान्गृहोपकरणानि च ॥ २३ ॥ प्रत्तां दत्ताम् । सदृक्षाय सदृशाय गता व्यथा चिंता यस्य औत्कंठ्येनोन्मथितः क्षुभित आशयो यस्य ॥ २४ ॥ तस्या विरहं सोढुं हे अंब ! हे वत्से इति ब्रुवन् । संधिरार्षः । शिखाः केशानासिंचत् ॥ २५ ॥ २६ ॥ ऋषिकुलहितायाः उभयोः

सुरोधसोः शोभनतटयोः ॥ २७ ॥ अभिप्रेत्य ज्ञात्वा ब्रह्मावर्ताद्देशात्प्रजाः पतिं प्रत्युज्जग्मुः ॥ २८ ॥ कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह । यत्र बर्हिष्मती नाम पुरीति । साऽपि कुत्र । यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति यत्रेति सर्वत्र संबध्यते ॥ २९ ॥ बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसंगाद्देशस्य श्रैष्ठ्यमाह । द्वाभ्याम् । कुशाः काशाश्चासन् शश्वन्नित्यं हरितं वर्चो वर्णो येषाम् । यज्ञघ्नान् राक्षसादीन् पराभवं नीत्वा यज्ञं विष्णुम् ॥ ३० ॥ यज्ञपुरुषं विष्णुं यत इति यत्रायजत् भुवं स्थानं लब्ध्वेति तृन्प्रत्ययांतम् । लब्धवान्सन्नित्यर्थः । यतो लब्धवांस्तं यज्ञपुरुषमिति वा एतेन स्वर्गादपि भूमिः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥ प्रस्तुतमाह । यां बर्हिष्मतीं नाम पुरीं समावसत् पूर्वं यस्यामुषितस्तस्यां निर्विश्य भवनं प्रविष्टः सन्भोगान्बुभुजे इत्यन्वयः ॥ ३२ ॥ अन्येषां धर्मादीनामविरोधेन प्रत्यूषेषु उषःसु संगीयमाना सत्कीर्तिर्यस्य तथापि स्वयं हरेरेव कथाः शृण्वन्भोगान्बुभुजे ॥ ३३ ॥ योगमायासु ऐच्छिकभोगरचनासु यद्यतः

न्विता ॥ न्यपतन्यत्र रोमाणि यज्ञस्यांगं विधुन्वतः ॥ २९ ॥ कुशाः काशास्त एवासञ्शश्वद्धरितवर्चसः ॥ ऋषयो यैः पराभाव्य यज्ञघ्नान्यज्ञमीजिरे ॥ ३० ॥ कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः ॥ अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम् ॥ ३१ ॥ बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ॥ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ सभार्यः सप्रजः कामान्बुभुजेऽन्याविरोधतः ॥ ३२ ॥ संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः ॥ ३३ ॥ निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ॥ यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥ अयातयामास्तस्यासन्यामाः स्वांतरयापनाः ॥ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥ स एवं स्वांतरं निन्ये युगानामेकसप्ततिम् ॥ वासुदेवप्रसंगेन परिभूतगतित्रयः ॥ ३६ ॥ शारीरा मानसा दिव्या वैयासे ये च मानुषाः ॥ भौतिकाश्च कथं क्लेशा बाधंते हरिसंश्रयम् ॥ ३७ ॥ यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधाञ्शुभान् ॥ नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥ एतत्त आदिराजस्य मनोश्चरितमद्भुतम् ॥ वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे द्वाविंशतितमोऽध्यायः ॥ २२ ॥

मैत्रेय उवाच ॥ पितृभ्यां प्रस्थिते साध्वी पतिमिंगितकोविदा ॥ नित्यं पर्यचरत्प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥ विश्रंभेणात्मशौचेन गौरवेण दमेन च ॥ शुश्रूषया सौहृदेन वाचा मधुरया च भोः ॥ २ ॥ विसृज्य कामं दंभं च द्वेषं लोभमघं मदम् ॥ अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत्

आभ्रंशयितुं आ ईषदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥ अतो यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवत्यतोऽन्यदपि गतसारं यातयाममुच्यते । अयातयामा अगतसारा आसन् । स्वांतरं तदीयं मन्वंतरं यापयंति गमयंति ते यामाः कालावयवाः कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥ परिभूतगतित्रयं जाग्रदादि सात्त्विकादि वा येन ॥ ३६ ॥ दिव्याः स्वांतरिक्षाः मानुषाः शत्रुप्रभवाः भौतिकाः शीतोष्णादिप्रभवाः । वैयासे हे विदुर ॥ ३७ ॥ तस्य ज्ञानातिशयमाह । य इति । नृणां साधारणधर्मान् ॥ ३८ ॥ तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम् ॥ ३९ ॥ इति तृतीये टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे ततो योगनिर्मिते सर्वसंपदि ॥ विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ १ ॥ प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥ दंभं कपटम् । अघं निषि-

द्वाचरणम् । तेजीयांसमतितेजस्विनम् ॥ ३ ॥ दैवाद्गरीयसो दैवादपि गुरुतरात् । दैवमप्यन्यथाकर्तुं समर्थादित्यर्थः ॥ ४ ॥ व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः ॥ ५ ॥ सुहृत्प्रियः मदर्थे क्षपयितुं नावेक्षितो न गणितः समुचितः श्लाघ्योऽपि मत्सेवासक्तयोपेक्षित इत्यर्थः ॥ ६ ॥ तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्यभोगास्तानेव तेऽवरुद्धांस्त्वयापि वशीकृतान्प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या द्रक्ष्यसि ॥ ७ ॥ अन्ये पुनर्भोगाः किं न किमपि अतितुच्छा इत्यर्थः । तत्र हेतुः । भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृम्भो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु निजधर्मेण पातिव्रत्येन दुग्धं इति तथा तान् दुरधिगान्दुष्प्रापान् नृपा वयमिति या विक्रियास्तत्तद्भो-गविकृतयस्ताभिः ॥ ८ ॥ अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवंब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिंता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्विकसितं हसितं जातहासं चाननं यस्याः सा आह जगाद ॥ ९ ॥ बतेति हर्षे । द्विजवृष द्विजश्रेष्ठ हेभर्तस्त्वय्येतत्सर्वं राद्धं सिद्धमेव तदहमवैमि

॥ ३ ॥ स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ॥ दैवाद्गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ॥ प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥ कर्दम उवाच ॥ तुष्टोऽहमद्य तव मानवि मानदायाः शुश्रूषया परमया परया च भक्त्या ॥ यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥ ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥ तानेव ते मदनुसेवनयाऽवरुद्धान्दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥ अन्ये पुनर्भगवतो भ्रुव उद्विजृंभविभ्रंशितार्थरचनाः किमुरुक्रमस्य ॥ सिद्धाऽसि भुंक्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥ एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गता-धिरासीत् ॥ संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविलसद्धसिताननाऽऽह ॥ ९ ॥ देवहूतिरुवाच ॥ राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः ॥ यस्तेऽभ्यधायि समयः सकृदंगसंगो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥ तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयात्मा ॥ सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥ मैत्रेय उवाच ॥ प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः ॥ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥ सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं

जानामि किंतु यस्ते त्वया समयोऽभिहितः स तावद्भूयात् स कदिति गर्भसंभवमात्रपर्यंत इत्यर्थः । यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः । समासपाठे गरीयसि पत्यौ सति सतीनां यतो गुणप्रसवो गुणविस्तारो भवति । अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवन्त्विति भावः ॥ १० ॥ अंगसंगार्थं च प्रथममितिकर्तव्यतां संपादयेत्याह । हे ईश! तत्रांगसंगे इतिकृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष संजानीहि उपकल्पयेत्यर्थः । येन साधनेनाभ्यंगभोजनपानादिनाऽतीव रंतुमिच्छया कर्शितो दीनश्च ममैष आत्मा देहः सिध्येत रतिसमर्थो भवेत् । कथंभूतायाः । ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः । तत्ततोऽनुरूपं भवनं विचक्ष्व वितर्कय विचारयेति यावत् ॥ ११ ॥ तर्हि तत्क्षणमेव आविरचीकरदाविर्भा-वयांबभूव ॥ १२ ॥ तदेव विशिनष्टि । सर्वकामदुघमिति नवभिः । सर्वैश्च रत्नादिभिः समन्वितम् । सर्वर्द्धीनां सर्वसंपदां य उपचयस्तस्योदर्कं उत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतं शोभितम्

॥ १३ ॥ उपकरणं परिकरः पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः पताका विस्तृतास्ताभिः ॥ १४ ॥ विचित्राणि माल्यानि पुष्पाणि यासु मंजु यथा भवत्येवं सिंजंतः कूजंतः षडंघ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥ उपर्युपरि विरचितगृहेषु कशिपुभिः शय्याभिः कांतं कमनीयम् । पर्यंकादिभिश्च कांतम् ॥ १६ ॥ १७ ॥ द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुंबरस्तया भातं शोभितम् । वज्रखचितकपाटयुक्तम् । इंद्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु ॥ १८ ॥ चक्षुष्मंत इव ये पद्मरागाग्र्यास्तैः । यद्वा । चक्षुष्मदिव कैः पद्मरागाग्र्यैः विचित्रैर्वैतानैर्वितानसमूहैः ॥ १९ ॥ कृत्रिमानपि हंसादीन्स्वान्सजातीयान्मन्यमानैस्तत्रतत्राधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥ विवारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहम् । संवेश उपभोगस्थानम् । प्रांगणं गृहाद्बहिः अजिरं प्राकाराद्बहिः

मणिस्तंभैरुपस्कृतम् ॥ १३ ॥ दिव्योपकरणोपेतं सर्वकालसुखावहम् ॥ पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभि-
र्मंजुसिंजत्षडंघ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥ उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ॥ क्षिप्तैः कशिपुभिः कांतं पर्यंक-
व्यजनासनैः ॥ १६ ॥ तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥ द्वास्सु विद्रुमदेहल्या भातं
वज्रकपाटवत् ॥ शिखरेष्विंद्रनीलेषु हेमकुंभैरधिश्रितम् ॥ १८ ॥ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ॥ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः
॥ १९ ॥ हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ॥ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ विहारस्थानविश्रामसंवेशप्रांगणाजिरैः ॥
यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥ ईदृग् गृहं तत्पश्यंतीं नातिप्रीतेन चेतसा ॥ सर्वभूताशयाभिज्ञः प्रावोचत्कर्दमः स्वयम् ॥ २२ ॥
निमज्ज्यास्मिन् ह्रदे भीरु विमानमिदमारुह ॥ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥ २३ ॥ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ॥
सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥ अंगं च मलपंकेन संछन्नं शबलस्तनम् ॥ आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥
सांऽतःसरसि वेश्मस्थाः शतानि दश कन्यकाः ॥ सर्वाः किशोरवयसो ददर्शोत्पलगंधयः ॥ २६ ॥ तां दृष्ट्वा सहसोत्थाय प्रोचुः प्रांजलयः स्त्रियः ॥
वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥ स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ दुकूले निर्मले नूत्ने ददुरस्यै च मानद
॥ २८ ॥ भूषणानि परार्ध्यानि वरीयांसि द्युमंति च ॥ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥ अथादर्शे स्वमात्मानं स्रग्विणं विरजां-

यथोपजोषं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव ॥ २१ ॥ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च ॥ २२ ॥ अस्मिन् ह्रदे बिंदुसरसि आरुह्याधिरोह शुक्लेन विष्णुना कृतमानंदबिंदुनिपातनेन यापकं प्रापकम् ॥ २३ ॥ समादायाहृत्य सरजं मलिनम् । वेणीभूताञ्जटिलान् ॥ २४ ॥ शबलौ विवर्णौ स्तनौ यस्मिंस्तत् । सरस्वत्याः शिवानि जलान्याशेरते यस्मिन् । शिवा जलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥ सा तत्र निमग्ना सती विस्मयं ददर्श । तमाह । सांऽतःसरसीति दशभिः । उत्पलगंधयः कमलगंधीः ॥ २६ ॥ तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥ ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥ परार्ध्यान्युत्कृष्टानि वरीयांसि तत्प्रियाणि द्युमंति दीप्तिमंति च । पानं पेयम् । अमृतं स्वादु

आसवं मादकम् ॥ २९ ॥ आदर्शे स्वमात्मानं ददर्शेति शेषः । आत्मानं विशिनष्टि चतुर्भिः । कृतं स्वस्त्ययनं मंगलं यस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥ विरजमित्यस्य प्रपंचः स्नातमुद्वर्त्य चालितम् । कृतं शिरःस्नानमभ्यंगो येन भूषितत्वमेवाह । निष्कं पदकं ग्रीवायां यस्य ॥ ३१ ॥ बहूनि रत्नानि यस्यां तया रुचकेन मंगलद्रव्येण कुंकुमादिना । तदुक्तं विश्वप्रकाशे । रुचकं मंगलद्रव्ये ग्रीवाभरणदंतयोः इति ॥ ३२ ॥ सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि एतैर्लसच्छोभमानं मुखं यस्य कथंभूतेन चक्षुषा श्लक्ष्णो मनोहरः स्निग्धोऽपांगो नेत्रप्रांतो यस्य पद्मकोशेन स्पर्धत इति पद्मकोशस्पृत्तेन ॥ ३३ ॥ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ अत्रैव स्वममप्यास्ते ॥ ३४ ॥ आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयम् ॥ ३५ ॥ स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्बिभ्रतीम् । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः पाठांतरे तु रूपविशेषणम् ॥ ३६ ॥ शोभने वाससी यस्याः । जातो

बरम् ॥ विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥ स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ॥ निष्कग्रीवं वलयिनं कूजत्कांचननूपुरम् ॥ ३१ ॥ श्रोण्योरध्यस्तया कांच्या कांचन्या बहुरत्नया ॥ हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥ सुदता सुभ्रुवा श्लक्ष्णस्निग्धापांगेन चक्षुषा ॥ पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥ यदा सस्मार ऋषभमृषीणां दयितं पतिम् ॥ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥३४॥ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ॥ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥ स तां कृतमलस्नानां विभ्राजंतीमपूर्ववत् ॥ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥ विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ॥ जातभावो विमानं तदारोहयदमित्रहन् ॥ ३७ ॥ तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ॥ बभ्राज उत्कचकुमुद्गणवानपीच्यास्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥ ३८ ॥ तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणीष्वनंगसखमारुतसौभगासु ॥ सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥ वैश्रंभके सुरसने नंदने पुष्पभद्रके ॥ मानसे चैत्ररथ्ये स रेमे रामया रतः ॥ ४० ॥ भ्राजिष्णुना विमानेन कामगेन महीयसा ॥ वैमानिकानत्यशेत चरन् लोकान्यथाऽनिलः ॥ ४१ ॥ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् ॥ यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥ प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्स्वसंस्थया ॥ बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥ विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् ॥ रामां निर-

भावः प्रेम यस्य । हे अमित्रहन् जितकाम ॥ ३७ ॥ तस्मिन्विमाने मुनिर्बभ्राजे । न लुप्तो महिमा स्वातंत्र्यं यस्य उपचीर्णं शुश्रूषितं वपुर्यस्य विकसितकुमुद्गणवानपीच्योऽतिसुंदरः पूर्णचंद्र इव मुनिर्नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्कुलाचलेंद्रे मेरौ तस्य द्रोणीषु दरीषु अनंगस्य सखा यो मारुतः शीतसुगंधमंदानिलस्तेन सौभगं सौंदर्यं यासु सिद्धैर्नुतः स्तुतः सन् द्युधुनिर्गंगा तस्याः पातेन शिवः स्वनो यासु तासु रेमे । ललनावरूथी स्त्रीरत्नसमूहवान् ॥ ३९ ॥ वैश्रंभकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् ॥ ४० ॥ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ उद्दामचेतसां धीराणाम् । व्यसनं संसारस्तस्यात्ययो यस्मान् ॥ ४२ ॥ प्रेक्षयित्वा दर्शयित्वा गोलं

मंडलम् । स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावंतम् । बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥ नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥ शरदः संवत्सराः मनागीषदिव व्यतीयुः ॥ ४६ ॥ आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् तथा सति सदपत्यं भवेदिति नोधा नवधा सर्वसंकल्पविदिति तस्या बह्वपत्यसंकल्पं जानन्नित्यर्थः । विभुस्तथा कर्तुं समर्थश्च आत्मविदिति च तस्यामनासक्तत्वात्स्त्रियो जाता इति भावः । पुमान्पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रिया इति स्मृतेः ॥ ४७ ॥ अतोऽनंतरमेव सद्य एकस्मिन्नेवाहनि चारूणि सर्वाण्यंगानि यासाम् ॥ ४८ ॥ प्रव्रजिष्यंतमालक्ष्य वितर्क्य स्मयमाना बहिरंतस्तु विक्लवेन व्याकुलेन विदूयता संतप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥ नखा एव मणयस्तैः श्रीः शोभा यस्य तेन पदा भुवं लिखंतीति दुरंतचिंतालक्षणम् ॥ ५० ॥ उपोवाह संपादितवान् । अभयमिति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्तयेत्यर्थः ॥ ५१ ॥ तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा

मयत्रेमे वर्षपूगान्मुहूर्तवत् ॥ ४४ ॥ तस्मिन्विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ॥ न चाबुध्यत तं कालं पत्याऽपीच्येन संगता ॥ ४५ ॥ एवं योगानुभावेन दंपत्यो रममाणयोः ॥ शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥४६॥ तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित् ॥ नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥ ४७ ॥ अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ॥ सर्वास्ताश्चारुसर्वांग्यो लोहितोत्पलगंधयः ॥ ४८ ॥ पतिं सा प्रव्रजिष्यंतं तदाऽऽलक्ष्योशती सती ॥ स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥ लिखंत्यधोमुखी भूमिं पदा नखमणिश्रिया ॥ उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥ देवहूतिरुवाच ॥ सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम् ॥ अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ॥ कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥ एतावताऽलं कालेन व्यतिक्रांतेन मे प्रभो ॥ इंद्रियार्थप्रसंगेन परित्यक्तपरात्मनः ॥ ५३ ॥ इन्द्रियार्थेषु सज्जंत्या प्रसंगस्त्वयि मे कृतः ॥ अजानंत्या परं भावं तथाऽप्यस्त्वभयाय मे ॥ ५४ ॥ संगो यः संसृतेर्हेतुरसत्सु विहितो धिया ॥ स एव साधुषु कृतो निःसंगत्वाय कल्पते ॥ ५५ ॥ नेह यत्कर्म धर्माय न विरागाय कल्पते ॥ न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥ साऽहं भगवतो नूनं वंचिता मायया दृढम् ॥ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बंधनात् ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ मैत्रेय उवाच ॥ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ॥

योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् । संसारभयमुररीकृत्याह । कश्चिदिति । विशोकाय ज्ञानोपदेशाय स्त्रीभिर्ऋणानपाकरणात्कंचित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ॥ ५२ ॥ विषयान् भुंक्ष्व किं ब्रह्मविद्ययेति चेत्तत्राह । एतावताऽलं पूर्यताम् । परित्यक्तः पर आत्मा यया यस्या मम ॥ ५३ ॥ स्वकृतमनुशोचंत्याह । इंद्रियार्थेष्विति चतुर्भिः । मे मया परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥ प्रसंगः कथमभयायास्तु तत्राह । संग इति । अधियाऽज्ञानेन ॥ ५५ ॥ स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् । तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवस्येदित्यर्थः ॥ ५६ ॥ न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥ इति श्रीमद्भागवते म० तृतीयस्कंधे टीकायां

कपिलोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः ॥ प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोचनः ॥ १ ॥ शालिनीं श्लाघ्याम् । शुक्लेनाभिव्याहृतं सहाहं स्वांशकलयेत्यादि ॥ १ ॥ इत्थं मा खिदः खेदं माकर्षीः । आत्मानं प्रत्यहं भाग्यहीनेति अदूराच्छीघ्रम् ॥ २ ॥ दमेनेंद्रियसंयमेन नियमेन स्वधर्मेण तपांसि द्रविणदानानि च तैः ॥ ३ ॥ हृदयग्रंथिं चिज्जडात्मकमहंकारलक्षणं बंधं छेत्ता छेत्स्यति औदर्यः पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥ श्रद्धाय विश्वस्य ॥ ५ ॥ बहुतिथे बहुतरे कालेऽतिक्रांते सति । कार्दमं कर्दमसंबंधि ॥ ६ ॥ घनाघना इत्येकं पदम् । वर्षंतो मेघाः गायंति स्म नृत्यंति स्म ॥ ७ ॥ अपवर्जिता मुक्ताः ॥ ८ ॥ परिश्रितं परिवेष्टितम् ॥ ९ ॥ आगत्य किं कृतवांस्तदाह । भगवंतमिति

दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥ ऋषिरुवाच ॥ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिंदिते ॥ भगवांस्तेऽक्षरो गर्भमदूरात्संप्रपत्स्यते ॥ २ ॥ धृतव्रतासि भद्रं ते दमेन नियमेन च ॥ तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥ स त्वयाऽऽराधितः शुक्लो वितन्वन्मामकं यशः ॥ छेत्ता ते हृदयग्रंथिमौदर्यो ब्रह्मभावनः ॥ ४ । मैत्रेय उवाच ॥ देवहूत्यपि संदेशं गौरवेण प्रजापतेः ॥ सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥ तस्यां बहुतिथे काले भगवान्मधुसूदनः ॥ कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥६॥ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥ गायंति तं स्म गंधर्वा नृत्यंत्यप्सरसो मुदा ॥ ७ ॥ पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ॥ प्रसेदुश्च दिशः सर्वा अंभांसि च मनांसि च ॥ ८ ॥ तत्कर्दमाश्रपदं सरस्वत्या परिश्रितम् ॥ स्वयंभूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥ भगवंतं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ॥ तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥ सभाजयन्विशुद्धेन चेतसा तच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥ ब्रह्मोवाच ॥ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ॥ यन्मे संजगृहे वाक्यं भवान्मानद मानयन् ॥ १२ ॥ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ॥ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥ इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ॥ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यंत्यनेकधा ॥ १४ ॥ अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ॥ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ॥ भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने ॥ १६ ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः ॥ हिरण्यकेशः पद्माक्षः पद्ममुद्रापदांबुजः ॥ १७ ॥ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ॥ अविद्यासंशयग्रंथिं छित्त्वा गां विचरिष्यति ॥ १८ ॥ अयं सिद्धगणाधीशः सांख्याचार्यैः सुसं-

म्मतः

ज्ञाभ्याम् । तत्त्वानां संख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवंतं जातं विद्वानजो ब्रह्मा स्वराट् स्वतःसिद्धज्ञानस्तस्य चिकीर्षितं सभाजयन्प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितः कर्दमं चेदमभ्यधादिति द्वयोरन्वयः । चकाराद्देवहूतिं च ॥ १० ॥ ११ ॥ तत्र त्वयेति पंचभिः । कर्दमं प्रत्याह । अपचितिः पूजा कृता यद्यस्मात् निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥ अनुमन्येतेति यदेतावत्येव ॥ १३ ॥ अनेकधा प्रभावैर्वंशैर्बृंहयिष्यंति वर्धयिष्यंति ॥ १४ ॥ ऋषिमुख्येभ्यो मरीच्यादिभ्यः ॥ १५ ॥ पुत्रस्तु साक्षादीश्वर इत्याह । वेदाहमिति । शेवधिं निधिं सर्वाभीष्टदम् ॥ १६ ॥ देवहूतिं प्रत्याह । त्रिभिः । ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च ते एव योग उपायस्तेन कर्मणां जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् पद्ममुद्रायुक्तं पदांबुजं यस्य ॥१७॥

हे मानवि! अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रंथिम् ॥१८॥ सुसंमतः सुपूजितः सन् गंता प्राप्स्यति ॥१९॥ कुमारैः सहेति शेषः । सहनारदो नारदसहितश्च मरीच्या-
दीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पंचभिः सहितो हंसो ब्रह्मा ययौ । त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्यलोकम् ॥ २० ॥ शतधृतौ ब्रह्मणि ॥ २१ ॥ २२ ॥ युक्तां योग्याम् । अथ-
च्छददात् ॥ २३ ॥ वितन्यते समृद्धः क्रियते शांत्यधिष्ठात्रीं देवतामित्यर्थः । समलालयत्संतोषितवान् ॥ २४ ॥ निमंत्र्य पृष्ट्वा नंदिं हर्षं प्राप्ताः संतः ॥ २५ ॥ स च मुनिः त्रियुगं विष्णुम् ।
विविक्ते रहसि ॥ २६ ॥ पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे स्वीयैरमंगलैः पापैः ॥ २७ ॥ कुतः सर्वा देवताः प्रसन्ना इति ज्ञातमलभ्यलाभादित्याह । द्वाभ्याम् । बहुषु जन्मसु
विपक्केन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु यस्य तव पदम् ॥ २८ ॥ हेलनमवज्ञां लाघवं न गणय्यागणयित्वा उचितमेव तवैतदित्याह ।

मतः ॥ लोके कपिल इत्याख्यां गंता ते कीर्तिवर्धनः ॥ १९ ॥ मैत्रेय उवाच ॥ तावाश्वास्य जगत्स्रष्टा कुमारैः सह नारदः ॥ हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ॥ यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥ २१ ॥ मरीचये कलां प्रादादनसूयामथात्रये ॥ श्रद्धामंगिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥ २२ ॥ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ॥ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुंधतीम् ॥ २३ ॥ अथर्वणेऽददाच्छांतिं यया यज्ञो वितन्यते ॥ विप्रर्षभान्कृतोद्वाहान्सदारान्समलालयत् ॥ २४ ॥ ततस्त ऋषयः क्षत्तः कृतदारा निमंत्र्य तम् ॥ प्रातिष्ठन्नंदिमापन्नाः स्वं स्वमाश्रममंडलम् ॥ २५ ॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ॥ विविक्त उपसंगम्य प्रणम्य समभाषत ॥ २६ ॥ अहो पापच्यमानानां निरये स्वैरमंगलैः ॥ कालेन भूयसा नूनं प्रसीदंतीह देवताः ॥ २७ ॥ बहुजन्मविपक्वेन सम्यग्योगसमाधिना ॥ द्रष्टुं यतंते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥ स एव भगवानद्य हेलनं न गणय्य नः ॥ गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥२९॥ स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ॥ चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥३०॥ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ॥ यानि यानि च रोचंते स्वजनानामरूपिणः ॥ ३१ ॥ त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाऽभिवादार्हणपादपीठम् ॥ ऐश्वर्यवैराग्ययशोवबोधवीर्यश्रियां पूर्तमहं प्रपद्ये ॥ ३२ ॥ परं प्रधानं पुरुषं महांतं कालं कविं त्रिवृतं लोकपालम् ॥ आत्मानुभूत्यानुगतप्रपंचं स्वच्छंदशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥ आस्माभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णर्ण उताप्तकामः ॥ परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युंजन्विशोकः ॥ ३४ ॥

यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥ एतत्प्रपंचयति । द्वाभ्याम् । स्वयमेवावतीर्णोऽसि स्ववाक्यं तव पुत्रो भविष्यामीति यत्तत्सत्यं कर्तुं ज्ञानं ज्ञानसाधनं सांख्यं च चिकीर्षुः सन् ॥ ३० ॥ यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि यानि च स्वजनानां रोचंते मनुष्यसरूपाणि तान्यपि ते रोचंत इत्यर्थः । अरूपिणः प्राकृतरूपरहितस्य ॥ ३१ ॥ अभिवादार्हं पादपीठं यस्य ऐश्वर्यादिभिः पूर्तं पूर्णम् ॥ ३२ ॥ ऐश्वर्यादिकं विवृण्वन्नाह । परं परमेश्वरम् । तत्र हेतुः । स्वच्छंदाः स्वाधीनाः शक्तयो यस्य ता एवाह । प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महांतं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहंकाररूपं लोकात्मकं तत्पालात्मकं च तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपंचतामाह । आत्मानु-

भूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपंचो यस्य तम् । कविं सर्वज्ञम् । प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥ संन्यासानुज्ञां प्रार्थयते । आस्माभिपृच्छे यत्किंचिदभिपृच्छामीत्यर्थः । त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि दैवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युंजन् स्मरन्विचरिष्यामि ॥ ३४ ॥ अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव । यद्यवश्यं गंतव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह । मयेति षड्भिः । सत्यलौकिके वैदिके लौकिके च कृत्ये स्वोक्तस्य प्रामाण्यमभिदर्शयति । यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम् । अथ अतएव तदृतं सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम् ॥ ३५ ॥ दुराशयाल्लिंगान्मुमुक्षूणां मुनीनामात्मदर्शने संमताय तत्त्वानां प्रसंख्यानाय विद्धीत्युत्तरस्यानुषंगः ॥ ३६ ॥ नन्वयमात्मज्ञानमार्गः पूर्वसिद्ध एव नेदानीमपूर्ववत्प्रवर्तनीयस्तत्राह । एष इति । अव्यक्तः सूक्ष्मः ॥ ३७ ॥ कामं यथेच्छम् । आपृष्टोऽनुज्ञातः यद्वा यथा त्वं गंतुं मां पृष्टवांस्तथाऽत्रावस्थातुं मयाऽपि त्वमापृष्ट इत्यर्थः । मयि संन्यस्तेन समर्पितेन कर्मणा । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत

श्रीभगवानुवाच ॥ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ॥ अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥ एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात् ॥ प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने ॥ ३६ ॥ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ॥ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥ गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ॥ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥ मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ॥ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥ मात्रे आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ॥ वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४० ॥ मैत्रेय उवाच ॥ एवं समुदितस्तेन कपिलेन प्रजापतिः ॥ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥४१॥ व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ॥ निःसंगो व्यचरत्क्षोणीमनग्निरनिकेतनः ॥ ४२ ॥ मनो ब्रह्मणि युंजानो यत्तत्सदसतः परम् ॥ गुणावभासे विगुण एकभक्त्याऽनुभाविते ॥ ४३ ॥ निरहंकृतिर्निर्ममश्च निर्द्वंद्वः समदृक् स्वदृक् ॥ प्रत्यक् प्रशांतधीर्धीरः प्रशांतोर्मिरिवोदधिः ॥ ४४ ॥ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ॥ परेण भक्तिभावेन लब्धात्मा मुक्तबंधनः ॥ ४५ ॥ आत्मानं सर्वभूतेषु भगवंतमवस्थितम् ॥ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ॥ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥ इति श्रीमद्भागवते महा-

इति श्रुतेः ॥ ३८ ॥ ततश्च मां परमं परमात्मानमात्मनि स्वस्मिन्नात्मना मनसा अन्वीक्षमाणोऽभयं मोक्षं प्राप्स्यसि ॥ ३९ ॥ मात्रे देवहूत्यै शमनीमुन्मूलनीम् । भयमतिशयेन तरिष्यति परमानंदं प्राप्स्यतीति चकारार्थः ॥ ४० ॥ समुदितः सम्यगुक्तः सन् तं प्रदक्षिणीकृत्य ॥ ४१ ॥ मुनीनामिदं मौनं व्रतमहिंसालक्षणम् ॥ ४२ ॥ सदसतः परं यत्तस्मिन् ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्याऽव्यभिचारिण्या भक्त्याऽनुभावितेऽपरोक्षीकृते ॥ ४३ ॥ अतो देहादिष्वहंकारादिरहितः अतएव निर्द्वंद्वः शीतोष्णाद्यनाकुलः समदृग्भेदाग्राहकः किंतु स्वदृक् स्वमेव पश्यन् प्रत्यक्प्रवणा शांता विक्षेपरहिता धीर्यस्य ॥ ४४ ॥ तदेवंविधकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह । वासुदेव इति त्रिभिः । प्रतीचो जीवस्यात्मनि लब्ध आत्मा चित्तं येन यतो मुक्तं बंधनमज्ञानं यस्य ॥ ४५ ॥ लब्धात्मतामेवाह । आत्मानमिति ॥ ४६ ॥ तदेवं तेन भागवती गतिः प्राप्ता । पाठांतरे म एव तां गतिं प्राप्त इति ॥ ४७ ॥ इति श्रीमद्भागवते महापुराणे तृती-

यस्कंधे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ पंचविंशे जनन्या तु पृष्टो बंधविमोचनम् ॥ आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १ ॥ कपिलेनार्पिता मात्रे गूढभावनियंत्रिता ॥ योगमांखक्य-
मंजूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥ उक्तानुवादपूर्वकं कापिलं योगं पृच्छति । कपिल इति त्रिभिः । तत्त्वानां संख्याता गणकः सांख्यप्रवर्तक इत्यर्थः । अतएव स्वयंजातः आत्मप्रज्ञप्तये आत्म-
तत्त्वज्ञापनाय ॥ १ ॥ पुंसां मध्ये वर्ष्मणो वृद्धस्योत्तमस्येत्यर्थः । सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा भवितृप्रधानोऽयं निर्देशः । वरिष्ठस्येत्यर्थः । यद्वा वरीयस्त्वादित्यर्थः । विश्रुतौ
कीर्तौ असव इंद्रियाणि भूर्यलं न तृप्यंति श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य यद्वा । भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति संबंधः ॥ २ ॥ स्वानां पुंसां छंदेनेच्छया आत्मा
देहो यस्य सः यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ॥३॥ यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥४॥ बिंदुसरे बिंदुसरसि

पुराणे तृतीयस्कंधे कापिलेये चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ शौनक उवाच ॥ कपिलस्तत्त्वसंख्याता भगवानात्ममायया ॥ जातः स्वयमजः
साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥ न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ॥ विश्रुतौ श्रुतदेवस्य भूरि तृप्यंति मेऽसवः ॥ २ ॥ यद्यद्विधत्ते
भगवान् स्वच्छंदात्माऽऽत्ममायया ॥ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥ सूत उवाच ॥ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ॥
प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥ मैत्रेय उवाच ॥ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ॥ तस्मिन्बिंदुसरेऽवात्सीद्भगवान्
कपिलः किल ॥ ५ ॥ तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥ देवहूतिरुवाच ॥ निर्विण्णा
नितरां भूमन्नसदिंद्रियतर्पणात् ॥ येन संभाव्यमानेन प्रपन्नांऽधं तमः प्रभो ॥ ७ ॥ तस्य त्वं तमसोंऽधस्य दुष्पारस्याद्य पारगम् ॥ सच्चक्षुर्जन्मनामंते
लब्धं मे त्वदनुग्रहात् ॥ ८ ॥ य आद्यो भगवान्पुंसामीश्वरो वै भवान् किल ॥ लोकस्य तमसांऽधस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥ अथ मे देवसंमो-
हमपाक्रष्टुं त्वमर्हसि ॥ योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥ तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ॥ जिज्ञासयाऽहं
प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ मैत्रेय उवाच ॥ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ॥ धियाऽभिनंद्या-
त्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥ श्रीभगवानुवाच ॥ योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ॥ अत्यंतोपरतिर्यत्र
दुःखस्य च सुखस्य च ॥ १३ ॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ॥ ऋषीणां श्रोतुकामानां योगं सर्वांगनैपुणम् ॥ १४ ॥ चेतः खल्वस्य

॥ ५ ॥ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् । एष मानवि ते गर्भं प्रविष्टः कैटभार्दन इत्यादिधातुर्वचः ॥ ६ ॥ असतामिंद्रियाणां तर्पणाद्विषयाभिलाषान्निर्विण्णा श्रांताऽस्मि येन संभाव्य
मानेन पूर्यमाणेन ॥ ७ ॥ पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् । त्वदनुग्रहाज्जन्मनामंते भाव्ये सति ॥ ८ ॥ तत्प्रपंचयति । स भगवान् भवांश्चक्षूरूप उदितः सूर्यो यथा ॥ ९ ॥
अपाक्रष्टुमपनेतुम् । कोऽसौ संमोहस्तमाह । एतस्मिन्देहादौ त्वयैव योजितो योऽहंममेत्यवग्रह आग्रहः द्वितीय इतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं
शरणं गता सती नमामीत्यन्वयः । कुठारं छेत्तारम् ॥ ११ ॥ अपवर्गवर्धनं मोक्षे रतिजनकम् । ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥ आध्यात्मिक आत्मनिष्ठः यत्र यस्मिन् ॥ १३ ॥ १४ ॥

तत्र सर्वांगनैपुण्यं चित्तसंशयमाधीनमिति दर्शयन्नाह । चेत इति । अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वाशब्दस्तुशब्दार्थे ॥ १५ ॥ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्त- द्दर्शयति । अहमिति त्रिभिः । मलैर्वीतं विरहितं यदा शुद्धं मनो भवति । मनःशुद्धेर्ज्ञापकमाह । अदुःखमिति ॥ १६ ॥ निरंतरं निर्भेदम् । अणिमानं सूक्ष्मम् । अखंडितमपरिच्छिन्नम् ॥ १७ ॥ हतौजसं क्षीणबलाम् ॥ १८ ॥ मनःशुद्धौ च भक्तिरेवांतरंगसाधनमित्याह । नेति ॥१९॥ अस्य सर्वस्यापि सत्संगो मूलमित्याह । प्रसंगमिति । अपावृतं निरावरणम् ॥२०॥ साधूनां लक्षणमाह । तितिक्षव इति चतुर्भिः । साधवः शास्त्रानुवर्तिनः साधु सुशीलं तदेव भूषणं येषाम् ॥ २१ ॥ २२ ॥ एतानुक्तलक्षणान्भक्तान् तापा आध्यात्मिकादयो च तपंति न व्यथयंति कुतः मद्गत चेतो येषां तान् ॥ २३ ॥ ये तापैर्नाभिभूयंते ते साधव इत्यर्थः ॥ २४ ॥ सत्संगस्य भक्त्यंगतामुपपादयति । सतामिति । वीर्यस्य सम्यग्विद्वेदनं यासु ता वीर्यसंविदः हृत्कर्णयो रसायनाः सुखदाः तासां

बंधाय मुक्तये चात्मनो मतम् ॥ गुणेषु सक्तं बंधाय रतं वा पुंसि मुक्तये ॥ १५ ॥ अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ॥ वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥ तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ॥ निरंतरं स्वयंज्योतिरणिमा नमखंडितम् ॥ १७ ॥ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ॥ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि ॥ सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये ॥ १९ ॥ प्रसंगमजरं पाशमात्मनः कवयो विदुः ॥ स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ॥ अजातशत्रवः शांताः साधवः साधुभूषणाः ॥ २१ ॥ मय्यनन्येन भावेन भक्तिं कुर्वंति ये दृढाम् ॥ मत्कृते त्यक्तकर्माणस्त्यक्त- स्वजनबांधवाः ॥ २२ ॥ मदाश्रयाः कथा मृष्टाः शृण्वंति कथयंति च ॥ तपंति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥ त एते साधवः साध्वि सर्वसंगविवर्जिताः ॥ संगस्तेष्वथ ते प्रार्थ्यः संगदोषहरा हि ते ॥ २४ ॥ सतां प्रसंगान्मम वीर्यसंविदो भवंति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणा- दाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥ भक्त्या पुमान् जातविराग ऐंद्रियाद्दृष्टश्रुतान्मद्रचनानुचिंतया ॥ चित्तस्य यत्तो ग्रहणे योग- युक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन ॥ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मान- मिहावरुंधे ॥ २७ ॥ देवहूतिरुवाच ॥ काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ॥ यया पदं ते निर्वाणमंजसाऽन्वश्नवा अहम् ॥ २८ ॥ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः ॥ कीदृशः कति चांगानि यतस्तत्त्वावबोधनम् ॥ २९ ॥ तदेतन्मे विजानीहि यथाऽहं मंदधीर्हरे ॥ सुखं

जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ २५ ॥ ततः किमत आह । भक्त्येति । मम रचना या सृष्ट्या- दिलीला तस्या अनुचिंतया या भक्तिस्तया ऐंद्रियात्सुखाज्जातविरागः सन् दृष्टश्रुतादैहिकामुष्मिकात् ततो यत्त उद्युक्तः संश्चित्तस्य ग्रहणे यतिष्यते ऋजुभिर्भक्तिप्रधानत्वादनायासैः ॥ २६ ॥ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुंधे प्राप्नोति ॥ २७ ॥ काचिदिति । कास्विदित्यर्थः । उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या । निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनंतरमेव सर्वात्मना प्राप्स्यामि । अंजसा त्विति पाठे अहं त्विति संबंधः ॥ २८ ॥ भगवद्बाणो यो भगवंतं लक्षीकरोतीत्यर्थः । यतो यस्माद्योगात् ॥ २९ ॥

विजानीहि विशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥ इत्थं मातुरर्थं प्रयोजनं विदित्वा । जातस्नेहत्वे हेतुः । यत्र यस्यां तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायंतेऽनुक्रम्यंते यस्मिन् । किं तत् । यत्सां-
ख्यं प्रवदंति तत्प्रोवाच भक्तिवितानं च योगं च ॥ ३१ ॥ काचित्त्वय्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति गुणा विषया लिंग्यंते ज्ञायंते यैस्तेषां देवानां द्योतनात्मकानामिंद्रियाणां तद-
धिष्ठातॄणां वा सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरोयसीत्युत्तरेणान्वयः । कथंभूता । अनिमित्ता निष्कामा स्वाभाविकयत्नमिद्वा । तेषामेवंविधवृत्तौ हेतुमाह । गुरोरुच्चार-
णमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषाम् । अतएवैकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥ मुक्तिश्च प्रासंगिकी भवत्येवेत्याह । या भक्तिः कोशं
लिंगशरीरं जरयति क्षपयति । स्वप्रयत्नं विनैव सिद्धौ दृष्टांतः । निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयतीति ॥ ३३ ॥ भक्तेर्गरिष्ठत्वमेवोपपादयति । नैकात्मतामिति पंचभिः । एकात्मतां
सायुज्यमोक्षं मदर्थमीहा क्रिया येषाम् । प्रसज्ज्यासक्तिं कृत्वा पौरुषाणि वीर्याणि ॥ ३४ ॥ प्रसन्नानि वक्त्राण्यरुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सह नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति

बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥ मैत्रेय उवाच ॥ विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः ॥ तत्त्वाम्नायं यत्प्रव-
दंति सांख्यं प्रोवाच वै भक्तिवितानयोगम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ देवानां गुणलिंगानामानुश्रविककर्मणाम् ॥ सत्त्व एवैकमनसो वृत्तिः स्वा-
भाविकी तु या ॥ ३२ ॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ॥ जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥ नैकात्मतां मे स्पृहयंति
केचिन्मत्पादसेवाऽभिरता मदीहाः ॥ येऽन्योन्यतो भागवताः प्रसज्य सभाजयंते मम पौरुषाणि ॥ ३४ ॥ पश्यंति ते मे रुचिराण्यंब संतः प्रसन्नवक्त्रा-
रुणलोचनानि ॥ रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदंति ॥ ३५ ॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥ हृतात्मनो
हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते ॥ ३६ ॥ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टांगमनुप्रवृत्तम् ॥ श्रियं भागवतीं वाऽस्पृहयंति
भद्रां परस्य मे तेऽश्नुवते तु लोके ॥ ३७ ॥ न कर्हिचिन्मत्पराः शांतरूपे नंक्ष्यंति नो मे निमिषो लेढि हेतिः ॥ येषामहं प्रिय आत्मा सुतश्च सखा
गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥ इमं लोकं तथैवामुमात्मानमुभयायिनम् ॥ आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥ विसृज्य सर्वान-

भावः ॥ ३५ ॥ आत्मानंदस्त्ववश्यं भावीत्याह । तैरिति । दर्शनीया मनोहरा अवयवा मुखनेत्रादयो येषु तैः हृत आत्मा चित्तं येषाम् । हृता आकृष्टाः प्राणाश्चेंद्रियाणि येषां तान्भजतोऽनिच्छत
इच्छाहीनानप्यण्वीं गतिं मुक्तिं प्रयुंक्ते प्रापयति । कैः साधनैर्हृतात्मनः उदारैर्विलासादिभिः तत्र विलासो लीला वामं मनोहरं सूक्तं मधुरभाषणम् ॥ ३६ ॥ विभूत्यादिकं च तत्राधिकमित्याह । अथो
अविद्यानिवृत्त्यनंतरं विभूतिं सत्यलोकादिगतां भोगसंपत्तिमणिमाद्यष्टांगमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वतएव प्राप्तमपि भागवतीं च श्रियं वैकुंठस्थां संपत्तिमस्पृहयंति । ते यद्यपि न स्पृहयंतीत्यर्थः ।
तथापि लोके वैकुंठे अश्नुवते तु प्राप्नुवंत्येव ॥ ३७ ॥ नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह । हे शांतरूपे ! यद्वा शांतं शुद्धसत्त्वं तद्रूपे वैकुंठे मत्पराः
कदाचिदपि न नंक्ष्यंति भोग्यहीना न भवंति । अनिमिषो मे हेतिर्मदीयं कालचक्रं च नो लेढि तान्न ग्रसति । तत्र हेतुर्येषामिति । सुत इव स्नेहविषयः । सखेव विश्वासास्पदम् । गुरुरिवोपदेष्टा ।
सुहृदिव हितकारी । इष्टं दैवमिव पूज्यः । एवं सर्वभावेन मां ये भजंति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ॥ ३८ ॥ एवंभूतां तु मुक्तिमेकांतभक्तेभ्यो ददामीत्याह । इममिति द्वाभ्याम् । उभयायिनं

लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वादयः । रायः धनानि ॥ ३९ ॥ अन्यांश्च परिग्रहान् मृत्योः संसारादतिपारयेऽतितारयामि ॥ ४० ॥ अभक्तानां तु कथंचिदपि न मोक्ष इत्याह । नेति । मद्भगवतोऽन्यत्र भगवतो मत्तो विना सर्वभूतानामात्मनः भगवदादिविशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं हितकारित्वं चोक्तम् ॥ ४१ ॥ ऐश्वर्यं स्फुटयति । मद्भयादिति । श्रुतिश्च भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेंद्रश्च । मृत्युर्धावति पंचम इति ॥ ४२ ॥ मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति ॥ ४३ ॥ उपसंहरति । एतावानिति । मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥ ४४ ॥ इति श्री० तृती० टीकायां पं० ॥ २५ ॥ षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ॥ सांख्येन सर्वभावानां जन्म लक्षणभेदतः ॥ १ ॥ धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् ॥ मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २ ॥ तत्त्वाम्नायं यत्प्रवदंति सांख्यमित्यत्र सांख्यं भक्तियोगश्चेति त्रयमुपक्षिप्तम् । तत्र भक्तिमुक्त्वेदानीं सांख्यमाह । अथेति ॥ १ ॥ ननु मुक्तिरात्मज्ञानादेव नतु तत्त्वलक्षणज्ञानात् । तमेव विदित्वाऽतिमृत्युमेति इति श्रुतेरत आह । ज्ञानमिति । आत्म-

न्यांश्च मामेवं विश्वतोमुखम् ॥ भजंत्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ॥ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ॥ वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ॥ क्षेमाय पादमूलं मे प्रविशंत्यकुतोभयम् ॥ ४३ ॥ एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः ॥ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने पंचविंशतितमोऽध्यायः ॥ २५ ॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ॥ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥ ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णये ते तत्ते हृदयग्रंथिभेदनम् ॥ २ ॥ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ॥ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ॥ यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ॥ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ॥ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥ तदस्य संसृतिर्बंधः पारतंत्र्यं

दर्शनरूपं ज्ञानमतएव हृदयग्रंथिभेदनमहंकारनिवर्तकं निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णयामि । तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ तत्र पुरुषं लक्षयति । अनादिरिति । आत्मैव पुरुषः कोऽसावात्मा प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य । क्षणिकपक्षं व्यावर्तयति । अनादिरिति । संसारित्वपक्षं व्यावर्तयति । प्रकृतेः परः अन्योऽसंगः । ज्ञानादिगुणत्वं वारयति निर्गुणः मीमांसकाद्यभिमतज्ञानविषयत्वं वारयति । स्वयंज्योतिः अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम् । स्वयंज्योतिष्ट्वे हेतुः । विश्वं येन समन्वितं प्रकाशत इति शेषः । एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥ ३ ॥ अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा तत्रावरणशक्त्या सैव जीवोपाधिरविद्या विक्षेपशक्त्या सैव माया पारमेश्वरी । पुरुषश्च जीवेश्वररूपेण द्विविधः तत्र यः प्रकृत्यविवेकेन संसरति स जीवः यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरः । तत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह । स एष इति पंचभिः । सूक्ष्मामव्यक्तां दैवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥ तस्या लीलामाह । गुणैरिति । ज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया । तथा च श्रुतिः । अजामेकां लोहित-

शुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः इति । मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥ पराभिध्यानं प्रकृत्यध्यासस्तेन प्रकृतेर्गुणैः
कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥ तदिति कर्तृत्वमाननमेव अस्य पुरुषस्य साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बंधः ईशस्यापरतंत्रस्यैव कर्मबंधकृतं भोगे पारतंत्र्यं निर्वृतात्मनः
सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥ ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदंगीक्रियतां नेत्याह । कार्यं शरीरं कारणमिंद्रियं
कर्ता देवतावर्गः तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः । कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेव कर्तृत्वादिकमित्यर्थः । भोक्तृत्वे तु पुरुषं कारणं विदुरित्यस्यायं
भावः । यद्यप्यहंकारगतमेव कर्तृत्वादिकं भोक्तृत्वं च तथाऽपि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥ तदेवं संसारिणं पुरुषं तद्धेतुं
प्रकृतिं च ज्ञात्वेदानीं जगत्कारणमीश्वरं तत्प्रकृतिं च पृच्छति । प्रकृतेरिति । अस्य विश्वस्य सदसच्च स्थूलं सूक्ष्मं च कार्यं यदात्मकं तयोः प्रकृतिपुरुषयोः ॥ ९ ॥ तत्र प्रकृतिं लक्षयति ।

च तत्कृतम् ॥ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ॥ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥ देवहूतिरुवाच ॥ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ॥ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥ श्रीभगवानुवाच ॥ यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥ पंचभिः पंचभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥ महाभूतानि पंचैव भूरापोऽग्निर्मरुन्नभः ॥ तन्मात्राणि च तावंति गंधादीनि मतानि मे ॥ १२ ॥ इंद्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ॥ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥ मनो बुद्धिरहंकारश्चित्तमित्यंतरात्मकम् ॥ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥ एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ॥ सन्निवेशो मया प्रोक्तो यः कालः पंचविंशकः ॥ १५ ॥ प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ॥ अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ॥ चेष्टा यतः स भगवान्काल इत्युपलक्षितः ॥ १७ ॥ अंतः पुरुषरूपेण कालरूपेण यो बहिः ॥ समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यां स्वस्यां

यत्प्रधानं तदेव प्रकृतिं प्राहुः । किं तत्प्रधानं स्वतोऽविशेषम् । विशेषवद्विशेषाणामाश्रयः तर्हि किं ब्रह्म न । त्रिगुणम् । किं महत्तत्त्वादि न अव्यक्तमकार्यम् । किं कालादि न सदसदात्मकं
कार्यकारणरूपम् । किं जीवः प्रकृतिः न नित्यम् ॥ १० ॥ अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति । पंचभिरित्यादि । संख्याभेदेनैतच्चतुर्विंशतिकं एतानि चतुर्विंशतिर्यस्मिन् गणे तं
गणं प्राधानिकं प्रधानकार्यात्मकं ब्रह्म विदुः ॥ ११ ॥ एतद्विवृणोति । महाभूतानीति त्रिभिः । तावंति पंचैव ॥ १२ ॥ १३ ॥ अंतरात्मकमंतःकरणम् । लक्षणरूपया व्यवच्छेदिकया
॥ १४ ॥ यावान्मया प्रोक्त एतावानेव संख्यातो गणितस्तत्त्वज्ञैः । काले तु मतद्वयमाह । यः कालः स पंचविंशकः अल्पार्थे कप्रत्ययः । प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥ एके तु पौरुषं
पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः । तमेव कालं द्वेधा लक्षयति यतो भयं भवति । कस्य प्रकृतिमीयुषः प्राप्तस्य अत एव देहेऽहंकारेण विमूढस्य कर्तुर्जीवस्य अनेन संहारकत्वेन लक्षितः
॥ १६ ॥ सृष्टिहेतुत्वेन लक्षयति । प्रकृतेरिति ॥ १७ ॥ कोऽसौ भगवांस्तमाह । अंतरिति अंतः सर्वप्राणिनां यः पुरुषरूपेण नियंतृत्वेन समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते

लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वादयः। रायः धनानि ॥ ३९ ॥ अन्यांश्च परिग्रहान् मृत्योः संसारादतिपारये॒ऽतितारयामि ॥ ४० ॥ अभक्तानां तु कथंचिदपि न मोक्ष इत्याह। नेति। मद्भगवतोऽन्यत्र भगवतो मत्तो विना सर्वभूतानामात्मनः भगवदादिविशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं हितकारित्वं चोक्तम् ॥ ४१ ॥ ऐश्वर्यं स्फुटयति। मद्भयादिति। श्रुतिश्च भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेंद्रश्च। मृत्युर्धावति पंचम इति ॥ ४२ ॥ मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति। ज्ञानेति ॥ ४३ ॥ उपसंहरति। एतावानिति। मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥ ४४ ॥ इति श्री० तृती० टीकायां पं० ॥ २५ ॥ षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ॥ सांख्येन सर्वभावानां जन्म लक्षणभेदतः ॥ १ ॥ धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् ॥ मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २ ॥ तत्त्वाम्नायं यत्प्रवदंति सांख्यमित्यत्र सांख्यं भक्तिर्योगश्चेति त्रयमुपक्षिप्तम्। तत्र भक्तिमुक्त्वेदानीं सांख्यमाह। अथेति ॥ १ ॥ ननु मुक्तिरात्मज्ञानादेव नतु तत्त्वलक्षणज्ञानात्। तमेव विदित्वाऽतिमृत्युमेति इति श्रुतेरत आह। ज्ञानमिति। आत्म-

न्यांश्च मामेवं विश्वतोमुखम् ॥ भजंत्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ॥ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ॥ वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ॥ क्षेमाय पादमूलं मे प्रविशंत्यकुतोभयम् ॥ ४३ ॥ एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः ॥ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने पंचविंशतितमोऽध्यायः ॥ २५ ॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ॥ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥ ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णये तत्ते हृदयग्रंथिभेदनम् ॥ २ ॥ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ॥ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ॥ यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ॥ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ॥ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥ तदस्य संसृतिर्बंधः पारतंत्र्यं

दर्शनरूपं ज्ञानमतएव हृदयग्रंथिभेदनमहंकारनिवर्तकं निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णयामि। तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ तत्र पुरुषं लक्षयति। अनादिरिति। आत्मैव पुरुषः कोऽसावात्मा प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य। क्षणिकपक्षं व्यावर्तयति। अनादिरिति। संसारित्वपक्षं व्यावर्तयति। प्रकृतेः परः अन्योऽसंगः। ज्ञानादिगुणत्वं वारयति निर्गुणः मीमांसकाद्यभिमतज्ञानविषयत्वं वारयति। स्वयंज्योतिः अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम्। स्वयंज्योतिष्ट्वे हेतुः। विश्वं येन समन्वितं प्रकाशत इति शेषः। एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥ ३ ॥ अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा तत्रावरणशक्त्या सैव जीवोपाधिरविद्या विक्षेपशक्त्या सैव माया पारमेश्वरी। पुरुषश्च जीवेश्वररूपेण द्विविधः तत्र यः प्रकृत्यविवेकेन संसरति स जीवः यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरः। तत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह। स एष इति पंचभिः। सूक्ष्मामव्यक्तां दैवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥ तस्या लीलामाह। गुणैरिति। ज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया। तथा च श्रुतिः। अजामेकां लोहित-

शुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः इति । मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥ पराभिध्यानं प्रकृत्यध्यासस्तेन प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥ तदिति कर्तृत्वमाननमेव अस्य पुरुषस्य साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बंधः ईशस्यापरतंत्रस्यैव कर्मबंधकृतं भोगे पारतंत्र्यं निर्वृतात्मनः सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥ ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदंगीक्रियतां नेत्याह । कार्यं शरीरं कारणमिंद्रियं कर्ता देवतावर्गः तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः । कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेव कर्तृत्वादिकमित्यर्थः । भोक्तृत्वे तु पुरुषं कारणं विदुरित्यस्यायं भावः । यद्यप्यहंकारगतमेव कर्तृत्वादिकं भोक्तृत्वं च तथाऽपि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥ तदेवं संसारिणं पुरुषं तद्धेतुं प्रकृतिं च ज्ञात्वेदानीं जगत्कारणमीश्वरं तत्प्रकृतिं च पृच्छति । प्रकृतेरिति । अस्य विश्वस्य सदसच्च स्थूलं सूक्ष्मं च कार्यं यदात्मकं तयोः प्रकृतिपुरुषयोः ॥ ९ ॥ तत्र प्रकृतिं लक्षयति ।

च तत्कृतम् ॥ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ॥ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥ देवहूतिरुवाच ॥ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ॥ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥ श्रीभगवानुवाच ॥ यत्त-त्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥ पंचभिः पंचभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंश-तिकं गणं प्राधानिकं विदुः ॥ ११ ॥ महाभूतानि पंचैव भूरापोऽग्निर्मरुन्नभः ॥ तन्मात्राणि च तावंति गंधादीनि मतानि मे ॥ १२ ॥ इंद्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ॥ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥ मनो बुद्धिरहंकारश्चित्तमित्यंतरात्मकम् ॥ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥ एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ॥ सन्निवेशो मया प्रोक्तो यः कालः पंचविंशकः ॥ १५ ॥ प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ॥ अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ॥ चेष्टा यतः स भगवान्काल इत्युपलक्षितः ॥ १७ ॥ अंतः पुरुषरूपेण कालरूपेण यो बहिः ॥ समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यां स्वस्यां

यत्प्रधानं तदेव प्रकृतिं प्राहुः । किं तत्प्रधानं स्वतोऽविशेषम् । विशेषवद्विशेषाणामाश्रयः तर्हि किं ब्रह्म न । त्रिगुणम् । किं महत्तत्त्वादि न अव्यक्तमकार्यम् । किं कालादि न सदसदात्मकं कार्यकारणरूपम् । किं जीवः प्रकृतिः न नित्यम् ॥ १० ॥ अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति । पंचभिरित्यादि । संख्याभेदेनैतच्चतुर्विंशतिकं एतानि चतुर्विंशतिर्यस्मिन् गणे तं गणं प्राधानिकं प्रधानकार्यात्मकं ब्रह्म विदुः ॥ ११ ॥ एतद्विवृणोति । महाभूतानीति त्रिभिः । तावंति पंचैव ॥ १२ ॥ १३ ॥ अंतरात्मकमंतःकरणम् । लक्षणरूपया व्यवच्छेदिकया ॥ १४ ॥ यावान्मया प्रोक्त एतावानेव संख्यातो गणितस्तत्त्वज्ञैः । काले तु मतद्वयमाह । यः कालः स पंचविंशकः अल्पार्थे कप्रत्ययः । प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥ एके तु पौरुषं पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः । तमेव कालं द्वेधा लक्षयति यतो भयं भवति । कस्य प्रकृतिमीयुषः प्राप्तस्य अत एव देहेऽहंकारेण विमूढस्य कर्तुर्जीवस्य अनेन संहारकत्वेन लक्षितः ॥ १६ ॥ सृष्टिहेतुत्वेन लक्षयति । प्रकृतेरिति ॥ १७ ॥ कोऽसौ भगवांस्तमाह । अंतरिति अंतः सर्वप्राणिनां यः पुरुषरूपेण नियंतृत्वेन समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते

बहिश्च कालरूपेण । एष भगवान् । यद्वा यः पुरुष इति प्रसिद्धः कालः स पंचविंशः एके तु पुरुषस्य प्रभावं कालमाहुः । प्रभावस्यैव लक्षणम् । यत इति । पुरुषस्यैव कालत्वे हेतुः प्रकृतेरिति । उभयथा विवक्षायां हेतुः अन्तरिति शेषं समानम् । तदेवं प्रकृतेश्चतुर्विंशति भेदाः जीवेश्वरयोश्चैक्यविवक्षातः पंचविंशतिस्तत्त्वानि भवंति । तयोर्भेदविवक्षया च षड्विंशतिर्भवंति ॥ १८ ॥ इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह । दैवादित्यादिना । एतान्यसंहत्येत्यतः प्राक्तनेन ग्रंथेन । तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह । चतुर्भिः । दैवाज्जीवादृष्टात्क्षुभिता धर्मा गुणा यस्याः, योनावभिव्यक्तिस्थाने प्रकृतौ वीर्यं चिच्छक्तिम् । सा प्रकृतिर्महत्तत्त्वमसूत । महतः स्वरूपमाह । हिरण्मयं प्रकाशबहुलम् ॥ १९ ॥ विश्वमहंकारादिप्रपंचम् । आत्मगतं स्वस्मिन्सूक्ष्मरूपेण स्थितं विलापयामासेत्यर्थः ॥ २० ॥ प्रसंगाच्चतुर्व्यूहोपासनामाह । यत्तदिति । सर्वागमप्रसिद्धत्वमाह । स्वच्छं विशदम् । शांतं रागादिरहितम् । भगवतः पदमुपलब्धिस्थानम् । अतएव वासुदेवाख्यं यदाहुः । अयमर्थः । अधिभूतरूपेण तस्यैव महानिति संज्ञा अध्यात्मरूपेण चित्तमिति उपास्यरूपेण वासुदेव इति अधिष्ठाता तु तस्य क्षेत्रज्ञः एवमहंकारे संकर्षण उपास्यः रुद्रोऽधिष्ठाता मनस्यनिरुद्ध उपास्यः चंद्रोऽधिष्ठाता बुद्धौ प्रद्युम्न उपास्यः ब्रह्माऽधिष्ठातेति ज्ञातव्यम् ॥ २१ ॥ स्वच्छत्वं भगवद्बिंबग्राहित्वम् । अविकारित्वं लयविक्षेपराहि

**योनौ परः पुमान् ॥ आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥ विश्वमात्मगतं व्यंजन्कूटस्थो जगदंकुरः ॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥ यत्तत्सत्त्वगुणं स्वच्छं शांतं भगवतः पदम् ॥ यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥ स्वच्छत्वमविकारित्वं शांतत्वमिति चेतसः ॥ वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥ २३ ॥ वैकारिकस्तैजसश्च तामसश्च यतो भवः ॥ मनसश्चेंद्रियाणां च भूतानां महतामपि ॥ २४ ॥ सहस्रशिरसं साक्षाद्यमनंतं प्रचक्षते ॥ संकर्षणाख्यं पुरुषं भूतेंद्रियमनोमयम् ॥ २५ ॥ कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ॥ शांतघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २६ ॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ॥ यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः ॥ २७ ॥ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ॥ शारदेंदीवरश्यामं संराध्य योगिभिः शनैः ॥ २८ ॥ तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिंद्रियाणामनुग्रहः ॥ २९ ॥ संशयोऽथ**

त्यम् । अपां प्रकृतिः फेनतरंगादिरहिताऽवस्था परा भूसंसर्गात्प्राक्तनी सा यथा मधुरा स्वच्छा शांता च तद्वदित्यर्थः ॥ २२ ॥ अहंकारस्योत्पत्तिपूर्वकं लक्षणमाह । महत्तत्त्वादिति चतुर्भिः । क्रियासु शक्तिर्यस्य स क्रियाशक्तिः ॥ २३ ॥ त्रैविध्यमाह । वैकारिक इति तस्य कार्यमाह । यतो यस्मान्मनआदीनां भव उत्पत्तिः ॥ २४ ॥ तस्मिन्नुपास्यव्यूहमाह । सहस्रशिरसमिति ॥२५॥ लक्षणमाह । कर्तृत्वमिति । कर्तृत्वं देवतादिरूपेण करणत्वमिंद्रियरूपेण कार्यत्वं भूतरूपेण शांतत्वादिकं तु तत्तत्कारणगुणत्रयरूपेण ॥ २६ ॥ मनस उत्पत्तिपूर्वकं लक्षणमाह । वैकारिकादिति द्वाभ्याम् । संकल्पश्चिंतनम् । विकल्पो विशेषचिंतनम् । यस्य मनसः संकल्पविकल्पाभ्यां कामसंभवो वर्तत इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता नतु प्रद्युम्नव्यूहोत्पत्तिः तस्य संकल्पादिकार्यत्वाभावात् उपास्यव्यूहस्य चानिरुद्धस्योक्तेः ॥ २७ ॥ शारदं शरत्कालीनमिंदीवरं नीलोत्पलं तदिव श्यामम् । यच्छनैः संराध्यं वशीकर्तुं योग्यम् । दुर्ग्रहत्वात् ॥ २८ ॥ बुद्धेरुत्पत्तिपूर्वकं लक्षणमाह । तैजसादिति द्वाभ्याम् । हे सति ! द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इन्द्रियाणामनुग्रह इति सविकल्पज्ञाने हृषीकाणामधीश्वरमिति यदुक्तं तत्तु निर्विकल्पज्ञाने

॥ २९ ॥ द्रव्यस्फुरणस्यैव प्रपंचः संशयादिः विपर्यासो मिथ्याज्ञानम् । निश्चयः प्रमाणज्ञानम् । स्वापो निद्रा प्रमाणविपर्ययविकल्पनिद्रास्मृतयः इति पातंजलोक्तेः ॥ ३० ॥ इंद्रियाणामुत्पत्तिमाह । तैजसानि तैजसाहंकाराज्जातानि ज्ञानेन्द्रियाणां वैकारिकत्वशंकानिवृत्त्यर्थमेवकारः । द्विविधान्यपींद्रियाणि तैजसान्येवेत्यन्वयः । तत्र हेतुः प्राणस्येति । हि यस्मात्प्राणस्य क्रियाशक्तिर्बुद्धेश्च विज्ञानशक्तिताऽतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामिंद्रियाणां तैजसत्वं तथा बुद्धेस्तैजसत्वात्तदीयज्ञानशक्तिमतामपींद्रियाणां तैजसत्वमित्यर्थः ॥ ३१ ॥ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तल्लक्षणं चाह । तामसादिति पंचदशभिः । श्रोत्रं तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनंतरं तत्संबंधमात्रं कथ्यते नतूत्पत्तिः प्रागेवोत्पन्नत्वात् शब्दं गच्छति प्राप्नोतीति शब्दगम् ॥ ३२ ॥ शब्दस्य लक्षणमाह । अर्थाश्रयत्वमर्थवाचकत्वम् । द्रष्टृलिंगत्वं कुड्यांतरितस्य वक्तुर्ज्ञापकत्वम् । तदुक्तम् । लिंगं यद्द्रष्टृदृश्ययोः इति । नभसस्तन्मात्रत्वं सूक्ष्मत्वं शब्दस्य लक्षणमित्यन्वयः ॥ ३३ ॥ नभसो लक्षणमाह । भूतानामिति । छिद्रदातृत्वमवकाशदातृत्वम् । बहिरंतर्व्यवहारास्पदत्वम् । आत्मा मनः प्राणादीनां धिष्ण्यत्वमाश्रयत्वं नाड्यादि-

विपर्यासो निश्चयः स्मृतिरेव च ॥ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३० ॥ तैजसानींद्रियाण्येव क्रियाज्ञानविभागशः ॥ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ॥ शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ ३२ ॥ अर्थाश्रयत्वं शब्दस्य द्रष्टृलिंगत्वमेव च ॥ तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३३ ॥ भूतानां छिद्रदातृत्वं बहिरंतरमेव च ॥ प्राणेंद्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३४ ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः ॥ स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च संग्रहः ॥ ३५ ॥ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ॥ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥ सर्वेंद्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥ वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ॥ समुत्थितं ततस्तेजश्चक्षूरूपोपलंभनम् ॥ ३८ ॥ द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ॥ तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ३९ ॥ द्योतनं पचनं पानमदनं हिममर्दनम् ॥ तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४० ॥ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् ॥ रसमात्रमभूत्तस्मादंभो जिह्वा रसग्रहः ॥ ४१ ॥ कषायो मधुरस्तिक्तः कट्वम्ल

च्छिद्ररूपेण वृत्तिः कार्यमेव लक्षणं वृत्तिलक्षणम् । एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः द्वितीयेन तन्मात्रलक्षणम् । तृतीयेन महाभूतलक्षणमित्यनुसंधेयम् ॥ ३४ ॥ का सा त्वक् स्पर्शस्य संग्रहः सम्यग्ग्रहणं यया पुंस्त्वं नियतलिंगत्वात् । यद्वा स्पर्शस्य संग्रहस्ततो भवतीति शेषः । शब्दतन्मात्रादित्यादि तन्मात्राणामुत्तरोत्तरान्वयार्थमुक्तम् ॥ ३५ ॥ स्पर्शलक्षणमाह । मृदुत्वमिति । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वं च ॥३६॥ चालनं वृक्षशाखादेः व्यूहनं मेलनं तृणादेः प्राप्तिः संयोगो द्रव्यस्य गंधवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोतं प्रति नेतृत्वम् । सर्वेंद्रियाणामात्मात्वमुपोद्बलकत्वम् । कर्मणा कार्येणाभिलक्षणम् । भावे ल्युट् । कर्मैवाभिलक्षणमिति विग्रहे तु करणे ॥ ३७ ॥ ३८ ॥ द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वम् । गुणता द्रव्योपसर्जनतया प्रतीतः शब्दस्य तु स्वातंत्र्येणैव प्रतीतिः अप्रत्यक्षद्रव्यस्य स्पर्शादेरपि स्वातंत्र्येणैव प्रतीतिः रूपस्य तु नैवमिति तस्यायं विशेष उक्तः व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तत्परिणामतया प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥ द्योतनं प्रकाशनम् । पचनं तंडुलादेः

क्षुत्तृडशना पिपासा स तद्द्वारेण पानमदनं च ॥ ४० ॥ जिह्वा रसनेंद्रियम् । रसो गृह्यतेऽनयेति रसग्रहः । यद्वा रसग्रहस्ततो भवतीति शेषः ॥ ४१ ॥ कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गिद्रव्याणाम् । य एको मधुर एव सन्नेवमनेकधा भिद्यते स रस इत्यर्थः ॥ ४२ ॥ क्लेदनमार्द्रीकरणम् । पिंडनं मृदादेः पिंडीकरणम् । तृप्तिस्तृप्तिदातृत्वम् । प्राणनं जीवनम् । आपोमयः प्राण इति स्मृतेः । आप्यायनं तृड्वैक्लव्यनिवर्तनम् । उंदनं मृदूकरणं । ओदनमिति पाठेऽपि स एवार्थः । भूयस्त्वं कूपादावुद्धृतस्यापि पुनःपुनरुद्भवः ॥ ४३ ॥ गंधगो गंधं प्राप्नोति ॥ ४४ ॥ करंभो मिश्रगंधः यथा व्यंजनादीनां हिंग्वादिसंस्कारेण पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः शांतः शतपत्रादेः उग्रो लशुनादेः अम्लस्तिंतिण्यादेः संसर्गिणां द्रव्यावयवानां वैषम्याद्य एवं विभिद्यते स गंधः इत्यर्थः ॥ ४५ ॥ ब्रह्मणो भावनं प्रतिमादिरूपेण साकारतापादनम् । स्थानं जलादिविलक्षणतयाऽऽश्रयांतरनैरपेक्ष्येण स्थितः धारणं जलाद्याधारत्वम् । सतामाकाशादीनां विशेषणमवच्छेदकत्वम् । सर्वेषां सत्त्वानां प्राणिनां तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम् ॥ ४६ ॥ श्रोतादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदे-

इति नैकधा ॥ भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥ क्लेदनं पिंडनं तृप्तिः प्राणनाप्यायनोंदनम् ॥ तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमाः ॥ ४३ ॥ रसमात्राद्विकुर्वाणादंभसो दैवचोदितात् ॥ गंधमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गंधगः ॥ ४४ ॥ करंभपूतिसौरभ्यशांतोग्राम्लादिभिः पृथक् ॥ द्रव्यावयववैषम्याद्गंध एको विभिद्यते ॥ ४५ ॥ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥ नभो गुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ॥ वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ४७ ॥ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ॥ अंभोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥ भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ॥ ४८ ॥ परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात् ॥ अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥ ४९ ॥ एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५० ॥ ततस्तेनानुविद्धेभ्यो युक्तेभ्योंऽडमचेतनम् ॥ उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥ एतदंडं विशेषाख्यं क्रमवृद्धेर्दशोत्तरैः ॥ तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः ॥ यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५२ ॥ हिरण्मयादंडकोशादुत्थाय सलिलेशयात् ॥ तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥ निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ॥ वाण्या वह्निरथो नासे प्राणोऽतो घ्राण एतयोः ॥ ५४ ॥ घ्राणाद्वायुरभिद्येतामक्षिणी

वेत्याह । पंचभिः श्लोकार्धैः । नभसो गुणविशेषः शब्दो यस्यार्थो विषयः ॥ ४७ ॥ ४८ ॥ गुणविशेषशब्दव्यावर्त्यं दर्शयति । परस्येति । परस्य कारणस्य धर्मः शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयाद्दृश्यते । अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि शब्दादिर्भूमावेवोपलभ्यते चतुर्णां तत्रान्वयात् जलादिषु यथाऽन्वयमेव न सर्वः आकाशे त्वन्यान्वयाभावादेक एव ॥ ४९ ॥ एवं कारणोत्पत्तिमुक्त्वा कार्योत्पत्तिमाह । सार्धैस्त्रिभिः । एतान्यसंहत्यामिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् सप्तेति च प्राधान्याभिप्रायेणोक्तम् । प्रवेशस्तु सर्वेष्वपि विवक्षित एव ॥ ५० ॥ अनुविद्धेभ्यः क्षुभितेभ्यः यस्मादंडादसौ विराट् पुरुष उदतिष्ठत् ॥ ५१ ॥ भगवतो रूपमिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥ तस्मिन्नध्यात्मादिविभागमाह । हिरण्मयादिति नवभिः । उत्थायौदासीन्यं विहाय तमाविश्याधिष्ठाय महांश्चासौ देवश्च खं छिद्रम् ॥ ५३ ॥ वाण्या सह वह्निरभवत् प्राविशत् । नासे निरभिद्येताम् । प्राणोतः प्राणेन ऊतः

स्यूतः सन् घ्राण एतयोर्नासिकयोरभवदित्यनुषंगः ॥ ५४ ॥ घ्राणादनंतरं वायुश्च प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यम् । न्यभिद्येतामन्वभिद्येतामिति पाठद्वयेऽप्येक एवार्थः । ततो दिशः प्राविशन् ॥ ५५ ॥ आदिशब्देन केशाः ॥ ५६ ॥ ५७ ॥ स्वराडिंद्रः हरिर्विष्णुः ॥ ५८ ॥ आभृतं जातम् ॥ ५९ ॥ ६० ॥ बुद्ध्यादिषु हृदयमेवाधिष्ठानम् । गिरांपतिर्ब्रह्मा चैत्यः क्षेत्रज्ञः ॥ ६१ ॥ अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञः विवेक्तुं सर्वेषां पुनः प्रवेशमाह । एत इति नवभिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ विराट्देहस्य व्यष्टिदेहं दृष्टां-

चक्षुरेतयोः ॥ तस्मात्सूर्यो न्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥ निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः ॥ ५६ ॥ रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ॥ गुदादपानोऽपानाच्च मृत्युर्लोकभयंकरः ॥ ५७ ॥ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ॥ पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥ नाड्योऽस्य निरभिद्यंत ताभ्यो लोहितमाभृतम् ॥ नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥ क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ॥ अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥ मनसश्चंद्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ॥ अहंकारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६१ ॥ एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ॥ पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् ॥ घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ ६३ ॥ अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट् ॥ श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ ६४ ॥ त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् ॥ रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ ६५ ॥ गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् ॥ हस्ताविंद्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ ६६ ॥ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् ॥ नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ ६७ ॥ क्षुत्तृड्भ्यामुदरं सिंधुर्नोदतिष्ठत्तदा विराट् ॥ हृदयं मनसा चंद्रो नोदतिष्ठत्तदा विराट् ॥ ६८ ॥ बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् ॥ रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६९ ॥ चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा ॥ विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७० ॥ यथा प्रसुप्तं पुरुषं प्राणेंद्रियमनोधियः ॥ प्रभवंति विना येन नोत्थापयितुमोजसा ॥ ७१ ॥ तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ॥ भक्त्या विरक्त्याज्ञानेन विविच्यात्मनि चिंतयेत् ॥ ७२ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेये तत्त्वसमाम्नाये षड्विंशतितमोऽध्यायः ॥ २६ ॥ श्रीभगवानुवाच ॥ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥ स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ॥ अहंक्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते

तत्वेन दर्शयन्सांख्यानुकथनस्य प्रयोजनमाह । यथेति द्वाभ्याम् ॥ ७१ ॥ प्रथमं परमेश्वरे भक्तिस्ततोऽन्यत्र विरक्तिस्ततो योगप्रवृत्ता धीः एकाग्रं चित्तं ततो यज्ज्ञानं तेन प्रत्यगात्मानं क्षेत्रज्ञमस्मिन्नात्मनि कार्यकारणसंघाते विविच्य चिंतयेत् ॥ ७२ ॥ इति तृतीये टीकायां षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ सप्तविंशे ततः सम्यग्बहुसाधनयोगतः ॥ पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरू-

ध्यते ॥ १ ॥ विवेकज्ञानेन मोक्षमुपपादयितुं शुद्धस्यैव पुरुषस्य प्रकृत्यविवेकतः पूर्वोक्तं संसारमनुस्मारयति । प्रकृतिस्थोऽपीति त्रिभिः । देहस्थोऽपि नाज्यते न लिप्यते गुणैस्तत्कृतैः सुख-दुःखादिभिः निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्मात् ॥ १ ॥ २ ॥ अनिर्वृतः सन् प्रासंगिकैः प्रकृतिसंगकृतैः सदसन्मिश्रयोनिषु देवतिर्यङ्नरादिषु संसारपदवीं प्राप्नोति ॥ ३ ॥ ननु तर्ह्य-वास्तवत्वात्संसृतेः किं तन्निवृत्तिप्रयासेन तत्राह । अर्थे हीति ॥ ४ ॥ यतो विषयध्यानमनर्थहेतुरतो मनो नियंतव्यमित्याह । अत एवेति । असतामिंद्रियाणां पथि विषयमार्गे तीव्रेण दृढेन विरक्त्या च तीव्रया ॥ ५ ॥ भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह षड्भिः । यमादिभिर्योगमार्गैश्चित्तमभ्यसन्पुनः पुनरेकाग्रीकुर्वन्नात्मानमुपलभ्य सर्वानु-स्यूतमद्वयं परमात्मानं प्रतिपद्यत इति षष्ठेनान्वयः । सत्येन निष्कपटेन भावेन प्रेम्णा ॥ ६ ॥ अप्रसंगतः संगत्यागेन बलीयसा ईश्वरेऽर्पितेन ॥ ७ ॥ विविक्तशरण एकांतवासी ॥ ८ ॥ असदा-ग्रहमहंममताम् । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तेन ज्ञानेन ॥ ९ ॥ निवृत्तानि बुद्ध्यवस्थानि जाग्रदादीनि यस्य सः अतएव दूरीभूतमन्यदर्शनं यस्य आत्मनाऽहंकारावच्छिन्नेनात्मानं शुद्ध-

॥ २ ॥ तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः ॥ प्रासंगिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥ अतएव शनैश्चित्तं प्रसक्तमसतां पथि ॥ भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् ॥ ५ ॥ यमादिभिर्यो-गपथैरभ्यसन् श्रद्धयान्वितः ॥ मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ६ ॥ सर्वभूतसमत्वेन निर्वैरेणाप्रसंगतः ॥ ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा ॥ ७ ॥ यदृच्छयोपलब्धेन संतुष्टो मितभुङ्मुनिः ॥ विविक्तशरणः शांतो मैत्रः करुण आत्मवान् ॥ ८ ॥ सानुबंधे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ॥ ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ ९ ॥ निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ॥ उपलभ्यात्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥ मुक्तलिंगं सदाभासमसति प्रतिपद्यते ॥ सतो बंधुमसच्चक्षुः सर्वानुस्यूतमद्वयम् ॥ ११ ॥ यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ॥ स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥ एवं त्रिवृदहंकारो भूतेंद्रियमनोमयैः ॥ स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥ भूतसूक्ष्मेंद्रियमनो-

मुपलभ्य एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे दृष्टांतमाह । चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव एवमात्मदृक् शुद्धमात्मानं पश्यन् ॥ १० ॥ मुक्तलिंगं निरुपाधिकमसति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणाभासमानं ब्रह्म प्राप्नोति शुद्धजीवस्वरूपाद्विशेषमाह । सतः कारणस्य प्रधानस्य बंधुमधिष्ठानम् । असतः कार्यस्य चक्षुरिव प्रकाशकम् । सर्वेषु कार्यका-रणेष्वनुस्यूतम् । अद्वयं परिपूर्णम् ॥ ११ ॥ अहंकारोपहितेन शुद्धब्रह्मप्रतिपत्तिं सदृष्टांतमाह । यथेति । जले स्थित आभासः सूर्यप्रतिबिंबो यदा गृहांतर्वर्तिभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिंबेन यथा प्रथमं जलस्थ आभासोवऽदृश्यते लक्ष्यते गगनस्थस्य गृहमध्ये प्रतिबिंबायोगात् । चार्थे तथाशब्दः यथा चेत्यर्थः । यथा च जल-स्थेन दिविस्थितः सूर्यो लक्ष्यते ॥ १२ ॥ एवं भूतेंद्रियमनोमयैर्देहेंद्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिंबैस्त्रिवृत्त्रिगुणोऽहङ्कारः सतो ब्रह्मणः आभासो यस्मिंस्तेन रूपेण लक्षितः अहंकार-स्थाभासं विना विषयाभासानुत्पत्तेः अनेन चाहंकारेण सदाभासवता सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षित इत्यर्थः ॥ १३ ॥ इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति

त्रिभिः । भूतादिष्वसत्यसत्तुल्येऽव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥ १४ ॥ ननु यदि तदा विनिद्रोऽमावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटः किं नावभासते तत्राह । पूर्वं स द्रष्टातो द्रष्टृत्वेन सविकल्पतया स्फुटं प्रतीतः सुषुप्तौ तु भूतादेरहंकारविषयस्य लीनत्वात्तद्विषयेऽहंकारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो यः अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टांतः नष्टवित्तो यथा आतुरो विवशः नष्टवद्भवतीत्यर्थः ॥ १५ ॥ ननु सुषुप्तौ न किंचिदनुभूयते मैवं सुखमहमस्वाप्सं न किंचिदवेदिषमिति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसंधानादित्याह । एवमिति । ननु प्रतिसंधाने साहंकारस्य प्रतीतेः कथं निरहंक्रियत्वं तत्राह । साहंकारस्य द्रव्यस्य कार्यकारणसंघातस्यानुग्रहः प्रकाशकः अवस्थानं च द्रव्यविशेषणतयाऽहंकारस्यापि दृश्यत्वाच्च तद्द्रष्टाऽऽत्मा तद्व्यतिरिक्तः तमात्मानमित्यन्वयः ॥ १६ ॥ भक्तिविरक्तिभ्यां सत्यपि विवेके प्रकृतिपुरुषयोः परस्परत्यागाभावात्कथं मुक्तिरिति पृच्छति । पुरुषमिति चतुर्भिः । पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुंचतीत्यर्थः

बुद्ध्यादिष्विह निद्रया ॥ लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥ मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ॥ नष्टेऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ॥ साहंकारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥ देवहूतिरुवाच ॥ पुरुषं प्रकृतिर्ब्रह्मन्न विमुंचति कर्हिचित् ॥ अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १७ ॥ यथा गंधस्य भूमेश्च न भावो व्यतिरेकतः ॥ अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥ अकर्तुः कर्मबंधोऽयं पुरुषस्य यदाश्रयः ॥ गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥ क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ॥ अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥ श्रीभगवानुवाच ॥ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ॥ तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥ २१ ॥ ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ॥ तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥ प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ॥ तिरो भवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ॥ नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ॥ युंजतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥ यदैवमध्यात्मरतः कालेन बहुजन्मना ॥ सर्वत्र जातवैराग्य

॥ १७ ॥ व्यतिरेकाभावमात्रे दृष्टांतः । यथा व्यतिरेकतो भावः सत्ता नास्ति गंधस्य कदाचिदप्यदर्शनादृष्टांतांतरम् । अपामिति । बुद्धेः प्रकृतेः परस्य पुरुषस्य च ॥ १८ ॥ ततः किमत आह । अकर्तुरिति । ये गुणा आश्रयो यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य कैवल्यं कथम् ॥ १९ ॥ अतएव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यत इत्याह । क्वचिदिति ॥ २० ॥ नहि प्रकृतिसंबंधमात्रं बंधहेतुः किंतु गुणबुद्ध्या तदासक्तिस्तन्निवृत्तौ सत्यां मोक्षो घटते क्वचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन्परिहरति त्रिभिः । निमित्तं फलं तन्न निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेन धर्मेण अमलात्मना निर्मलेन मनसा श्रुतेन कथाश्रवणेन संभृतया पुष्टया ॥ २१ ॥ २२ ॥ दह्यमानाऽभिभूयमाना तिरोहिता भवति ॥ २३ ॥ एवं च सति पुनरुद्भवो नास्तीत्याह । भुक्तो भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अतएव परित्यक्ता सतीश्वरस्यापरतंत्रस्य स्वे महिम्नि स्थितस्य स्वानंदं प्राप्तस्य ॥ २४ ॥ अविवेकावस्थायामनर्थहेतु

रपि विवेकानंतरं न भवतीति सदृष्टांतमाह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः बहूनर्थान्बिभर्ति पुष्णाति प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५ ॥ २६ ॥ उपसंहरति । यदैवमिति त्रिभिः ।
बहूनि जन्मानि यस्मिन्काले ॥ २७ ॥ प्रतिबुद्धार्थो विदितात्मतत्त्वः कैवल्याख्यं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं मदाश्रयं निःश्रेयसं निरतिशयानंदम् ॥ २८ ॥ स्वदृशा आत्मज्ञानेन छिन्नाः
संशया मिथ्याज्ञानानि यस्य । लिंगाद्विनिर्गमे लिंगशरीरनाशे सतीत्यर्थः ॥ २९ ॥ तदा त्वणिमादिसिद्धयोऽतरायरूपा भवंति तासु योगेनोपचितासु समृद्धासु न योगादन्यो हेतुर्यासां तासु यदा
सिद्धस्य चेतो न विषज्जते । अंग हेमातः अथ तदांतमतिक्रांतोऽत्यंतो योऽहं तत्संबंधिनी यत्र यस्यां गतौ मृत्योर्हासो न भवति विषक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः
॥ ३० ॥ इति श्रीमद्भागवते तृतीये टीकायां सप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ अष्टाविंशे ततोऽष्टांगयोगेन ध्यानशोभिना ॥ सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते ॥ १ ॥ भक्तिं संक्षेपतः

**आब्रह्मभवनान्मुनिः ॥ २७ ॥ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ॥ निःश्रेयसं स्वसंस्थानं कैवलाख्यं मदाश्रयम् ॥२८॥ प्राप्नोतीहांसजा धीरः स्वदृशा छिन्नसंशयः॥ यद्गत्वा न निवर्तेत योगी लिंगाद्विनिर्गमे ॥२९॥ यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽग ॥ अनन्यहेतुष्वथ मे गतिः स्यादात्यंतिकी यत्र न मृत्युहासः ॥ ३० ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने सप्तविंशतितमोऽध्यायः ॥ २७ ॥**

**श्रीभगवानुवाच ॥ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ॥ मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥ स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥ दैवाल्लब्धेन संतोष आत्मविच्चरणार्चनम् ॥ २ ॥ ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ॥ मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥३॥ अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ॥ ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥ मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ॥ प्रत्याहारश्चेंद्रियाणां विषयान्मनसा हृदि ॥ ५ ॥ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ॥ वैकुंठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥ एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ॥ बुद्ध्या युंजीत शनकैर्जितप्राणो ह्यतंद्रितः ॥ ७ ॥ शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ॥ तस्मिन्स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥ प्राणस्य शोधयेन्मार्गं पूरकुंभकरेचकैः ॥ प्रतिकूलेन वा चित्तं यथा स्थिरमचंचलम् ॥९॥ मनोऽचिरात्स्या-**

प्रोच्य सांख्यमाख्याय विस्तृतम् ॥ अथाह वैष्णवं योगमष्टांगं कपिलो हरिः ॥ २ ॥ सबीजस्य सालंबनस्य प्रसन्नं सत् ॥ १ ॥ तत्र यमनियमानाह । त्रिभिरक्षरद्वयाधिकैः शक्त्या स्वधर्माचरणम्
॥ २ ॥ ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः मितं च तन्मेध्यं शुद्धं तस्यादनम् । तत्र मितं नाम । द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ॥ मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् । इति स्मृतिप्रसिद्धं
विविक्तं विजनं क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ यावताऽर्थः प्रयोजनं तावन्मात्रस्य परिग्रहः ॥ ४ ॥ आसनादीन्यंगान्याह । त्रिभिः । सत आसनस्य जयेन स्थैर्यम् ॥ ५ ॥ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणं धारणा । आत्मनो मनसः समाधानमात्माकारता ॥ ६ ॥ अन्यैश्च व्रतदानादिभिः पथिभिरुपायैः ॥ ७ ॥
आसनादीनि प्रपंचयति । शुचाविति यावत्समाप्ति । आसनं कुशाजिनचैलोत्तरं प्रतिष्ठाप्य स्वस्तिकासनेन यथासुखमिति वा समभ्यसेत्प्राणमिति शेषः । ऊरू जंघांतराधाय पादाग्रे जानुमध्यगे ॥
योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ॥ ८ ॥ बाह्यवायोरंतःप्रवेशनं पूरकः प्रवेशितस्य धारणं कुंभकः धृतस्य बहिर्निःसारणं रेचकः । प्रतिकूलेन वा रेचककुंभकपूरकैः । यद्वा इडयापूर्य पिंगलया

रेचनं पिंगलयापूर्य इडया रेचनमित्येवंप्रतिकूलेन वाशब्दश्चार्थे । स्थिरं सत्पुनरपि चंचलं यथा न भवति तथा शोधयेत् ॥ ९ ॥ ध्मातं संतप्तमित्यर्थः । लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् ततश्चंचलं न स्यादिति भावः ॥ १० ॥ प्राणायामादीनां समाधौ द्वारकार्याण्याह । प्राणायामैरिति । दोषान्वातश्लेष्मादीन् संसर्गान्विषयसंसर्गान् । अनीश्वरान् रागादीन् वायुना सह मनसः स्थिरीकरणं धारणा स्थिरस्य वृत्तिसंततिर्ध्यानम् । वृत्तिनिरोधः समाधिरिति भेदः ॥ ११ ॥ सुसमाहितं स्थिरं जातम् । काष्ठां कलां मूर्तिमित्यर्थः । स्वनासाग्रेऽवलोकनं यस्य एतच्च लयविक्षेपयोः परिहाराय ॥ १२ ॥ ध्येयं हरिमाह । सप्तभिः । प्रसन्नं वदनांभोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः । पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य नीलोत्पलदलवच्छ्यामम् ॥ १३ ॥ लसत्पंकजस्य किंजल्कवत्पीते कौशेये वाससी यस्य श्रीवत्सो लांछनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कंधरा यस्य ॥ १४ ॥ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया परीतं व्याप्तम् । परार्ध्यान्यमूल्यानि हारादीनि यस्य ॥ १५ ॥ कांचीगुणेनोल्लसंती श्रोणी यस्य भक्तानां हृदयांभोजमेव विष्टरमासनं यस्य भक्तानां मनोनयनानि वर्धयति हर्षयतीति तथा ॥ १६ ॥ अपीच्यमतिसुंदरं

द्विरजं जितश्वासस्य योगिनः ॥ वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११ ॥ यदा मनः स्वं विरजं योगेन सुसमाहितम् ॥ काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥ प्रसन्नवदनांभोजं पद्मगर्भारुणेक्षणम् ॥ नीलोत्पलदलश्यामं शंखचक्रगदाधरम् ॥ १३ ॥ लसत्पंकजकिंजल्कपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम् ॥ १४ ॥ मत्तद्विरेफकलया परीतं वनमालया ॥ परार्ध्यहारवलयकिरीटांगदनूपुरम् ॥१५॥ कांचीगुणोल्लसच्छ्रोणिं हृदयांभोजविष्टरम् ॥ दर्शनीयतमं शांतं मनोनयनवर्धनम् ॥ १६ ॥ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ॥ संतं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ १७ ॥ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ॥ ध्यायेद्देवं समग्रांगं यावन्न च्यवते मनः ॥ १८ ॥ स्थितं व्रजंतमासीनं शयानं वा गुहाशयम् ॥ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥ तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्र संयुज्यादंगे भगवतो मुनिः ॥ २० ॥ संचिंतयेद्भगवतश्चरणारविंदं वज्रांकुशध्वजसरोरुहलांछनाढ्यम् ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयांधकारम् ॥ २१ ॥ यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविंदम् ॥ २२ ॥ जानु-

भक्तविषयं दर्शनं यस्य कैशोरे तारुण्ये वयसि संतं स्थितम् । भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका बलिप्रमुखास्तेषां यशस्करम् । समग्राण्यंगानि यस्मिन् न च्यवते नापयाति न पर्येति वा ॥ १८ ॥ प्रेक्षणीयमीहितं लीला यस्य ॥ १९ ॥ तदेवं समग्रध्यानमुक्त्वैकैकावयवध्यानमाह । तस्मिँल्लब्धं पदं स्थितिर्येन तच्चित्तं विलक्ष्य विशेषेण लक्षीकृत्य एकत्रैकैकस्मिन्नंग इत्यर्थः ॥ २० ॥ तदेव पादादिक्रमेणाह । त्रयोदशभिः । सम्यक् चिंतयेत् पादतले रेखात्मकानि वज्रादीनि लांछनानि तैराढ्यं युक्तम् । उत्तुंगाश्च रक्ताश्च विलसंतो नखास्तेषां चक्रवालं मंडलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयांधकारो येन एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनैवोच्यते ॥ २१ ॥ किंच यस्य शौचेन क्षालनेन निःसृतायाः सरित्प्रवराया गंगाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन धृतेन शिवोऽपि शिवोऽभूत् अत्यधिकं सुखं प्रापेत्यर्थः । ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं क्षिप्तं वज्रमिव

यत् । यद्वा । शमलशैले निसृष्टं स्वलांछनरूपं वज्रं येन तत् ॥ २२ ॥ विभोर्जानुद्वयं तत्पर्यंतं जंघाद्वयमखिलस्य विधातुर्ब्रह्मणो जनन्या लक्ष्म्या संलालितं स्पर्शचातुर्येण संसेवितम् । संसारित्व-मिव प्रतीतं वारयति । अभवस्येति । हृदि कुर्याद्ध्यायेत् ॥ २३ ॥ सुपर्णस्य भुजयोः स्कंधयोरधि उपरि ओजसो बलस्य निधी आधारौ अतसिकायाः कुसुमवत्कांत्यावभासमानौ व्यालंबि आगुल्फं लंबमानं यत्पीतांबरं वासस्तस्मिन्वर्तमानो यः कांचीकलापस्तेन परिरंभः संश्लेषो विद्यते यस्य तद्विभोर्नितंबबिंबं च हृदि कुर्यादिति पूर्वेणैवान्वयः ॥ २४ ॥ अमुष्य हरेर्नाभिह्रदं ध्यायेत् । कथंभूतम् । भुवनानां कोशस्य समूहस्य गुहाधिष्ठानं यदुदरं तत्र स्थितम् । यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढमुत्थितम् । तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत् । विशदहाराणां मयूखैर्गौरं श्वेतम् ॥ २५ ॥ ऋषभस्य श्रेष्ठस्य महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं वक्षः कंठं च मनसि कुर्यात् । कथंभूतं कंठम् । कौस्तुभमणेर्यो भूषणार्थं धृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य कौस्तुभमणिमेव स्वयमलंकुर्वंतमित्यर्थः । पुंसां स्मर्तॄणां द्रष्टॄणां च मनोनयनानां निर्वृतिमादधानमित्युभयोर्विशेषणम् ॥ २६ ॥ निर्णिक्तान्यु-

द्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवंदितया विधातुः ॥ ऊर्वोर्निधाय करपल्लवरोचिषा यत्संलालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥

उरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ ॥ व्यालंबिपीतवरवाससि वर्तमानकांचीकलापपरिरंभि नितंबबिंबम् ॥ २४ ॥

नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ॥ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥

वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृत्तिमादधानम् ॥ कंठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥

बाहूंश्च मंदरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिंतयेद्दशशतारमसह्यतेजः शंखं च तत्करसरोरुहराजहंसम् ॥ २७ ॥

कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ॥ मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कंठे ॥ २८ ॥

भृत्यानुकंपितधियेह गृहीतमूर्तेः संचिंतयेद्भगवतो वदनारविंदम् ॥ यद्विस्फुरन्मकरकुंडलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥ २९ ॥ यच्छ्री-निकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुंतलवृंदजुष्टम् ॥ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतंद्रित उल्लसद्भ्रू ॥ ३० ॥ तस्या-वलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ॥ स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विपुलभावनया गुहायाम् ॥ ३१ ॥

ज्ज्वलीकृतानि बाहुवलयान्यंगदानि येषु अधिश्रिता लोकपाला येषु दशशतारं चक्रम् । न सह्यं तेजो यस्य करसरोरुहे राजहंसमिव ॥ २७ ॥ अरातयो ये भटा योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्ताम् । अस्य कंठे मालां मणिं च स्मरेत् मधुव्रतानां वरूथस्य गिरा उपघुष्टां नादितां चैत्यस्य जीवस्य तत्त्वम् । तदुक्तं वैष्णवे । आत्मानमस्य जगतो निर्लेपमगुणामलम् ॥ बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः इति ॥२८॥ भृत्येष्वनुकंपिता कृतानुकंपा या धीस्तया गृहीता मूर्तिर्येन तस्य विस्फुरंती ये मकरकुंडले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारा उन्नता नासा यस्मिंस्तत् ॥ २९ ॥ यच्च स्वया भूत्या शोभयाऽलिभिः परिसेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतनं पद्ममधिक्षिपद्वर्तते तद्ध्यायेत् । तत्र कुंतलैरलीनामधिक्षेपः नेत्रद्वयेन मीन-द्वयस्येति द्रष्टव्यम् । अब्जे इव नेत्रे यस्मिन्नित्युपमानांतरम् । उल्लसंत्यौ भ्रुवौ यस्मिन् मनोमयं मनस्याविर्भवत् ॥ ३० ॥ कृपयाऽधिकमत्यर्थम् । अक्षिभ्यां निसृष्टं प्रयुक्तम् । स्निग्धस्मितेनानु-

गुणितं संयुक्तम् । विपुलः प्रसादो यस्मिन् गुहायां हृदि ॥ ३१ ॥ अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा तं हरेर्हासम् । अत्यात्युदारं भ्रूमंडलं च ध्यायेत् । कथंभूतम् । निजमायया मकरध्वजस्यापि संमोहनाय रचितम् । मुनिकृते मुनीनामुपकाराय मुनीनां संमोहने प्रवृत्तं काममेव संमोहयितुमित्यर्थः ॥ ३२ ॥ मंदहासध्यानमुक्त्वा स्फुट-हासध्यानमाह । विष्णोः प्रहसितमुच्चैर्हसितं ध्यायेत् । कीदृशम् । ध्यानायनमतिसुंदरतया प्रयत्नं विनैव ध्यानस्य विषयभूतम् । सौंदर्यमेवाह । बहुलयाऽधिकयाऽधरोष्ठस्य भासा कांत्याऽरुणीभूता-स्तनवः सूक्ष्मा द्विजा एव कुंदमुकुलानि तेषां पंक्तिः स्फुरति यस्मिंस्तत् । देहकुहरे हृदयाकाशेऽवसितस्य ज्ञातस्य प्रेमरसेनार्द्रया भक्त्या तस्मिन्नेवार्पितमनाः सन्पृथक् तद्व्यतिरिक्तं द्रष्टुं नेच्छेत् न चित्तं विचालयेदित्यर्थः ॥ ३३ ॥ समाधिमाह । एवमिति द्वाभ्याम् । निर्बीजः सबीजश्चेति द्विविधो योगः तत्र निर्बीजयोगे । यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥ ततस्ततो नियम्यैत-दात्मन्येव वशं नयेत् । इति गीताद्युक्तमार्गेण क्रियमाणोऽपि दुष्करः समाधिः । सबीजे तु सुकरः तत्र हि परमानंदमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तोपरमो भवति । तदुक्तम् । हतात्मनो हत-प्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते इति । अतः स एवोपक्षिप्तो योगस्य लक्षणं वक्ष्ये सबीजस्येति तदेवायत्नसिद्धत्वं दर्शयति । एवं ध्यानमार्गेण हरौ प्रतिलब्धो भावः प्रेम येन तथा

हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ॥ संमोहनाय रचितं निजमाययाऽस्य भ्रूमंडलं मुनिकृते मकरध्वजस्य ॥ ३२ ॥ ध्या-नायनं प्रहसितं बहुलाधरोष्ठभासाऽरुणायिततनुद्विजकुंदपंक्ति ॥ ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग्दिदृक्षेत् ॥ ३३ ॥ एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ॥ औत्कंठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुंक्ते ॥ ३४ ॥ मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ॥ आत्मानमत्र पुरुषो व्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥ सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये ॥ हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्विधत्त उपलब्धपरा-त्मकाष्ठः ॥ ३६ ॥ देहं च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं

भक्त्या द्रवद्धृदयं यस्य प्रमोदादुद्गतानि पुलकानि यस्य औत्कंठ्यप्रवृत्ताश्रुकला च मुहुरर्द्यमान आनंदसंप्लवे निमज्जमानो दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि ध्येया-द्वियुंक्ते तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ॥ ३४ ॥ यर्हि यदैवं निर्विषयं भवत्यत एवमुक्ताश्रयं च ध्येयसंबंधं विना ध्यातर्यवस्थानासंभवात् न च पूर्ववच्छब्दादिर्विषयः स्यात् यतस्तत्र विरक्तं परमानंदानुभवेन अतो निर्वाणं लयमृच्छति । वृत्तिरूपतां परित्यज्य ब्रह्माकारेण परिणमत इत्यर्थः । यथाऽर्चिर्ज्वालाऽऽश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते अत्रास्यां दशायामव्यवधानं ध्यातृध्येयविभागशून्यमेकमखंडमात्मानमनुगतमीक्षते । अत्र हेतुः । प्रतिनिवृत्तोऽपगतो गुणप्रवाहो देहाद्युपाधिर्यस्य ॥ ३५ ॥ न च सुप्तोत्थित इव पुनः संसरतीत्याह । सोऽपि स एव पुरुषस्त-स्मिन्महिम्नि ब्रह्मरूपेऽवसितोऽवसानं निष्ठां प्राप्तः । कया । मनसो निवृत्त्या चरमयाऽविद्यारहितयेति सुषुप्ताद्विशेषः तत्र ह्यविद्याऽस्ति नत्विदानीम् । अत्र हेतुः । एतया योगाभ्यासकृतयेत्यर्थः । नन्वेवमपि सुखदुःखयोरात्मधर्मत्वे कुतो ब्रह्मैक्यं तत्राह । दुःखयोः सुखदुःखयोर्हेतुत्वं भोक्तृत्वं च यत्पूर्वमासीत्तदप्यसत्यविद्याकृते कर्तर्यहंकारे विधत्ते तन्निष्ठमेव पश्यतीत्यर्थः । यत उपलब्धपरात्म-काष्ठोऽपरोक्षीकृतात्मतत्त्वः ॥ ३६ ॥ तस्य जीवन्मुक्तिमाह । देहं चेति द्वाभ्याम् । चरम उक्तलक्षणः सिद्धो देहमपि न विपश्यति कुतः सुखदुःखे आसनादुत्थितमुत्थाय तत्रैव स्थितं तत्स्थानादपेतं

ततो दैववशात्पुनरप्युपेतं वा न विपश्यति यतः स्वरूपं प्राप्तः यतो देहात्स्वरूपमध्यगमत्तं देहमिति वा । सतोऽप्यननुसंधाने दृष्टांतः । वासः परिकृतं कटितटे परिवेष्टितं स्थितं गतं वा मदिराम-देनांधो यथा न पश्यति ॥ ३७ ॥ ननु तर्हि देहस्य कथं प्रवृत्तिनिवृत्ती जीवनं वा तत्राह । देहोऽपीति । दैवं पूर्वसंस्कारस्तद्वशे गच्छन्यावत्स्वारंभकं कर्मास्ति तावत्प्रतिसमीक्षते जीवत्येव सासुः सेंद्रियः । ननु तर्हि तस्मिन्पुनः संगः स्यात्तत्राह । तं देहं स्वाप्नदेहादितुल्यं सप्रपंचं पुत्रादिसहितं पुनर्न भजतेऽहंममेति नाभिमन्यते अधिरूढः प्राप्तः समाधिपर्यंतो योगो येन अतएव प्रतिबुद्धं वस्त्वात्मतत्त्वं येन सः ॥ ३८ ॥ प्रतिबोधप्रकारमाह । षड्भिः यथेति । अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्रादेः मर्त्यः पित्रादिः पुरुषो देहादेर्द्रष्टा ॥ ३९ ॥ पृथगवस्थानाभावेऽपि भेदं सदृष्टांत-माह । यथोल्मुकादिदानीं ज्वलतः काष्ठात् स्वसंभवादग्नेः संभूतात् आत्मत्वेनाग्नेः स्वरूपत्वेनाभिमतादपि अत्यंताविवेकिनो हि धूमेऽप्यग्न्यभिमानोऽस्ति उल्मुकात्पूर्वसिद्धादपि तद्दाहकः प्रकाशक-श्चाग्निः पृथगेव ॥ ४० ॥ भूतादेर्द्रष्टा तेभ्यः पृथक् तस्मादपि जीवसंज्ञिताद्ब्रह्मसंज्ञितः पृथक् तथा प्रधानादपि तत्प्रवर्तको भगवान्पृथगित्यर्थः ॥ ४१ ॥ उपाधितो विवेकमुक्त्वा तस्यैक्यमाह ।

मदिरामदांधः ॥ ३७ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥३८॥ यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥३९॥ यथोल्मुकाद्विस्फुलिंगा-द्धूमाद्वाऽपि स्वसंभवात् ॥ अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात् ॥ ४० ॥ भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४१ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥ स्वयोनिषु यथा-ज्योतिरेकं नाना प्रतीयते ॥ योनीनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ ४३ ॥ तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ॥ दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेये साधनानुष्ठानं नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ देव-हूतिरुवाच ॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ॥ स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥ यथा सांख्येषु कथितं यन्मूलं तत्प्रच-क्षते ॥ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥ विरागो येन पुरुषो भगवन्सर्वतो भवेत् ॥ आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥ ३ ॥ कालस्येश्वररूपस्य परेषां च परस्य ते ॥ स्वरूपं बत कुर्वंति यद्धेतोः कुशलं जनाः ॥ ४ ॥ लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य

सर्वभूतेष्विति । भूतेषु चतुर्विधेषु तदात्मतां महाभूतात्मताम् ॥ ४२ ॥ धर्मभेदस्याप्यौपाधिकतां सदृष्टांतमाह । स्वयोनिषु काष्ठेषु ज्योतिरग्निः गुणवैषम्याद्दीर्घह्रस्वादिभेदात् प्रकृतौ देहे ॥ ४३ ॥ स्वां स्वांशस्य जीवस्य बंधहेतुं दैवीं देवस्य विष्णोः शक्तिं पराभाव्य तत्प्रसादेनैव जित्वा स्वरूपेण ब्रह्मत्वेनावतिष्ठते ॥ ४४ ॥ इति श्रीमद्भागवते तृतीये टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥

॥ एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ॥ कालस्य च बलं घोरा संसृतिश्च विरक्तये ॥ १ ॥ उक्तानुवादपूर्वकं भक्तिमार्गभेदान्पृच्छति द्वाभ्याम् । लक्षणं महदादीनां यथा सांख्येषु तथा कथि-तम् । येन लक्षणेन तत्पारमार्थिकं परस्परविभक्तमित्यर्थः । यो भक्तियोगो मूलं प्रयोजनं यस्य तद्यन्मूलं तत्कथितम् । तस्य भक्तियोगस्य मार्गं प्रकारं विस्तरतो मे ब्रूहि ॥ १ ॥ २ ॥ येन संसृतीनामाख्यानेन विगतरागो भवेत् ॥ ३ ॥ ईश्वररूपस्य महाप्रभावस्य ते त्वदात्मकस्य यद्धेतोर्यद्भयात्कुशलं पुण्यं कुर्वंति ॥ ४ ॥ अचक्षुषोऽज्ञस्य अतो मिथ्याभूते देहादावभिमतिरहंकारो

यस्य अतः कर्मस्वनुविद्धया आसक्तया धिया श्रांतस्य अतएवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगप्रकाशको भास्करः किलाविर्भूतोऽसि ॥ ५ ॥ श्लक्ष्णं सुंदरम् ॥ ६ ॥ मार्गैः प्रकारविशेषैः तानेवाह । स्वभावभूता ये गुणास्तेषां मार्गेण वृत्तिभेदेन भावोऽभिप्रायः फलसंकल्पभेदाद्भक्तिभेद इत्यर्थः ॥ ७ ॥ अभिसंधाय संकल्प्य संरंभी क्रोधी भिन्नदृक् भेददर्शी यो भावं भक्तिं कुर्यात्स त्रिविधोऽपि तामसः ॥ ८ ॥ पृथग्भावो भेददर्शी ॥ ९ ॥ कर्मनिर्हारं पापक्षयम् । परस्मिन्परमेश्वरे तदर्पणं कर्मार्पणम् । भगवत्प्रीतिमुद्दिश्येत्यर्थः । यष्टव्यमिति विधिसिद्धिमुद्दिश्येत्यर्थः । भेददर्शित्वमर्चादावर्चनं च त्रिष्वपि समानम् । तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः तासु यथोत्तरं श्रैष्ठ्यम् । एवं च श्रवणकीर्तनादयो नवापि प्रत्येकं नव नव भेदाः । तदेवं सगुणा भक्तिरेकाशीतिभेदा भवति ॥ १० ॥ निर्गुणा तु भक्तिरेकविधैव तामाह । मद्गुणश्रुतिमात्रेणेति द्वाभ्याम् । मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य

तमस्यनाश्रये ॥ श्रांतस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥ ५ ॥ मैत्रेय उवाच ॥ इति मातुर्वचः श्लक्ष्णं प्रतिनंद्य महामुनिः ॥ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥ श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ॥ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥ अभिसंधाय यो हिंसां दंभं मात्सर्यमेव वा ॥ संरंभी भिन्नदृग् भावं मयि कुर्यात्स तामसः ॥ ८ ॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा ॥ अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ९ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १० ॥ मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ मनोगतिरविच्छिन्ना यथा गंगांऽभसोंऽबुधौ ॥ ११ ॥ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णंति विना मत्सेवनं जनाः ॥ १३ ॥ स एष भक्तियोगाख्य आत्यंतिक उदाहृतः ॥ येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥ मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवंदनैः ॥ भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥ १६ ॥ महतां बहुमानेन दीनानामनुकंपया ॥ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥ आर्जवेनार्यसंगेन निरहंक्रियया तथा ॥ १८ ॥ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥ पुरुषस्यांजसाऽभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥

भक्तियोगस्य लक्षणमित्यन्वयः । अविच्छिन्ना संतता ॥ ११ ॥ लक्षणं स्वरूपम् । अहैतुकी फलानुसंधानशून्या अव्यवहिता भेददर्शनरहिता च ॥ १२ ॥ भक्तानां निष्कामतां कैमुत्यन्यायेनाह । सालोक्यं मया सहैकस्मिँल्लोके वासम् । सार्ष्टिं समानैश्वर्यम् । सामीप्यं निकटवर्तित्वम् । सारूप्यं समानरूपताम् । एकत्वं सायुज्यम् । उत अपि दीयमानमपि न गृह्णंति कुतस्तत्कामनेत्यर्थः ॥१३॥ किमिति तर्हि भजंते भक्तेरेव परमफलत्वादित्याह । स एवेति । ननु त्रैगुण्यं हित्वा ब्रह्मप्राप्तिः परमफलं प्रसिद्धम् । सत्यं तत्तु भक्तावानुषंगिकमित्याह । येन भक्तियोगेन मद्भावाय ब्रह्मत्वाय ॥ १४ ॥ एवंभूताया भक्तेः साधनान्याह पंचभिः । निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन स्वधर्मेण नित्यनैमित्तिकेन. महीयसा श्रद्धादियुक्तेन क्रियायोगेन पंचरात्राद्युक्तपूजाप्रकारेण शस्तेन निष्कामेन ॥ १५ ॥ मद्धिष्ण्यं मत्प्रतिमादि तस्य दर्शनादिभिः सत्त्वेन धैर्येण असंगमेन वैराग्येण ॥ १६ ॥ १७ ॥ आर्जवेनाकौटिल्येन ॥ १८ ॥ मद्धर्मणो भगवद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तम्

गवां च कुलम् ॥ ४४ ॥ ४५ ॥ साधुवादमाह । पुत्रेणेति षड्भिः । यद्यतो वेनोऽपि तमो नरकमत्यतरदतितताार ॥ ४६ ॥ ४७ ॥ ४८ ॥ मुकुंदनाथाः स्म त्वन्नाथत्वमेव मुकुंदनाथत्वे पर्यवसितमित्यर्थः । तत्र हेतुर्य इति ॥ ४९ ॥ आजीविनां सेवकानां आ सम्यगनुशासनम् । प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥ उपासादितः प्रापितः कर्मभिर्भ्राम्यताम् ॥ ५१ ॥ ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमंति । नम इति । ब्रह्माविश्य ब्राह्मणजातिमधिष्ठाय क्षत्रं क्षत्रियं बिभर्ति क्षत्रं चाविश्य ब्रह्म बिभर्ति तदुभयं चाविश्येदं विश्वं बिभर्ति ॥ ५२ ॥ इति चतुर्थे टीकायामेकविंशोऽध्यायः ॥ २१ ॥ ॥ द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ॥ सनत्कुमारो भगवानुपादिशदितीर्यते ॥ १ ॥ मुनयः सनकादयः ॥ १ ॥ अर्चिषा लक्षितान्सनकादय इति ज्ञापितान् । अचष्टापश्यत् ॥ २ ॥ तेषां दर्शनेनोद्गतान्प्राणान्प्राप्तुमिच्छुरिव । अयं भावः । ऊर्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आयति ॥ प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत इति स्मृतेः । प्राणास्तावत्तत्तेजसाक्षिप्ता-

वर्य पितः पृथ्व्याः समाः संजीव शाश्वतीः ॥ यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४८ ॥ अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुंदनाथाः ॥ य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥ ४९ ॥ नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम् ॥ प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ५० ॥ अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ॥ भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥ ५१ ॥ नमो विवृद्धसत्त्वाय पुरुषाय महीयसे ॥ यो ब्रह्म क्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे एकविंशोऽध्यायः ॥ २१ ॥

मैत्रेय उवाच ॥ जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् ॥ तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥ तांस्तु सिद्धेश्वरान्राजा व्योम्नोऽवतरतोऽर्चिषा ॥ लोकानपापान्कुर्वत्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥ तद्दर्शनोद्गतान्प्राणान्प्रत्यादित्सुरिवोत्थितः ॥ ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥ गौरवाद्यंत्रितः सभ्यः प्रश्रयानतकंधरः ॥ विधिवत्पूजयांचक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥ तत्पादशौचसलिलैर्मार्जितालकबंधनः ॥ तत्र शीलवतां वृत्तमाचरन्मानयन्निव ॥ ५ ॥ हाटकासन आसीनान्स्वधिष्ण्येष्विव पावकान् ॥ श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥ पृथुरुवाच ॥ अहो आचरितं किं मे मंगलं मंगलायनाः ॥ यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः ॥ ७ ॥ किं तस्य दुर्लभतरमिह लोके परत्र च ॥ यस्य विप्राः प्रसीदंति शिवो विष्णुश्च सानुगः ॥ ८ ॥ नैव लक्षयते लोको लोकान्पर्यटतोऽपि यान् ॥ यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥९॥ अधना अपि ते धन्याः साधवो गृहमेधिनः ॥ यद्गृहा ह्यर्हवर्यांबुतृणभूमीश्वरावराः ॥१०॥ व्यालालयद्रुमा वै तेऽप्यरिक्ताखिल-

स्तान्प्रत्युद्गच्छंत्यतः स्वयमनुद्गच्छतः प्राणहानिः स्यादिति भयादिव ससंभ्रमं प्रत्युद्गमं चकारेति सह सदस्यैरनुगैश्च वर्तमानः इंद्रियेशो जीवो गुणान्गंधादीन्प्रति यथोद्गच्छतीत्यौत्सुक्ये दृष्टांतः ॥ ३ ॥ यंत्रितो वशीकृतः गृहीतमर्घ्यमर्हणमर्घ्यमासनं च यैस्तान् ॥ ४ ॥ मार्जितं क्षालितमलकबंधनं यस्य मानयन्निव स्वयं चचार ॥ ५ ॥ भवस्याप्यग्रजत्वेन मान्यान् ॥ ६ ॥ प्रीतः प्राहेत्युक्तं तदेव प्रीतिपूर्वकं वचनमाह । अहो इति दशभिः । हेमंगलायनाः! मंगलमयनं येषाम् । मया किं मंगलमाचरितम् । यस्य मे योगिभिरपि दुर्दर्शानां वो दर्शनमासीत् ॥ ७ ॥ ८ ॥ दुर्दर्शत्वमेवाह । नैवेति । सर्वदृशमात्मानं यथा सर्वे दृश्या न लक्षयंते येऽस्य विश्वस्य हेतवो महदादयो मन्वादयो वा । यद्वा कथंभूतान् । येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ॥ ९ ॥ येषां साधूनां गृहा अर्हाणां

पूज्यानां वर्या वरणीयाः स्वीकारार्हा अंब्वादयो येषु तादृशाः अंबु च तृणं च भूमिश्च ईश्वरो गृहस्वामी चावरा भृत्यादयश्च ॥ १० ॥ व्यालानामालया द्रुमा एव ते अरिक्ताः पूर्णा अखिलाः संपदो येषु तादृशा अपि यद्गृहा ये गृहास्तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन विवर्जिताः ॥ ११ ॥ स्वागतं भद्रमागमनं जातम् । यद्यस्माद्बाला एव भवंतो बृहंति व्रतानि चरंति । यद्वा । येषां वो व्रतान्यन्ये बालाश्चरंति ॥ १२ ॥ इंद्रियार्था विषयास्तानेवार्थं पुरुषार्थं ये विदंति तेषां नः व्यसनान्युप्यंते यस्मिंस्तस्मिन्संसारे ॥ १३ ॥ नन्वभ्यागतानां कुशलं पृच्छते लोके न त्वात्मनस्तत्राह । भवत्स्विति ॥ १४ ॥ तत्तस्मात्कृतविश्वासः संस्तपस्विनां संतप्तानां सुहृदो वो युष्मान्पृच्छामि ॥ १५ ॥ न खल्वन्ययोगितुल्या यूयं किंतु साक्षाद्भगवानेवेत्याह । व्यक्तं निश्चितमात्मवतां धीराणामात्मा तेष्वात्मत्वेन प्रकाशमानः आत्मानं भावयति प्रकाशयतीति तथा अजः श्रीनारायणः इमां पृथ्वीं चरति ॥ १६ ॥ सूक्तं शोभनवचनम् । सारं न्याय्यम् । सुष्ठु गंभीरार्थम् । मितमल्पा-

संपदः ॥ यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥ स्वागतं वो द्विजश्रेष्ठा यद्व्रतानि मुमुक्षवः ॥ चरंति श्रद्धया धीरा बाला एव बृहंति च ॥ १२ ॥ कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् ॥ व्यसनावाप एतस्मिन्पतितानां स्वकर्मभिः ॥ १३ ॥ भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ॥ कुशलाकुशला यत्र न संति मतिवृत्तयः ॥ १४ ॥ तदहं कृतविश्रंभः सुहृदो वस्तपस्विनाम् ॥ संपृच्छे भव एतस्मिन्क्षेमः केनांजसा भवेत् ॥ १५ ॥ व्यक्तमात्मवतामात्मा भगवानात्मभावनः ॥ स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥ मैत्रेय उवाच ॥ पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ॥ स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥ सनत्कुमार उवाच ॥ साधु पृष्टं महाराज सर्वभूतहितात्मना ॥ भवता विदुषा चापि साधूनां मतिरीदृशी ॥ १८ ॥ संगमः खलु साधूनामुभयेषां च संमतः ॥ यत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥१९॥ अस्त्येव राजन्भवतो मधुद्विषः पादारविंदस्य गुणानुवादने ॥ रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमंतरात्मनः ॥ २० ॥ शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः ॥ असंग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥ सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाध्यात्मिकयोगनिष्ठया ॥ योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥२२॥ अर्थेन्द्रियाराममगोष्ठ्यतृष्णया तत्संमताना-

क्षरम् । मधु श्रोत्रप्रियम् । सुखप्रसत्त्या स्मयमान इव प्रतीयमानः ॥ १७ ॥ विदुषा जानतापि ईदृशी परार्थैकपरा ॥ १८ ॥ स्वयमपि पृथोः संगममभिनंदति । संगम इति उभयेषां वक्तॄणां श्रोतॄणां च येषां संभाषणसहितः संप्रश्नः सर्वेषां शं सुखं विस्तारयति ॥ १९ ॥ तदेवं संगमं प्रश्नं चाभिनंद्यानुवादमुखेनैव मोक्षसाधनमुपदिशति । अस्त्येवेति । गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने श्रमण इत्यर्थः । आत्मनो मनसोऽतरंतस्थं कामात्मकं मलं विधुनोति कषायं धातुरागवदनिवर्त्यम् ॥ २० ॥ चित्तशुद्ध्यैव बहिर्वैराग्यमात्मरतिश्च भवति न च ततोऽधिकं साधनमस्ति शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह । शास्त्रेष्विति । सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु क्षेमस्य हेतुरेतावानेव सुनिश्चितः कोऽसौ आत्मव्यतिरिक्ते देहादावसंगो वैराग्यमात्मनि च दृढा रतिः प्रीतिः आत्मनो विशेषणम् । निर्गुणे ब्रह्मणीति ॥ २१ ॥ नन्वेतदेवातिदुर्लभमित्याशंक्योत्तमाधिकारिणः श्रवणमात्रेण भवत्यन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्धमानया भक्त्येत्यभिप्रेत्याह । सेति चतुर्भिः । सा ब्रह्मणि रतिरसंगश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः । जिज्ञासया तत्तद्विशेषबुभुत्सया पुण्यं श्रवो यशो यस्य तस्य हरेः पुण्यया कथया च ॥ २२ ॥ अर्थारामा

अर्थनिष्ठास्तामसा इंद्रियारामाः कामनिष्ठा राजसास्तैः सह या गोष्ठी तस्यामतृष्णया तेषां च ये संमता अर्थाः कामाश्च तेषामपरिग्रहेणानासक्त्या विविक्ते विजने या रुचिस्तया सा चात्मन्येव परितोषे सति स्यात्किंतु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्ते रुचिर्न कार्या न चात्मनि परितोषः कार्य इत्यर्थः ॥ २३ ॥ पारमहंस्यचर्यया उपशमादिप्रधानया वृत्त्या स्मृत्यात्महितानुसंधानेन मुकुंदाचरितमेवाग्र्यं सीधु श्रेष्ठममृतं तच्चरितस्मृतिसुखेनेत्यर्थः । मार्गांतरस्यानिंदया निरीहया योगक्षेमार्थक्रियाराहित्येन शीतोष्णादिद्वंद्वसहनेन ॥ २४ ॥ कथयेत्यत्रोक्तमपि कथनं भक्त्यांतरंगत्वेन पुनरुच्यते तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालंकारभूता ये हरेर्गुणास्तेषामभिधानेन सदसति कार्यकारणरूपे ॥ २५ ॥ भवत्वन्यत्रासंग आत्मरतिश्च ततः किमत आह । यदा निष्ठां प्राप्ता रतिर्भवति तदाचार्यवान्सन् ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वासनं सजीवस्य कोशमावरकं हृदयं पुमान्दहति । कथंभूतम् । पंचमहाभूतप्रधानम् । यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाः पंच तदात्मकम् । उत्थितः प्रज्वलितोऽग्निर्योनिमरणिमिव । यद्वा यदा रतिराचार्यानुग्रहश्च तदा ज्ञानविरागयोर्वेगेनोत्थितः साक्षात्कारो वीर्यं पुनः प्ररोहक्षमं यथा न भवत्येवं हृदयं दहति । शेषं समानम् ॥ २६ ॥ ततः किमत आह । दग्ध आशयो हृदयमुपाधिर्यस्य अतएव मुक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन आत्मनः सकाशाद्बहिर्घटाद्यंतः सुखदुःखादि नैव विचष्टे न पश्यत्येव । कुत इत्य-

मपरिग्रहेण च ॥ विविक्तरुच्या परितोष आत्मन्विनाहरेर्गुणपीयूषपानात् ॥ २३ ॥ अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुंदाचरिताग्र्यसीधुना ॥ यमैरकामैर्नियमैश्चाप्यनिंदया निरीहया द्वंद्वतितिक्षया च ॥ २४ ॥ हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृंभमाणया ॥ भक्त्या ह्यसंगः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चांजसा रतिः ॥ २५ ॥ यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान्ज्ञानविरागरंहसा ॥ दहत्यवीर्यं हृदयं जीवकोशं पंचात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥ दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरंतर्विचष्टे ॥ परात्मनोर्यद्व्यवधानं पुरस्तात्स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥ आत्मानमिंद्रियार्थं च परं यदुभयोरपि ॥ सत्याशय उपाधौ वै पुमान्पश्यति नान्यदा ॥ २८ ॥ निमित्ते सति सर्वत्र जलादावपि पूरुषः ॥ आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥ इंद्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः ॥ चेतनां हरते बुद्धेः स्तंबस्तोयमिव ह्रदात् ॥ ३० ॥ भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ॥ तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥ नातः परतरो लोके

पेक्षायां द्रष्टृदृश्यप्रतीतेरंतःकरणहेतुत्वादित्याह । परो दृश्य आत्मा द्रष्टा तयोर्यद्व्यवधानं भेदकं पूर्वमासीत्तस्य विनाशे सति यथा स्वप्ने राजाऽहमित्यारोपितं सैन्यादि द्रष्टारं दृश्यं सैन्यं च स्वप्नावस्थानाशे न पश्यति तद्वत् ॥ २७ ॥ द्रष्टृदृश्यभेदप्रतीतेरंतःकरणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति । आत्मानमिति । आत्मानं द्रष्टारमिंद्रियार्थं दृश्यमुभयोस्तयोः परं संबंधहेतुमहंकारं चाशयेऽतःकरणे सत्येव जाग्रत्स्वप्नयोः पश्यत्यन्यदा सुषुप्तौ न । तदुक्तम् । दृश्यानुरंजितं द्रष्टृदृश्यं द्रष्ट्रनुरंजितम् ॥ अहंकृत्योभयं रक्तं तन्नाशेऽद्वैततात्मनः इति ॥ २८ ॥ एकस्मिन्नात्मनि दृश्यादिभेदप्रतीतिरौपाधिकीति दृष्टांतेन स्पष्टयति । निमित्त इति । लोकेऽपि च सर्वत्र जलदर्पणादौ भेदनिमित्ते सत्येवात्मनो बिंबभूतस्य परस्य प्रतिबिंबस्य च भेदं पश्यति न तु जलाद्यभावे ॥ २९ ॥ तदेवं चतुर्भिरसंगात्मरत्योर्मोक्षहेतुत्वमुक्तमिदानीमनात्मरतेः संसारहेतुत्वमाह । इंद्रियैरिति चतुर्भिः । ध्यायतां गुणारोपेण स्मरतां पुंसामिंद्रियाणि स्मृतैर्विषयैराकृष्यंते तैश्च मन आकृष्यते विषयासक्तिं प्राप्यते । तच्च बुद्धेः सकाशात्तद्धर्मं चेतनां विचारसामर्थ्यं हरति । एतच्चाविवेकिना न लक्ष्यत इति दृष्टांतेनाह । तीरजः कुशादिस्तंबो यथा मूलैस्तोयं ह्रदादपहरति तद्वत् ॥ ३० ॥ चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसंधानं भ्रश्यति एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः ॥ ३१ ॥ एवंभूतो नाशो भवतु ततश्च किमित्यत आह । यदधि

यमधिकृत्यान्यस्य विषयस्य प्रियतमत्वम् । आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः । तस्यात्मनः स्वेनैव यो व्यतिक्रमोऽपह्नवस्तस्माद्यः स्वार्थनाशोऽतः परतरः स्वार्थनाशो नास्ति ॥३२॥ कुत इत्यत आह । अर्थस्याभिध्यानमिंद्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः ज्ञानं विज्ञानं च परोक्षापरोक्षम् । येन ध्यानेन मुख्यतां स्थावरताम् ॥३३॥ अनात्मरतेरनर्थहेतुत्वमुक्तं संगस्याप्याह । नेति । यद्वस्तु धर्मादीनां विघातकं तस्मिन्संगम् । तमः संसारम् ॥ ३४ ॥ तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रांतिं वारयति । तत्रापीति । कृतांतः कालः ॥ ३५ ॥ भयसंयुतत्वमेवाह । परे ब्रह्मादयोऽवरेऽस्मदादयो गुणक्षोभादनुपश्चाद्भवंति ईशः कालस्तेन विध्वंसिता आशिषो येषाम् ॥ ३६ ॥ यस्मादनात्मरतिरनर्थहेतुस्तत्तस्माज्जगतां जंगमानां तस्थुषां स्थावराणां च देहादिभिरात्मनाऽहंकारेण चावृतानां हृदि यश्चकास्ति प्रकाशते तमवेहि । कथं सोऽस्मीति । सोऽस्तीति पाठे स एवैकोऽस्ति ततोऽन्यदमदित्यर्थः । ननु जीवो हृदि चकास्ति नान्यस्तत्राह । क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तयांतर्यामिरूपेण यद्वा क्षेत्रवित्ते अहंममतास्पदे पातीति क्षेत्रवित्तपस्तेन रूपेण जीवस्तु पारतंत्र्यान्न पाति । ननु कर्म जीवं नियच्छति न आविः प्रत्यक्षः तर्हि बुद्धिः

पुंसः स्वार्थव्यतिक्रमः ॥ यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥ अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ॥ भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम् ॥ ३३ ॥ न कुर्यात्कर्हिचित्संगं तमस्तीव्रं तितीरिषुः ॥ धर्मार्थकाममोक्षाणां यदत्यंतविघातकम् ॥ ३४ ॥ तत्रापि मोक्ष एवार्थ आत्यंतिकतयेष्यते ॥ त्रैवर्ग्योऽर्थो यतो नित्यं कृतांतभयसंयुतः ॥ ३५ ॥ परेऽवरे च ये भावा गुणव्यतिकरादनु ॥ न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम् ॥ ३६ ॥ तत्त्वं नरेंद्र जगतामथ तस्थुषां च देहेंद्रियासुधिषणात्मभिरावृतानाम् ॥ यः क्षेत्रवित्तपतया हृदि विश्वगाविः प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥ ३७ ॥ यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुति स्रजि वाहिबुद्धिः ॥ तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ३८ ॥ यत्पादपंकजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयंति संतः ॥ तद्वन्न रिक्तमतयो यतयोऽपि रुद्धस्रोतोगणास्तमरणं भज वासुदेवम् ॥ ३९ ॥ कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरिषंति ॥ तत्त्वं हरेर्भगवतो भजनीयमंघ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४० ॥ मैत्रेय उवाच ॥ स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा ॥ दर्शितात्मगतिः सम्यक् प्रशस्योवाच

न प्रत्यक्प्रतिलोमं चकास्ति बुद्धिस्तु पराग्विषयाकारेण तर्ह्यहंकारः न विष्वग्व्याप्तत्वेन स तु परिच्छिन्नः एवंभूतो यो भगवांस्तमवेहीति ॥ ३७ ॥ स्थावरजंगमादीनां हृदि चकास्तीत्युक्तं तेषां सत्त्वं तत्संबंधादीश्वरस्य मालिन्यं च प्रसक्तं निराकुर्वन्नुद्रिक्तभक्त्या तं प्रणमति । यस्मिन्निदं विश्वं सदसदात्मतयोत्कृष्टनिकृष्टभावेन कार्यकारणभावेन वा मायैव विभाति तं प्रपद्ये । मायात्वे हेतुः । विवेकेन विधुतिर्निराकृतिर्यस्य तत् स्रजि वेति वाशब्दो दृष्टांते । नित्यमुक्तम् । यतः परिशुद्धम् । तत्कुतः विबुद्धं तत्त्वं सत्यमतएव प्रत्यूढाभिभूता कर्मभिः कलिला मलिना प्रकृतिर्येन तम् ॥ ३८ ॥ तमवेहीति ज्ञानमुपदिष्टं तस्य दुष्करत्वेन भक्तिमुपदिशति द्वाभ्याम् । यस्य पादपंकजयोः पलाशान्यंगुलयस्तेषां विलासः कांतिस्तस्य भक्त्या स्मृत्या कर्माशयमहंकाररूपं हृदयग्रंथिम् । कर्मभिरेव ग्रथितम् । रिक्ता निर्विषया मतिर्येषाम् । रुद्धः प्रत्याहृतः स्रोतोगणः इंद्रियवर्गो यैः अरणं शरणम् ॥ ३९ ॥ ननु ब्रह्मविदाप्नोति परमिति श्रुतेः कथं यतयो नोद्ग्रथयंतीत्युच्यते तत्राह । कृच्छ्र इति । अप्लवेशां न प्लवस्तरणहेतुरिट् ईशो येषां तेषां महानिह तरणे कृच्छ्रः क्लेशः ते ह्यसुखेन योगादिनेंद्रियषड्वर्गग्राहं भवार्णवं तितीर्षंति तत्तस्मात् उडुपं प्लवं दुस्तरार्णवमित्यर्थः । अर्णशब्दे

वकाराभाव आर्षः । यद्वा । दुस्तरोदकरूपं व्यसनमित्यर्थः ॥ ४० ॥ आत्ममेधसा ब्रह्मविदा दर्शिता आत्मनो गतिस्तत्त्वं यस्मै सः ॥ ४१ ॥ ब्रह्मन्निति संबोधनं प्राधान्यादेकस्य यूयमित्युक्तिः सर्वान्प्रति ॥ ४२ ॥ आत्मना देहेन सह सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयं सन्मह्यं प्रसादरूपेण दत्तमतस्तत्र मम स्वत्वाभावाद्गुरुदक्षिणार्थं किं ददे । नहि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥ निवेदनं तु तदीयस्यैव समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण तांबूलादिकमर्पयति तथा मयापि सर्वं निवेदितं स्वीकुरुतेत्याह । प्राणा इति ॥ ४४ ॥ आत्मनः स्वत्वाभावं प्रपंचयति । सैनापत्यं चेति द्वाभ्याम् ॥ ४५ ॥ वस्ते परिधत्ते अन्नमात्रं केवलं भुंजते न तु दाने स्वतंत्राः ॥ ४६ ॥ सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्य-

तं नृपः ॥ ४१ ॥ राजोवाच ॥ कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकंपिना ॥ तमापादयितुं ब्रह्मन्भगवन्यूयमागताः ॥ ४२ ॥ निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः ॥ साधूच्छिष्टं हि मे सर्वमात्मना सह किं ददे ॥ ४३ ॥ प्राणा दाराः सुता ब्रह्मन्गृहाश्च सपरिच्छदाः ॥ राज्यं बलं महीकोश इति सर्वं निवेदितम् ॥ ४४ ॥ सैनापत्यं च राज्यं च दंडनेतृत्वमेव च ॥ सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥ स्वमेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च ॥ तस्यैवानुग्रहेणान्नं भुंजते क्षत्रियादयः ॥ ४६ ॥ यैरीदृशी भगवतो गतिरात्मवादे एकांततो निगमिभिः प्रतिपादिता नः ॥ तुष्यंत्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम् ॥ ४७ ॥ मैत्रेय उवाच ॥ त आत्मयोगपतय आदिराजेन पूजिताः ॥ शीलं तदीयं शंसंतः खेऽभूवन्मिषतां नृणाम् ॥ ४८ ॥ वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया ॥ आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ४९ ॥ कर्माणि च यथाकालं यथादेशं यथाबलम् ॥ यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ॥ ५० ॥ फलं ब्रह्मणि विन्यस्य निर्विषंगः समाहितः ॥ कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५१ ॥ गृहेषु वर्तमानोऽपि स साम्राज्यश्रियान्वितः ॥ नासज्जतेंद्रियार्थेषु निरहंमतिरर्कवत् ॥ ५२ ॥ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ॥ पुत्रानुत्पादयामास पंचार्चिष्यात्मसंमतान् ॥ ५३ ॥ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् ॥ सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् ॥ ५४ ॥ गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ॥ मनो वाग्वृत्तिभिः सौम्यैर्गुणैः संरंजयन्प्रजाः ॥ ५५ ॥ राजेत्यधान्नामधेयं सोमराज इवापरः ॥ सूर्यवद्विसृजन्गृह्णन्प्रतपंश्च भुवो वसु ॥ ५६ ॥ दुर्धर्षस्तेजसेवाग्निर्महेंद्र इव दुर्जयः ॥ तिति-

मित्याह । यैरिति । आत्मवादेऽध्यात्मविचारे एकांततो निश्चयेन निगमिभिर्वेदविद्भिः ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनोद्धरणकर्मणा तुष्यंतु को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोन्युद- पात्रमंजलिं विना । मयांजलिरेव तेभ्यो बद्ध इत्यर्थः । यद्वा । विनोदपात्रमुपहासास्पदम् । प्रत्युपकारे प्रवृत्तो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥ खेऽभूवन्नाकाशमार्गेणोद्गताः ॥ ४८ ॥ धुर्यो मुख्यः अध्यात्मशिक्षया संस्थितिरेकाग्रता तयात्मन्यवस्थितः सन्मेने ॥ ४९ ॥ ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥ निर्विषंगः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिणमुदा- सीनं मन्वानोऽकरोदिति पूर्वेणैवान्वयः नासज्जतेत्युत्तरेण वा ॥ ५१ ॥ ५२ ॥ अर्चिषि भार्यायाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ सोमश्चासौ राजा च स इव भुवो वसु धनं गृह्णन्विसृजंश्चासौ सूर्यवत्

राज्ञः प्रतपनमाज्ञाकरणम् ॥ ५६ ॥ अग्निरिव दुर्धर्षः द्यौः स्वर्ग इव ॥ ५७ ॥ समुद्रो यथा गांभीर्यमेतावानिति न बुद्ध्यते तथास्याभिप्रायतो दुर्बोधः । अचलराण्मेरुरिव ॥ ५८ ॥ ५९ ॥ सर्वात्मा सर्वत्र संचारशक्तिः बलादिभिर्मातरिश्वेव भूतराट् श्रीरुद्रः ॥ ६० ॥ अजो ब्रह्मेव ॥ ६१ ॥ आत्मवत्त्वे जितेंद्रियत्वे भक्त्यादिभिः परार्थोद्यमे चात्मनैव तुल्यो निरुपमः ॥ ६२ ॥ पुंभिः सत्पुरुषैः रामः सीतापतिर्यथा सतां कर्णरंध्रेषु प्रविष्टः ॥ ६३ ॥ इति चतुर्थे टीकायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशे समाराध्य वने नित्यमभावितः ॥ विमानमधिरुह्याथ वैकुंठगतिरीर्यते ॥ १ ॥ प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः । स्वकृतोऽनुसर्गोऽन्नादिसर्गः पुरग्रामादिसर्गश्च वर्धितोऽशेषः स्वानुसर्गो येन ॥ १ ॥ निष्पादित ईश्वरादेशः प्रजापालनादिर्येन ।

त्वया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ५७ ॥ वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् ॥ समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥ ५८ ॥ धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ॥ कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ५९ ॥ मातरिश्वेव सर्वात्मा बलेन सहसौजसा ॥ अविषह्यतया देवो भगवान्भूतराडिव ॥ ६० ॥ कंदर्प इव सौंदर्ये मनस्वी मृगराडिव ॥ वात्सल्ये मनुवन्नॄणां प्रभुत्वे भगवानजः ॥ ६१ ॥ बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ॥ भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ॥ ६२ ॥ कीर्त्योर्ध्वगीतया पुंभिस्त्रैलोक्ये तत्र तत्र ह ॥ प्रविष्टः कर्णरंध्रेषु स्त्रीणां रामः सतामिव ॥ ६३ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पृथुचरिते द्वाविंशतितमोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ दृष्ट्वात्मानं प्रवयसमेकदा वैन्य आत्मवान् ॥ आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥ जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम् ॥ निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥ आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव ॥ प्रजासु विमनःस्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥ तत्राप्यदाभ्यनियमो वैखानससुसंमते ॥ आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥ ४ ॥ कंदमूलफलाहारः शुष्कपर्णाशिनः क्वचित् ॥ अब्भक्षः कतिचित्पक्षान्वायुभक्षस्ततः परम् ॥ ५ ॥ ग्रीष्मे पंचतपा वीरो वर्षास्वासारषाण्मुनिः ॥ आकंठमग्नः शिशिरे उदके स्थंडिलेशयः ॥ ६ ॥ तितिक्षुर्यतवाग्दांत ऊर्ध्वरेता जितानिलः ॥ आरिराधयिषुः कृष्णमचरत्तप उत्तमम् ॥ ७ ॥ तेन क्रमानुसिद्धेन ध्वस्तकर्मामलाशयः ॥ प्राणायामैः सन्निरुद्धषड्वर्गश्छिन्नबंधनः ॥ ८ ॥ सनत्कुमारो भगवान्यदाहाध्यात्मिकं परम् ॥ योगं तेनैव पुरुषमभजत्पुरुषर्षभः ॥ ९ ॥ भगवद्धर्मिणः साधोः श्रद्धया यततः सदा ॥ भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥ तस्यानया भगवतः परिकर्मशुद्धस-

जज्ञिवान् जातः ॥ २ ॥ आत्मजां पृथ्वीम् । विमनःसु चिंतातुरासु सदारः सभार्यः ॥३॥ अदाभ्या विघ्नैर्नाशयितुमशक्या नियमा यस्य वानप्रस्थानां सुसंमते उग्रे तपस्यारब्धः प्रवृत्तः कर्तरि क्तः । यथा स्वस्य धरामंडलस्य विजये पूर्वं महता यत्नेन प्रवृत्तस्तथेति ॥ ४ ॥ उग्रं तपो दर्शयति । कंदमूलेति त्रिभिः । क्वचित्कदाचित् ॥ ५ ॥ चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पंचानां तपः संतापो यस्य स पंचतपाः आसारं सहत इत्यासारषाट् शिशिरऋतौ स्थंडिलेशयो भूमिशयनः सर्वदा ॥ ६ ॥ ७ ॥ तेन तपसा क्रमानुसिद्धेन शनैः प्राप्तेन ध्वस्तानि कर्माणि यस्यातोऽमल आशयो

यस्य । छिन्नानि बंधनानि वासना यस्य ॥ ८ ॥ ९ ॥ १० ॥ परिकर्मणा परिचर्यया शुद्धसत्त्व आत्मा मनो यस्य तस्य ज्ञानमभूत् । कीदृशं येन निजमुपाधिं जीवकोशं हृदयग्रंथिं संशयानां
संभावनादीनां पदमाश्रयं चिच्छेद कीदृशेन अनया भक्त्या निशितेन तीक्ष्णेन कथंभूतया तस्य भगवतोऽनुसंस्मरणेनानुपूर्तिः संपूर्तिर्यस्यास्तया निशितेन ॥ ११ ॥ किंच । छिन्ना अन्यधीर्दे-
हात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिरतएव निरीहः प्राप्तासु सिद्धिषु निस्पृहः येन वयुनेन ज्ञानेनेदं संशयपदं चिच्छेद तत्तत्यजे त्यक्तवान् । तत्प्रयत्नादप्युपररामेत्यर्थः । तस्य योगसिद्धिष्वपि निस्पृ-
हत्वं युक्तमेवेत्याह । तावन्नाप्रमत्तः किंतु प्रमत्तो भवति तस्य श्रीकृष्णकथारतत्वान्न तासु लोभो जात इत्यर्थः ॥ १२ ॥ १३ ॥ देहत्यागप्रकारमाह । संपीड्येति पंचभिः । पायुं गुदं संपीड्येति
मुक्तासनं सूचितम् । संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः ॥ सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितम् । मूलाधाराद्वायुमुत्सारयन्नूर्ध्वं नयन्नाभ्यामवस्थाप्य ततः कोष्ठेष्ववस्थाप्यायूयुज-
दित्युत्तरेणान्वयः । कोष्ठान्येवाह । हृदादीनां द्वंद्वैक्यम् । शीर्षं भ्रूमध्यं तस्मिन् ॥ १४ ॥ तं वायुम् पाठांतरे एवमसून्प्राणानुत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरंध्रे आवेश्य ततो देहारंभकपंचभूतानि
समष्टिभूते विलापितवांस्तदाह । वायुं वायावयूयुजदेकीकृतवान् कायं देहगतं कठिनांशं क्षितौ ॥ १५ ॥ खानींद्रियच्छिद्राणि द्रवांशं तोये । तदेवं देहं प्रविलाप्याद्वितीयात्मप्रतिपत्त्यर्थं महाभूता-

त्वात्मनस्तदनुसंस्मरणानुपूर्त्या ॥ ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ॥ ११ ॥ छिन्नान्यधीरधिगतात्मगतिर्निरी-
हस्तत्तत्यजेऽच्छिनदिदं वयुनेन येन ॥ तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥ एवं स वीरप्रवरः संयोज्यात्मा-
नमात्मनि ॥ ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम् ॥ १३ ॥ संपीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयन्शनैः ॥ नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरः-
कंठशीर्षणि ॥ १४ ॥ उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निस्पृहः ॥ वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥ खान्याकाशे द्रवं
तोये यथास्थानं विभागशः ॥ क्षितिमंभसि तत्तेजस्यदो वायौ नभस्यमुम् ॥ १६ ॥ इंद्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम् ॥ भूतादिनामून्यु-
त्क्षिप्य महत्यात्मनि संदधे ॥ १७ ॥ तं सर्वगुणविन्यासं जीवे मायामये न्यधात् ॥ तं चानुशयमात्मस्थमसावनुशयी पुमान् ॥ ज्ञानवैराग्यवीर्येण
स्वरूपस्थोऽजहात्प्रभुः ॥ १८ ॥ अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ॥ सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥ अतीव भर्तुर्व्र-

नामपि लयमाह । क्षितिमंभस्येकीकृतवान् । तदंभस्तेजसि अदस्तेजो वायौ अमुं वायुं नभसि ॥ १६ ॥ तदेवं तामसाहंकारकार्यस्याकाशपर्यंतस्य लयमुक्त्वा सात्त्विकराजसाहंकारकार्याणां लयमाह ।
इंद्रियेष्विति इंद्रियेषु मन इति देवानामप्युपलक्षणम् । सविकल्पकज्ञाने मनस इंद्रियैराकर्षणात्तेषु लयाभिधानं न तु कार्यत्वात् । तदुक्तं गीतासु । इंद्रियाणां हि चरतां यन्मनोऽनुविधीयत इति ।
अत्र च इंद्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन इति इंद्रियेषु नभ इति पाठेऽप्ययमर्थः । भट्टादीनां मते नभश्चाक्षुषं केषांचिन्मानसम् । आनुमानिकत्वमनेऽपींद्रियव्यापारोऽस्त्येव नभोगुणश्च शब्दः
श्रोत्रग्राह्योऽत इंद्रियग्राह्यत्वादिंद्रियेषु नभो विलापितमिति तानींद्रियाणि यथोद्भवमुद्भवो वृत्तिलाभः स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः । यद्वा तन्मात्रकार्याण्येवेंद्रियाणि
मनोऽप्यपंचीकृततन्मात्रकार्यम् । अहंकारिकत्वाभिधानं तदधीनत्वविवक्षयेत्यविरोधः भूतादिनाहंकारेण प्रागवशिष्टनभःसहितानींद्रियाण्युत्कृष्य परतो नीत्वा भूतादौ क्षिप्त्वा तेन सह महत्तत्त्वे संदध
इत्यर्थः ॥ १७ ॥ सर्वेषां गुणानां कार्याणां विन्यासः स्थितिर्यस्मिंस्तं महांतं मायामये मायोपाधिप्रधाने जीवे पंचानुशयमुपाधिं यः पूर्वमनुशयी पुमान् जीवोऽसौ पृथुर्ब्रह्मणि स्थितः सन्नजहा-
दित्यर्थः ॥ १८ ॥ वनप्रवेशमारभ्य राज्ञीकथामाह । अर्चिर्नामेति चतुर्भिः । अनुगतानुजगाम अतदर्हा तदपि नार्हति या । किं पद्भ्यां भुवः स्पर्शनमिति यत् ॥ १९ ॥ भर्तुर्व्रतं यद्भूमिशयनादि

तस्मिन् धर्मे या निष्ठा तया ऋषीणामियमार्षी देहयात्रा कंदमूलादिवृत्तिस्तया चार्तिं दुःखं न आप । तत्र हेतुः । प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृतिर्यस्याः ॥ २० ॥ पृथिव्या पत्युः दुहितृत्वं तु तस्या देवतारूपेण । विपन्नं नष्टमखिलं चेतनादिकं यस्मिंस्तथाभूतं देहमालक्ष्य तं देहं चितामारोपयत् ॥ २१ ॥ कृत्यं तत्कालोचितं विधाय हृदिन्या जले आप्लुता स्नाता सती भर्तुरुदकं दत्त्वा दिव्यंतरिक्षे स्थितान्देवान्नत्वा वह्निं त्रिःप्रदक्षिणीकृत्य ॥ २२ ॥ देवैः महिताः ॥ २३ ॥ गृणंति स्म भाषंत ॥ २४ ॥ २५ ॥ अमर्तानां दुर्विभाव्येन कर्तुमशक्येन कर्मणा ॥ २६ ॥

तद्धर्मनिष्ठया शुश्रूषया चारषदेहयात्रया ॥ नाविंदतार्तिं परिकर्शितापि सा प्रेयस्करस्पर्शनमाननिर्वृतिः ॥ २० ॥ देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ॥ आलक्ष्य किंचिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥ विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः ॥ नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादौ ॥ २२ ॥ विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ॥ तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥ कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि ॥ नदत्स्वमरतूर्येषु गृणंति स्म परस्परम् ॥ २४ ॥ देव्य ऊचुः ॥ अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ॥ सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव ॥ २५ ॥ सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती ॥ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥ तेषां दुरापं किंत्वन्यन्मर्त्यानां भगवत्पदम् ॥ भुवि लोलायुषो ये वै नैष्कर्म्यं साधयंत्युत ॥ २७ ॥ स वंचितो बतात्मध्रुक् कृच्छ्रेण महता भुवि ॥ लब्ध्वाऽपवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥ मैत्रेय उवाच ॥ स्तुवतीष्वमरस्त्रीषु पतिलोकं गता वधूः ॥ यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः ॥ २९ ॥ इत्थं भूतानुभावोऽसौ पृथुः स भगवत्तमः ॥ कीर्तितं तस्य चरितमुद्दामचरितस्य ते ॥ ३० ॥ य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् ॥ श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात् ॥ ३१ ॥ ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ॥ वैश्यः पठन्विट्पतिः स्याच्छूद्रः सत्तमतामियात् ॥ ३२ ॥ त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृता ॥ अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पंडितः ॥ इदं स्वस्त्ययनं पुंसाममंगल्यनिवारणम् ॥ ३४ ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ धर्मार्थकाममोक्षाणां सम्यक्सिद्धिमभीप्सुभिः ॥ श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥ विजयाभिमुखो राजा श्रुत्वैतदभियाति यान् ॥ बलिं तस्मै हरंत्यग्रे राजानः पृथवे यथा ॥ ३६ ॥ मुक्तान्यसंगो भगवत्यमलां भक्तिमुद्वहन् ॥ वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत्पठेत् ॥ ३७ ॥ वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् ॥ अस्मिन्कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात्

भगवान्पद्यते गम्यतेऽनेनेति तथा तन्नैष्कर्म्यं ज्ञानं ये चंचलायुषोऽपि साधयंति तेषामन्यद्देवादिपदं किमु दुर्लभं न किंचिदित्यर्थः ॥ २७ ॥ अभक्तं शोचंति । स वंचित इति । यत आत्मने द्रुह्यति योऽपवर्गसाधनं मानुष्यं लब्ध्वापि विषयेष्वासक्तिं याति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ विशां पश्वादीनां वैश्यादीनां वा पतिः स्यात् । शूद्रः शृण्वन्निति शेषः तस्य पाठानधिकारात् ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ यद्यपि बहूनि फलानि भवंति तथापि मुक्तान्यसंग एव श्रवणादि कुर्यात् ॥ ३७ ॥ महतो भगवतो माहात्म्यस्य सूचकम् । पार्थवीं पृथुसंबंधिनीम् । पार्थिवीमिति

वा पाठः ॥ ३८ ॥ प्रथयन्कीर्तयन् भवसिंधौ पोतः पादो यस्य ॥ ३९ ॥ इति चतुर्थे टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ एकादशभिरध्यायैः पृथोश्चरितमीरितम् ॥ प्रचेतसामथाष्टाभिस्तन्मध्ये पंचभिः पितुः ॥ १ ॥ चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ॥ प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ २ ॥ अधिराज आसीदित्यर्थः । यवीयोभ्यः कनिष्ठेभ्यः काष्ठा दिशः ॥ १ ॥ तुर्यां चतुर्थीमुत्तरां दिशम् ॥ २ ॥ शक्राल्लब्ध्वा पृथोरश्वमेधेऽश्वविजयावसरे ॥ ३ ॥ अपत्यत्रयमेवाह । पावक इति । पुरा यः शापस्तस्मान्मनुष्येषूत्पन्नाः संतो योगगतिमग्नित्वं प्राप्ता ॥ ४ ॥ नभस्वत्यामन्यस्यां भार्यायाम् । अंतर्धानस्य विशेषणं य इति एतेन शक्रादंतर्धानगतिलाभे कारणमुक्तम् ॥ ५ ॥ स चांतर्धानो राज्ञां वृत्तिं करादानादिभिर्दारुणां परपीडात्मिकां मन्यमानो विससर्ज ह ॥ ६ ॥ हंति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम् । कुशलं पुण्यं तद्रूपेण समाधिना ॥ ७ ॥ ८ ॥ हाविर्धानिर्हविर्धानस्य पुत्रयोगेषु च प्राणायामादिषु ॥ ९ ॥ क्रियाकांडनिष्णातत्वमाह ।

॥ ३८ ॥ अनुदिनमिदमादरेण शृण्वन्पृथुचरितं प्रथयन्विमुक्तसंगः ॥ भगवति भवसिंधुपोतपादे स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे त्रयोविंशोऽध्यायः ॥ २३ ॥ मैत्रेय उवाच ॥ विजिताश्वोऽधिराजासीत्पृथुपुत्रः पृथुश्रवाः ॥ यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥ हर्यक्षायादिशत्प्राचीं धूम्रकेशाय दक्षिणाम् ॥ प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥ अंतर्धानगतिं शक्राल्लब्ध्वांतर्धानसंज्ञितः ॥ अपत्यत्रयमाधत्त शिखंडिन्यां सुसंमतम् ॥ ३ ॥ पावकः पवमानश्च शुचिरित्यग्नयः पुरा ॥ वशिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥ अंतर्धानो नभस्वत्यां हविर्धानमविंदत ॥ य इंद्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥ राज्ञां वृत्तिं करादानदंडशुल्कादिदारुणाम् ॥ मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥ तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् ॥ यजंस्तल्लोकतामाप कुशलेन समाधिना ॥ ७ ॥ हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ॥ बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥ बर्हिषत्सुमहाभागो हाविर्धानिः प्रजापतिः ॥ क्रियाकांडेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥ यस्येदं देवयजनमनुयज्ञं वितन्वतः ॥ प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥१०॥ सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ॥ यां वीक्ष्य चारुसर्वांगीं किशोरीं सुष्ठ्वलंकृताम् ॥ परिक्रमंतीमुद्वाहे चकमेऽग्निः शुकीमिव ॥११॥ विबुधासुरगंधर्वमुनिसिद्धनरोरगाः ॥ विजिताः सूर्यया दिक्षु क्वणयंत्यैव नूपुरैः ॥१२॥ प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् ॥ तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः ॥१३॥ पित्राऽऽदिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ॥ दशवर्षसहस्राणि तपसार्चंस्तपस्पतिम् ॥१४॥ यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ॥

यस्येति । इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्रैको यज्ञः कृतस्तत्समीप एव यज्ञांतरं कुर्वतः सतः अतएव प्राचीनबर्हिरित्युच्यते ॥ १० ॥ समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नाम किशोरीं बालां परिक्रमंतीं प्रदक्षिणं गच्छंतीम् । शुकीमिवेति एवं ह्याख्यायते । सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसंतप्तोऽभूत् तं च तद्भार्या स्वाहानाम सप्तर्षिभार्यारूपधारिणी सती रमयामास । रमयित्वा च तद्रेतः शुकीरूपेण शरस्तंबे निधायागच्छत् तां यथा सप्तर्षिभार्याभ्रांत्याऽग्निः कामितवांस्तद्वदिति स्रुचीमिवेति पाठे स्तोकघृतधारामिवेत्यर्थः ॥ ११ ॥ सूर्यया नवोढयैव विबुधादयो विजिता अभिभूतास्तच्च नूपुरैः पादौ क्वणयंत्यैव तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥ तुल्यं नाम व्रतमाचारश्च येषाम् । धर्मस्नाता धर्मपारगाः ॥ १३ ॥ तपसा तपसां पतिं हरिमर्चन्नर्चया-

माखुः ॥ १४ ॥ १५ ॥ १६ ॥ मुनयोऽपि संगत्यागेनात्मुमिष्टं यं दध्युरेव केवलं न तु प्रापुः । तेन शिवेन ॥ १७ ॥ ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशंक्याह । आत्मारामोऽपि लोक रचनायाः पालनाय ॥ १८ ॥ गुर्वाज्ञाकारिणां शिवदर्शनं स्वत एव भवतीत्याशयेनाह । प्रचेतस इति ॥ १९ ॥ समुद्रमुपसमुद्रात्किंचिन्न्यूनम् । उपोऽधिके चेति कर्मप्रवचनीयः । प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन् ॥ २० ॥ नीलोत्पलादीनामाकरं जन्मस्थानं उत्पलांभोजकल्हाराणि रात्रिदिनसंध्याविकासीनि इंदीवरं नीलोत्पलम् । तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थम् । हंसादिभिर्निकूजितम् ॥ २१ ॥ मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लतांघ्रिपा यस्मिन् । पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् ॥ २२ ॥ तत्र मृदंगपणवादिवाद्यमनु पश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गांधर्वं गानमाकर्ण्य विस्मयं प्राप्ताः पाठांतरे मृदंगपणवादि अवन् रक्षन् तेषां ध्वनिमनिरस्कुर्वदित्यर्थः ॥ २३ ॥ ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रण-

तद्ध्यायंतो जपंतश्च पूजयंतश्च संयताः ॥१५॥ विदुर उवाच ॥ प्रचेतसां गिरित्रेण यथासीत्पथि संगमः ॥ यदुताह हरः प्रीतस्तन्नो ब्रह्मन्वदार्थवत् ॥ १६ ॥ संगमः खलु विप्रर्षे शिवेनेह शरीरिणाम् ॥ दुर्लभो मुनयो दध्युरसंगाद्यमभीप्सितम् ॥ १७ ॥ आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे ॥ शक्त्या युक्तो विचरति घोरया भगवान्भवः ॥ १८ ॥ मैत्रेय उवाच ॥ प्रचेतसः पितुर्वाक्यं शिरसाऽऽदाय साधवः ॥ दिशं प्रतीचीं प्रययुस्तपस्याहृत-चेतसः ॥ १९ ॥ समुद्रमुपविस्तीर्णमपश्यन्सुमहत्सरः ॥ महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥ नीलरक्तोत्पलांभोजकह्लारेंदीवराकरम् ॥ हंससारसचक्राह्वकारंडवनिकूजितम् ॥ २१ ॥ मत्तभ्रमरसौस्वर्यहृष्टरोमलतांऽघ्रिपम् ॥ पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥ तत्र गांधर्व-माकर्ण्य दिव्यमार्गमनोहरम् ॥ विसिस्म्यू राजपुत्रास्ते मृदंगपणवाद्यनु ॥ २३ ॥ तर्ह्येव सरसस्तस्मान्निष्क्रामंतं महानुगम् ॥ उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥ तप्तहेमनिकायाभं शितिकंठं त्रिलोचनम् ॥ प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥ स तान्प्रपन्नार्तिहरो भगवान्धर्मवत्सलः ॥ धर्मज्ञान् शीलसंपन्नान्प्रीतः प्रीतानुवाच ह ॥ २६ ॥ श्रीरुद्र उवाच ॥ यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ॥ अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥ यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ॥ भगवंतं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचितामेति ततः परं हि माम् ॥ अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं विबुधाः कलात्यये ॥ २९ ॥ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा ॥ न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥ इदं विविक्तं जप्तव्यं पवित्रं मंगलं परम् ॥ निःश्रेयसकरं

मुरित्युत्तरेणान्वयः ॥ २४ ॥ तप्तहेमराशिसदृशकांतिम् । शितिर्नीलः कंठो यस्य तम् ॥ २५ ॥ २६ ॥ वेदिषदो बर्हिषदः चिकीर्षितं भगवदाराधनं विदितम् ॥ २७ ॥ अनुग्रहकारणमाह । यः साक्षाद्वासुदेवं प्रपन्नः स हि मे प्रियः कथंभूतम् । रंहसः सूक्ष्मात्त्रिगुणात्प्रधानाज्जीवसंज्ञितात्पुरुषाच्च परम् । प्रकृतिपुरुषयोर्नियंतारमित्यर्थः ॥ २८ ॥ तत्किं तस्य महत्तमत्वादित्याह । स्वधर्मनिष्ठः पुमान्बहुभिर्जन्मभिर्विरिंचतां प्राप्नोति ततोऽपि पुण्यातिशयेन मामेति भागवतस्त्वथ देहांतेऽव्याकृतं प्रपंचातीतं वैष्णवं पदमेति । यथाहं रुद्रो भूत्वाऽधिकारिकवद्वर्तमानो विबुधा देवाश्चाधिकारिकाः कलात्ययेऽधिकारांते लिंगभंगे सत्येष्यंति ॥ २९ ॥ अथ भागवतत्वाद्यूयं मे प्रियाः स्थ । भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह । मदन्यो भागवतानां च प्रेयान्नास्ति ॥ ३० ॥ अत इदं जप्त-

व्यम् । श्रूयतामिति विविक्तमसंकीर्णं यथा भवति ॥ ३१ ॥ सृष्ट्यादौ ब्रह्मणा सृष्ट्वा पुत्रेभ्यः प्रोक्तमिष्टदम् ॥ स्तोत्रं प्राह प्रचेतोभ्यः कृपया भगवान् शिवः ॥ ३२ ॥ ते जितं तवोत्कर्षः आत्मविद्धुर्याणां स्वस्तये शोभनसत्तायै स्वानंदलाभायेत्यर्थः । अतो मे स्वस्तिः स्वानंदसत्तास्तु । ननु ममोत्कर्षो मदर्थ एव किं न स्यात्तत्राह । भवता राधसा स्वानंदरूपेण राद्धं सिद्धम् । त्वं परमानंदरूपेणैव नित्यं स्थित इत्यर्थः । अत एवंभूतायात्मने तुभ्यं नमः सर्वस्मै सर्वरूपाय च ॥ ३३ ॥ सर्वरूपत्वं प्रपंचयन्प्रणमति । सार्धैर्दशभिः । पंकजं लोकात्मकं नाभौ यस्य तस्मै कारणात्मने नमः । कारणत्वादेव सृज्यानां प्राणिनां ये उपाधयो भूतानि सूक्ष्माणि तन्मात्राणींद्रियाणि च तेषामात्मने नियंत्रे अंतःकरणचतुष्टयाधिष्ठातृत्वेन प्रणमति । चतुर्भिः श्लोकार्धैः । वासुदेवाय चित्ताधिष्ठात्रे कूटस्थाय निर्विकाराय चित्तस्यैकरूपत्वात् ॥ ३४ ॥ संकर्षणायाहंकाराधिष्ठात्रे सूक्ष्मायाव्यक्ताय दुरंतायानंताय अंतकाय मुखाग्निना लोकदाहकाय विश्वस्य प्रकृष्टो बोधो यस्मात् । अंतरात्मने बुद्ध्यधिष्ठात्रे ॥ ३५ ॥ हृषीकाणामीशं यदिंद्रियं मनस्तदात्मने सूर्यरूपेण प्रणमति । परमहंसाय सूर्याय पूर्णाय तेजसा विश्वव्यापिने निभृतात्मने क्षयवृद्धिशून्याय ॥ ३६ ॥ स्वर्गा-

चापि श्रूयतां तद्वदामि वः ॥ ३१ ॥ मैत्रेय उवाच ॥ इत्यनुक्रोशहृदयो भगवानाह तान् शिवः ॥ बद्धांजलीन्राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥
श्रीरुद्र उवाच ॥ जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे ॥ भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥ नमः पंकजनाभाय भूतसूक्ष्मेंद्रियात्मने ॥ वासुदेवाय शांताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥ संकर्षणाय सूक्ष्माय दुरंतायांतकाय च ॥ नमो विश्वप्रबोधाय प्रद्युम्नायांतरात्मने ॥ ३५ ॥ नमो नमोऽनिरुद्धाय हृषीकेशेंद्रियात्मने ॥ नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥ स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः ॥ नमो हिरण्यवीर्याय चातुर्होत्राय तंतवे ॥ ३७ ॥ नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे ॥ तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे ॥ नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥ अर्थलिंगाय नभसे नमोऽन्तर्बहिरात्मने ॥ नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ॥ नमो धर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥ नमस्त आशिषामीश मनवे कारणात्मने ॥ नमो धर्माय बृहते कृष्णायाकुंठमेधसे ॥ पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥ ४२ ॥ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ॥

पवर्गयोर्द्वाराय शुचिन्यंतःकरणे निषीदतीति शुचिषदिति श्रुतेः । हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय चातुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः । कृतस्तंतवे तद्विस्तारकाय ॥ ३७ ॥ सोमत्वमाह । ऊर्जे पितॄणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय स हि पितॄणां देवानां चान्नम् । एवंरूपाय त्रय्याः पतये हरये नमः । सूर्याग्निसोमत्वेनैव तेजस्त्वमुक्तम् । जलत्वमाह । सर्वरसात्मने जलरूपाय ॥ ३८ ॥ विशेषाय पृथ्वीरूपाय सर्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय च त्रैलोक्यपालाय वायवे सहआदिरूपाय स हि प्राणरूपेण त्रैलोक्यं पालयति सहआदिधर्मा च ॥ ३९ ॥ नभसे आकाशायार्थानां लिंगाय ज्ञापकाय शब्दगुणत्वात् अंतर्बहिरात्मनेऽन्तर्बहिर्व्यवहारालंबनाय एवं महाभूतरूपत्वमुक्तम् । अमुष्मै स्वर्गाय भूरिवर्चसे । एष वै ज्योतिष्मंतं पुण्यं लोकं यातीति श्रुतेः ॥ ४० ॥ प्रवृत्ताय च निवृत्ताय च कर्मणे पितृदेवाय यथाक्रमं पितृदेवप्राप्तिफलाय अधर्मफलरूपाय च मृत्यवे ॥ ४१ ॥ हे ईश! आशिषां कारणात्मने सर्वकर्मफलदात्रे मनवे सर्वज्ञाय मंत्रात्मकायेति वा विष्णुत्वेन प्रणमति बृहते धर्माय परमधर्मात्मने कृष्णाय ॥ ४२ ॥ रुद्ररूपेण प्रणमति । मीढुषे रुद्राय अहंकृतमहंकारस्तदात्मने स च कर्तृकरण-

कर्मशक्तित्रयसमेतस्तस्मै ब्रह्मत्वेन प्रणमति । चेतो ज्ञानमाकृतिः क्रिया तद्रूपाय वाचो विविधा भूतिः सृष्टिर्यस्मात्तस्मै ॥ ४३ ॥ एवं नमस्कृत्य दर्शनं प्रार्थयते । दर्शनमिति नवभिः । भागवतैः सत्कृतं दर्शनं देहीत्यस्य विवरणं रूपमित्यादि प्रदर्शयेत्यंतम् । स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः । सर्वेषामिंद्रियाणां ये गुणा विषयास्तेषामंजनं व्यंजकम् । सर्वेंद्रियविषयविषयिरूपमित्यर्थः । सर्वेंद्रियाणि स्वगुणैरनक्ति रंजयतीति वा ॥ ४४ ॥ स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामम् । सर्वेषां सौंदर्याणां संग्रहो यस्मिन् चारव आयताश्चत्वारो बाहवो यस्मिन् । सुजातं यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥ ४५ ॥ पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदक्षिणी यस्मिन् । सुकपोलमास्यं यस्मिन् । समौ कर्णौ विभूषणं यस्य कुंडलयोरग्रे वर्त्यमानत्वात् ॥ ४६ ॥ प्रीत्या प्रहसिताविवापांगौ यस्मिन् ॥ ४७ ॥ स्फुरंति किरीटादीनि यस्मिन् शंखादिमत् उत्तमर्धिलक्ष्मीः । यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्ति तत् ॥ ४८ ॥ सौभगयुता ग्रीवा येन सिंहस्य स्कंधे परितः प्रसरंतः केसरा एव त्विषस्तादृशीः सवतस्त्विषो बिभ्रचासौ सौभगग्रीवः कौस्तुभो यस्मिन् । यद्वा सिंहस्येव स्कंधौ तयोस्त्विषः कुंडलहारादिदीप्तीर्बिभ्रदिति पृथग्वि-

येन आकृतिरूपाय नमो वाचोविभूतये ॥ ४३ ॥ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ रूपं प्रियतमं स्वानां सर्वेंद्रियगुणांजनम् ॥ ४४ ॥ स्निग्धप्रावृड्घनश्यामं सर्वसौंदर्यसंग्रहम् ॥ चार्वायतचतुर्बाहु सुजातरुचिराननम् ॥ ४५ ॥ पद्मकोशपलाशाक्षं सुंदरभ्रु सुनासिकम् ॥ सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ ४६ ॥ प्रीतिप्रहसितापांगमलकैरूपशोभितम् ॥ लसत्पंकजकिंजल्कदुकूलं मृष्टकुंडलम् ॥ ४७ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ शंखचक्रगदापद्ममालामण्युत्तमर्धिमत् ॥ ४८ ॥ सिंहस्कंधत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् ॥ श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥ ४९ ॥ पूररेचकसंविग्नवलिवल्गुदलोदरम् ॥ प्रतिसंक्रामयद्विश्वं नाभ्यावर्तगभीरया ॥ ५० ॥ श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ॥ समचार्वंघ्रिजंघोरुनिम्नजानुसुदर्शनम् ॥ ५१ ॥ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोंतरघं विधुन्वता ॥ प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ ५२ ॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ॥ यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥ भवान्भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् ॥ स्वाराज्यस्याप्यभिमत एकांतेनात्मविद्गतिः ॥ ५४ ॥ तं दुराराध्यमाराध्य सतामपि दुरापया ॥ एकांतभक्त्या को

शेषणं सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिन् श्रिया हेतुभूतयाक्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखांकितो निकषणपाषाणो येन तादृशेनोरसा उल्लसच्छोभमानम् ॥ ४९ ॥ श्वासोच्छ्वासाभ्यां संविग्नाश्चंचला वलयास्ताभिर्वल्गु सुंदरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिन् प्रतिसंक्रामयद्यतो निर्गतं तेनैव द्वारेण पुनः प्रवेशयदिव ॥ ५० ॥ श्यामश्रोण्याधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अंघ्री च जंघे च उरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिरेतैः शोभनं दर्शनं यस्य समाश्चारवोंघ्यादयो यस्मिन् निम्ने जानुनी यस्मिन् शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥ पदा दीपस्थानीयेन यद्वा एवंभूतेन पदोपलक्षितं रूपं पदं शरणं प्रदर्शयेत्यर्थः । शरदि यत्पद्मं तस्य पलाशं तद्वद्रोचिर्यस्य तेन नखदीप्तिभिरंतर्भवमघमज्ञानं विधुन्वता स्वीयं पदं शरणं प्रदर्शय अपास्तं प्रह्लादादीनां साध्वसं येन तत् हे गुरो ! यतस्त्वमेव तमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ॥ ५२ ॥ अतिदुर्लभमिदं मया प्रार्थितमिति स्तौतैवाह । एतद्रूपमनुध्येयं ध्यानार्हमेव न तु प्रत्यक्षतः प्राप्यमित्यर्थः ॥ ५३ ॥ तर्हि किं केनापि न प्राप्यते तत्राह । भवानिति । दुर्लभत्वमेवाह । स्वर्गे राज्यं यस्य तस्याप्यभिमतः स्पृहणीयः । किंच । एकांतेन य

आत्मवित्तस्यापि गतिर्गम्यः ॥ ५४ ॥ अतस्त्वद्व्यतिरेकेण न किंचिद्वांछामीत्याह । तं त्वामेकांतभक्त्याराध्य बहिः स्वर्गादि सुखम् ॥ ५५ ॥ तत्र हेतुः । यत्र पादमूले शरणं प्रविष्टं कृतांतः कालो ममायं वश्य इति नाभिमानं करोति । किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहस्ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ५६ ॥ त्वत्पादमूले प्रविष्टस्य कृतांतभयाभावः कियानयं लाभो यतस्त्वद्भक्तसंग एव सकलपुरुषार्थश्रेणिशिरसि नरीनर्तीत्याह । भगवतस्तव संगिनां संगस्य क्षणार्धेनापि स्वर्गं न तुलये समं न गणयामि न चापुनर्भवं मोक्षं मर्त्यानामाशिषो राज्याद्याः किमुत ॥ ५७ ॥ अथ अतो हेतोरनघावघहरावंघ्री यस्य तस्य तव कीर्तिर्यशस्तीर्थं गंगा तयोः क्रमेणांतर्बहिः स्नानाभ्यां विधूतः पाप्मा येषाम् । अतएव भूतेष्वनुक्रोशः कृपा सुसत्त्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां संगमोऽस्माकं स्यात् एष एव नस्तवानुग्रहः ॥ ५८ ॥ तत्त्वज्ञानं च त्वद्भक्तसंगादेव भवतीत्याह । न यस्येति । येषां सतां भक्तियोगेनानुगृहीतं शुद्धं सद्यस्य चित्तं बाह्यार्थविक्षिप्तं न भवति तमोरूपायां गुहायां च नाविशल्लयं न प्राप तत्र तदा मुनिस्तव गतिं तत्त्वं पश्यति ॥ ५९ ॥ कीदृशं तत्त्वं तदाह । यत्रेति ॥ ६० ॥ जगत उपादान-

वांछेत्पादमूलं विना बहिः ॥ ५५ ॥ यत्र निर्विष्टमरणं कृतांतो नाभिमन्यते ॥ विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ॥ भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥ अथानघांघ्रेस्तव कीर्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनाम् ॥ भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥ ५८ ॥ न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ॥ यद्भक्तियोगानुगृहीतमंजसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ५९ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ॥ तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥ यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपयत्यविक्रियः ॥ यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतंत्रं भगवन्प्रतीमहि ॥ ६१ ॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजंति सिद्धये ॥ भूतेंद्रियांतःकरणोपलक्षितं वेदे च तंत्रे च त एव कोविदाः ॥ ६२ ॥ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते ॥ महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन ॥ अथो विदुस्तं पुरुषं संतमंतर्भुंक्ते हृषीकैर्मधु सारघं यः ॥ ६४ ॥ स एष लोकानतिचंडवेगो विकर्षसि त्वं खलु कालयानः ॥

त्वेन तत्त्वं लक्षितं निमित्तत्वेनापि तदेव लक्षयन्नाह । य इदं विश्वं सदिव परमार्थमिव माययाऽसृजत् । कथंभूतया । यया भेदबुद्धिरन्येषां भवति तया आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया । तं त्वां निरस्तभेदं प्रतीमहि जानीमः ॥ ६१ ॥ यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि प्राग्युक्तं साकारमिदं तव रूपं ये यजंति त एव वेदागमतत्त्वज्ञा इत्याह । क्रियाकलापैर्यैकर्मयोगिनः पूजयंति त एव कोविदाः मत्वैतदनादृत्य केवलज्ञाने प्रवृत्ताः । तंत्रे आगमे । कथंभूतमिदम् । भूतेंद्रियांतःकरणैस्स्वतंत्रैर्यदुपलक्ष्यते नियंतृरूपं तत् ॥ ६२ ॥ नविभिन्ने मयि भेदं कुर्वतः संतः कथं ते कोविदाः नहि तैर्भेदः क्रियते त्वयैव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह । त्वमिति आद्यस्त्वमेक एव सुप्ता मायाख्या शक्तिर्यस्य पश्चात्तया शक्त्या रजःसत्त्वतमसां द्वंद्वैक्यं यतो रज-आदेः महानहंकारः खं च मरुदग्निर्वार्धराश्च । वारुदकम् । सुराश्चर्षयश्च भूतगणाश्चैवमिदं जगद्यतो भवति तद्विभिद्यत इत्यन्वयः ॥ ६३ ॥ एतदुपपादयति । सृष्टमिति । जरायुजांडजस्वेदजोद्भिज्ज-रूपेण चतुर्विधं स्वांशेन प्रविष्टः । अथो इति हेतोः पुरस्यांतः संतमंशं चिदाभासं पुरि शयनात्पुरुषं विदुः । तर्हि किमांश्रमेव संसारिणं विदुर्नेत्याह । सरघा मधुमक्षिकास्ताभिः सृष्टं मध्विव

क्षुल्लकं विषयसुखमविद्यावृतः सन्यो भुंक्ते तं जीवं विदुः । तथा च श्रुतिः । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्या अभिचाकशीति । निर्णीतं च गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यत्र ॥६४॥ तव तु सर्वनियंतुः कुतः संसार इत्याह । यः स्वशक्त्येदं सृष्टवानस्य एष त्वं खलु भूतैरेव भूतानि मेघपंक्तीर्वायुरिव कालयन्विचालयँल्लोकान्विकर्षसि संहरसि अनुमेयतत्त्वो लक्ष्यस्वरूपः ॥ ६५ ॥ विकर्षणप्रकारमाह । प्रमत्तमिति । इतिकृत्यमेवमेवमिदं कर्तव्यमिति चिंतयोच्चैः प्रमत्तम् । तत्र हेतुः । विषयेषु लालसमतिकामुकम् । प्राप्तेऽपि विषये प्रवृद्धलाभम् । अंतकस्त्वमभिपद्यसे आक्रमसि । क्षुधा लेलिहानो जिह्वयौष्ठप्रांतौ स्पृशन्सर्पो मूषकमिव ॥ ६६ ॥ अतः कस्तव पदाब्जं त्यजेत्पंडितश्चेत् । कथंभूतः । यस्तवावमानोऽनादरस्तेन व्ययमानं केततं शरीरं यस्य सः यदस्माकं

भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥ प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥ ६६ ॥ कस्त्वत्पदाब्जं विजहाति पंडितो यस्तेऽवमानव्ययमानकेतनः ॥ विशंकयाऽस्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥ अथ त्वमसि नो ब्रह्मन्परमात्मन्विपश्चिताम् ॥ विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६८ ॥ इदं जपत भद्रं वो विशुद्धा नृपनंदनाः ॥ स्वधर्ममनुतिष्ठंतो भगवत्यर्पिताशयाः ॥ ६९ ॥ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ॥ पूजयध्वं गृणंतश्च ध्यायंतश्चासकृद्धरिम् ॥ ७० ॥ योगादेशमुपासाद्य धारयंतो मुनिव्रताः ॥ समाहितधियः सर्व एतदभ्यसतादृताः ॥ ७१ ॥ इदमाह पुराऽस्माकं भगवान्विश्वसृक्पतिः ॥ भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७२ ॥ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ॥ अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥ ७३ ॥ अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ॥ अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७४ ॥ श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ॥ सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७५ ॥ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ॥ अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७६ ॥ विंदते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् ॥ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥ इदं यः कल्य उत्थाय प्रांजलिः श्रद्धयाऽन्वितः ॥ शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबंधनैः ॥ ७८ ॥ गीतं मयेदं नरदेवनंदनाः परस्य पुंसः परमात्मनः स्तवम् ॥ जपंत एकाग्रधियस्तपो महच्चरध्वमंते तत आप्स्यथेप्सितम् ॥ ७९ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे रुद्रगीतं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ मैत्रेय उवाच ॥

गुरुर्ब्रह्मार्चतिस्मेति सर्वेषां स्तोतॄणां वाक्यम् । विशंकया नाशशंकया । विनोपपत्तिमिति दृढविश्वासेन मनवश्चतुर्दशार्चंति स्म ॥ ६७ ॥ उपसंहरति । अथेति । रुद्रभयेन ध्वस्तं अतो न कुतश्चिद्भयं यस्यां तादृशी गतिरसि ॥ ६८ ॥ ६९ ॥ ७० ॥ योगादेशं नामैतत्स्तोत्रमुपासाद्य पाठतः प्राप्य मनसा धारयंतोऽभ्यासेन जपंतः ॥ ७१ ॥ विश्वसृजां पतिर्ब्रह्मा ॥ ७२ ॥ सिसृक्ष्मः सृष्टवंतः ॥ ७३ ॥ युक्त एकाग्रचित्तः ॥ ७४ ॥ ज्ञानमेव नौर्यस्य ॥ ७५ ॥ योऽधीयानो भवत्यसौ हरिमाराधयति ॥ ७६ ॥ अमुष्माद्धरेः असत्वरन् स्थिरः सन् मद्गीतं स्तोत्रं तेन गीतात्स्तुतात् यद्यदिच्छति तत्तद्विंदते । एक एव वल्लभः प्रिय आश्रयस्तस्मात् ॥ ७७ ॥ कल्ये उषसि ॥ ७८ ॥ तपश्चरत तपसोंऽते ईप्सितं प्राप्स्यथ ॥ ७९ ॥ इति चतुर्थे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ॥ प्राचीनबर्हिषेऽध्यात्मं पारोच्येणाह पंचभिः ॥ १ ॥ पुरंजनकथाव्याजात्पंचविंशे तु नारदः ॥ आत्मनो बुद्धिसंगेन विविधामाह संसृतिम् ॥ २ ॥ प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः ॥ पुरंजनकथाकूटं प्राह प्राचीनबर्हिषे ॥ ३ ॥ १ ॥ २ ॥ प्रचेतस्सु तपश्चरत्सु नारदः प्राचीनबर्हिषं बोधितवान् । अतः प्रचेतसां कथामसमाप्यैव तत्पितुर्वृत्तमाह । प्राचीनबर्हिषमिति ॥ ३ ॥ श्रेयःफलमीहसे इच्छसि इह कर्मणि तदुभयं नेष्यते विचारकैः ॥ ४ ॥ परं श्रेयो मोक्षम् । कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य ॥ ५ ॥ किंच । गृहेषु स्थितः पुत्रादिष्वेव पुरुषार्थधीर्यस्य ॥ ६ ॥ कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्श्याह । भो भो इति । संज्ञापितान्मारितान् ॥ ७ ॥ एते त्वां संपरेतं मृतं संप्रतीक्षंते वैशसं त्वत्कृतां पीडां स्मरंतः ततश्चायःकूटैर्लोहयंत्रमयैः शृंगैश्छिंदंति छेत्स्यंति ॥ ८ ॥ अत्रास्मिन्संकटे निस्तारकममुमितिहासं कथयिष्यामि ॥ ९ ॥ तत्र जीवस्य विषयासक्त्या संसारः स चेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य साक्षाद्बोधयितुमशक्ते राजवृत्तांतमिवाह । आसीदिति पुरंजनादीन्स्वयमेवेतःपंचमेऽध्याये व्याख्यास्यति । तथापि सुखग्रहणाय यथोपयोगं

इति संदिश्य भगवान्बार्हिषदैरभिपूजितः ॥ पश्यतां राजपुत्राणां तत्रैवांतर्दधे हरः ॥ १ ॥ रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ॥ जपंतस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥ प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ॥ नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥ श्रेयस्त्वं कतमद्राजन्कर्मणात्मन ईहसे ॥ दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥ राजोवाच ॥ न जानामि महाभाग परं कर्मापविद्धधीः ॥ ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥ गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ॥ न परं विंदते मूढो भ्राम्यन्संसारवर्त्मसु ॥ ६ ॥ नारद उवाच ॥ भो भो प्रजापते राजन्पशून्पश्य त्वयाध्वरे ॥ संज्ञापितान् जीवसंघान्निर्घृणेन सहस्रशः ॥ ७ ॥ एते त्वां संप्रतीक्षंते स्मरंतो वैशसं तव ॥ संपरेतमयःकूटैश्छिंदंत्युत्थितमन्यवः ॥ ८ ॥ अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् ॥ पुरंजनस्य चरितं निबोध गदतो मम ॥ ९ ॥ आसीत्पुरंजनो नाम राजा राजन्बृहच्छ्रवाः ॥ तस्याविज्ञातनामासीत्सखाऽविज्ञातचेष्टितः ॥ १० ॥ सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ॥ नानुरूपं यदाविंदद्भूत्स विमना इव ॥ ११ ॥ न साधु मेने ताः सर्वा भूतले यावतीः पुरः ॥ कामान्कामयमानोऽसौ तस्य तस्योपपत्तये ॥ १२ ॥ स एकदा हिमवतो दक्षिणेष्वथ सानुषु ॥ ददर्श नवभिर्द्वार्भिः पुरं लक्षितलक्षणाम् ॥ १३ ॥ प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ॥ स्वर्णरौप्यायसैः शृंगैः संकुलां सर्वतो

किंचित्किंचिद्व्याख्यास्यामः । तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरंजनो जीवः न विज्ञातं नाम यस्य न च विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥ शरणं भोगायतनं देहं पृथिवीं तदुलपक्षितं ब्रह्मांडम् ॥ ११ ॥ यावत्यः पुरस्तास्तस्य तस्य कामस्योपपत्तये प्राप्त्यै असौ साधु न मेने । गवादिदेहानामैहिकपारलौकिकभोगभोग्यत्वाभावात् । तथा च श्रुतिः । ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमितीति ॥ १२ ॥ हिमवतो दक्षिणेषु सानुषु कर्मक्षेत्रे भारतवर्षे पुरं मनुष्यशरीरम् । लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्याम् । अंधपंगुत्वादिदोषरहितामित्यर्थः ॥ १३ ॥ तामनुवर्णयति त्रिभिः । अत्र किंचित्किंचित्सादृश्यमवलंब्य कथासौंदर्याय प्राकारादीनि वर्ण्यंते परिखैरिति पुंस्त्वमार्षम् । अक्षाणींद्रियाणि गवाक्षाः त्वगादयः शर्गावयवाः प्राकारादिपुरावयवत्वेन निरूप्यंते स्वर्णादिशृंगैः शिखरैर्युक्ता ये गृहास्तैः

संकुलामिति आधारादिचक्राणि गृहाः शृंगाणि च राजसादिस्वभावा विवक्षिताः ॥ १४ ॥ नीलादिभिः क्लृप्ता हर्म्यस्थली यस्याम् । अरुणं माणिक्यम् । स्थली हृदयम् । नाड्यो नीलादिभावेन निरूप्यंते तत्तद्विषयवासना वा । भोगवतीं नागानां पुरीमिव ॥ १५ ॥ सभा समाजस्थानम् । चत्वरं चतुष्पथः रथ्या राजमार्गः आक्रीडायतनं द्यूतादिस्थानम् । आपणो हट्टस्तैः । चैत्यं जनानां विश्रामस्थानम् । ध्वजेषु पताकास्ताभिश्च युक्ताम् ॥ १६ ॥ अत्र च विषयनिष्ठबुद्धियोगेन जीवस्य देहसंबंध इति विवक्षया विषयवर्गं बाह्योपवनत्वेन निरूपयति । तद्विशेषान् स्रक्चंदनादीन् दिव्यद्रुमलतादिभावेन । शेषः कथालंकारः । बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः । नदतां विहंगालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन् ॥ १७ ॥ हिमनिर्झराणां विप्रुषो बिंदवस्तद्वता कुसुमाकरसंबंधिना वायुना चलंतः प्रवाला विटपाः शाखाश्च येषां तैर्वृक्षैर्नलिनीनां सरसीनां तटेषु संपत्समृद्धिर्यस्मिन् ॥ १८ ॥ अनाबाधे तत्कृतबाधारहिते मुनिव्रतैरहिंस्रैः । आत्मानमाहूतं मन्यते यत्र ॥ १९ ॥ तत्र प्रमदोत्तमां विषयविवेकवर्तीं बुद्धिं ददर्श यदृच्छयागतामिति तयोः संबंधस्य दुर्निरूप्यत्वं दर्शयति तामनुवर्णयति सार्धैश्चतुर्भिः । दशभिर्ज्ञानक-

गृहैः ॥ १४ ॥ नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ॥ क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥ सभाचत्वररथ्याभिराक्रीडायतनापणैः ॥ चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥ पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ॥ नदद्विहंगालिकुलकोलाहलजलाशये ॥ १७ ॥ हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ॥ चलत्प्रवालविटपनलिनीतटसंपदि ॥ १८ ॥ नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ॥ आहूतं मन्यते पांथो यत्र कोकिलकूजितैः ॥ १९ ॥ यदृच्छयागतां तत्र ददर्श प्रमदोत्तमाम् ॥ भृत्यैर्दशभिरायांतीमेकैकशतनायकैः ॥ २० ॥ पंचशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ॥ अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २१ ॥ सुनासां सुदतीं बालां सुकपोलां वराननाम् ॥ समविन्यस्तकर्णाभ्यां बिभ्रतीं कुंडलश्रियम् ॥ २२ ॥ पिशंगनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ॥ पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २३ ॥ स्तनौ व्यंजितकैशोरौ समवृत्तौ निरंतरौ ॥ वस्त्रांतेन निगूहंतीं व्रीडया गजगामिनीम् ॥ २४ ॥ तामाह ललितं वीरः सव्रीडस्मितशोभनाम् ॥ स्निग्धेनापांगपुंखेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा ॥ २५ ॥ का त्वं कंजपलाशाक्षि कस्यासीह कुतः सति ॥ इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥ २६ ॥ क एतेऽनुपथा ये त एकादश महाभटाः ॥ एता वा ललनाः सुभ्रूः कोऽयं तेऽहिः पुरःसरः ॥ २७ ॥ त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने ॥ त्वदंघ्रि-

र्मेन्द्रियैः एकैकं प्रत्येकं शतमनंता वृत्तयस्तासां नायकैः पतिभिः सह पाठांतरे नायिका स्त्रियोः येषां तैः ॥ २० ॥ पंचशीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतीहारेण पालकेन गुप्ताम् । ऋषभं भर्तारम् । अप्रौढां षोडशवार्षिकीम् ॥ २१ ॥ गंधज्ञानादिभिर्बुद्ध्यवयवैः सुनासत्वादि निरूप्यते । समं विन्यस्तौ रचितौ कर्णौ ताभ्यां कुंडलशोभां दधतीम् ॥ २२ ॥ अन्नमयं हि सौम्य मन इति यत्कृष्णं तदन्नस्येत्यादिश्रुत्यनुसारेण श्यामामित्युक्तम् । नूपुरैः क्वणद्भ्यान् । नूपुरेण पादांगुलीयकानामप्युपलक्षणाद्बहुवचनम् ॥ २३ ॥ व्यंजितं कैशोरं यौवनोपक्रमो याभ्याम् । समौ च वृत्तौ च ॥ २४ ॥ तामाहेति तयोः संवादोक्तिः संबंधदार्ढ्याय अपांग एव पुंखो मूलप्रांतो यस्य कटाक्षस्य बाणस्य तेन स्पृष्टो विद्धः प्रेम्णा उच्चैर्भ्रमंती भ्रूर्धनुःस्थानीया यस्मिंस्तेन ॥ २५ ॥ कुतः स्थानादिहागताऽसि । हे सति ! पुर्याः समीपस्था उपपुरी भूस्तामालक्ष्य किं कर्तुमिच्छसीत्यर्थः ॥ २६ ॥ ते तव येऽनुपथा अनुवर्तिन एते के एकादशो महान्भटो बृहद्बलत्वेन

वक्ष्यमाणो येषु दशसु ते । बुद्धेर्मनसः पृथगुपादानं बुद्धिपरिचारकेंद्रियसहायतया तत्परिचारकत्वविवक्षया ॥ २७ ॥ त्वं ह्रीः किं पतिं धर्मं विचिन्वती । अथवा भवानी पतिं शिवं विचिन्वती । अथवा किं वाक् सरस्वती पतिं ब्रह्माणम् । रमा पतिं विष्णुम् । मुनिरिव संयता सती । कथंभूतं पतिम् । त्वदंघ्रिकामेनैव त्वत्कृतया त्वदंघ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम् ॥ २८ ॥ हे वरोरु ! आसां मध्ये त्वमन्यतमाऽपि न संभवसि । यतो भुविस्पृक् नहि देवता भुवं स्पृशंति । वीरवरेण मया । ननु त्वमकर्मा कथं त्वया सहालंकरोमीति चेत्तत्राह । अदभ्रमनल्पं कर्म त्वत्संगाद्यस्य मम तेन स्वतोऽकर्मत्वेन त्वत्संगात्सकर्मा भवामीत्यर्थः । परं वैकुंठम् ॥ २९ ॥ यद्यस्मात्तवापांगेन विखंडितमिंद्रियं मनो यस्य तं मां मनोभवो बाधते अथ तस्मादनुगृहाण सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमंती या भ्रूस्तयोपसृष्टः प्रेरितः ॥ ३० ॥ यद्व्रीडया संमुखं न भवति तदाननमुन्नीय मे दर्शय । शोभने भ्रुवौ यस्मिन् सुतारे शोभनकनीनिके लोचने यस्मिन् व्यालंबिनो दीर्घा ये अलकास्तेषां वृंदेन संवृतम् । वल्गूनि वाचकानि वाक्यानि यस्मिन् ॥ ३१ ॥ हे वीर ! सापि तं दृष्ट्वा मोहिता सती तमाह ॥ ३२ ॥ यत्पृष्टं

कामाप्तसमस्तकामं क्व पद्मकोशः पतितः कराग्रात् ॥ २८ ॥ नासां वरोर्वन्यतमा भुविस्पृक्पुरीमिमां वीरवरेण साकम् ॥ अर्हस्यलंकर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥ २९ ॥ यदेष माऽपांगविखंडितेंद्रियं सव्रीडभावस्मितविभ्रमद्भ्रुवा ॥ त्वयोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथानुगृहाण शोभने ॥ ३० ॥ तदाननं सुभ्रु सुतारलोचनं व्यालंबिनीलालकवृंदसंवृतम् ॥ उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडयाऽनाभिमुखं शुचिस्मिते ॥३१॥ नारद उवाच ॥ इत्थं पुरंजनं नारी याचमानमधीरवत् ॥ अभ्यनंदत तं वीरं हसंती वीर मोहिता ॥ ३२ ॥ न विदाम वयं सम्यक्कर्तारं पुरुषर्षभ ॥ आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम् ॥ ३३ ॥ इहाद्य संतमात्मानं विदाम न ततः परम् ॥ येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥३४॥ एते सखायः सख्यो मे नरा नार्यश्च मानद ॥ सुप्तायां मयि जागर्ति नागोऽयं पालयन्पुरीम् ॥ ३५ ॥ दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान्कामानभीप्ससे ॥ उद्वहिष्यामि तांस्तेऽहं स्वबंधुभिररिंदम ॥ ३६ ॥ इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ॥ मयोपनीतान्गृह्णानः कामभोगान् शतं समाः ॥ ३७॥ कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम् ॥ असंपरायाभिमुखमश्वस्तनविदं पशुम् ॥ ३८ ॥ धर्मो ह्यत्रार्थकामौ च प्रजानंदोऽमृतं यशः ॥ लोका विशोका विरजा यान्न केवलिनो विदुः ॥ ३९ ॥ पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ॥ क्षेम्यं वदंति शरणं भवेऽस्मिन्यद्गृहाश्रमः ॥४०॥

कस्यासीत्यनेन कस्य पुत्री गोत्रजेति का त्वमिति च किंनामासीति तत्राह । आत्मनो मम परस्य तवापि कर्तारं सम्यक् न विद्मः । गोत्रं नाम च यत्कृतं भवति तं च न विद्मः ॥ ३३ ॥ आत्मनो मम शरणमियं पुरी येन निर्मिता तं च न विद्मः ॥ ३४ ॥ यत्पृष्टं क एते अनुपथा इति तत्राह । एत इति ॥ ३५ ॥ आस्तां नामगोत्रादि यदत्रागतोऽसि एतद्दिष्ट्या भद्रं तावत् । ग्राम्यानिंद्रियग्रामार्हान् उद्वहिष्यामि संपादयिष्यामि स्वबंधुभिः सखिभिः सखीभिश्च ॥ ३६ ॥ समाः संवत्सरान् मनुष्यदेहप्रवेशाच्छतमित्युक्तम् ॥ ३७ ॥ प्रवृत्तिस्वभावत्वान्निवृत्तिनिंदापूर्वकं तत्संगमभिनंदति । कमिति पंचभिः । त्वत्तोऽन्यं कं नु रमये अरतिज्ञं नैष्ठिकम् । अकोविदमनिषिद्धसुखत्यागिनम् । संपरायो मृत्युस्तदनभिमुखं परलोकचिंताशून्यम् । अश्वस्तनविदं श्व इदं कर्तव्यमितीहलोकचिंताशून्यम् । अतएव पशुतुल्यम् ॥ ३८ ॥ अत्र गार्हस्थ्ये । प्रजानंदः पुत्रसुखम् । अमृतं मोक्षः । केवलिनो यतयः ॥ ३९ ॥ गृहाश्रम इति तदेतत्क्षेमाहं शरण-

माश्रयं वदंति ॥ ४० ॥ ४१ ॥ भोगिभोगयोः सर्पदेहाकारयोस्तव भुजयोर्यन्न सजेदेवंभूतं कस्या स्त्रिया मनः स्यान्न कस्या अपि। यो भवाननाथवर्गा दीनस्तोमास्तेषामाधिमलमत्यर्थमपोहितुं सर्वत्र चरति। केनापोहितुम्। घृणयोद्धतोऽतिशयितो यः स्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥ समुद्य समुदीर्य समा संवत्सरान् ॥ ४३ ॥ तत्र जाग्रदवस्थां संक्षेपेणाह। उपगीयमान इति। सुषुप्तावस्थामाह। इदानीं हृदयाकाशं स्वापस्थानम्। शुचौ निदाघे ॥ ४४ ॥ इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां प्रपंचयति सप्तेति यावदध्यायसमाप्ति। तस्याः पुर उपरि कृता द्वारः सप्त वृता इति पाठे संवृताः नेत्रे नासिके श्रोत्रे मुखं चेति सप्त अधो द्वे द्वारौ गुदलिंगे यः कश्चनेति आत्मनः सम्यगविज्ञानादनियतत्वाच्च ॥ ४५ ॥ तासु सप्तसु पंच द्वारः पौरस्त्याः पूर्वदिग्भवाः ॥ ४६ ॥ खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं यस्याः सा बहुप्रकाशा दक्षिणनेत्रलक्षणा। तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यवत्तर इति श्रुतेः। स्वानुभवाच्च तत्र प्रकाशाधिक्यम्। एकत्र संलग्ने विभ्राजितं रूपम्। द्युमत्सखश्चक्षुःसहितः ॥ ४७ ॥ नलनालशब्दौ छिद्रवचनौ तद्वती नलिनी नालिनी च वामदक्षिणनासिके अत्रापि संज्ञाभेदादेव कार्यं न्यूनाधिक्यं पूर्ववज्ज्ञेयम्।

का नाम वीरविख्यातं वदान्यं प्रियदर्शनम् ॥ न वृणीत प्रियं प्राप्तं मादृशी त्वादृशं पतिम् ॥ ४१ ॥ कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज ॥ योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरत्यपोहितुम् ॥ ४२ ॥ नारद उवाच ॥ इति तौ दंपती तत्र समुद्य समयं मिथः ॥ तां प्रविश्य पुरीं राजन्मुमुदाते शतं समाः ॥ ४३ ॥ उपगीयमानो ललितं तत्र तत्र च गायकैः ॥ क्रीडन्परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४४ ॥ सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ॥ पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ॥ ४५ ॥ पंच द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ॥ पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४६ ॥ खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ॥ विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४७ ॥ नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ॥ अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४८ ॥ मुख्या नाम पुरस्ताद्द्वास्तयापणबहूदनौ ॥ विषयौ याति पुरराड्रसज्ञविपणान्वितः ॥ ४९ ॥ पितृहूर्नृपपुर्या द्वार्दक्षिणेन पुरंजनः ॥ राष्ट्रं दक्षिणपंचालं याति श्रुतधरान्वितः ॥ ५० ॥ देवहूर्नाम पुर्या द्वा उत्तरेण पुरंजनः ॥ राष्ट्रमुत्तरपंचालं याति श्रुतधरान्वितः ॥ ५१ ॥ आसुरी नाम पश्चाद्द्वास्तया याति पुरंजनः ॥ ग्रामकं नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥ निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरंजनः ॥ वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५३ ॥

अवधूतो वाय्वधिष्ठितो घ्राणः सौरभं गंधम् ॥४८॥ मुख्या प्रधाना आस्यम्। आपणो भाषणम्। बहूदनश्चित्रमन्नम्। बह्वोदन इत्यनुक्तिः परोक्षवादत्वाय रसज्ञं रसनेंद्रियं विपणो वागिंद्रियं ताभ्यामन्वितः ॥४९॥ दक्षिणेनेति न तृतीया किंतु दक्षिणस्यां दिशीत्यस्मिन्नर्थे तद्धितोऽयमेनप्प्रत्ययोऽव्ययसंज्ञः एवमुत्तरेणेति। अयमर्थः। पंचानां विषयाणामन्यतोऽनवगतानां प्रकाशायालमिति पंचालं शास्त्रं श्रवणकाले च कलाधिक्याद्दक्षिणकर्णः प्रथमं प्रवर्तते शास्त्रे च प्रथमं श्रोतव्यं कर्मकांडमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकांडस्य दक्षिणकर्णेन श्रवणमिष्यते। अतस्तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते। तदनेन प्रकारेण पितृणामाह्वानमनेन भवतीति पितृहूर्दक्षिणकर्णः एवं तद्वैपरीत्येनोत्तरः कर्णो देवहूः। तथा च व्याख्यास्यति। पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ प्रवृत्तं च निवृत्तं न शास्त्रं पंचालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेदिति ॥५०॥५१॥ असुरा इंद्रियारामास्तेषामियमासुरी शिश्नद्वाः ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायं

दुर्मदेन गुह्येंद्रियेण ॥ ५२ ॥ निर्ऋतिर्नाम गुदो मृत्युद्वारत्वात् । वैशसं मलविसर्गम् । लुब्धकेन पायुना तेनोत्क्रांतस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥ अमीषां मध्ये निर्वाक् पादः पेशस्कृद्ध-स्तस्तावुभावंधौ छिद्राभावात् । स्वतोज्ञानक्रियाशक्त्यभावाच्च अक्षण्वतामिंद्रियवतां देहानामधिपतिः पुरंजनः त्वगिंद्रियस्यानुक्तिः सर्वेष्वंतर्भावात् ॥ ५४ ॥ अंतःपुरं हृदयं गतं विषूचीनं सर्वतो-मुखं मनः मोहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि जाया बुद्धिरात्मजा इन्द्रियपरिणामास्तदुद्भवम् ॥ ५५ ॥ ५६ ॥ जक्षत्यां भक्षयंत्याम् ॥ ५७ ॥ ५८ ॥ आसतीमासीनाम् ॥ ५९ ॥ ६० ॥ ॥ ६१ ॥ सर्वासंगत्वादिलक्षणा प्रकृतिः स्वभावो वंचितो यस्य सर्वथा प्रकृत्या वंचित इति वा नेच्छन्ननिच्छन् । क्लैब्यात्पारवश्यात् ॥ ६२ ॥ इति च० टी० पंचविंशो० ॥ २५ ॥ षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः ॥ सद्बुद्धित्यागयोगाभ्यां संसृतिः सा प्रपंच्यते ॥ १ ॥ तदेवमात्मन उपाधिकृतां सुषुप्तावस्थां जाग्रदवस्थां चोक्त्वेदानीं स्वप्नावस्थामाह । स एकदेति दशभिः । महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य स रथमारुह्य पंचप्रस्थं वनमगादिति तृतीयेनान्वयः । रथं तदानीमेव विधृतं स्वप्नदेहम् । जाग्रद्देहस्य शतसंवत्सरोपभोग्य-

अंधावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ ॥ अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५४ ॥ स यर्ह्यंतःपुरगतो विषूचीनसमन्वितः ॥ मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥ एवं कर्मसु संसक्तः कामात्मा वंचितोऽबुधः ॥ महिषी यद्यदीहेत तत्तदेवान्ववर्तत ॥ ५६ ॥ क्वचित्पिबंत्यां पिबति मदिरां मदविह्वलः ॥ अश्नंत्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥ ५७ ॥ क्वचिद्गायति गायंत्यां रुदत्यां रुदति क्वचित् ॥ क्वचिद्धसंत्यां हसति जल्पंत्यामनुजल्पति ॥ ५८ ॥ क्वचिद्धावति धावंत्यां तिष्ठंत्यामनुतिष्ठति ॥ अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ५९ ॥ क्वचिच्छृणोति शृण्वंत्यां पश्यंत्यामनुपश्यति ॥ क्वचिज्जिघ्रति जिघ्रंत्यां स्पृशंत्यां स्पृशति क्वचित् ॥ ६० ॥ क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ॥ अनुहृष्यति हृष्यंत्यां मुदितामनुमोदते ॥ ६१ ॥ विप्रलब्धो महिष्यैवं सर्वप्रकृतिवंचितः ॥ नेच्छन्ननु-करोत्यज्ञः क्लैब्यात्क्रीडामृगो यथा ॥ ६२ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्याने पंचविंशोऽध्यायः ॥ २५ ॥ नारद उवाच ॥ स एकदा महेष्वासो रथं पंचाश्वमाशुगम् ॥ द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पंचबंधुरम् ॥ १ ॥ एकरश्म्येकदमनमेकनीडं द्विकूबरम् ॥ पंचप्रहरणं सप्तवरूथं पंचविक्रमम् ॥ २ ॥ हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः ॥ एकादशचमूनाथः पंचप्रस्थमगाद्वनम् ॥ ३ ॥ चचार मृगयां तत्र

पुरत्वेनोक्तत्वात् । पंच ज्ञानेंद्रियाण्यश्वा यस्य आशुगं शीघ्रगतिम् । द्वे अहंताममते ईषे दंडिके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य त्रयो गुणा वेणवो ध्वजा यस्य पंच प्राणा बंधुराणि बंधनानि यस्य ॥१॥ एकं मनो रश्मिः प्रग्रहो यस्य एका बुद्धिर्दमनः सूतो यस्य तंच तंच एकं हृदयं नीडं रथिन उपवेशस्थानं यस्य पंच शब्दादयो विषयाः प्रह्रियंते प्रक्षिप्यन्ते यस्मिन् । अस्य व्याख्यानं भविष्यति पंचेन्द्रियार्थप्रक्षेप इति सप्त धातवो वरूथा रक्षार्थं चर्माद्यावरणानि यस्य पंच कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य ॥ २ ॥ हैमोपस्करं सौवर्णाभरणम् । स्वर्ण-वर्मा वर्म कवचम् । रजोगुणावृतः अक्षयेषुधिः इषुधीर्निषंगः अनंतवासनाऽहंकारोपाधिः एकादशो मनोरूपश्चमूनाथः सेनापतिर्यस्य वासनामयस्य मनसः प्रग्रहत्वं संकल्पविकल्पात्मकस्य बृह-द्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः । पंच शब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भजनीयं देशमगात् ॥ ३ ॥ आत्ता गृहीता इषवो रागादिरूपाः कार्मुकं च भोगाद्य-

भिनिवेशरूपं येन जायां विवेकवतीं बुद्धिं विहाय अतदर्हां त्यागानर्हाम् । त्यागे हेतुः । मृग्यंत इति मृगा विषयास्तेषु व्यसनं भोगासक्तिस्तेन लालसाऽतिस्पृहा यस्य ॥ ४ ॥ बाणै रागादिभिः वनेषु भजनीयदेशेषु वनगोचरान्भजनीयविषयान् न्यहनदात्मसात्कृतवान् कथापक्षे तु स्पष्टमेव ॥ ५ ॥ नन्वासुरीं वृत्तिमाश्रित्येति किमिति मृगया निंद्यते कथापक्षे तावद्राज्ञो विहितैव सा अध्यात्मपक्षेऽपि जीवस्य विषयभोगो विहित एवेत्याशंक्याह । तीर्थेष्विति त्रिभिः । अयं भावः । नहि मृगया विधीयते रागप्राप्तत्वात्किंतु नियम्यते प्रवृत्तिः संकोच्यते । नियममेव षड्विधं दर्शयति । यद्यलमत्यर्थं लुब्धो रागी सन् हन्यात्तर्हि तीर्थेषु श्राद्धादिष्वेव तत्रापि प्रतिदृष्टेषु प्रख्यातेष्वेव न नित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति एवं जीवस्य विषयसेवापि यावदुपयोगं न यथेष्टमिति नियम एवेत्यर्थः ॥ ६ ॥ अतो नावश्यकत्वमित्याह । य इति । एवं नियतं कर्म विद्वान् तेनेत्युपलक्षणम् । तेनान्येन वा कर्मणैवमनुष्ठितेन यज्ज्ञानं

दृप्त आत्तेषुकार्मुकः ॥ विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥ आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ॥ न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥ तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्पशून्वने ॥ यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥ य एवं कर्म नियतं विद्वान्कुर्वीत मानवः ॥ कर्मणा तेन राजेंद्र ज्ञानेन न स लिप्यते ॥ ७ ॥ अन्यथा कर्म कुर्वाणो मानारूढो निबद्ध्यते ॥ गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥ तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः ॥ विप्लवोऽभूद्दुःखितानां दुःसहः करुणात्मनाम् ॥ ९ ॥ शशान्वराहान्महिषान्गवयान् रुरुशल्यकान् ॥ मेध्यानन्यांश्च विविधान्विनिघ्नन् श्रममध्यगात् ॥ १० ॥ ततः क्षुत्तृट्परिश्रांतो निवृत्तो गृहमेयिवान् ॥ कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥ आत्मानमर्हयांचक्रे धूपालेपस्रगादिभिः ॥ साध्वलंकृतसर्वांगो महिष्यामादधे मनः ॥ १२ ॥ तृप्तो हृष्टः सुदृप्तश्च कंदर्पाकृष्टमानसः ॥ न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥ अंतःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत् ॥ अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ न तथैतर्हि रोचंते गृहेषु गृहसंपदः ॥ १४ ॥ यदि न स्याद्गृहे माता पत्नी वा पतिदेवता ॥ व्यंगे रथ इव प्राज्ञः को नामासीत दीनवत् ॥ १५ ॥ क्व वर्तते सा ललना मज्जंतं व्यसनार्णवे ॥ या मामुद्धरते प्रज्ञां दीपयंती पदे पदे ॥ १६ ॥ रामा ऊचुः ॥ नरनाथ न जानीमस्त्वत्प्रिया यद्व्यवस्यति ॥ भूतले निरवस्तारे शयानां पश्य शत्रुहन् ॥ १७ ॥ नारद उवाच ॥ पुरंजनः स्वमहिषीं निरीक्ष्यावधुतां भुवि ॥ तत्संगोन्मथितज्ञानो

भवति तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते ॥ ७ ॥ अन्यथा नियमोल्लंघनेनांतःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबद्ध्यते ततश्च गुणप्रवाहे पतितोऽधो व्रजति ॥ ८ ॥ प्रासंगिकं परिसमाप्य पुनर्मृगयामेवानुवर्णयति । तत्रेति । चित्रा वाजाः पक्षा येषां तैः विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहः ॥ ९ ॥ १० ॥ तदेवं स्वप्नावस्था दर्शिता इदानीं पुनरपि विवेकवत्या बुद्ध्या रममाणस्य पुत्रादिसंततिं प्रपंचयिष्यन्कथासौंदर्याय तस्याः प्रणयकुपिताया अनुनयं प्रस्तावसहितमाह । तत इत्यारभ्य यावदध्यायसमाप्ति । एयिवानागतः कृतं स्नानमुचितआहारश्च येन । संविवेश शय्यामाश्रितः ॥ ११ ॥ १२ ॥ गृहमेधिनीं सात्त्विकीं बुद्धिं राजस्यां बुद्ध्यां वर्तमानो नापश्यत् ॥ १३ ॥ वेदिषत् हे प्राचीनबर्हिः ! अंतःपुरस्त्रियस्तत्सखीः सेश्वरीणां स्वामिनीसहितानाम् । यथा पुरेत्यादि पृथग्वाक्यम् ॥ १४ ॥ व्यंगे चक्रादिहीने ॥ १५ ॥ १६ ॥ निरवस्तारे आस्तरणरहिते ॥ १७ ॥ अवधुतां त्यक्तदेहादराम् । तत्संगेनोन्मथितं व्याकुलं

ज्ञानं यस्य ॥ १८ ॥ स्नेहसंरंभः प्रणयकोपस्तस्य लिंगं कुटिलदृष्ट्यादि स्वस्मिन्न लब्धवान् ॥ १९ ॥ उत्संगमारोप्य लालिताम् ॥ २० ॥ कृतमागोऽपराधो यैस्तेषु आत्मसात्कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दंडं न कुर्वंति ते भृत्या मंदभाग्याः ॥ २१ ॥ यतः परमोऽनुग्रहो दंडः । यस्तु दंडतो विषीदति सोऽज्ञ इत्याह । बाल इति बंधुकृत्यं शिक्षाकरणम् । अमर्षणः क्रोधी ॥ २२ ॥ हे सुदति हेसुभ्रु हे मनस्विनि ! सा त्वमस्माकं स्वामिन्यतः स्वानां मुखं प्रदर्शय । कीदृशम् । अनुरागभारेण व्रीडया यो विलंबो मंथरता तेन विलसन्हसितावलोको यस्मिन् नीला अलका एवालयस्तैरुपस्कृतं भूषितम् । उन्नतनासिकम् । वल्गु वाक्यं यस्मिंस्तत् ॥ २३ ॥ हे वीरपत्नि वीरस्य मम भार्ये ! यस्ते कृतापराधस्तस्मिन्नहं ब्राह्मणकुलादन्यत्रान्यस्मिन्मुररिपुदासादितरत्र च दमं दधे दंडं करोमि किंतु तं विगतभयमुच्चैर्मुदितम् त्रिलोक्यामन्यत्र वै लोकत्रयाद्बहिरपि न पश्यामि मद्भयादेवासौ मरिष्यतीत्यर्थः ॥ २४ ॥ ते वक्त्रमितः पूर्वं कदाचिदपि वितिलकं न

वैक्लव्यं परमं ययौ ॥ १८ ॥ सांत्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ॥ प्रेयस्याः स्नेहसंरंभलिंगमात्मनि नाभ्यगात् ॥ १९ ॥ अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ॥ पस्पर्श पादयुगलमाह चोत्संगलालिताम् ॥ २० ॥ पुरंजन उवाच ॥ नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे ॥ कृतागःस्वात्मसात्कृत्वा शिक्षादंडं न युंजते ॥ २१ ॥ परमोऽनुग्रहो दंडो भृत्येषु प्रभुणार्पितः ॥ बालो न वेद तत्तन्वि बंधुकृत्यममर्षणः ॥ २२ ॥ सा त्वं मुखं सुदति सुभ्रवनुरागभारव्रीडाविलंबविलसद्धसितावलोकम् ॥ नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥ २३ ॥ तस्मिन्दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम् ॥ पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात् ॥ २४ ॥ वक्त्रं न ते वितिलकं मलिनं विहर्षं संरंभभीममविमृष्टमपेतरागम् ॥ पश्ये स्तनावपि शुचोपहतौ सुजातौ बिंबाधरं विगतकुंकुमपंकरागम् ॥ २५ ॥ तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य ॥ का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती न भजेत कृत्ये ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्याने षड्विंशोऽध्यायः ॥ २६ ॥ ॥ नारद उवाच ॥ इत्थं पुरंजनं सध्र्यग्वशमानीय विभ्रमैः ॥ पुरंजनी महाराज रेमे रमयती पतिम् ॥ १ ॥ स राजा महिषीं राजन्सुस्नातां रुचिराननाम् ॥ कृतस्वस्त्ययनां तृप्ता-

पश्यामि । संरंभेण कोपावेशेन भीमं भयंकरं अविमृष्टमनुज्ज्वलम् । अपेतरागं स्नेहशून्यं तथा ते सुजातौ शोभनौ स्तनावपि शोकाश्रुभिरुपहतौ न पश्यामि तथा बिंबफलाकारमधरं च विगतः कुंकुमपंकतुल्यस्तांबूलरागो यस्मात्तादृशं न पश्यामि । इदानीं कुत एवं जातमिति शेषः । पाठांतरे एवंभूतं मुखं स्तनौ च पश्यन् शं न विंदामीत्यन्वयः । विगतः कुंकुमपंकरागो याभ्यामिति स्तनयोर्विशेषणम् ॥ २५ ॥ तत्तस्मात्कृतं किल्बिषमपराधो येन तस्य किल्बिषमेवाह । स्वैरं स्वातंत्र्येण त्वामपृष्ट्वा मृगयां गतस्य देवो देवनं क्रीडा तां राति ददातीति देवरः कांतस्तम् । कामवेगेन विस्रस्तं पौंस्नं पौरुषं धैर्यं यस्य तम् । उशती कामयमाना कृत्ये कर्तुं योग्येऽर्थे का न भजेत ॥ २६ ॥ इति भागवते चतुर्थे टीकायां षड्विंशोऽध्यायः ॥ २६ ॥ सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः ॥ कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ १ ॥ तदेवं जीवस्यानुनयादिकथासौंदर्येणात्यंतमुपाधिवश्यत्वमुक्त्वा तन्निमित्तां संसारपरंपरां निरूपयितुमाह । इत्थमिति । अत्र च प्रतिपदं कथंचिदध्यात्मपक्षेऽपि योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतीर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम् । कश्चित्पुमान्कश्चिच्च स्त्री कश्चिन्नोभय-

मंदधीः ॥ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भव इति वदता तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता । ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्तम् । ततस्तदेव यथोपयोगं व्याख्यातमिति पंचाध्याय्यारंभः प्रतीयते प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढिख्यापनमनादृत्य यथोपयोगमेव व्याख्यास्यामः सम्यक् सम्यक् विभ्रमैर्विलासैः ॥ १ ॥ कृतं स्वस्त्ययनं मंगलं कुंकुमसिंदूरादिभिर्यस्यास्ताम् ॥ २ ॥ उपगूढः परिरब्धः परिरब्धा कंधरा तस्या येन । रह एकांते अनुमंत्रैरनुकूलैर्गुह्यभाषणैः अपकृष्टा चेतना विवेको यस्य कालरंह आयुर्व्ययम् । प्रमदैव परिग्रहो न ज्ञानसाधनं यस्य ॥ ३ ॥ महार्हतल्पे उत्कृष्टशय्यायां शयानः महिष्या भुज उपधिरुपधानमुच्छीर्षकं यस्य अविसर्गपाठे शयनक्रियाविशेषणम् । तां महिषीमेव परं पुरुषार्थममन्यत न तु यन्निजं रूपं ब्रह्म तत् तमसाऽज्ञानेनाभिभूतो यतः ॥ ४ ॥ ५ ॥ पुत्रानिंद्रियपरिणामान् दुहितॄस्तदनंतरं बुद्धिवृत्तीः पुत्रसंख्या च बाहुल्यमात्रविवक्षया

मभ्यनंददुपागताम् ॥ २ ॥ तयोपगूढः परिरब्धकंधरो रहोऽनुमंत्रैरपकृष्टचेतनः ॥ न कालरंहो बुबुधे दुरत्ययं दिवानिशेति प्रमदापरिग्रहः ॥ ३ ॥ शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः ॥ तामेव वीरो मनुते परं यतस्तमोऽभिभूतो न निजं परं च यत् ॥ ४ ॥ तयैवं रममाणस्य कामकश्मलचेतसः ॥ क्षणार्धमिव राजेंद्र व्यतिक्रांतं नवं वयः ॥ ५ ॥ तस्यामजनयत्पुत्रान्पुरंजन्यां पुरंजनः ॥ शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥ दुहितॄर्दशोत्तरशतं पितृमातृयशस्करीः ॥ शीलौदार्यगुणोपेताः पौरंजन्यः प्रजापते ॥ ७ ॥ स पंचालपतिः पुत्रान्पितृवंशविवर्धनान् ॥ दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥ पुत्राणां चाभवन्पुत्रा एकैकस्य शतं शतम् ॥ यैर्वै पौरंजनो वंशः पंचालेषु समेधितः ॥ ९ ॥ तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ॥ निरूढेन ममत्वेन विषयेष्वन्वबध्यत ॥ १० ॥ ईजे च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः ॥ देवान्पितॄन्भूतपतीन्नानाकामो यथा भवान् ॥ ११ ॥ युक्तेष्वेवं प्रमत्तस्य कुटुंबासक्तचेतसः ॥ आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥ चण्डवेग इति ख्यातो गंधर्वाधिपतिर्नृप ॥ गंधर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥ गंधर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः ॥ परिवृत्त्या विलुंपंति सर्वकामविनिर्मिताम् ॥ १४ ॥ ते चंडवेगानुचराः पुरंजनपुरं यदा ॥ हर्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः ॥ १५ ॥ स सप्तभिः शतैरेको विंशत्या च शतं समाः ॥ पुरंजनपुराध्यक्षो गंधर्वैर्युयुधे बली ॥ १६ ॥ क्षीयमाणे स्वसंबंधे एकस्मिन्बहुभिर्युधा ॥ चिंतां परां जगामार्तः सराष्ट्रपुरबांधवः ॥ १७ ॥ स एव पुर्यां मधुभुक्पंचालेषु स्वपार्षदैः ॥ उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद्भयम् ॥ १८ ॥ कालस्य दुहिता काचित्त्रि-

दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौंदर्यार्थमेव विराट् सम्राट् आयुषोऽर्धमित्याद्यपि कथासौंदर्यार्थमेव ॥ ६ ॥ पुरंजनकन्यात्वात्पौरंजन्यः हे प्रजापते ॥ ७ ॥ दारैः परिणामानंतरं हिताहितचिंताभिः वरैरुचितविषयभोगैः ॥ ८ ॥ पुत्राणां पुत्राः कर्माणि पंचालेषु शब्दादिविषयेषु ॥ ९ ॥ तेषु पुत्रादिषु तेषामपि ये रिक्थहाराः पुत्रास्तेषु च ॥ १० ॥ ११ ॥ युक्तेष्वात्महितेषु कर्मस्वनवहितस्य स वै कालो जरासमयः ॥ १२ ॥ चंडवेगः संवत्सरेणावर्तमानेनोपलक्षितः गंधर्वा दिवसाः ॥ १३ ॥ गंधर्व्यो रात्रयः तादृशीस्तादृश्यः मैथुन्यो दिवसैर्मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन सर्वैः कामैः सह विनिर्मितां पुरीमपहरंति ॥ १४ ॥ प्रजागरः प्राणः ॥ १५ ॥ विंशत्या च सह ॥ १६ ॥ स्वसंबंधे स्वसंबंधिनि प्राणे ॥ १७ ॥

स एव मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिंद्रियैः नाविदन्नालोचितवान् ॥ १८ ॥ कालस्य दुहिता जराऽस्ति तां न प्रत्यनंदत नैच्छत् बर्हिष्मन् हे प्राचीनबर्हिः! ॥ १९ ॥ पूरवे ययातिपुत्राय तेन वृता सती वरमदात् । ययातिः शुक्रशापाज्जरां प्राप्य पुत्रानुवाच इमां गृह्णीतेति तां ज्येष्ठाश्चत्वारो न जगृहुः । पुरुस्तु जगृहे ततो ययातिस्तस्मै राज्यं ददाविति जरैवाददादित्युक्तम् ॥ २० ॥ सा जरा बृहद्व्रतं नैष्ठिकम् ॥ २१ ॥ प्रत्याख्यातवति मयि संरम्य क्रोधं कृत्वा नैकत्र स्थातुमर्हसीति शापमदात् ॥ २२ ॥ आधयो व्याधयश्च यवनास्तेषामीश्वरं भयनामानं वव्रे ॥ २३ ॥ हेवीर त्वामीप्सितं पतिं वृणे न रिष्यति न नश्यति ॥ २४ ॥ लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याच्यमानं यो न ददाति यश्च दीयमानं नेच्छति न गृह्णाति इमौ द्वौ कर्मभूतावनुशोचंति संतः ॥ २५ ॥ पुरुषेण कर्तव्यो धर्मः पौरुषः ॥ २६ ॥ देवगुह्यं मरणम् । तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते ॥ २७ ॥ तुभ्यं तव आत्मसमाधिना ज्ञानदृष्ट्या

लोकीं वरमिच्छती ॥ पर्यटंती न बर्हिष्मन्प्रत्यनंदत कश्चन ॥ १६ ॥ दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ॥ या तुष्टा राजर्षये तु वृतादात्पूरवे वरम् ॥ २० ॥ कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् ॥ वव्रे बृहद्व्रतं मां तु जानती काममोहिता ॥ २१ ॥ मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् ॥ स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने ॥ २२ ॥ ततो विहतसंकल्पा कन्यका यवनेश्वरम् ॥ मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥ ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ॥ संकल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥ द्वाविमावनुशोचंति बालावसदवग्रहौ ॥ यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥ अथो भजस्व मां भद्र भजतीं मे दयां कुरु ॥ एतावान्पौरुषो धर्मो यदार्तानुकंपते ॥ २६ ॥ कालकन्योदितवचो निशम्य यवनेश्वरः ॥ चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत ॥ २७ ॥ मया निरूपितस्तुभ्यं पतिरात्मसमाधिना ॥ नाभिनंदति लोकोऽयं त्वामभद्रामसंमताम् ॥ २८ ॥ त्वमव्यक्तगतिर्भुंक्ष्व लोकं कर्मविनिर्मितम् ॥ याहि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि ॥ २९ ॥ प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव ॥ चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ॥ ३० ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्याने सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ नारद उवाच ॥ सैनिका भयनाम्नो ये बर्हिष्मन्दिष्टकारिणः ॥ प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥ त एकदा तु रभसा पुरंजनपुरीं नृप ॥ रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥ कालकन्यापि

याच्यमानोऽयं लोकस्त्वां नेच्छति ॥ २८ ॥ अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकमाक्रम्य भुंक्ष्व एवं सर्वोऽपि लोकस्तव पतिः स्यादित्यर्थः । न चैवं त्वया शंकनीयं प्रतिकूलां मां लोको हनिष्यतीति यस्मात्त्वमेव प्रजानाशं करिष्यसीत्याह । याहीति या मदीया यवनपृतना तया युक्ता ॥ २९ ॥ किंच प्रज्वार इति मारको वैष्णवो ज्वरः माहेश्वरस्य व्याध्यंतःपातित्वात् भीमा घोराः सैनिका यस्य ॥ ३० ॥ इति चतुर्थे टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥ अष्टविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिंतया ॥ स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥१॥ इदानीं तु पुरंजनस्य पुंदेहत्यागपूर्वकं स्त्रीत्वप्रकारमाह । सैनिका इत्यादि राजसिंहस्य वेश्मनीत्यंतेन दिष्टं दैवं कुर्वंत्यधिकुर्वंतीति तथा मृत्योरादेशकारिण इति वा ॥ १ ॥ जरत्पन्नगेन जीर्ण-

प्राणेन पालिताम् ॥ २ ॥ ३ ॥ द्वार्भिश्चक्षुरादिभिः रोगरूपेण प्रविश्य ॥ ४ ॥ ५ ॥ कन्यया जरयोपगूढः संस्तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः । हृतैश्वर्य उत्थानादिष्वशक्तः ॥ ६ ॥ प्रतिकूलानपेक्षितविषयप्रापणान् अनादृतानादरमकुर्वाणान् स्वाधीनत्वाभावात् अनुगा इन्द्रियाणि अमात्या इन्द्रियदेवाः गतसौहृदामध्यवसायाभावात् ॥ ७ ॥ कन्यया जरया ग्रस्तम् । पंचालान्विषयान् अरिभिर्याध्यादिभिर्दूषितान् ॥ ८ ॥ कालकन्यया हेतुभूतया यातयामान्निःसारानपि कामानभिलषन् विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः गतिः स्नेहादिति वा पाठः । स राजा पुरंजनो हातुं प्रचक्रमे उपक्रांतवानिति द्वयोरन्वयः ॥ ९ ॥ अनिकामतोऽनिच्छयाऽपि ॥ १० ॥ ११ ॥ सपरिच्छदो भृत्यवर्गसहितः । कुटुंबेन दीव्यतीति

बुभुजे पुरंजनपुरं बलात् ॥ ययाभिभूतः पुरुषः सद्यो निःसारतामियात् ॥ ३ ॥ तयोपभुज्यमानां वै यवनाः सर्वतो दिशम् ॥ द्वार्भिः प्रविश्य सुभृशं प्रार्दयन्सकलां पुरीम् ॥ ४ ॥ तस्यां प्रपीड्यमानायामभिमानी पुरंजनः ॥ अवापोरुविधांस्तापान्कुटुंबी ममताकुलः ॥ ५ ॥ कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ॥ नष्टप्रज्ञो हृतैश्वर्यो गंधर्वयवनैर्बलात् ॥ ६ ॥ विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ॥ पुत्रान्पौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥ ७ ॥ आत्मानं कन्यया ग्रस्तं पंचालानरिदूषितान् ॥ दुरंतचिंतामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥ कामानभिलषन्दीनो यातयामांश्च कन्यया ॥ विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥ गंधर्वयवनाक्रांतां कालकन्योपमर्दिताम् ॥ हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥ १० ॥ भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ॥ ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥ तस्यां संदह्यमानायां सपौरः सपरिच्छदः ॥ कौटुंबिकः कुटुंबिन्या उपातप्यत सान्वयः ॥ १२ ॥ यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ॥ पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥ न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ॥ गंतुमैच्छत्ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥ शिथिलावयवो यर्हि गंधर्वैर्हृतपौरुषः ॥ यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥ दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ॥ स्वत्वावशिष्टं यत्किंचिद्गृहकोशपरिच्छदम् ॥ १६ ॥ अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही ॥ दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥ लोकांतरं गतवति मय्यनाथा कुटुंबिनी ॥ वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥ न मय्यनाशिते भुंक्ते नास्नाते स्नाति मत्परा ॥ मयि रुष्टे सुसंत्रस्ता भर्त्सिते यतवाग्भयात् ॥ १९ ॥ प्रबोधयति माऽविज्ञं व्युषिते शोककर्शिता ॥ वर्त्मैतद्गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥ कथंनु

कौटुम्बिकः कुटुंबिन्या संधिर्नात्र विवक्षितः । सान्वयः पुत्रादिसहितः ॥ १२ ॥ यवनैरुपरुद्धान्यायतनानि यस्य स पुरपालः ॥ १३ ॥ पुरु बहु कृच्छ्रं तेन उरुर्वेपथुर्यस्य वृक्षकोटरादिव सर्पः ॥ १४ ॥ कंठे उपरुद्धो रुरोद घुरघुरध्वनिं चकार ॥ १५ ॥ दुहित्रादीन्दध्यावित्युत्तरेणान्वयः । जामयोऽत्र स्नुषाः स्वत्वमात्रेणावशिष्टम् । भोगस्तु प्रागेव क्षीणः ॥ १६ ॥ १७ ॥ ध्यानमेवाह । लोकांतरमिति ॥ १८ ॥ अनाशितेऽभोजिते भर्त्सिते भर्त्सने कृते यतवाग्भवति ॥ १९ ॥ अविज्ञमविवेकिनं माम् । व्युषिते देशांतरं गते गृहमेधीयं वर्त्म गृहधर्ममपि किं नेष्यत्यनुव-

तैयिष्यति । युक्तमेतत् यतो वीरसूः पुत्रवती । किंवा मद्विरहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥ न विद्यते परमयनमाश्रयो येषां तेऽपरायणाः पुत्राः कन्याश्च । यद्वा पराश्रयाः कन्याः भिन्ना नौर्येषाम् ॥ २१ ॥ अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वात् ॥ २२ ॥ प्रकृतिं एष यदा चयं स्थानं नीयमानस्तदानुपथाः प्राणा इंद्रियाणि च । तथा च श्रुतिः । तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणम-नूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंतीति ॥ २३ ॥ प्रकृतिं महाभूतात्मताम् ॥ २४ ॥ नाविंदन्न सस्मार पुरः पूर्वं सखायं संतमीश्वरम् ॥ २५ ॥ अदयालुना काम्यकर्मसु ये संज्ञप्ता हताः । अमीवं पापं क्रौर्यं वा ॥ २६ ॥ शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥ अंतःकाले तां भार्यामेव मनसा गृह्णन्स्मरन्ननंतरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव । अतःपरमस्मिन्प्रकरणे एतावदेव प्रकृतो-पयोगि विवक्षितम् । स्त्रीध्यानेन स्त्रीत्वप्राप्तावपि पतिव्रताध्यानेन पूर्वादृष्टेन च धार्मिकाद्विदर्भाज्जन्माभूत् । धार्मिकसंगेन च विशुद्धस्य भागवतेन मलयध्वजेन संगोऽभूत् । ततो विष्णुभक्तिस्ततो वैराग्यं ततस्तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो भगवत्प्रसादलब्धज्ञानेन मोक्ष इति । अन्यत्तु कथालंकारमात्रं तथापि किंचिद्वृत्तिसामान्येनेह योजयिष्यामः । विदर्भस्य विशिष्टदर्भोपलक्षि-

दारका दीना दारकीर्वाऽपरायणाः ॥ वर्तिष्यंते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥ एवं कृपणया बुद्ध्या शोचंतमतदर्हणम् ॥ ग्रहीतुं कृतधीरेनं भयनामाभ्यपद्यत ॥ २२ ॥ पशुवद्यवनैरेष नीयमानः स्वकं क्षयम् ॥ अन्वद्रवन्ननुपथाः शोचंतो भृशमातुराः ॥ २३ ॥ पुरीं विहायोपगत उपरुद्धो भुजंगमः ॥ यदा तमेवानुपुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥ विकृष्यमाणः प्रसभं यवनेन बलीयसा ॥ नाविंदत्तमसाविष्टः सखायं सुहृदं पुरः ॥ २५ ॥ तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ॥ कुठारैश्चिच्छिदुः क्रुद्धाः स्मरंतोऽमीवमस्य तत् ॥ २६ ॥ अनंतपारे तमसि मग्नो नष्टस्मृतिः समाः ॥ शाश्वतीरनुभूयार्तिं प्रमदासंगदूषितः ॥ २७ ॥ तामेव मनसा गृह्णन्बभूव प्रमदोत्तमा ॥ अनंतरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥ उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ॥ युधि निर्जित्य राजन्यान्पांड्यः परपुरंजयः ॥ २९ ॥ तस्यां स जनयांचक्रे आत्मजामसितेक्षणाम् ॥ यवीयसः सप्त सुतान्सप्त द्रविडभूभृतः ॥ ३० ॥ एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम् ॥ भोक्ष्यते यद्वंशधरैर्मही मन्वंतरं परम् ॥ ३१ ॥ अगस्त्यः प्राग्दुहितर-मुपयेमे धृतव्रताम् ॥ यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ ३२ ॥ विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ॥ आरिराधयिषुः कृष्णं

तस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन यज्ञादिना च क्षत्रिया राजंते तेषु श्रेष्ठस्य वेश्मनि ॥ २८ ॥ मलयोपलक्षिते दक्षिणदेशे ध्वज इव दर्शनीयः स हि श्रीविष्णुभक्तप्रधानो देशः तत्र मुख्यो महाभागवत इत्यर्थः । पंडा निश्चयबुद्धिस्तामर्हतीति पांड्यः सः उपयेमे पुरंजनो भागवतसंगं प्राप्त इत्यर्थः ॥२९॥ आत्मजां श्रीकृष्णसेवारुचिम् । तत्संगेन भगवद्धर्मे रुचिरभूदित्यर्थः । असितस्य श्रीकृष्णस्येक्षणं यया ताम् । यवीयसः सप्त सुतान् श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वंदनं दास्यमिति भक्तिप्रकारान् सख्यात्मनिवेदनयोस्त्वंपदार्थज्ञानोत्तरकाल-त्वात्तस्य च भगवतैवोत्तरत्रोपदेक्ष्यमाणत्वादिदानीमनुत्पत्तेः सप्तेत्युक्तम् । भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः । द्रविडभूमिपालकान् द्रविडभूमिर्हि श्रवणादिभक्तिभिरेव सुरक्षिता-ऽस्तीति प्रसिद्धम् ॥ ३० ॥ अर्बुदमिति श्रवणादीनां प्रत्येकमनेके प्रकारा अभवन्नित्यर्थः । तदुक्तम् । भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यत इति । येषां वंशधरैर्यैतः प्रवृत्तैः संप्रदायभेदैः कृत्स्ना मही मन्वंतरं ततः परं च भोक्ष्यतेऽविद्याकामकर्मभ्योऽपि रक्षिष्यते ॥ ३१ ॥ अगस्त्यः अगानि निष्क्रियाणि गात्राणि स्त्यायति संघातयतीत्यगस्त्यो मनः स प्राक्प्रथमजातां दुहितरं

कृष्णसेवारुचिमुपयेमे तस्य मनः कृष्णे दृढां रतिं बबंधेत्यर्थः। धृतानि शमदमादीनि व्रतानि यया तां रतिम्। दृढेभ्यः सत्यलोकादिभोगेभ्योऽपि च्युतस्तद्रहित कृष्णरताविहामुत्र भोगवि-
रागो जात इत्यर्थः। स एवोपशमात्मकत्वान्मुनिः। कथंभूतः इध्मवाह आत्मजो यस्य सः। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतिप्रसिद्धा समिद्वहनोप-
लक्षिता गुरूपसत्तिर्वैराग्यादभूदित्यर्थः। नह्यविरक्तस्य गुरूपसत्तिः संभवति। कथापक्षे यथाश्रुतमेव ॥ ३२ ॥ क्ष्मां विभज्य तत्र श्रवणादिभक्तिभेदं व्यवस्थाप्य ॥ ३३ ॥ इदानीं पुरंजनस्य
स्त्रीभावं प्राप्तस्य सर्वतो विरक्तस्य पतिरेव गुरुः स्त्रीणामिति वचनात्पतिसेवया गुरुशुश्रूषाप्रकारं दर्शयितुमाह। हित्वेत्यादिना मनो दध इत्यंतेन ग्रंथेन। मदयतीति मदिरमीक्षणं यस्याः ॥ ३४ ॥
तत्र चंद्रवसाद्या नद्यस्तासां पुण्यैः सलिलैरुभयत्रांतर्बहिश्चात्मनो मलं क्षालयंस्तप आस्थित इत्युत्तरेणान्वयः ॥ ३५ ॥ अस्यते भूमौ क्षिप्यत इत्यस्थिबीजम् ॥ ३६ ॥ ३७ ॥ विद्यायोपासनया
पक्वकषायो दग्धकामादिवासनः। युयुजे आत्मनो ब्रह्मतां भावयामास। अक्षाणींद्रियाणि अनिलः प्राणः आशयश्चित्तम्। विजिता अक्षादयो येन ॥ ३८ ॥ आस्तेस्म। वर्षशतमिति ज्ञानस्य

स जगाम कुलाचलम् ॥ ३३ ॥ हित्वा गृहान्सुतान्भोगान्वैदर्भी मदिरेक्षणा ॥ अन्वधावत पांड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥ तत्र चंद्रवसा नाम ताम्रपर्णी वटोदका ॥ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥ कंदाष्टिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः ॥ वर्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ३६ ॥ शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ॥ सुखदुःखे इति द्वंद्वान्यजयत्समदर्शनः ॥ ३७ ॥ तपसा विद्यया पक्वकषायो नियमैर्यमैः ॥ युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः ॥ ३८ ॥ आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः ॥ वासुदेवे भगवति नान्यद्वेदो-द्वहन्रतिम् ॥ ३९ ॥ स व्यापकतयात्मानं व्यतिरिक्ततयात्मनि ॥ विद्वान्स्वप्न इवामर्शसाक्षिणं विरराम ह ॥ ४० ॥ साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप ॥ विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥ ४१ ॥ परे ब्रह्मणि चात्मानं परं ब्रह्म तथात्मनि ॥ वीक्षमाणो विहायेक्षामस्मादुपर-राम ह ॥ ४२ ॥ पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ॥ प्रेम्णा पर्यचरद्धित्वा भोगान्सा पतिदेवता ॥ ४३ ॥ चीरवासा व्रतक्षामा वेणीभूत-शिरोरुहा ॥ बभावुपपतिं शांता शिखा शांतमिवानलम् ॥ ४४ ॥ अजानती प्रियतमं यदोपरतमंगना ॥ सुस्थिरासनमासाद्य यथापूर्वमुपाचरत्

दुःसाधनतां दर्शयति। अतएव हरौ भक्तिं कृतवानित्याह। वासुदेवे रतिमुद्वहन्नन्यद्देहादिकं न वेद ॥ ३९ ॥ स एवं वर्तमान आत्मन्यात्मानं विद्वानन्यस्मादुपरराम। कथं विद्वान् व्यतिरितया देहा-
दिव्यतिरिक्तत्वेन। कुतः व्यापकतया देहादिप्रकाशकत्वेन। ननु देहाद्याकारो विमर्श एतत्प्रकाशयति नतु निराकार आत्मा अत आह। आमर्शस्यापि साक्षिणम्। अयं भावः। आमर्शो नामांतः-
करणवृत्तिः सा च जडत्वादात्मप्रकाश्यैवेति यथा स्वप्ने ममेदं शिरश्छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं वेत्ति तद्वत् ॥ ४० ॥ केन विद्वांस्तत्राह। साक्षाद्धरिरेव यो गुरुस्तेनोक्तेन सर्वतोमुखं
यथातथा स्फुरताऽनवच्छिन्नेन ज्ञानेन ॥ ४१ ॥ तदेवाह। पर इति। ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे शोकादिनिवृत्तिः अहमेव ब्रह्मेत्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः अतो
व्यतिहारेणेक्षमाणोऽस्मात्संसारादुपरराम। नन्वेवमपि जीवस्य कुतो ब्रह्मत्वापत्तिः ईक्षणस्यैव व्यवधायकत्वादित्याशंक्याह। ईक्षां विहाय दग्धेंधनानलवत्तस्याः स्वयमेवोपशांतेरिति भावः
॥ ४२ ॥ ४३ ॥ उपपतिं पत्युः समीपे। यद्वा पत्युः किंचिन्मात्रं न्यूना तत्समाना सती बभावित्यर्थः। उपोधिके चेति कर्मप्रवचनीयस्तद्योगे च द्वितीया। शांतमंगारावस्थमनलमुपशांता शुद्धा

ज्वाला यथा भवति तद्वत् ॥ ४४ ॥ तदानीमपि सुस्थिरमासनं यस्य अतएवाजानंती यदा तदा यथापूर्वमसेवत ॥ ४५ ॥ पत्युरंघ्रिमर्चयंती यदा तस्मिन्नंघ्रावूष्माणं नापश्यत् ॥ ४६ ॥ अनु
पतिरहितम् । अश्रुभिरासिच्य ॥ ४७ ॥ क्षत्रबंधुभ्योऽधार्मिकक्षत्रियेभ्योऽपि ॥ ४८ ॥ अवर्तयत्प्रवर्तयामास ॥ ४९ ॥ तस्यां निधायाग्निदानेनादीप्य च ॥ ५० ॥ पूर्वतरोऽनादिरीश्वरः सखा
द्वासुपर्णाविति श्रुतेः । साम्ना प्रियवाक्येन संबोधयन् ॥ ५१ ॥ यस्य यं शोचसि अग्रे सृष्टेः पूर्वं विचचर्थ ह मयि स्थितत्वेन सख्यसुखमनुभूतवानसि ॥ ५२ ॥ ननु नाहमावयोः सख्यं सहचरत्वं
च जानामीति चेत्तत्राह । यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदित्येवं किं स्मरसि । सख इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय सख्यं
स्मारयन्स्ववियोगकृतमनर्थमाह । हित्वेति सार्धैः षड्भिः । पदं स्थानम् ॥ ५३ ॥ हंसौ शुद्धौ मानसं हृदयमयनं ययोः कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ । ओको गृहम् ।

॥ ४५ ॥ यदा नोपलभेतांघ्रावूष्माणं पत्युरर्चती ॥ आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥ आत्मानं शोचती दीनमबंधुं विक्लवाश्रुभिः ॥ स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥ उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् ॥ दस्युभ्यः क्षत्रबंधुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥ एवं विलपती बाला विपिनेऽनुगता पतिम् ॥ पतिता पादयोर्भर्तू रुदंत्यश्रूण्यवर्तयत् ॥ ४९ ॥ चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम् ॥ आदीप्य चानुमरणे विलपंती मनो दधे ॥ ५० ॥ तत्र पूर्वतरः कश्चित्सखा ब्राह्मण आत्मवान् ॥ सांत्वयन्वल्गुना साम्ना तामाह रुदतीं प्रभो ॥ ५१ ॥ ब्राह्मण उवाच ॥ का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ॥ जानासि किं सखायं मां येनाग्रे विचचर्थ ह ॥ ५२ ॥ अपि स्मरसि चात्मानमविज्ञातसखं सखे ॥ हित्वा मां पदमन्विच्छन्भौमभोगरतो गतः ॥ ५३ ॥ हंसावहं च त्वं चार्य सखायौ मानसायनौ ॥ अभूतामंतरा वौकः सहस्रपरिवत्सरान् ॥ ५४ ॥ स त्वं विहाय मां बंधो गतो ग्राम्यमतिर्महीम् ॥ विचरन्पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥ पंचारामं नवद्वारमेकपालं त्रिकोष्ठकम् ॥ षट्कुलं पंचविपणं पंचप्रकृति स्त्रीधवम् ॥ ५६ ॥ पंचेंद्रियार्था आरामा द्वारः प्राणा नव प्रभो ॥ तेजोऽबन्नानि कोष्ठानि कुलमिंद्रियसंग्रहः ॥ ५७ ॥ विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ॥ शक्त्यधीशः पुमांस्त्वत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥ तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः ॥ तत्संगादीदृशीं प्राप्तो दशां पापीयसीं प्रभो ॥ ५९ ॥ न त्वं विदर्भदुहिता नायं वीरः सुहृत्तव ॥ न पतिस्त्वं पुरंजन्या रुद्धो नवमुखे यया ॥ ६० ॥ माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम् ॥ मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥

अंतरा विनैव वाशब्द एवार्थे सहस्रपरिवत्सरान्महाप्रलयो यावत् ॥ ५४ ॥ हे बंधो ! ग्राम्ये सुखे मतिर्यस्य स्त्रिया मायया ॥ ५५ ॥ पंच शब्दादय आरामा उपवनानि यस्मिन् नव द्वाराणि
प्राणच्छिद्राणि यस्मिन् एकः प्राणः पालो यस्मिन् त्रीणि पृथिव्यप्तेजांसि कोष्ठानि प्राकारा यस्मिन् षट् ज्ञानेंद्रियमनांसि कुलान्यभीष्टविषयसमर्पका वणिजो यस्मिन् पंच विपणा हट्टाः कर्मेन्द्रि-
याणि यस्मिन् पंच भूतानि प्रकृतिरुपादानकारणं यस्य स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् ॥ ५६ ॥ स्वमेवेमं श्लोकं व्याचष्टे । पंचेंद्रियार्था इति । षट्कुलमिति षट्त्वमेकपालमिति च
स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥ भूतान्येवाव्यया प्रकृतिरुपादानं यस्य स्त्रीधवमित्यस्य व्याख्यानं शक्तिरधीशा यस्य तद्वशः सन्नित्यर्थः ॥ ५८ ॥ स्पृष्टोऽभिभूतः अतो न विद्यते श्रुते ब्रह्मत्वे

स्मृतिर्यस्य ॥ ५९ ॥ तत्त्वमुपदिशति । न त्वमिति चतुर्भिः । सुहृत्पतिः नवद्वारे पुरे यया रुद्धोऽसि तस्याः ॥ ६० ॥ पुमांसं पूर्वजन्मनि यदमन्यथा इदानीं च सतीं श्रेष्ठां स्त्रियं यन्मन्यसे एषा माया यत उभयमपि वस्तुतो नास्ति यस्मदावां हंसौ शुद्धौ । नौ आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥ तत्त्वंपदार्थयोश्चिदंशेनैक्यमाह । अहमेव भवान् उपचारं वारयति न चान्य इति व्यतिहारोपदेश उक्ताभिप्रायः छिद्रमंतरम् ॥ ६२ ॥ तर्हि कथमावयोरज्ञत्वादिधर्मभेदस्तत्राह । यथेति । आत्मानं देहमादर्शे निर्मलं महांतं स्थिरं चावेक्षेत परस्य चक्षुषि च तद्विपरीतम् । विद्याविद्योपाधिकृतो धर्मभेद इत्यर्थः ॥ ६३ ॥ एवममुना प्रकारेण स मानसो हंसः क्षेत्रज्ञो हंसेन परमात्मना बोधितः सन्स्वस्थ आत्मनि स्थितः संश्चिरं ध्यात्वा तद्व्यभिचारेणेश्वरवियोगेन विषयाभिलाषबुद्ध्या नष्टां स्मृतिमहं ब्रह्मास्मीति ज्ञानं पुनः प्राप्तवान् ॥ ६४ ॥ कथामात्रमिति बुद्धिं वारयति । बर्हिष्मन्निति । पारोक्ष्येण राजकथामिषेण । तत्र हेतुः । यद्यस्मात् हे बर्हिष्मन्प्राचीनबर्हिः !

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो ॥ न नौ पश्यंति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥ यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ॥ द्विधाभूतमवेक्षेत तथैवांतरमावयोः ॥ ६३ ॥ एवं समानसो हंसो हंसेन प्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥ बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ॥ यत्परोक्षप्रियो देवो भगवान्विश्वभावनः ॥ ६५ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्यानेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥ प्राचीनबर्हिरुवाच ॥ भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ॥ कवयस्तद्विजानंति न वयं कर्ममोहिताः ॥ १ ॥ नारद उवाच ॥ पुरुषं पुरंजनं विद्याद्यद्व्यनक्त्यात्मनः पुरम् ॥ एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥ योऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः ॥ यन्न विज्ञायते पुंभिर्नामभिर्वा क्रियागुणैः ॥ ३ ॥ यदा जिघृक्षन्पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ॥ नवद्वारं द्विहस्तांघ्रि तत्रामनुत साध्विति ॥ ४ ॥ बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ॥ यामधिष्ठाय देहेऽस्मिन्पुमान्भुंक्तेऽक्षभिर्गुणान् ॥ ५ ॥ सखाय इंद्रियगणा ज्ञानं कर्म च यत्कृतम् ॥ सख्यस्तद्वृत्तयः प्राणः पंचवृत्तिर्यथोरगः ॥ ६ ॥ बृहद्बलं मनो विद्यादुभयेंद्रियनायकम् ॥ पंचालाः पंच विषया यन्मध्ये नवखं पुरम् ॥ ७ ॥ अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ॥ द्वे द्वे द्वारौ बहिर्याति यस्तदिंद्रियसंयुतः ॥ ८ ॥ अक्षिणी नासिके आस्यमिति पंच पुरः कृताः ॥ दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥ ९ ॥ पश्चिमे इत्यधो द्वारौ गुदं शिश्नमिहोच्यते ॥ खद्योताविर्मुखी चात्र नेत्रे

एतद्राजकथामिषेणात्मकथा प्रदर्शिता । यस्माद्देवः श्रीनारायणः परोक्षप्रियः साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायातीति भावः ॥ ६५ ॥ इति चतुर्थे टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ॥ स्त्रीसंगतो भवस्त्वीशसंगान्मुक्तिरिति स्फुटम् ॥ १ ॥ कवयोऽध्यात्मविदः ॥ १ ॥ व्यनक्ति लिंपति चेतनीकरोतीत्यर्थः । यद्वा । व्यनक्ति प्रकटयति ततश्च स्वकर्मणा पुरं जनयतीति पुरंजनपदं व्याख्यातं भवति । एकद्व्यादयः । पादा यस्य ॥ २ ॥ अविज्ञातशब्देनाहृतो व्याहृत उक्तो यः स ईश्वरः अविज्ञातनामनिरुक्तिः यद्यस्मात्पुंभिर्नामादियोगेन न विज्ञायते ॥ ३ ॥ तत्र तेषु पुरेषु मध्ये ॥ ४ ॥ अक्षभिरिंद्रियैः ॥ ५ ॥ पंचवृत्तित्वात्पंचशिराः सर्प इव प्राणः ॥ ६ ॥ एकादश महाभट इत्यनेन एकादशो महाभटो नायक इत्युक्तस्तं दर्शयति । बृहद्बलं यस्य तन्मनः नव खानि द्वाराणि यस्य ॥ ७ ॥ द्युमत्सख इत्यादेरर्थं संक्षेपेणाह । यस्तदिंद्रियसंयुतः स आत्मा ताभिर्द्वार्भिर्बहिर्यातीति ॥ ८ ॥ पुरः पूर्वभागो

कृताः ॥ ९ ॥ नेत्रे इति रूपमिति चक्षुषेति खद्योतादीनां व्याख्यानम् । शेषोऽनुवादः ईश्वरः पुरंजनः ॥ १० ॥ नासे इति व्याख्या अवधुनोतीत्यवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थान-त्वात् घ्राणोऽवधूतः । आस्यमिति व्याख्या रसज्ञविपणान्वित इत्यत्र रसज्ञशब्दनिर्दिष्टस्य रसविदित्यनुवादः रस इति व्याख्या रसनेंद्रियमित्यर्थः । विपणो वाग्रसविद्रस इत्येव पाठः आर्ष-त्वान्न दोषः ॥ ११ ॥ अंधोऽन्नम् ॥ १२ ॥ १३ ॥ ग्रामकमित्यस्यानुवादो ग्रामिणां रतिरिति तस्य व्याख्या व्यवाय इति ॥ १४ ॥ १५ ॥ विषूचीनपदार्थानुवादो विषूचिरिति तद्गुणैर्मनोगु-णैस्तमःसत्त्वरजोभिः ॥ १६ ॥ महिषी यद्यदीहेतेत्यादेरर्थं संगृह्याह । यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इंद्रियाणि परिणामयति तस्या गुणैः [illegible] लिप्त आत्मा तथा तथा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव सन्बलादनुकार्यते ॥ १७ ॥ आशुगमित्येतद्व्याचष्टे । संवत्सरस्येवाप्रतिहतो रयो वेगः प्रतीतितो यस्य स संवत्सररयः वस्तुतस्त्वगतिः स्वप्नशरीरादे

एकत्र निर्मिते ॥ रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ॥ १० ॥ नलिनी नालिनी नासे गंधः सौरभ उच्यते ॥ घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः ॥ ११ ॥ आपणो व्यवहारोऽत्र चित्रमंधो बहूदनम् ॥ पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ १२ ॥ प्रवृत्तं च निवृत्तं च शास्त्रं पंचालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत् ॥ १३ ॥ आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः ॥ उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १४ ॥ वैशसं नरकं पायुर्लुब्धकोंऽधौ तु मे शृणु ॥ हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥ १५ ॥ अंतःपुरं च हृदयं विषूचिर्मन उच्यते ॥ तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ॥ १६ ॥ यथा यथा विक्रियते गुणाक्तो विकरोति वा ॥ तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते ॥ १७ ॥ देहो रथस्त्विंद्रियाश्वः संवत्सररयो गतिः ॥ द्विकर्मचक्रस्त्रिगुणध्वजः पंचासुबंधुरः ॥ १८ ॥ मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वंद्वकूबरः ॥ पंचेंद्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥ आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ॥ एकादशेंद्रियचमूः पंचसूनाविनोदकृत् ॥ २० ॥ संवत्सरश्चंडवेगः कालो येनोपलक्षितः ॥ तस्याहानीह गंधर्वा गंधर्व्यो रात्रयः स्मृताः ॥ हरंत्यायुः परिक्रांत्या षष्ट्युत्तरशतत्रयम् ॥ २१ ॥ कालकन्या जरा साक्षाल्लोकस्तां नाभिनंदति ॥ स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २२ ॥ आधयो व्याधयस्तस्य सैनिका यवनाश्चराः ॥ भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः ॥ २३ ॥ एवं बहुविधैर्दुःखैर्दैवभूतात्मसंभवैः ॥ क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २४ ॥ प्राणेंद्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः ॥ शेते कामलवान् ध्यायन् ममाहमिति कर्मकृत् ॥ २५ ॥ यदात्मानमविज्ञाय भगवंतं परं गुरुम् ॥ पुरु-

र्बुद्धावेव विवृतत्वेन देशांतरगत्यभावात् । पाठांतरे संवत्सरश्च तत्कृतं वयश्च ताभ्यां गतिर्यस्येति । द्वीषमित्यस्य व्याख्या नारदेन न कृता । द्विचक्रमित्यस्य व्याख्या द्विकर्मचक्र इति । त्रिगुण-ध्वज इति त्रिवेणुपदव्याख्या ॥ १८ ॥ पंचप्रहरणमित्येतद्व्याचष्टे पंचेन्द्रियार्थप्रक्षेप इति ॥ १९ ॥ पंचेंद्रियैः सूनाविनोदमिवान्यायेन विषयसेवां करोतीति पंचसूनाविनोदकृत् । अनेन चचार मृगयां तत्रेत्यादि व्याख्यातम् ॥ २० ॥ परिक्रांत्या परिभ्रमणेन ॥ २१ ॥ भगिनीत्वेन जगृहे लोकानां क्षयाय ॥ २२ ॥ चराः संचारिणः भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतू रयो वेगो यस्य प्रज्वारस्येति प्रशब्दव्याख्या पाठांतरे भूवक्रता अरयः अनेन चारिभिरुपरुद्ध इत्यरिपदं व्याख्यातम् । द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥ एवं परोक्षत्वेनोक्तमर्थं व्याख्याय

सर्वकथातात्पर्यमाह । एवमित्यादिविरमक्रमेणेत्यंतेन आधिदैविकादिभिर्दुःखैः क्लिश्यमानो ममाहमिति देहे शतं वर्षाणि शेते वर्तत इति द्वयोरन्वयः ॥ २४ ॥ अशनापिपासादीन्प्राणधर्मानंधत्वादी-
निंद्रियधर्मान्कामादीन्मनोधर्मांश्च निर्गुणोऽप्यात्मन्यध्यस्य कामलवान्विषयसुखलेशान्ध्यायन्कर्मकृत् ॥ २५ ॥ ततः किमत आह । यदेति द्वाभ्याम् । स्वदृक् स्वप्रकाशस्वभावोऽपि ॥ २६ ॥ शुक्लं
सात्त्विकम् । कृष्णं तामसम् । लोहितं राजसम् । यथा कर्म तथा जायते ॥ २७ ॥ तदेवाह । शुक्लादिति द्वाभ्याम् । प्रकाशो भूयिष्ठो येषु दुःखमुदर्क उत्तरफलं येषु क्रियया आयामो येषु तान्
लोहितात् तमःशोकावुत्कटौ येषु तान् कृष्णादिति ज्ञेयम् ॥ २८ ॥ नोभयं नपुंसकम् । यथाकर्मगुणं कर्मगुणावनतिक्रम्य ॥ २९ ॥ तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टांतमाह । द्वाभ्याम् ।
क्षुधा परीतो व्याप्तः सारमेयः श्वा दंडं दंडेन ताडनम् ॥ ३० ॥ कामव्याप्त आशयो यस्य ॥ ३१ ॥ ननु तर्हि सुखस्य संभवाद्दुःखस्य च प्रतीकारसंभवान्नैकांततो हेयत्वं तत्राह । दुःखेष्विति ।
दुःखस्य प्रतीकारस्तावन्नास्ति स्याच्चेत्तस्य तस्य प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति ॥ ३२ ॥ प्रतिक्रियायामपि दुःखरूपत्वादिति सदृष्टांत-

षस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥ २६ ॥ गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ॥ शुक्लं कृष्णं लोहितं वा यथा कर्माभिजायते ॥ २७ ॥
शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोति कर्हिचित् ॥ दुःखोदर्कान् क्रियायासांस्तमःशोकोत्कटान् क्वचित् ॥ २८ ॥ क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभय-
मंधधीः ॥ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः ॥ २९ ॥ क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ॥ चरन् विंदति यद्दिष्टं दंडमोदनमेव वा
॥ ३० ॥ तथा कामाशयो जीव उच्चावचपथा भ्रमन् ॥ उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३१ ॥ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ॥
जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ॥ ३२ ॥ यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् ॥ तं स्कंधेन स आधत्ते तथा सर्वाः प्रतिक्रियाः
॥ ३३ ॥ नैकांततः प्रतीकारः कर्मणां कर्म केवलम् ॥ द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३४ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥
मनसा लिंगरूपेण स्वप्ने विचरतो यथा ॥ ३५ ॥ अथात्मनोऽर्थभूतस्य यतोऽनर्थपरंपरा ॥ संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥ ३६ ॥
वासुदेवे भगवति भक्तियोगः समाहितः ॥ सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३७ ॥ सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः ॥ शृण्वतः
श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३८ ॥ यत्र भागवता राजन् साधवो विशदाशयाः ॥ भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥ तस्मिन्

माह । यथा हीति ॥ ३३ ॥ दुःखस्य मूलभूतानि कर्माणि प्रतिक्रियादिकर्मभिर्नैव निवर्तंत इत्याह । नैकांततोऽत्यंतं सवासनं केवलं ज्ञानरहितं अविद्ययोपसृतं प्राप्तं अतो विरोधान्न निवर्त्यनिवर्त-
कत्वमिति भावः । अत्र दृष्टांतः । स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्नमत्यंतं न प्रतीकरोतीत्यर्थः ॥ ३४ ॥ ननु तर्ह्यज्ञानविलसितसंसृतिहेतोर्देहादेरप्यसत्त्वात्किं तन्निवर्तनप्रयासेन तत्राह ।
अर्थे हीति । लिंगरूपेणोपाधिभूतेन ॥ ३५ ॥ तदेवं संसृतिप्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह । अथ तस्मात्पुरुषार्थभूतस्यैवात्मनो यतोऽज्ञानान्मनसो वाऽनर्थपरंपरारूपा संसृतिर्भवति तस्य व्यव-
च्छेदो गुरुरूपे वासुदेवे भक्त्यैव ॥ ३६ ॥ ननु संसृतिनिवृत्तिर्वैराग्यपूर्वकाज्ज्ञानादेव नतु भक्त्या तरति शोकमात्मविदित्यादिश्रुतेस्तत्राह । वासुदेव इति । सध्रीचीनेन समीचीनेन प्रकारेण ॥ ३७ ॥
नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह । स त्वच्युतस्य कथामाश्रित्य वर्तमानोऽचिरात्स्यात् कस्य स्यात्तदाह । शृण्वतोऽधीयानस्य च ॥ ३८ ॥ कुत्र स्यात्तदाह । यत्रेति । भगवतो

गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते ॥ ३९ ॥ ननु साधुसंगं विना स्वयमेव हरिकथाचिंतनादिना भक्तिर्भवेदेवेत्याशंक्याह । द्वाभ्याम् । तस्मिन्स्थाने महद्भिर्मुखरिताः कीर्तिताः मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु असारांशरहितशुद्धामृतवाहिन्य इत्यर्थः । अवितृषोऽलंबुद्धिशून्याः संतो गाढैः सावधानैः कर्णैर्ये ताः सरितः पिबंति सेवंते अशनशब्देन क्षुल्लक्ष्यते । अशनादयस्तान्न स्पृशंति भक्तिरसिकान्न बाधंत इत्यर्थः ॥ ४० ॥ सत्संगमंतरेण स्वयमेव कथाचिंतनादावालस्यादिना रसावेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न संभवतीत्याह । एतैरिति ॥ ४१ ॥ भगवदनुग्रहमंतरेण तु न कस्यापि ज्ञानसंभव इति कैमुत्यन्यायेनाह चतुर्भिः । प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥ मदंताः अहं नारदोंऽते येषाम् ॥ ४३ ॥ वाचां पतयोऽपि तपोविद्यासमाधिभिरुपायैः पश्यंतो विचिन्वंतोऽपि पश्यंतं सर्वसाक्षिणं न पश्यंति ॥ ४४ ॥ कुत इत्यत आह । शब्दब्रह्मणि वेदे उरुर्विस्तारो यस्य अर्थतोऽपि पारशून्ये तस्मिन्वर्तमानाः मंत्राणां लिंगैर्वज्रहस्तत्वादिगुणयुक्तविविधदेवताभिधानसामर्थ्यैः परिच्छिन्नमेवेंद्रादिरूपं तत्तत्कर्माग्रहेण भजंतः परं परमेश्वरं न विदुः ॥ ४५ ॥ तर्ह्यन्यः को नाम कर्माद्याग्रहं हित्वा परमेश्वरमेव भजेदित्यत आह ।

**स्पृशंत्यशनतृड्भयशोकमोहाः ॥ ४० ॥ महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवंति ॥ ता ये पिबंत्यवितृषो नृप गाढकर्णैस्तान्न एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ॥ न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४१ ॥ प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः ॥ दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४२ ॥ मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठ इत्येते मदंता ब्रह्मवादिनः ॥ ४३ ॥ अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ॥ पश्यंतोऽपि न पश्यंति पश्यंतं परमेश्वरम् ॥ ४४ ॥ शब्दब्रह्मणि दुष्पारो चरंत उरुविस्तरे ॥ मंत्रलिंगैर्व्यवच्छिन्नं भजंतो न विदुः परम् ॥ ४५ ॥ यदा यमनुगृह्णाति भगवानात्मभावितः ॥ स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४६ ॥ तस्मात् कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ॥ मार्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ४७ ॥ स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः ॥ आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ४८ ॥ आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमंडलम् ॥ स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम् ॥ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ॥ ४९ ॥ हरिर्देहभृतामात्मा स्वयंप्रकृतिरीश्वरः ॥ तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥ ५० ॥ स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥ इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः ॥ ५१ ॥ नारद उवाच ॥ प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ॥ अत्र मे वदतो**

यदा यमनुगृह्णाति । अनुग्रहे हेतुः । आत्मनि भावितः सन् स तदा लोके लोकव्यवहारे वेदे च कर्ममार्गे परिनिष्ठितां मतिं त्यजति ॥ ४६ ॥ अर्थकाशिषु परमार्थत्वेन प्रकाशमानेषु पुरुषार्थबुद्धिं माकृथाः । प्ररोचनाय केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु यैः ॥ ४७ ॥ ननु वेदेन स्वर्गादिसाधनत्वेनोक्तानि कर्माणीति वेदवादिनो वदंति कथमस्पृष्टवस्तुष्वित्युच्यते तत्राह । हेधूम्रधियो मलिनबुद्धयः! सकर्मकं कर्मपरं वेदमाहुस्ते अतद्विदोऽवेदज्ञाः यतस्ते स्वं स्वरूपभूतं लोकमात्मतत्त्वं वेदतात्पर्यगोचरं न विदुः । यत्र देवोऽस्ति ॥ ४८ ॥ त्वं तु महामूर्ख इत्याह । आस्तीर्येति । बृहद्वधाद्बहुपशुवधात् मानी यज्वाऽहमित्यहंकारी अतः स्तब्धो विनीतः सन्कर्म नावैषि परं विद्यास्वरूपं तच्च न वेत्सि । नारदः स्वयं कृपया तद्द्वयं निरूपयति । हरिं तोषयतीति हरितोषं यत्तदेव कर्म । यया तस्मिन् हरौ मतिर्भवति सैव विद्या महाफलत्वात् ॥ ४९ ॥ कुत इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह । द्वाभ्याम् । हरिर्देहभृतामात्मा ईश्वरश्च । तत्र हेतुः । स्वयं स्वातंत्र्येण प्रकृतिः

निजमुखाद्विगलितममृतमिव स्वादु आसव इव मादकं च यत्सहासं भाषणं तस्मिन्नामोदो निश्वासगंधस्तेन मदांधा ये मधुकरनिकरास्तैरुपरोध आवरणं तेन भयाद्द्रुतः शीघ्रो यः पदविन्यासस्तेन वल्गुस्पंदनं किंचिच्चलनं स्तनकलशयोः कबरभारे रशनायां च यस्यास्ताम् । तस्या अवलोकनेन विवृतावसरस्य दत्तावकाशस्य ॥ ६ ॥ का त्वं शैले गिरावस्मिन्किं चिकीर्षसि । मुनिवर्येत्यादि-पुंस्त्वेन संबोधनादि जाड्यानुकरणार्थम् । हे मुनिवर्य ! नूनं भगवतः परदेवताभूतस्य मायाऽसि । भ्रुवावालक्ष्याह । हे सुहृत्सखे ! विज्ये निर्गुणे धनुषी बिभर्षि किमात्मनोऽर्थे तवैताभ्यां किं कार्य-मस्ति । किंवा प्रमत्तानजितेंद्रियान्मृगतुल्यानस्मदादीन्मृगयसे । तान्वशीकर्तुं धनुषी धारयसीत्यर्थः ॥ ७ ॥ कटाक्षावालक्ष्याह । बाणाविमौ शतपत्रे नेत्रकमले ते एव पत्राणि पिच्छानि ययोः शांतौ विभ्रमेण मंथरौ पुंखाभ्यां विनापि रुचिरौ पत्रतया कल्पितनेत्राभ्यां परभागस्य पुंखस्थानीयस्याभावात् । अतितिग्मौ तीक्ष्णौ दंतावग्रभागौ ययोस्तौ कस्मै प्रयोक्तुमिच्छसीति न विद्मः अतो भयादेतावत्प्रार्थयामहे तवायं विक्रमोऽस्माकं क्षेमायास्तु ॥ ८ ॥ तदंगपरिमललोभेनानुगच्छतो भ्रमरानालक्ष्याह । शिष्या इति । अजस्रं संततं युष्मच्छिखातो विलुलिता विगलिताः सुमन-

तद्वलोकनेन विवृतावसरस्य भगवतो मकरध्व-जस्य वशमुपनीतो जडवदिति होवाच ॥ ६ ॥ का त्वं चिकीर्षसि च किं मुनिवर्य शैले मायाऽसि कापि भगवत्परदेवतायाः ॥ विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किंवा मृगान्मृगयसे विपिने प्रमत्तान् ॥ ७ ॥ बाणाविमौ भगवतः शतपत्रपत्रौ शांतावपुंखरुचिरावतितिग्मदंतौ ॥ कस्मै युयुंक्षसि वने विचरन्न विद्मः क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ८ ॥ शिष्या इमे भगवतः परितः पठंति गायंति साम सरहस्यमजस्रमी-शम् ॥ युष्मच्छिखाविलुलिताः सुमनोऽभिवृष्टीः सर्वे भजंत्यृषिगणा इव वेदशाखाः ॥ ९ ॥ वाचं परं चरणपंजरतित्तिरीणां ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम् ॥ लब्धा कदंबरुचिरंकविटंकबिंबे यस्यामलातपरिधिः क्व च वल्कलं ते ॥ १० ॥ किं संभृतं रुचिरयोर्द्विज शृंगयोस्ते मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ॥ पंकोऽरुणः सुरभिरात्मविषाण ईदृग्येनाश्रमं सुभग मे सुरभीकरोषि ॥ ११ ॥ लोकं प्रदर्शय सुहृत्तम तावकं मे यत्रत्य इत्थ-मुरसावयवावपूर्वौ ॥ अस्मद्विधस्य मन उन्नयनौ बिभर्ति बह्वद्भुतं सरसरासमुधादि वक्त्रे ॥ १२ ॥ का वाऽऽत्मवृत्तिरदनाद्धविरंग वाति विष्णोः

नोऽभिवृष्टीर्गलितानि कुसुमानि भजंतीत्यर्थः । शुद्धत्वेनोपमा वेदशाखा इवेति ॥ ९ ॥ नूपुरस्वनमाकर्ण्याह । वाचमिति । तुभ्यं तव चरणगतपंजरयोर्नूपुरयोस्तित्तिरीणामंतर्गतरत्नानां परं केवलं वाचं शृणुमः । कथंभूताम् । अरूपा अदृष्टवक्तृका मुखरा अतिप्रकटा च तां च तां च । पीतं परिधानवस्त्रं नितंबकांतित्वेन प्रकल्प्याह । कदंबकुसुमस्य रुचिर्दीप्तिरंकविटंकबिंबे नितंबस्य सुंदरमंडले क्व लब्धा । पाठांतरे अंगेति संबोधनम् । मेखलामालक्ष्याह । यस्यामलातपरिधिर्वर्तते । वस्त्रं नितंबकांतित्वेन प्रकल्प्य वस्त्रमदृष्ट्वैव पृच्छति । क्व च ते वल्कलमिति ॥ १० ॥ स्तना-वालक्ष्याह । शृंगयोः स्तनयोः किं संभृतं किं पूर्णमस्ति । मनोहरं किंचिदस्तीत्येतावत्तु जानामि । यतो मध्ये कृशोऽपि त्वं कृच्छ्रेण वहसि धारयसि । यत्र च मे दृशिर्दृष्टिः श्रिता संलग्नाऽस्ति । अन्यथेदं द्वयं न घटत इति भावः । स्तनगतं कुंकुममालक्ष्याह । पंकोऽरुण आत्मनस्तव विषाणे शृंगे ईदृगत्यपूर्वः । कुत इत्यत आह । येन पंकेनाश्रमं सुरभीकरोषि सुगंधयुक्तं करोषीति ॥ ११ ॥ लोकं स्थानम् । यत्रत्यो जन उरसा इत्थमपूर्वावयवौ बिभर्ति । मनस उन्नयनौ क्षोभकौ । पाठांतरे इत्थंभूतलक्षणे तृतीया । वक्त्रे च बह्वद्भुतं बिभर्ति । किं तदाह । रसो मधुरालापो रासो विला-

सस्ताभ्यां सहिता सुधा अधरामृतमादिशब्दात्स्मितनर्मादि ॥ १२ ॥ का वा तव लोके आत्मनो देहस्य वृत्तिराहारः । अंग हे सखे ! अदनाच्चर्वणाद्बहिरिति तत्संबंधी गंधो बाह्यागच्छति इति तांबूलाभिप्रायम् । अदनाद्बहिरंग भातीति पाठे मम तावद्भोजनाद्बहिर्भूतैव वृत्तिर्भातीत्यर्थः । यतस्त्वं विष्णोः कलाऽसि विष्णुश्च नाश्नाति । अनश्नन्नन्यो अभिचाकशीतीति श्रुतेः । विष्णोः कलासीत्यत्र हेतुः । तव च कर्णौ विष्णोरिवानिमिषोन्मकरौ अनिमिषौ रत्ननेत्रत्वेन निमेषशून्यावुल्लसंतौ मकरौ तदाकारे कुंडले ययोस्तौ । किंच । तव मुखं सरइत्सर इव । तदेवाह । उद्विग्नं चंचलं मीनयुगलमिव नेत्रद्वयं यस्मिन् । द्विजा दंतास्तेषां पंक्त्या शोचिः शोभा यस्मिन् । सरसि तु द्विजा राजहंसाः आसन्नो भृंगनिकर इव केशस्तोमः परिमललुब्धभृंगस्तोमो वा यस्मिन् ॥ १३ ॥ पतंगः कंदुको भ्रमतो भ्रमचित्तस्य मेऽक्षिणी एजयते चंचलतां नयति । वक्रकेशसमूहं मुक्तबंधनं न स्मरसि न संभावयसि किम् । कष्टो धूर्तोऽनिलो नीवीं हरत्येतन्न स्मरसि किम्

कलास्यनिमिषोन्मकरौ च कर्णौ ॥ उद्विग्नमीनयुगलं द्विजपंक्तिशोचिरासन्नभृङ्गनिकरं सर इन्मुखं ते ॥ १३ ॥ योऽसौ त्वया करसरोजहतः पतंगो दिक्षु भ्रमन्भ्रमत एजयतेऽक्षिणी मे ॥ मुक्तं न ते स्मरसि वक्रजटावरूथं कष्टोऽनिलो हरति लंपट एष नीवीम् ॥ १४ ॥ रूपं तपोधन तपश्चरतां तपोघ्नं ह्येतत्तु केन तपसा भवतोपलब्धम् ॥ चर्तुं तपोऽर्हसि मया सह मित्र मह्यं किंवा प्रसीदति स वै भवभावनो मे ॥ १५ ॥ न त्वां त्यजामि दयितं द्विजदेवदत्तं यस्मिन्मनो दृगपि नो न वियाति लग्नम् ॥ मां चारुशृंग्यर्हसि नेतुमनुव्रतं ते चित्तं यतः प्रतिसरंतु शिवाः सचिव्यः ॥ १६ ॥ श्रीशुक उवाच ॥ इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुधमतिरधिसभाजयामास ॥ १७ ॥ सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येण पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जंबूद्वीपपतिना भौमस्वर्गभोगान्बुभुजे ॥ १८ ॥ तस्यामु ह वा आत्मजान्स राजवर आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नव पुत्रानजनयत् ॥१९॥ सा सूत्वाऽथ सुतान्नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे ॥ २० ॥ आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनामानि यथाभागं जंबूद्वीपवर्षाणि बुभुजुः ॥ २१ ॥ आग्नीध्रो राजाऽतृप्तः कामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवारुंध यत्र पितरो मादयंते ॥२२॥ संपरेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रम्यां श्यामां नारीं भद्रां देववीतिमितिसंज्ञा नवोदवहन् ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे आग्नीध्रवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

॥ १४ ॥ उपलब्धं प्राप्तम् । मह्यं मम । हे मम मित्र ! मया सह तपश्चर्तुमर्हसि । किंच । स वै भवभावनः संसृतिविस्तारको ब्रह्मा मे प्रसीदति । त्वां भार्यां कल्पयतीत्यर्थः ॥ १५ ॥ द्विजदेवेन ब्रह्मणा दत्तम् । दृक् मनश्च लग्नं सन्नापयाति । हे चारुशृंगि ! यतस्ते चित्तं तत्र मां त्वदधीनं नेतुमर्हसि । सचिव्यस्तव सख्योऽपि शिवा अनुकूलाः सत्यो मां प्रतिसरंत्वनुवर्तताम् । यद्वा । एतावत्पर्यंतं मे याः सचिव्यः सख्यः शिवाः फेरवस्ताः प्रतिसरंतु निर्यांतु । यद्वा । वनवासे सहचर्यो हरिण्यः शिवाः प्रतिसरंतु प्रदक्षिणं गच्छंतु ॥ १६ ॥ ग्राम्येषु वैदग्ध्यं यस्यास्तया परिभाषया वाचा । सभाजयामास पूजयामास संमुखीचकारेत्यर्थः ॥ १७ ॥ बुद्ध्यादीनां द्वंद्वैक्यम् ॥ १८ ॥ १९ ॥ सूत्वा प्रसूय । उपतस्थेऽभजत् ॥ २० ॥ औत्पत्तिकेनैव स्वभावेन संहननं दृढांगत्वम्

॥ २१ ॥ कामानां भोगैः अध्यधिकं मन्यमानः । श्रुतिभिर्वेदोक्तैः कर्मभिः । अवारुंध प्राप । मादयंते मोदंते ॥ २२ ॥ इत्येवंभूताः संज्ञाः यासां ताः परिणीतवंतः ॥ २३ ॥ इति पंचमस्कंधे टीकायां द्वितीयोऽध्यायः ॥ २ ॥ तृतीये चरितं नाभेः परं मंगलमीर्यते ॥ यस्य यज्ञे प्रतीतः सन्पुत्रोऽभूदृषभो हरिः ॥ १ ॥ नाभिराग्नीध्रसुतः । अपुत्रया मेरुदेव्या भार्यया सह ॥ १ ॥ प्रवर्ग्यसंज्ञकेषु कर्मसु क्रियमाणेषु । द्रव्यादयः सप्त ये योगा उपायास्तेषामुपपत्त्या संपत्त्या दुरधिगमो दुष्प्रापोऽपि भागवतेषु कृपालुतया सुप्रतीकः शोभनावयवः सन्नात्मानमाविश्चकार । अपराजितं स्वतंत्रम् । निजभक्तानां येऽभिप्रेतार्थास्तेषां विधित्सया गृहीतमाकृष्टं हृदयं चित्तं यस्य । हृदयंगमं सुखकरम् । यतो मनो नयनान्यानंदयंति येऽवयवास्तैरभिरामं सुंदरम् ॥ २ ॥ अथ हेत्यादिनिपातबाहुल्यं वाक्यालंकाराय । आविष्कृतं भुजानां युगलद्वयं चतुष्टयं येन । हिरण्मयं तेजोमयम् । पुरुषेषु विशिष्यत इति तथा पुरुषोत्तममित्यर्थः । अर्हणेनार्घ्येण सहोपतस्थुरभजन्नित्यन्वयः । विलसन् श्रीवत्स एव ललामं चिह्नं यस्य । दरवरः शंखश्रेष्ठः वनरुहं पद्मं अच्छूरि चक्रं अमृतमणिः कौस्तुभः एवमादिभिरुपलक्षितम् । स्फुटकिरणा ये प्रवरा मणयस्तन्मयानि यानि मुकुटादीन्यंगानां भूषणानि तैर्विभूषितम् । बहुमाने दृष्टांतः । अधना इवोत्तमधनं निधिम् ॥ ३ ॥ अर्हसीत्यादिना निगदेन स्तुवंति । हे अर्हत्तम ! परिपूर्णोऽपि त्वमनुपथानां भृत्यानामस्माकमर्हणं मुहुः स्वयमेव स्वीकर्तुमर्हसि । ननु वयं स्तोतुं शक्ता इत्याहुः । नमोनम इत्येतावदेवास्माकं सद्भिरुपशिक्षितं त्वद्रूपस्य दुर्ज्ञेयत्वात् । तदेवाहुः । कोऽर्हतीति । प्रकृतिगुणानां व्यतिकरः प्रपंचस्तस्मिन्नेव मतिर्यस्यात एवानीशः । प्रकृतिपुरुषयोः परस्यात एवेश्वरस्यार्वाक्तनाभिस्त्वामस्पृशंतीभिः प्रपंचांतर्गताभिर्नाम च रूपं चाकृतिश्चाकारस्ताभिस्तव रूपनिरूपणं कर्तुं को नाम पुमानर्हति ॥ ४ ॥ स वाङ्मनसाऽगोचरोऽपि ह्येतन्मात्रमेवार्हति नाधिकमित्याहुः । सकलजननिकायस्य वृजिनं निरस्यंतीति तथा शिवतमाः प्रवराश्च ये गुणगणास्तेषामेकदेशस्तस्य कथनाद्विनाऽधिकं नार्हति ॥ ५ ॥ शिलेति पाठे शिलं कुशादिमंजरी । एवमात्वं भक्तानां सुखाराध्य एवेत्याहुः । हे परम ! परिजनैरनुरागेण विरचिता ये शबलसंशब्दा गद्गदाक्षरस्तुतयः सलिलं च सितकिसलयाश्च शुद्धपल्लवाः ।

श्रीशुक उवाच ॥ नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवंतं यज्ञपुरुषमवहितात्माऽयजत ॥ १ ॥ तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान्भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेतार्थविधित्सया गृहीतहृदयो हृदयंगमं मनोनयनानंदनावयवाभिराममाविश्चकार ॥ २ ॥ अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयांबरधरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालाच्छूर्यमृतमणिगदादिभिरुपलक्षितं स्फुटकिरणप्रवरमुकुटकुंडलकटककटिसूत्रहारकेयूरनूपुराद्यंगभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः ॥ ३ ॥ ऋत्विज ऊचुः ॥ अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमो नम इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान्प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभी रूपनिरूपणम् ॥ ४ ॥ सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥ ५ ॥ परिजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वांकुरैरपि संभृतया सपर्यया किल परम परितुष्यसि ॥ ६ ॥ अथानयाऽपि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे ॥ ७ ॥ आत्मन एवानुसवनमंजसाऽव्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किंतु नाथाशिष आशासानानामेतदभि-

दिभिः संभृतया संपादितया पूजया परितुष्यसि ॥ ६ ॥ अथेति प्रकारांतरे । अन्यथा त्वनयेज्यया यागेनाप्युरुभारभरयाऽनेकांगसमृद्ध्याऽपि भवतः समुचितमपेक्षितं प्रयोजनं नैव पश्यामः ॥ ७ ॥ अत्र हेतुः । आत्मनः स्वत एवानुसवनं सर्वदांजसा साक्षादव्यतिरेकेण समन्वयेन बोभूयमाना अतिशयेन भवंतो येऽशेषाः पुरुषार्थास्ते स्वरूपं यस्य परमानंदस्य । न चैवं सत्यपि यागानर्थक्य- मित्याहुः । किंत्विति । सकामानामस्माकमेवैतदुपपद्यते न तवेत्यर्थः ॥८॥ स्वोपयोगमेव प्रदर्शयंति । तद्यथेति । परमेभ्योऽपि हे परमपुरुष ! प्रकर्षयुक्तया करुणया । उपकल्पयिष्यन्संपादयिष्यन् । चकारात्कामितं च नापचितोऽनपचितोऽपूजित एव पूजाऽनपेक्षत्वात्स्वयमेवोपलक्षितो दृष्टोऽसि । इतरवत्सापेक्षवत् ॥ ९ ॥ यद्यपि त्वं वरान्दातुमाविर्भूतोऽसि तथापि हे अर्हत्तम राजर्षेर्बर्हिषि यज्ञे निजपुरुषाणां त्वद्भक्तानामस्माकमीक्षणविषयो भवान् यर्हि यदा आसीत्तदा ह्ययमेव वरः संजातः ॥ १० ॥ दर्शनस्य दुर्लभतामाहुः । असंगेन वैराग्येण निशितं यज्ज्ञानं स एवानलस्तेन विधूता अशेषा मला येषां अतो भवत इव स्वभावो येषाम् । तानेवाहुः । आत्मारामाणामेवंभूतानां मुनीनामपि परममंगलायनं गुणगणकथनमेव नतु दर्शनं यस्य अतस्तैरनवरतं परिगणिता

संराधनमात्रं भवितुमर्हति ॥ ८ ॥ तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपरमपुरुष प्रकर्षकरुणया स्वमहिमानं चापवर्गाख्यमुप- कल्पयिष्यन्स्वयं नापचित एवेतरवदिहोपलक्षितः ॥ ९ ॥ अथायमेव वरो ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत् ॥ १० ॥ असंगनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगण परममंगलायनगुणगणकथनोऽसि ॥ ११ ॥ अथ कथंचित्स्खलनक्षुत्पतनजृंभणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतना- मधेयानि वचनगोचराणि भवंतु ॥ १२ ॥ किंचायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भवंतमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ॥ १३ ॥ को वा इह तेऽपराजितोऽपराजितया माययाऽनवसितपदव्याऽनावृतमतिर्विषयविषरयानावृ- तप्रकृतिरनुपासितमहच्चरणः ॥१४॥ यदु ह वाव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मंदानां नस्तद्यद्देवहेलनं देवदेवार्हसि साम्येन सर्वान्प्रतिवो- ढुमविदुषाम् ॥ १५ ॥ श्रीशुक उवाच ॥ इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवंदितचरणः सदयमिदमाह ॥ १६ ॥ श्रीभगवानुवाच ॥ अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्यात्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्या-

अभ्यस्ता गुणगणा यस्येति संबोधनम् ॥ ११ ॥ दर्शनेनैव कृतार्था अपि वरमेकं प्रार्थयंते । अथेति । स्मरणाय विवशानां त्वां स्मर्तुमशक्तानां नः ॥ १२ ॥ अन्यच्च प्रार्थनीयमस्तीत्याहुः । किंचेति । आशिषामैहिकानां स्वर्गापवर्गयोरपीश्वरं त्वामुपधावति । प्रजायामेव पुरुषार्थ इति प्रत्ययो यस्य । अधनो यथा फलीकरणं तुषकणादिकमाशासानो धनदमुपधावति ॥ १३ ॥ इदं च नातिचित्रमित्याहुः । इह संसारे तेऽपराजितया माययाऽनवसितपदव्याऽलक्षितमार्गयाऽपराजितः को वै न कोऽपि । अतस्तयाऽनावृतमतिः कः अतएव विषय एव विषं तस्य रया वेगास्तैरनावृता प्रकृतिर्यस्य । स कः । यद्यनुपासितमहच्चरणः अतस्त्वन्मायया मोहितस्यैवमाशंसा घटत इत्यर्थः ॥ १४ ॥ अदभ्रकर्तः हे बहुकार्यकारिन् ! अल्पीयसे कार्याय त्वं यद्यस्मादिह समाहूतोऽसि । तत्र प्रजायामर्थे धीर्येषां मंदानां तेषां नो यद्देवहेलनमवज्ञानं तत्सर्वान्प्रति तव साम्येन हेतुना प्रतिवोढुं सोढुमर्हसि ॥ १५ ॥ इति निगदेन गद्यात्मकस्तोत्रेण । वर्षधरो भारतवर्षपतिर्नाभिस्तेनाभिवा-

दिता ये ऋत्विजस्तैरभिवंदितौ चरणौ यस्य ॥ १६ ॥ असुलभत्वे हेतुः । ममाहमेवाभिरूपः सदृशः कैवल्याददि्वतीयत्वात् । द्विजेषु देवा इव ये ब्राह्मणास्तेषां कुलम् ॥ १७ ॥ आग्नीध्रीये नाभौ ॥ १८ ॥ पतिं नाभिम् ॥ १९ ॥ हे विष्णुदत्त ! तस्यावरोधायनेंऽतःपुरे मेरुदेव्यां शुक्लया शुद्धसत्त्वरूपया मूर्त्याऽवततार । केषां धर्मान् । वातरशनानां दिग्वाससाम् । पाषंडिव्यावृत्त्यर्थमाह । श्रमणानां तपस्विनाम् । ऋषीणां ज्ञानिनाम् । ऊर्ध्वमंथिनां नैष्ठिकब्रह्मचारिणाम् ॥ २० ॥ इति पंचमे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ चतुर्थादित्रिभिः प्रोक्तमृषभस्येहितं महत् ॥ लोकार्थं येन सत्कर्म नैष्कर्म्यं च निदर्शितम् ॥ १ ॥ चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ॥ यस्य राज्ये जनः सर्वः संतोषामृतनिर्वृतः ॥ २ ॥ अभिव्यज्यमानानि भगवल्लक्षणानि पादतलादिषु वज्रां-

दथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद्द्विजदेवकुलम् ॥ १७ ॥ तत आग्नीध्रीयेंऽशकलयाऽवतरिष्याम्यात्मतुल्यमनुपलभमानः ॥ १८ ॥ श्रीशुक उवाच ॥ इति निशामयंत्या मेरुदेव्याः पतिमभिधायांतर्दधे भगवान् ॥ १९ ॥ बर्हिषि तस्मिन्नेव विष्णुदत्त भगवान्परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमंथिनां शुक्लया तनुवाऽवततार ॥ २० ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे नाभिचरित्रे तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥ तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन चौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदं नाम चकार ॥ २ ॥ तस्य हींद्रः स्पर्धमानो भगवान्वर्षे न ववर्ष तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षत् ॥ ३ ॥ नाभिस्तु यथाभिलषितं सुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकमधर्मं भगवंतं पुराणपुरुषं मायाविलसितमतिर्वत्सतातेति सानुरागमुपलालयन्परां निर्वृतिमुपगतः ॥ ४ ॥ विदितानुरागमापौरप्रकृतिजनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवंतं वासुदेवमुपासीनः कालेन तन्महिमानमवाप ॥ ५ ॥ यस्य ह पांडवेय श्लोकावुदाहरंति ॥ को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ ६ ॥ ब्रह्मण्योऽन्यः कुतो

कुशादीनि यस्य । महाविभूतिः सर्वसंपत्तिः । साम्यादिभिः सह वर्धमानप्रभावम् । प्रकृतयोऽमात्यादयः । जगृधुरभिकांक्षंतिस्म ॥ १ ॥ वर्ष्मणा देहेन । तस्य विशेषणद्वयम् । वरीयसा श्रेष्ठतमेन । बृहंतः श्लोकाः पद्यानि कवीनां यस्मिंस्तेन च । ओजस्तेजः वीर्यं प्रभावः शौर्यमुत्साहः । एतैर्गुणैरतिश्रेष्ठत्वादृषभः श्रेष्ठ इति नाम चकार ॥ २ ॥ तस्य वर्षे मंडले ॥ ३ ॥ अवरुध्य प्राप्य । स्वैरमिच्छया गृहीतो नरलोकसमानधर्मो मनुष्याकारो येन तम् । अतएव मायया स्वपुत्र इति विलासिता मतिर्यस्य ॥ ४ ॥ आपौरप्रकृति पौरान्प्रकृतींश्चाभिव्याप्य विदितोऽनुरागो यस्मिन् । कथंभूतो नाभिः । जनपदः जनाः पौरादयः पदं प्रमाणं यस्य सः । आत्मजं धर्ममर्यादारक्षणार्थमभिषिच्य । ब्राह्मणानामुत्संगे निधाय विशालायां बदरिकाश्रमे । प्रसन्नं परानुद्वेजकं निपुणं च तीव्रं तेन

उपासीनः सेवमानः कालेन तन्महिमानं जीवन्मुक्तिमवाप ॥ ५ ॥ नाभेस्तत्प्रसिद्धं कर्म । अनु तदनंतरं को नु पुमानाचरेत् । न कोऽपीत्यर्थः ॥ ६ ॥ मंगलैर्दक्षिणाभिः पूजिताः संतः । ओजसा मंत्रबलेन ॥ ७ ॥ अन्येषां ग्रहणाय प्रदर्शितो गुरुकुलवासो येन । अनुशिक्षमाणोऽनुशिक्षयन् । उभयविधं श्रुतिस्मृतिलक्षणं कर्मविधिमभियुंजन्ननुतिष्ठन् । जयंत्यां भार्यायामात्मजानां शतं जनयामास ॥ ८ ॥ ९ ॥ तं भरतमनु कुशावर्तादयो नव पुत्रा नवतेः प्रधाना ज्येष्ठाः ॥ १० ॥ ११ ॥ तदनंतरं कविप्रमुखा नव भागवतधर्मप्रदर्शकाः । वसुदेवनारदयोः संवादो यस्मिन् । उपरिष्टादेकादशस्कंधे ॥ १२ ॥ महाशालीना अतिविनीताः ॥ १३ ॥ केवलः शुद्धः । विपरीतवदनीश्वरवत्कर्माणि कुर्वन् । नियमयत् नियमितवान् । पाठांतरे नितरामरमयत् । कर्मकरणे हेतुः । अनुगत-

नाभेर्विप्रा मंगलपूजिताः ॥ यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥ अथ ह भगवानृषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयंत्यामिंद्रदत्तायामुभयलक्षणं कर्म समाम्नायाम्नातमभियुंजन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ८ ॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशंति ॥ ९ ॥ तमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इंद्रस्पृग्विदर्भः कीकट इति नव नवतिप्रधानाः ॥ १० ॥ कविर्हविरंतरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ ११ ॥ इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसंवादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ॥ १२ ॥ यवीयांस एकाशीतिर्जायंतेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥ १३ ॥ भगवानृषभसंज्ञ आत्मतंत्रः स्वयं नित्यनिवृत्तानर्थपरंपरः केवलानंदानुभव ईश्वर एव विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचरणेनोपशिक्षयन्नतद्विदां सम उपशांतो मैत्रः कारुणिको धर्मार्थयशःप्रजानंदामृतावरोधेन गृहेषु लोकं नियमयत् ॥ १४ ॥ यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः ॥ १५ ॥ यद्यपि स्वविदितं सकलधर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १६ ॥ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ॥ १७ ॥ भगवतर्षभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वांछत्यविद्यमानमिवात्मनोऽन्यस्मात्कथंचन किमपि कर्हिचिदवेक्षते भर्तर्यनुसवनं विजृंभितस्नेहातिशयमंतरेण ॥ १८ ॥ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयंतीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्निति

मुत्सन्नं धर्मं स्वयमाचरणेनातद्विदामुपशिक्षयन् । कथम् । धर्मादीनामवरोधेन संग्रहेण । आनंदो भोगः । अमृतं मोक्षः ॥ १४ ॥ शीर्षण्यः श्रेष्ठस्तेनाचरितम् । तत्तदनुवर्तते यतः ॥ १५ ॥ सकलो धर्मो यस्मिंस्तद्ब्राह्मं गुह्यं वेदरहस्यं यद्यपि स्वेनैव विदितं तथाऽपि ब्राह्मणान् पृष्ट्वैव करोतीत्यर्थः ॥ १६ ॥ द्रव्यादिभिरुपचितैर्यज्ञैरिष्टवान् । तत्र वयो यौवनम् युवैव धर्ममन्विच्छेदिति वचनात् । विविधोद्देशा नानादेवतोद्देशाः । यथोपदेशं यथाविधि ॥ १७ ॥ अन्यस्मात्सकाशादात्मनः कश्चिदपि किमपि कथंचनापि न वांछति । इच्छाभ्युदये दृष्टांतः । अविद्यमानं खपुष्पादिकमिव । न

चान्यदीयमवेक्षतेऽपीत्यर्थः । भर्तरि ऋषभदेवे प्रतिक्षणमुल्लसितस्नेहोद्रेकं विनाऽन्यन्न वांछति ॥ १८ ॥ अवहितात्मनः संयतचित्तानपि प्रजानुशासनार्थमुपशिक्षयन्निति ह वक्ष्यमाणमुवाच ॥१९॥
इति पंचमस्कंधे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् । उक्तं पारमहंस्यं च तस्य द्वंद्वतितिक्षया ॥ १ ॥ विड्भुजामपि ये संति तान्कष्टान्दुःख-
दान्कामान्विषयान्नार्हति तद्योग्योऽयं मनुष्यदेहो न भवति । दिव्यमुत्कृष्टम् । येन तपसा । यस्माच्छुद्धात्सत्त्वादनंतं ब्रह्मसुखं भवति ॥ १ ॥ मोक्षबंधयोर्निदानमाह । महत्सेवामिति । तमसः
संसारस्य द्वारं योषितां ये संगिनस्तेषां संगम् । महतां लक्षणमाह सार्धेन । महांत इति । साधवः सदाचाराः ॥ २ ॥ मयि ईशे कृतं सौहृदमेवार्थः पुरुषार्थो येषाम् । वाशब्देनान्यानि पैलक्ष्यैवास्य
लक्षणत्वं दर्शयति । देहं बिभर्तीति । देहंभरा विषयवार्तैव न धर्मविषया येषु तेषु जनेषु जायादियुक्तेषु गृहेषु च । रातिर्मित्रं धनं वा । पाठांतरे जायादिप्रदेषु यावदर्थमेवार्थो येषामिति मध्यम-
पदलोपी समासः । देहनिर्वाहाधिकस्पृहाशून्या इत्यर्थः ॥ ३ ॥ कामान्नार्हतीति यदुक्तं तदुपपादयति । नूनमिति । यद्यदा इंद्रियप्रीतये आपृणोति व्याप्रियते तदा प्रमत्तः सन्विकर्म पापं नूनं

होवाच ॥ १९ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ऋषभदेवानुचरिते चतुर्थोऽध्यायः ॥ ४ ॥ ऋषभ उवाच ॥ नायं देहो देहभाजां नृलोके
कष्टान्कामानर्हते विड्भुजां ये ॥ तपो दिव्यं पुत्रका येन सत्त्वं शुद्ध्येद्यस्माद्ब्रह्मसौख्यं त्वनंतम् ॥१॥ महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां
संगिसंगम् ॥ महांतस्ते समचित्ताः प्रशांता विमन्यवः सुहृदः साधवो ये ॥ २ ॥ ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्तिकेषु ॥ गृहेषु
जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥ ३ ॥ नूनं प्रमत्तः कुरुते विकर्म यदिंद्रियप्रीतय आपृणोति ॥ न साधु मन्ये यत आत्मनो-
ऽयमसन्नपि क्लेशद आस देहः ॥ ४ ॥ पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ॥ यावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन
शरीरबंधः ॥ ५ ॥ एवं मनः कर्मवशं प्रयुंक्ते अविद्ययाऽऽत्मन्युपधीयमाने ॥ प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ ६ ॥
यदा न पश्यत्ययथा गुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित् ॥ गतस्मृतिर्विंदति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥ पुंसः स्त्रिया मिथु-
नीभावमेतं तयोर्मिथो हृदयग्रंथिमाहुः ॥ अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहंममेति ॥ ८ ॥ यदा मनो हृदयग्रंथिरस्य कर्मानुबद्धो दृढ आश्ल-

कुरुते । यतो विकर्मणः प्राचीनादयं क्लेशदो देहो जातस्तस्यैव पुनःकरणं साधु न मन्ये ॥ ४ ॥ देहादेर्नश्वरत्वात्क्रियानयमनर्थ इत्याशंक्याह । पराभवो देहादिना स्वरूपाभिभवोऽज्ञानकृतस्तावद्भ-
वति । तत्र हेतुः । यावत्क्रियाः स्युस्तावदिदं मनो हि कर्मस्वभावमेव स्यात् । येन कर्मात्मकेन मनसा ॥ ५ ॥ उक्तमुपसंहरति । एवं पूर्वकृतं कर्म कर्तृभूतं मनः कर्मभूतं वशं प्रयुंक्ते पुनः कर्म-
निष्ठं करोतीति । जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह । अविद्ययेति । अविद्यया आत्मनि उपधीयमाने आच्छाद्यमाने सति एवं मनः कर्तृ पुरुषं कर्मवशं प्रयुंक्त इति वा ॥ ६ ॥ न केवलं देहयोगमात्र-
मनर्थांतरं चेत्याह । यदा गुणानामिंद्रियाणामीहां चेष्टामयथा मिथ्या आत्मीया न भवतीति विपश्चिद्विवेकी सन्न पश्यति । नुपश्यतीति पाठे अयथा आत्मीयत्वेनेत्यर्थः । तत्र तदा सहसा गत-
स्मृतिः स्वरूपस्मृतिशून्यः सन्नज्ञो मूढो मैथुनसुखप्रधानं गृहं प्राप्य तापान्विंदति ॥ ७ ॥ ननु यथोपयोगं स्त्रिया मिथुनीभूय सुखमात्रमनुभवतः कुतस्तापाः स्युस्तत्राह । पुंस इति । प्रत्येकं तयोरे-
कैको हृदयग्रथिरस्त्येव । एवं मिथः परस्परं स्थूलमन्यं हृदययोर्ग्रंथिं दुर्भेदं वदंति । कुत इत्यत आह । अतोऽस्मान्मिथुनीभावात् । प्रत्येकं हृदयग्रंथिना तु देहेंद्रियमात्रेऽहंममेति मोहोऽस्मात्तु गृहा-

दिभिर्विषयभूतैर्महान्मोहो भवेदित्यर्थः ॥ ८ ॥ कदा तर्हि तस्य निवृत्तिरत आह । यदाऽस्य जनस्य कर्मभिरनुबद्धो दृढो मनोरूपो हृदयग्रंथिः शिथिलो भवेत्तदाऽस्मान्मिथुनीभावान्निवर्तते ततश्च हेतुमहंकारं त्यक्त्वा मुक्तः सन्परं पदं याति ॥ ९ ॥ हेतुमतिहायेत्युक्तं तत्र पंचविंशतिसाधनान्याह चतुर्भिः । हंसे मयि गुरौ भक्तिः सेवा । अनुवृत्तिस्तत्परता । विगततृष्णया सर्वत्र लोकांतरेऽपि व्यसनावगत्या दुःखानुसंधानेन । ईहानिवृत्त्या काम्यकर्मत्यागेन ॥ १० ॥ मदर्थैः कर्मभिः । अहमेव देवो येषां तैः संगात् । हे पुत्राः ! देहगेहयोरात्मबुद्धेरहंममेति बुद्धेः ॥ ११ ॥ अध्यात्मयोगे- नाध्यात्मशास्त्राभ्यासेन सध्र्यक् सम्यगिति सर्वत्र संबंधः । असंप्रमादेन कर्तव्यस्यापरित्यागेन ॥ १२ ॥ सर्वत्र मद्भावो मद्भावना तत्र विचक्षणेन निपुणेन विज्ञानविराजितेनानुभवपर्यंतेन ज्ञानेन योगेन समाधिना धृत्युद्यमसत्त्वयुक्तो धैर्यप्रयत्नविवेकैर्युक्तः सन्नहंकाराख्यमुपाधिं व्यपोहेन्निरस्येत् ॥ १३ ॥ ततः साधनादुपरमेदित्याह । कर्माण्याशेरते यस्मिन् । योगेनोपायेन । यद्यपि फले सिद्धे साधनोपरमः सिद्ध एव तथापि यावद्देहपातं तदभ्यासशंकावारणायोक्तम् ॥ १४ ॥ किंच । पुत्रान्पिता शिष्यान्वा गुरुर्नृपश्च प्रजा एवमनुशिक्षयेत् । मम लोकं यः कामयते । यद्वा । मद-

थेत ॥ तदा जनः संपरिवर्ततेऽस्मान्मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥ हंसे गुरौ मयि भक्त्याऽनुवृत्त्या वितृष्णया द्वंद्वतितिक्षया च ॥ सर्वत्र जंतोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ॥ १० ॥ मत्कर्मभिर्मत्कथया च नित्यं मद्देवसंगाद्गुणकीर्तनान्मे ॥ निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः ॥ ११ ॥ अध्यात्मयोगेन विविक्तसेवया प्राणेंद्रियात्माभिजयेन सध्र्यक् ॥ सच्छ्रद्धया ब्रह्मचर्येण शश्वदसंप्रमादेन यमेन वाचाम् ॥ १२ ॥ सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ॥ योगेन धृत्युद्यमसत्त्वयुक्तो लिंगं व्यपोहेत्कुशलोऽहमाख्यम् ॥ १३ ॥ कर्माशयं हृदयग्रंथिबंधमविद्ययाऽऽसादितमप्रमत्तः ॥ अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात् ॥ १४ ॥ पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः ॥ इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत्कर्मसु कर्ममूढान् ॥ कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ १५ ॥ लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकामः ॥ अन्योन्यवैरः सुखलेशहेतोरनंतदुःखं च न वेद मूढः ॥ १६ ॥ कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामंतरे वर्तमानम् ॥ दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथांधम् ॥ १७ ॥ गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात् ॥ दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम् ॥१८॥ इदं शरीरं मम दुर्विभाव्यं

नुग्रह एवार्थो यस्य । विमन्युः शिक्षितस्याकरणेऽपि कोपशून्यः । अतज्ज्ञांस्तत्त्वमविदुषः । श्रेयोबुद्ध्या कर्मसु मूढान् । अन्यथोपदेशे प्रत्यवायमाह । मनुजः काम्यकर्मसु पुरुषं योजयन् गर्ते संसारकूपे तं पातयति स मनुजः कमर्थं पुरुषार्थं लभेत न कमपीत्यर्थः ॥ १५ ॥ न योजयेदित्येतदुपपादयति । लोक इति त्रिभिः । नष्टदृष्टित्वे हेतुः । य इति । निकाममतिशयेन कामो यस्य ॥ १६ ॥ तमीदृशं कुबुद्धिं दृष्ट्वा तत्रैव कस्तं प्रवर्तयेन्न कोऽपि । उत्पथेन गच्छंतमंधं यथा तेनैव गच्छेति को ब्रूयात् ॥ १७ ॥ समुपेतः संप्राप्तो मृत्युः संसारो येन तम् । ततो भक्तिमार्गोपदेशेन यो न मोचयेत्स गुर्वादिर्न भवतीत्यर्थः । यद्वा यस्तं मोचयितुं न शक्नुयात्स तस्य गुर्वादिर्न स्यादिति निषेधः । ततश्च पिता न स्यादिति पुत्रोत्पत्तौ यत्नो न कार्य इत्यर्थः । दैवं देवता न स्यादिति पूजा न ग्राह्येत्यर्थः । एवमन्यदपि द्रष्टव्यम् ॥ १८ ॥ एवं मोक्षधर्मानुपदिश्य भ्रातृशुश्रूषणलक्षणं धर्मं स्पर्धादिनिवृत्तये तेषां जन्मकथनपूर्वकमाह । द्वाभ्याम् । इदं मनुष्याकारं शरीरं

मम दुर्विभाव्यमवितर्क्यं मदिच्छाविलसितम् । नत्वहं प्राकृतो मनुष्य इत्यर्थः । मे हृदयं तु सत्त्वम् । किं यद्धृदयम् । यत्र धर्मस्तत् शुद्धं सत्त्वमित्यर्थः । कुतः । यद्यस्मान्मयाऽधर्मो दूरादेव पृष्ठे कृत उत्सारितः अतएव मामृषभं श्रेष्ठं प्राहुः ॥ १९ ॥ भवंतश्च हृदयेन शुद्धसत्त्वमयेन जातास्तस्मान्मत्सरं हित्वा महत्तमं सनाभं सोदरं भजध्वम् । ननु त्वत्पुत्रत्वात्त्वां वयं भजेम राजपुत्रत्वात्प्रजाश्च पालयामेति चेदत आह । तदेव मे शुश्रूषणं प्रजानां च पालनम् । भरतानुवृत्त्यैव सर्वं कृतं स्यादिति भावः ॥ २० ॥ इदानीं ब्राह्मणाश्च सेव्या इत्याशयेन तेषां सर्वेभ्यः श्रैष्ठ्यमाह पंचभिः । भूतेषु चेतनाचेतनेषु । विरोहंतीति वीरुधस्थावरा उदुच्चैरतिशयेनोत्तमाः तेभ्योऽपि ये सरीसृपाः सर्पंतीति जंगमास्ते उदुत्तमा इति सर्वत्रानुषंगः । तेष्वपि सबोधा निष्ठा स्थितिर्येषां पश्वादीनां ते कीटकादिभ्यः । ततस्तेष्वपि मनुष्याः । ततोऽपि प्रमथा भूतप्रेतादयः । ततोऽपि गंधर्वाः । ततः सिद्धाः । ततोऽन्ये विबुधानुगाः किन्नरादयः ॥ २१ ॥ तेभ्योऽसुराः देवा असुरेभ्यः । संधिरार्षः । देवाश्च मघवत्प्रधानाः देवेभ्य इंद्रः श्रेष्ठ इत्यर्थः । ततोऽपि ब्रह्मसुता दक्षादयः । तेषां मध्ये भवः परः श्रेष्ठः । स भवो विरिंचवीर्यो विरिंचो वीर्यं शक्तिः कारणं यस्य स विरिंचवीर्यः अतस्तज्जनकत्वाद्विरिंचस्ततः पर इत्यर्थः । स विरिंचो मत्परः अहं परो यस्य । द्विजदेवा ब्राह्मणा एव देवाः पूज्या यस्य सोऽहम् ॥ २२ ॥ ब्राह्मणैरन्यद्भूतं न तुलये समं न पश्यामि । अतो ब्राह्मणात्परं तु भूतं किं पश्यामि न किंचित् । विप्रा इति तत्रत्यानां ब्राह्मणानां संबोधनम् । समस्यैवाभावादधिकं कुतस्त्यमित्यर्थः । तत्र हेतूनाह सार्धाभ्याम् । यस्मिन् ब्राह्मणे श्रद्धया प्रकर्षेण हुतमन्नादि कामं यथेच्छमहमश्नामि ॥ २३ ॥ मे तनूर्मूर्तिर्वेदाख्या येन ब्राह्मणेनेह लोके धृता यत्र च ब्राह्मणे सत्त्वादयोऽष्टौ गुणाः संति ततः परं किं पश्यामीत्यन्वयः ॥ २४ ॥ निःस्पृहत्वमाह । मत्तोऽपि येषां न किंचित्प्रार्थनीयमस्ति तेषामितरेण राज्यादिना किमु स्यान्न किमपि ॥२५॥ तदेवं ब्राह्मणसंमानं विधायेदानीं सर्वभूतसंमानं विधत्ते । हे सुताः ! सर्वाणि जंगमानि स्थावराणि च भूतानि मदधिष्ठानतया वो युष्माभिः संमाननीयानि । पदेपदे क्षणेक्षणे । विविक्ता पूता मत्सरादिरहिता दृष्टिर्येषां तैः । तदेव ममार्हणम् ॥ २६ ॥ सर्वकर्मणामीश्वरार्पणं विधत्ते । मनोवचोदृशामन्येषां च करणानामीहितस्य व्यापारस्य मे परिबर्हणमाराधनमेव साक्षात्कृतं फलम् । येन परिबर्हणेन विना कालपाशाद्विमोक्तुं न ईशेत्न समर्थो भवेत् ॥ २७ ॥ स्वत एव सुशिक्षितानपि लोकानु-

सत्त्वं हि मे हृदयं यत्र धर्मः ॥ पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः ॥ १९ ॥ तस्माद्भवंतो हृदयेन जाताः सर्वे महीयांसममुं सनाभम् ॥ अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥ २० ॥ भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः ॥ ततो मनुष्याः प्रमथास्ततोऽपि गंधर्वसिद्धा विबुधा नगा ये ॥ २१ ॥ देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुतास्तु तेषाम् ॥ भवः परः सोऽथ विरिंचवीर्यः स मत्परोऽहं द्विजदेवदेवः ॥ २२ ॥ न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परं तु ॥ यस्मिन्नृभिः प्रहुतं श्रद्धयाऽहमश्नामि कामं न न तथाऽग्निहोत्रे ॥ २३ ॥ धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम् ॥ शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र ॥ २४ ॥ मत्तोऽप्यनंतात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किंचित् ॥ येषां किमु स्यादितरेण तेषामकिंचनानां मयि भक्तिभाजाम् ॥ २५ ॥ सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि ॥ संभावितव्यानि पदे पदे वो विविक्तदृग्भिस्तदुहार्हणं मे ॥ २६ ॥ मनोवचोदृक्करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि ॥ विना पुमान्येन महाविमोहात्कृतांतपाशान्न विमोक्तुमीशेत् ॥ २७ ॥ श्रीशुक उवाच ॥ एवमनुशास्यात्मजान्स्वय-

शासनार्थमनुशास्य मुनीनां पारमहंस्यधर्ममुपशिक्षयिष्यन्भरतमभिषिच्य ऋषभ इत्यपदेशो नाम यस्य स भगवान् ब्रह्मावर्तात्स्वदेशात्प्रवव्राजेत्यन्वयः । उर्वरितोऽवशिष्टः शरीरमात्रपरिग्रहो यस्य ॥ २८ ॥ अभिभाष्यमाणोऽपि जनानां मध्ये जडादिवद्वर्तमानस्तूष्णीं बभूव । अवधूतस्येव वेषो यस्य ॥ २९ ॥ तत्र तत्र पुरादिष्वनुपथं मार्गे मार्गेऽवनिचरापसदैर्दुर्जनैस्तर्जनादिभिः परिभूयमानोऽपि तदविगणयन्नेवैकचर एकाकी पृथिवीं परिबभ्रामेत्यन्वयः । तत्र पुरं पत्तनम् । ग्रामा हट्टहीनाः । आकरः खनिः । खेटः कृषीवलग्रामः । वाटः पुष्पादिवाटिका । खर्वटः पर्वतप्रांतग्रामः । शिबिरं सेनाया वासस्थानम् । व्रजो गवां स्थानम् । घोषो गोपानां स्थानम् । सार्थो यात्रिकजनसंघातः । आश्रमा ऋषीणाम् । तर्जनं भयजननम् । ताडनं प्रहारः अवमेहनमुपरि मूत्रणं ष्ठीवनं फूत्कृत्य श्लेष्मप्रक्षेपः ग्राव्णां शकृतो रजसश्च प्रक्षेपः पूतिवातोऽधोवायुः दुरुक्तं शापः एतैः । अगणने दृष्टांतः । मक्षिकाभिरिवेति । तत्र हेतुः । असति मिथ्याभूते संस्थाने संनिवेशे देह इत्युपलक्षणमाकारो यस्य । सदित्यपदेशमात्रं यस्य तस्मिन्निरभिमानत्वात् । केन हेतुना । उभयोः सदसतोर्योऽनुभवस्तत्स्वरूपेण यत्स्वमहिम्न्यवस्थानं तेन । अतएवाखंडितं मतो यस्य स बभ्राम

मनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमलीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभावतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ॥ २८ ॥ जडांधमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥ २९ ॥ तत्र तत्र पुरग्रामाकरखेटवाटखर्वटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन्देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वादविखंडितमनाः पृथिवीमेकचरः परिबभ्राम॥३०॥ अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुंदरस्वभावहाससुमुखो नवनलिनदलायमानशिशिरतारारुणायतनयनरुचिरः सदृशसुभगकपोलकर्णकंठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागवलंबमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिनिजशरीरेण ग्रहगृहीत इवादृश्यत॥३१॥ यर्हि वाव स भगवाँल्लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्मबीभत्सितमिति व्रतमाजग-

॥ ३० ॥ स च तदा ग्रहगृहीत इवादृश्यत । तत्र हेतुः । पराक् पुरतोऽवलंबमानाश्च ते कुटिलाश्च ते जटिलाश्च कपिशाश्च केशास्तेषां भूरिभारो यस्य सः । अवधूतमनादृतमतएव मलिन निजशरीरं तेन । कथंभूतोऽप्येवमदृश्यत । अतिसुकुमाराणि करचरणोरःस्थलानि तथा विपुला बाह्वादयस्त एवावयवास्तेषां विशिष्टो न्यासः सन्निवेशो यस्य सः । तथा प्रकृत्यैव सुन्दरः स्वभावसिद्धो हासस्तेन शोभनं मुखं यस्य । तथा नवनलिनदलवदाचरती ये शिशिरतारे तापहारिकनीनिके अरुणे आयते नयने ताभ्यां रुचिरः । तथा सदृशा अन्यूनाधिकाः सुभगाश्च कपोलकर्णकंठनासिका यस्य । तथा विगूढस्मितं यद्वदनं तस्य महोत्सवेन विभ्रमेण पुरांगनानां मनसि काममुद्दीपयन् । एवंभूतोऽपि तथादृश्यतेत्यन्वयः ॥ ३१ ॥ यर्हि यदा लोकं जनं योगस्य प्रति । पक्षमाचक्षाणः पश्यन्बभूव । तस्य प्रतिक्रियाकरणं कर्म च निंदितमित्याचक्षाणस्तदाऽऽजगरं व्रतमास्थितः सन् शयान एवाश्नातिस्मेत्यन्वयः । आजगरं व्रतं नामैकत्रैव स्थित्वा प्रारब्धकर्मोपभोगः । अवमेहति

मूत्रयति । हदति पुरीषमुत्सृजति । उच्चरिते पुरीषे चेष्टमानो विलुठन् तेनैवादिग्धा आलिप्ता उद्देशा देहप्रदेशा यस्य सः ॥ ३२ ॥ बीभत्समिवाशंक्याह । तस्येति । पुरीषस्य सुरभिणा गंधेन
सौगंध्यं यस्य स वायुः ॥ ३३ ॥ एवं गवादिचर्यया पानादि करोति स्म । तदेवाह । व्रजन्नित्यादिना । काकमृगगवामिवान्यदपि चरितं वृत्तिर्यस्य ॥ ३४ ॥ नानायोगचर्या आचरतीति तथा ।
लोकयात्रापरिहाराय योगिभिरेवं वर्तितव्यमिति प्रदर्शनाय तथा कृतवान् । वस्तुतस्तु भगवान्यतोऽविरतः परममहानुत्तरोत्तरशतगुणत्वेनोक्तो य आनंदस्तदनुभवस्वरूपः । किंच । वासुदेवे आत्म-
नोऽव्यवधानेनाभेदेन न विद्यतेऽन्येषामिवांतरा मध्ये उदरस्य देहोपाधेर्भावस्तेन नित्यनिवृत्तोपाधित्वेनेत्यर्थः । स्वत एव सिद्धैः समस्तैरर्थैः फलैः परिपूर्णत्वाद्योगैश्वर्याणि नाभ्यनंदत् । वैहायसं
खेचरत्वम् । मनोजवं मनस इव देहस्य वेगम् । दूरग्रहणं दूरदर्शनम् । हे नृप ! हृदयेन मनसा ॥ ३५ ॥ इति श्रीमद्भागवते पंचमे टीकायां पंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे लीनाभिमानस्य देह-
त्यागक्रमाभिधा ॥ प्रदहंतं दवाग्निं यः पश्यन्नपि न पश्यति ॥ १ ॥ योगैश्वर्याणि नाभ्यनंददित्युक्तं तत्र पृच्छति । नेति । भगवः हे भगवन् । योगेन समीरितमुद्दीपितं यज्ज्ञानं तेनावभर्जितानि

रमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म चेष्टमान उच्चरित आदिग्धोद्देशः ॥३२॥ तस्य ह यः पुरीषसुरभिसौगंध्यवायुस्तं देशं दश-
योजनं समंतात्सुरभिं चकार ॥३३॥ एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोचरितः पिबति खादत्यवमेहति स्म ॥३४॥ इति नानायोग-
चर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानंदानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेव आत्मनोऽव्यवधानानंतरोदरभावेन
सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवांतर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नांजसा नृप हृदयेनाभ्यनंदत् ॥३५॥ इति
श्रीमद्भागवते महापुराणे पंचमस्कंधे ऋषभदेवानुचरिते पंचमोऽध्यायः ॥ ५ ॥ राजोवाच ॥ न नूनं भगव आत्मारामाणां योगसमीरितज्ञानावभ-
र्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हंति यदृच्छयोपगतानि ॥ १ ॥ ऋषिरुवाच ॥ सत्यमुक्तं किंत्विह वा एके न मनसोऽद्धा
विश्रंभमनवस्थानस्य शठकिरात इव संगच्छंते ॥ २ ॥ तथा चोक्तम् ॥ न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते ॥ यद्विश्रंभाच्चिराच्चीर्णं चस्कंद
तप ऐश्वरम् ॥ ३ ॥ नित्यं ददाति कामस्य छिद्रं तमनु येऽरयः ॥ योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥ कामो मन्युर्मदो लोभः शोक-
मोहभयादयः ॥ कर्मबंधश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः ॥ ५ ॥ अथैवमखिललोकपालललामोऽपि विलक्षणैर्जडवदवधूतवेषभाषाचरितैरवि-

दग्धानि कर्मबीजानि रागादीनि यैस्तेषां यदृच्छया प्राप्तानि योगैश्वर्याणि पुनः क्लेशदानि भवितुं नार्हंति अतः किमिति नाभ्यनंददित्यर्थः ॥ १ ॥ अंगीकृत्य परिहरति । सत्यमिति । एके बुद्धि-
मंतोऽनवस्थानस्य चंचलस्य मनसो विश्वासं न संगच्छंते न सम्यक् प्राप्नुवंति । शठः किरातो यथा धृतेष्वपि मृगेषु । शठे किराते यथा मृगा इति सप्तम्यंतं वा । पाठांतरे शठो वंचकः किरातो
वणिग्व्यवहर्तरि यथा तस्मिन्वा व्यवहर्ता विश्वासं न यातीत्यर्थः । पाक्षिकोऽपि दोषो वर्जनीय इत्युपदेष्टुं नाभ्यनंददिति भावः ॥ २ ॥ तत्र हेतुः । यद्विश्रंभाद्यस्य मनसो विश्वासाच्चिराच्चीर्णं बहु-
कालसंचितं तपश्चस्कंद सुस्राव । ऐश्वरं विष्णोर्मोहिनीरूपदर्शनेन । यद्वा । ईश्वराणां समर्थानामपि सौभरिप्रभृतीनां तपः ॥ ३ ॥ नित्यमिति । कृतविश्वासो यो योगी तदीयं मनः कामस्य तमनु
येऽरयस्तेषां च छिद्रमवकाशं ददाति । यथा कृतविश्वासस्य पत्युः पुंश्चली जाया जाराणामवकाशं दत्त्वा पतिं घातयति तथा मनोऽपि कामादिभिर्योगिनं भ्रंशयतीत्यर्थः ॥ ४ ॥ अरीन्कथयन्नुप-

संहरति । काम इति । यन्मूलो यन्निमित्तो भवति तन्मनः को नु बुधः स्वीकुर्यात्स्वाधीनमिति मन्येत ॥ ५ ॥ प्रासंगिकं समाप्य प्रस्तुतमाह । अथेति । अखिलानां लोकपालानां ललामो मंडनभूतोऽप्युपरता बाधितानुवृत्तिर्यस्मात्स उपरराम देहाभिमानं जहौ । विलक्षणैरनेकप्रकारैरवधूतवेषादिभिर्न विलक्षितो भगवत्प्रभावो यस्मिन् । सांपरायविधिं देहत्यागप्रकारम् । आधाराधेयभावव्यावृत्त्यर्थमाह । अनर्थांतरभावेनाभेदेन । उपासनाव्यावृत्त्यर्थमाह । असंव्यवहितम् ॥ ६ ॥ मनसा स्वयं त्यक्तेऽप्यभिमाने केनापि संस्कारेण देहः प्रचलति यथा कुलालचक्रं सोऽयमभिमानाभासस्तेन । स च जीवन्मुक्तानामविद्यावासनया भवतीति ततो विशेषमाह । योगमायावासनयेति । कोंकादीन् देशान्गतः सन्कयापि वासनयाऽऽस्ये कृतोऽश्मकवलो येन । असंवीतो नग्नः ॥ ७ ॥ समीरवेगेन विधूतानां कंपितानां वेणूनां संघर्षणेन जात उग्रो दावानलः । आलेलिहानः सर्वतो ग्रसन् ॥ ८ ॥ अवधूतवेषेण ऋषभदेवस्तत्र गत इत्येतस्य सूचकमाह । यस्य किलाश्रमातीतमनु-

लक्षितभगवत्प्रभावो योगिनां सांपरायविधिमनुशिक्षयन्स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थांतरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥ तस्य ह वा एवं मुक्तलिंगस्य भगवत ऋषभस्य योगमायावासनया देह इमां जगतीमभिमानाभासेन संक्रममाणः कोंकवेंककुटकान्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतः कुटकाचलोपवन आस्यकृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ ७ ॥ अथ समीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥ ८ ॥ यस्य किलानुचरितमुपाकर्ण्य कोंकवेंककुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणो भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषंडमसमंजसं निजमनीषया मंदः संप्रवर्तयिष्यते ॥ ९ ॥ येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ १० ॥ ते च ह्यर्वाक्तनया निजलोकयात्रयांऽधपरंपरयाऽऽश्वस्तास्तमस्यंधे स्वयमेव प्रपतिष्यंति ॥ ११ ॥ अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः तस्यानुगुणान् श्लोकान्गायन्ति ॥ १२ ॥ अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ॥ गायंति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवंति ॥ १३ ॥ अहो नु वंशो यशसाऽवदातः प्रैयव्रतो यत्र पुमान्पुराणः ॥ कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १४ ॥ को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथे-

चरितं तद्देशवासिभ्य उपाकर्ण्य अर्हन्निति नाम यस्य स राजा स्वयं तदुपशिक्ष्य शिक्षित्वा कुपथश्चासौ पाषंडश्च तं निजमनीषया संप्रवर्तयिष्यत इत्यन्वयः । तत्र हेतुः कलावित्यादि । भवितव्येन प्राणिपूर्वसंचितपापफलेन ॥ ९ ॥ येन प्रवर्तकेन मनुजेष्वपसदा निकृष्टाः स्वविधिना नियोगो यस्मिन् शौचचारित्रे तद्विहीना देवावज्ञारूपाण्यस्नानादीनि कुव्रतानि गृह्णाना वेदादीनां विदूषका भविष्यंति ॥ १० ॥ तत्फलं चांधं तमः प्राप्स्यंतीत्याह । ते चेति अर्वाक्तनया अवेदमूलया । निजलोकयात्रया स्वेच्छाकृतप्रवृत्त्या आश्वस्ताः कृतविश्वासाः ॥ ११ ॥ ननु तर्ह्यनर्थकारी किमर्थोऽयमृषभावतारस्तत्राह । अयमिति रजोव्याप्तानां जनानां मोक्षमार्गोपशिक्षणार्थः । तस्य कैवल्योपशिक्षणस्यानुरूपान् ॥ १२ ॥ अधि अधिकं पुण्यं यस्मिन् । एतद्भारतं वर्षम् । ऋषभाद्यवतारयुक्तानि कर्माणि ॥ १३ ॥ प्रियव्रतस्य वंशः । अवदातः शुद्धः । यत्र वंशे । यद्यस्मात् । अकर्म मोक्षस्तस्य हेतुं धर्मं चचार ॥ १४ ॥ अपरः को नु योगी अस्य काष्ठां दिशमप्यनुगच्छेत् ।

प्रियमेव कृतं तथापि वयं न कुर्म इत्याह । यदिति । कर्मसंधानां कर्ममर्यादानाम् । कर्तुमंधानामिति पाठे विप्रियं कर्तुमजानतामित्यर्थः । दुःसहं यत्त्वं कृतवानसि तन्मर्षितं सोढम् ॥ ४२ ॥ तथापि तवाभद्रं भविष्यत्येवेत्याह । तंतुकृंतन संतानच्छेदक । यद्यस्मादभद्रं पुत्राणां स्थानभ्रंशमचरस्तत्तस्मात्तव लोकेषु भ्रमतः पदं स्थानं न भवेदिति मृदुछलेन शापः ॥ ४३ ॥ बाढं तथेति स्वीकृतवान् । ईश्वरोऽपि प्रतिशप्तुं समर्थोऽपि तितिक्षेत सहेतेति यदेतावानेव ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे टीकायां पंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे दक्षेण सृष्टायां कन्या-षष्ट्यां प्रकीर्तिताः ॥ पृथग्वंशा यतो जातो विश्वरूपोऽदितेः सुतात् ॥ १ ॥ नारदात्पुत्राणां नाशमाशंकमानो दुहितॄर्जनयामास ॥ १ ॥ काय कश्यपाय द्विषट् द्विगुणाः षट् द्वादश यासु ताः ।

भवेद्भ्रमतः पदम् ॥ ४३ ॥ श्रीशुक उवाच ॥ प्रतिजग्राह तद्बाढं नारदः साधुसंमतः ॥ एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे नारदशापो नाम पंचमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥ दश धर्माय कायेंदोर्द्विषट्त्रिणव दत्तवान् ॥ भूतांगिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः ॥ २ ॥ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥ ३ ॥ भानुर्लंबा ककुब्जामिर्विश्वा साध्या मरुत्वती ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥ भानोस्तु देवऋषभ इंद्रसेनस्ततो नृप ॥ विद्योत आसील्लंबायास्ततश्च स्तनयित्नवः ॥ ५ ॥ ककुभः संकटस्तस्य कीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नंदिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तु विश्वाया अप्रजांस्तान्प्रचक्षते ॥ साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥ मरुत्वांश्च जयंतश्च मरुत्वत्यां बभूवतुः ॥ जयंतो वासुदेवांश उपेंद्र इति यं विदुः ॥ ८ ॥ मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ॥ ये वै फलं प्रयच्छंति भूतानां स्वस्वकालजम् ॥ ९ ॥ संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः ॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥ १० ॥ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ११ ॥ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः ॥ १२ ॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥ स्कंदश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ॥ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला ॥ १४ ॥ वसोरांगिरसी पुत्रो विश्वकर्मा कृतीपतिः ॥ ततो मनुश्चाक्षुषोऽभूद्विश्वे साध्या मनोः सुताः ॥ १५ ॥ विभावसोरसूतोषा व्युष्टं

त्रयोदशेत्यर्थः । इंदोः सोमाय त्रिणव सप्तविंशतिं तार्क्ष्याय नामांतरं प्राप्ताय कश्यपायैव अपरा अवशिष्टाश्चतस्रः ॥ २ ॥ सापत्यानामपत्यसहितानाम् । मे मत्तः शृणु । प्रसूतिप्रसवैः पुत्रपौत्रादिभिः ॥ ३ ॥ ४ ॥ ततो देवऋषभात् ॥ ५ ॥ यतः कीकटाद्भुवो दुर्गाणि दुर्गाभिमानिनो देवाः । जामेयो जाम्याः पुत्रः स्वर्गस्ततः स्वर्गान्नंदिः पुत्रोऽभवत् ॥ ६ ॥ तत्सुतः साध्यानां सुतः ॥ ७ ॥ ॥ ८ ॥ ९ ॥ वसोर्वंशस्य भूयस्त्वादंते निर्देशः । मे मत्तः ॥ १० ॥ अभिमतिर्नाम पत्नी तस्या हर्षादयः पुत्राः ॥ ११ ॥ सहश्चायुश्च पुरोजवश्च पुत्राः । पुरः पुराणि ॥ १२ ॥ १३ ॥ स्कंदश्च कृत्तिकासुतोऽग्नेः पुत्रः षाण्मातुर इत्यग्निभूरिति च प्रसिद्धः । ततः स्कंदात् ॥ १४ ॥ आकृतीपतिः शिल्पाचार्यः । ततो विश्वकर्मणश्चाक्षुषो मनुरासीत् ॥ १५ ॥ विभावसोरुषा नाम भार्या । अथ

आतपात्पंचयामो-दिवसो जातः। अतएव रात्रिस्त्रियामा प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् ॥ १६ ॥ भूतस्य द्वे भार्ये तयोर्वंशमाह। सरूपेति ॥ १७ ॥ महानित्येवमेकादशरूपस्य रुद्रस्य पार्षदाः प्रेतादयोऽन्येऽन्यस्यां जाताः ॥ १८ ॥ अंगिरसः स्वधा सती चेति द्वे भार्ये तयोर्वंशमाह। प्रजापतेरिति। स्वधा नाम पत्नी पितॄन्पुत्रत्वेऽकरोत्। अथ सती चाथर्वांगिरसं नाम वेदम् ॥ १९ ॥ कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्वंशमाह। कृशाश्व इति ॥ २० ॥ २१ ॥ सुपर्णा विनता। अनूरुमरुणम् ॥ २२ ॥ रोहिण्यामेव प्रेमातिशयेनान्यास्वाहुतेक्षणात्कुपितस्य दक्षस्य शापाद्यक्ष्म-

रोचिषमातपम् ॥ पंचयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥ सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥ अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये घोरा भूतविनायकाः ॥ १८ ॥ प्रजापतेरंगिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वांगिरसं वेदं पुत्रत्वे चाकरोत्सती ॥ १९ ॥ कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥ धिषणायां वेदशिरो देवलं वयुनं मनुम् ॥ २० ॥ तार्क्ष्यस्य विनता कद्रूः पतंगी यामिनी इति ॥ पतंग्यसूत पतगान्यामिनी शलभानथ ॥ २१ ॥ सुपर्णाऽसूत गरुडं साक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥ कृत्तिकादीनि नक्षत्राणींदोः पत्न्यस्तु भारत ॥ दक्षशापात्सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ २३ ॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः ॥ शृणु नामानि लोकानां मातॄणां शंकराणि च ॥२४॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ॥ २५ ॥ मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ॥ तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ॥ २६ ॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ॥ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ २७ ॥ दंदशूकादयः सर्पा राजन्क्रोधवशात्मजाः ॥ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २८ ॥ अरिष्टायाश्च गंधर्वाः काष्ठाया द्विशफेतराः ॥ सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्छृणु ॥ २९ ॥ द्विमूर्धा शंबरोऽरिष्टो हयग्रीवो विभावसुः ॥ अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः ॥ ३० ॥ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ॥ धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥ ३१ ॥ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३२ ॥ वैश्वानरसुतायाश्च चतस्रश्चारुदर्शनाः ॥ उपदानवी हयशिरा पुलोमा कालका तथा ॥ ३३ ॥ उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ॥ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ ३४ ॥ उपयेमेऽथ भगवान्कश्यपो ब्रह्मचोदितः ॥ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ ३५ ॥ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ॥ जघान स्वर्गतो राजन्नेक इंद्रप्रियंकरः ॥ ३६ ॥ विप्रचित्तिः सिंहिकायां

ग्रहार्दितः क्षयरोगपीडितः संस्तास्वनपत्योऽभूत् ॥ २३ ॥ तं दक्षं प्रसाद्य केवलं कला एव लेभे न त्वपत्यानि। कथंभूताः। क्षये कृष्णपक्षे दिताः खंडिताः सतीः। पाठांतरे क्षये सति पुनरेधितास्तेनैव वर्धिताः सतीः ॥ २४ ॥ २५ ॥ अल्पत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण तासां वंशानाह। तिमेरित्यादिना ॥ २६ ॥ २७ ॥ सौरसाः सुरसायाः पुत्राः ॥ २८ ॥ प्राधानिकान्मुख्यानष्टादश शृणु ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वैश्वानरो दनोः पुत्रस्तस्य सुताः ॥ ३३ ॥ कः प्रजापतिः कश्यप उपयेम इत्यन्वयः ॥ ३४ ॥ दानवीपरिणयने हेतुः। ब्रह्मणा चोदित इति ॥३५॥

कूटान्यदृष्ट्वाऽन्तं भुव इत्यादीनि पूर्वोक्तानि प्राह ॥ २९ ॥ हे दाक्षायणाः संशृणुतेत्यादि पुनरन्यदपि प्राह । निगममुपदेशम् । अन्विच्छतावलोकयत ॥ ३० ॥ प्रायणं प्रकृष्टं गमनम् । पुण्यमेव बंधुर्यस्य मरुद्भिर्भ्रातृवत्सलैर्देवैः ॥ ३१ ॥ अमोघं दर्शनं यस्य । हे मारिषार्य ॥ ३२ ॥ सध्रीचीनं समीचीनम् । प्रतीचीनं प्रत्यग्वृत्तिलभ्यम् । अनुपथमनुगुणं पंथानम् । पश्चिमा यामिनीर्गता रात्रय इव ॥ ३३ ॥ ३४ ॥ पुत्राणां पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि प्रायशो विरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वं गतस्तदा तमुपलभ्य दक्ष आह ॥ ३५ ॥ साधोरिव लिंगं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतम् । तदेवाह । साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ॥ ३६ ॥ ननु संन्यासिनो मार्गः साधुरेव मोक्षहेतुत्वात् सत्यम् । ऋणत्रयापाकरणं विना तु महाननर्थ एवेत्याह । ऋणैरिति । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीति श्रुतेः । ऋणैरमुक्तानां न मीमांसितानि विचारितानि कर्माणि यैः । तेषां तावदृणविमोको नास्ति । तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवर्षिऋणाद्विमुक्तिश्च

मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन्मार्गं भ्रातृणामेव मारिष ॥ ३२ ॥ सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः॥ नाद्यापि ते निवर्तंते पश्चिमा यामिनीरिव ॥ ३३ ॥ एतस्मिन्काल उत्पातान्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥ चुक्रोध नारदायासौ पुत्रशोकविमूर्छितः ॥ देवर्षिमुपलभ्याह रोषाद्विस्फुरिताधरः ॥ ३५ ॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिंगेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥ ३८ ॥ ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणाम् ॥ ३९ ॥ नेत्थं पुंसां विरागः स्यात्त्वया केवलिना मृषा ॥ मन्यसे यद्युपशमं स्नेहपाशनिकृंतनम् ॥ ४० ॥ नानुभूय न जानाति पुमान्विषयतीक्ष्णताम् ॥ निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥ यन्नस्त्वं कर्मसंधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥ ४२ ॥ तंतुकृंतन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न

नास्ति । अतो हे पाप! विषयभोगत्यागादिह लोके श्रेयसो विघातः कृतः । मोक्षानधिकारित्वाच्च परलोकेऽपि श्रेयसो विघातः कृत इत्यर्थः । तथा च मनुः । ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यध इति ॥ ३७ ॥ बालानां मतिं पुत्रादिविषयां भिनत्तीति तथा । एवं निरनुक्रोशो निर्घृणो हरेर्यशोनाशकः संस्तत्पार्षदानां मध्ये कथं चरसि ॥ ३८ ॥ निर्लज्जत्वमेवाह । नन्विति । ननु त्वामृते भागवताः सर्वे भूतानुग्रहपरवशास्त्वं तु भूतविप्रियं कुर्वन्कथं न लज्जस इति भावः॥ ३९ ॥ ननु वैराग्यादुपशम उपशमाच्च भूतस्नेहपाशच्छेदनं भवति न च विरक्तस्य ऋणत्रयापाकरणमावश्यकम् । यदहरेव विरजेत्तदहरेव प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदित्यादिश्रुतेः ।अतो वैराग्योपदेशेन तेषां मयानुग्रह एव कृत इति चेत्तत्राह । नेति । यद्यपि त्वमेवं मन्यसे तथाऽपि मृषा केवलिना ज्ञानं विनाऽवधूतवेषेण त्वयेत्थं मतिचालने कृतेऽपि पुंसां विरागो नैव स्यात् । न च विरागं विनोपशमो न च तेन विना स्नेहपाशनिकृंतनमित्यर्थः ॥ ४० ॥ इत्थं विरागो न स्यादित्यत्र हेतुमाह । नानुभूयाननुभूय विषयाणां तीक्ष्णतां दुःखहेतुत्वं न जानाति । तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात ॥ ४१ ॥

निर्गमप्रतिबंधाय क्रोधाहंकारादिभिः कृतवेगां मत्तस्य तद्वेगेन विवशस्यात एव तां तथाभूतामविज्ञस्याविचारयतः । असद्भिर्मायिकैः । यद्वा वेलाकूलं समुद्रस्य व्यवहारस्थानं तस्य समीपे समुद्र- वृद्धिह्रासाभ्यां यथोभयतोऽतर्बहिः कृतवेगा नदी भवेत्येवं समुद्रतुल्यस्यात्मनो व्यवहारस्थाने देहे जन्ममरणादिभिः कृतवेगामित्यर्थः । वेगिनीमिति पाठे वेगवतीम् ॥ १६ । पंचपंचेत्यस्यार्थमाह । पंचविंशतितत्त्वानां पुरुषोऽतर्यामी । अद्भुतदर्पणमाश्चर्यरूप आश्रयः अध्यात्मकं कार्यकारणसंघाताधिष्ठातारं तमबुधस्य । असद्भिर्मिथ्यास्वातंत्र्यकृतैः ॥ १७ ॥ क्वचिद्धंसमित्यस्यार्थमाह । ऐश्वर- मीश्वरप्रतिपादकं विविक्तं पदं चिज्जडरूपं वस्तु येनेति हंसपदव्याख्यानम् । बंधमोक्षावनुदर्शयतीति तथा । अनेन चित्राः कथा यस्येति व्याख्यातम् । तदुत्सृज्यानभ्यस्य अज्ञायाविदुषः । असद्भि- र्बहिर्मुखैः ॥ १८ ॥ क्षौरपव्यमित्यस्यार्थमाह । कालचक्रमिति । भ्रमिर्भ्रमणात्मकम् । तीक्ष्णमिति निष्कर्षयदिति च क्षौरपव्यपदं व्याख्यातम् । तदबुधस्यात एव फलस्य नित्यबुद्ध्या काम्यकर्मानु-

कूलांतवेगिताम् ॥ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥ पंचविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्मबुधस्येह किमसत्कर्म- भिर्भवेत् ॥ १७ ॥ ऐश्वरं शास्त्रमुत्सृज्य बंधमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्ष- यज्जगत् ॥ स्वतंत्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रंभ्युपक्रमेत् ॥ २० ॥ इति व्यवसिता राजन्हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पंथानमनिवर्तनम् ॥ २१ ॥ स्वरब्रह्मणि निर्भातहृषीकेशपदांबुजे ॥ अखंडं चित्तमावेश्य लोकाननुचरन्मुनिः ॥ २२ ॥ नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन्सुप्रजास्त्वं शुचां पदम् ॥ २३ ॥ स भूयः पांचजन्यायामजेन परिसांत्वितः ॥ पुत्रानजनयद्दक्षः सबलाश्वान्सहस्रशः ॥ २४ ॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ॥ नाराय- णसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥ २५ ॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपंतो ब्रह्म परमं तेपुस्तेऽत्र महत्तपः ॥ २६ ॥ अब्भक्षाः कतिचि- न्मासान्कतिचिद्वायुभोजनाः ॥ आराधयन्मंत्रमिममभ्यस्यंत इडस्पतिम् ॥ २७ ॥ ॐ नमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥ इति तानपि राजेंद्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचःकूटानि पूर्ववत् ॥ २९ ॥ दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबंधुः पुरुषो

ष्ठाने वैगुण्यबाहुल्यादसद्भिः ॥ १९ ॥ स्वपितुरादेशमित्यस्यार्थमाह । शास्त्रस्य स्वपितुर्द्वितीयजन्महेतोः । तदनुरूपाय निवृत्त्यनुरूपाय निवृत्तकर्मादेशं यो न वेद स कथं गुणविश्रंभी गुणमय- प्रवृत्तिमार्गविश्वासवान्सन्नुपक्रमेत्सृष्ट्यादौ प्रवर्तेत । मोक्षेशब्रह्मबुद्धीनां जीवमायांतरात्मनाम् ॥ शास्त्रकालोपदेशानामज्ञाने किमु कर्मभिरिति वाचःकूटसंग्रहश्लोकः ॥ २० ॥ इति व्यवसिता एवं निश्चितवंतः । एकचेतस ऐकमत्ययुक्ताः । तं नारदं प्रदक्षिणीकृत्यापुनरावृत्तिमार्गं प्रययुः ॥ २१ ॥ निर्भातः साक्षात्कृतो यो हृषीकेशस्तस्य पदांबुजे । अनुचरदन्वचरदित्यर्थः ॥ २२ ॥ नाशमद- र्शनं स्वधर्मभ्रंशं वा । शीलेन शालंते शोभंत इति तथा तेषाम् । को दक्षः । सुप्रजास्त्वं सत्पुत्रवत्त्वं शुचां शोकानां स्थानम् ॥ २३ ॥ अजेन ब्रह्मणा । सहस्रशः सहस्रसंख्यान् ॥ २४ ॥ २५ ॥ परमं ब्रह्म प्रणवं वक्ष्यमाणमंत्रं वा ॥ २६ ॥ इडस्पतिं वाचां मंत्राणां पतिं विष्णुमाराधयामासुः ॥ २७ ॥ विशुद्धसत्त्वाश्रयाय परमहंसाय नमो धीमहि ॥ २८ ॥ प्रतिसर्गे धीर्येषां तान् । वाचः-

मानानि शोभमानानि रुचिराणि काननानि येषु तेष्वाश्रमायतनेषु वर्षगिरिद्रोणीषु च । तथा अमलेषु जलाशयेषु विकचानि विकासीनि विविधानि नवानि च यानि वनरुहाणि नीरजानि तेषामामोदेन मुदितै राजहंसादिभिर्मधुकरनिकराणां चाकृतिभिर्जातिविशेषैरुपकूजितेषु कामेन कलिलैः क्षुभितैर्विलासादिभिराकृष्टं मनो दृष्टिश्च येषां ते ॥ १३ ॥ नवस्वपि वर्षेषु ये पुरुषास्तेषां तदनुग्रहाय स चासौ वक्ष्यमाणोऽनुग्रहस्तदर्थमात्मतत्त्वव्यूहेन स्वमूर्तिसमूहेन सन्निधीयते संनिहितो भवति ॥ १४ ॥ अपरोऽर्वाचीनः । पश्चान्नवमस्कंधे ॥ १५ ॥ भवानीनाथः स्वामिनो येषां तैः स्त्रीगणानामर्बुदसहस्रैरवरुद्ध्यमानः सर्वतः सेव्यमानः । आत्मनः प्रकृतिं कारणम् । आत्मनि समाधिर्ध्यानं यस्य तेन रूपेण । एतद्वक्ष्यमाणं मंत्रादिकमभिगृणन् जपन् ॥ १६ ॥ सर्वेषां गुणानां संख्यानं प्रकाशो यस्मात् । त्वव्यक्तायाप्रमेयाय ॥ १७ ॥ हेभजन्य ! भजनीयत्वात्त्वां परमेश्वरं भज इत्यन्वयः । अरणं शरणं पादपंकजं यस्य । कृत्स्नस्य भगस्यैश्वर्यादिषाड्गुण्यस्य परमयनमाश्रयम् । भक्तेष्वलमत्यर्थं भावितं प्रकटितं भूतभावनं स्वरूपं येन । भवापहं संसारहरम् । भक्तेष्वित्यनुषंगः । भवं भावयतीति तथा तम् । अर्थादभक्तेष्विति द्रष्टव्यम् ॥ १८ ॥ ईश्वरत्वमुपपाद-

दिभिर्विचित्रविनोदैः सुललितसुरसुंदरीणां कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं विहरंति ॥ १३ ॥ नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाऽद्यापि सन्निधीयते ॥ १४ ॥ इलावृते तु भगवान् भव एक एव पुमान्न ह्यन्यस्तत्रापरो निर्विशति भवान्याः शापनिमित्तज्ञो यत्प्रवेक्ष्यतः स्त्रीभावस्तत्पश्चाद्वक्ष्यामि ॥ १५ ॥ भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः संकर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥ १६ ॥ श्रीभगवानुवाच ॥ ॐनमो भगवते महापुरुषाय सर्वगुणसंख्यानाथानंतायाव्यक्ताय नम इति ॥ १७ ॥ भजे भजन्यारणपादपंकजं भगस्य कृत्स्नस्य परं परायणम् ॥ भक्तेष्वलंभावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥ १८ ॥ न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ॥ ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥ १९ ॥ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः ॥ न नागवध्वोऽर्हण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेंद्रियाः ॥ २० ॥ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनंतमृषयः ॥ न वेदसिद्धार्थमिव क्वचित्स्थितं भूमंडलं मूर्धसहस्रधामसु ॥ २१ ॥ यस्याद्य आसीद्गुणविग्रहो महान्विज्ञानधिष्ण्यो भगवानजः किल ॥ यत्संभवोऽहं त्रिवृता स्वतेजसा

यंस्तामसत्वेन प्रसक्तमनादरं वारयति । न यस्येति । यस्य निरीक्षमाणस्यापि दृष्टिर्मायागुणैर्विषयैश्चित्तवृत्तिभिः करणैश्चाण्वपीषदपि नाज्यते न लिप्यते । किमर्थं निरीक्षमाणस्य । ईशे ईशनाय नियमनाय । ईशनमीट् संपदादित्वाद्भावे क्विप् । अत्र वैधर्म्ये दृष्टांतः । यथा अजितक्रोधवेगानां नोऽस्माकं दृष्टिरज्यते न तथेति । अत आत्मन इंद्रियाणि जिगीषुर्जेतुमिच्छुर्मुमुक्षुस्तं को न मन्येत नाद्रियेत ॥ १९ ॥ ननु सुरामद्याभ्यां मत्तस्य कुतो दृष्टिर्नाज्यते तत्राह । असती दृष्टिर्यस्य तस्य स्वमायया क्षीबा मत्त इव यो भयंकरः प्रतिभाति मध्वासवाभ्यां ताम्रलोचन इव च । नागवधूविमोहनेन तथा प्रतिभानं युक्तमित्याह । नेति । पादार्चने यस्य पादयोः स्पर्शनेन धर्षितं मोहितमिंद्रियं मनो यासां ता ह्रिया लज्जया भुजाद्यर्हणे न ईशिरे न शेकुः । कस्तं न मन्येतेति पूर्वेणान्वयः ॥ २० ॥ अस्य विश्वस्य स्थितिजन्मसंयमहेतुं यमाहुः । अतएव त्रिभिः स्थित्यादिभिर्विहीनमनंतं च यमाहुः । ऋषयो मंत्राः छंदोऽनुरोधेन दीर्घपाठे ऋकारो देवमाता लक्ष्मीः

तत्र हेतुः । भगवति संततं भक्तियोगलाभेनैवोपेक्षिता अन्ये पुरुषार्था आत्मज्ञानं च यैः । कामिव क इव धारयंति । प्रत्यक्षं मुक्तिमिव तामागताम् । मुमुक्षवो जना इव ते ॥ ३ ॥ ततोऽनेकसहस्र-
कोटीनां विमानानामनीकैः संकुलेन देवयानेनाकाशमार्गेणावतरंती । सप्तऋषिभ्योऽर्वागेव प्रायशः कर्मिणां गतिरिति ततोऽर्वागेव संकुलत्वमुक्तम् । आवार्य आप्लाव्य । मेरुमूर्धस्थे ब्रह्मसदने निपतति
॥ ४ ॥ अभिस्पंदंती अभितो गच्छंती ॥ ५ ॥ केसराचलानां मेरुसमानोच्छ्रायत्वात्प्रथमं तेषामादिशिखरेषु मुख्यशृंगेषु पतति ततस्तेभ्योऽधोधः प्रस्रवंती सती ॥ ६ ॥ माल्यवच्छिखरात् केतुमा-
लाभिमुखं निष्पतंती चक्षुःसंज्ञा ॥ ७ ॥ गिरिशिखरादिति । कुमुदशिखरादुच्चलिता नीलशिखरं तत उच्चलिता श्वेतशिखरं तदप्यतिहाय शृंगवतः शृंगादधः स्रवंती ॥ ८ ॥ अतिरभसतररंहसा

त्मनि वासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव इव सबहुमानमद्यापि जटाजूटैरुद्वहंति ॥ ३ ॥ ततोऽनेक-
सहस्रकोटिविमानानीकसंकुलदेवयानेनावतरंतींदुमंडलमावार्य ब्रह्मसदने निपतति ॥ ४ ॥ तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्पंदंती
नदनदीपतिमेवाभिनिविशति सीताऽलकनंदा चक्षुर्भद्रेति ॥ ५ ॥ सीता तु ब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवंती गंधमादनमूर्धसु
पतित्वांतरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति ॥६॥ एवं माल्यवच्छिखरान्निष्पतंती ततोऽनुपरतवेगा केतुमालमभिचक्षुः प्रतीच्यां दिशि
सरित्पतिं प्रविशति ॥ ७ ॥ भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद्गिरिशिखरमतिहाय शृंगवतः शृङ्गादवस्पंदमाना उत्तरांस्तु कुरून-
भित उदीच्यां दिशि जलधिमभिप्रविशति ॥८॥ तथैवालकनंदा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटाद्धैमकूटान्यतिरभसतररंहसा
लुठयंती भारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति यस्यां स्नानार्थं चागच्छतः पुंसः पदेपदेऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति ॥९॥
अन्ये च नदा नद्यश्च वर्षे वर्षे संति बहुशो मेर्वादिगिरिदुहितरः शतशः ॥ १० ॥ तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्ट वर्षाणि स्वर्गिणां पुण्य-
शेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशंति ॥ ११ ॥ एषु पुरुषाणामयुतपुरुषायुर्वर्षाणां देवकल्पानां नागायुतप्राणानां वज्रसंहनन-
बलवयोमोदप्रमुदितमहासौरतमिथुनव्यवायापवर्गवर्षधृतैकगर्भकलत्राणां तत्र तु त्रेतायुगसमः कालो वर्तते ॥ १२॥ यत्र ह देवपतयः स्वैः स्वैर्गण-
नायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबकफलकिसलयश्रिया नम्यमानविटपलताविटपिभिरुपशुंभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु तथा
चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराजहंसजलकुक्कुटकारंडवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडा-

अस्खलिततीव्रतरवेगेन ॥ ९ ॥ बहुशो बहुविधाः । मेर्वादिगिरीणां दुहितरस्तत्प्रसूताः ॥ १० ॥ दिव्यभौमबिलभेदात्त्रिविधः स्वर्गः । तत्र भौमस्वर्गस्य पदानि स्थानानि व्यपदिशंति ॥ ११ ॥
अयुतं पुरुषमानेन आयुर्वर्षाणि येषाम् । वज्रवद्दृढं संहननं शरीरं तस्मिन्बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतानि मिथुनानि तेषां व्यवायापवर्गे संभोगावसाने एकवर्षशेषे आयुषि धृत
एको गर्भो यैस्तादृशानि कलत्राणि येषाम् । त्रेतायुगसमः विषयसुखोत्कर्षात् । कृतयुगे हि सर्वे ध्याननिष्ठाः । द्वापरादौ तु दुःखबहुलाः ॥ १२ ॥ यत्र ह येषु हि वर्षेषु देवपतयः स्वैः स्वैः
सेवकगणेषु मुख्यैः कृतमहोपचाराः संतः स्वैरं विहरंतीत्यन्वयः । केषु स्थानेषु । सर्वेषु ऋतुषु कुसुमस्तबकादीनां श्रिया समृद्ध्यात्यंतं नम्यमाना विटपास्तदाश्रिता लताश्च येषु तैर्विटपिभिरुपशुंभ-

इत्येवं पठंति ॥ २२ ॥ २३ ॥ नीचीना अधोमुखाः ॥ २४–२६ ॥ चतुर्दिक्षु मेरुमूलाद्योजनसहस्रं त्यक्त्वाग्रे परितः परिधय इव जठरदेवकूटादयस्तिष्ठंति अतोऽष्टादशयोजनसहस्रं प्रमाणमत्रो-क्तम् । वैष्णवादिपुराणेषु परिमाणादि यत्पुनः ॥ अन्यथा वर्णितं तत्तु कल्पभेदाद्यपेक्षया ॥ द्विसहस्रं पृथू च तुंगौ च ॥ २७ ॥ २८॥ यथादिशं प्राच्यादि दिक्षु यथारूपमिंद्रादिवर्णानतिक्रमेण। तुरीयमानेन सार्धद्विसहस्रप्रमाणेन । नामानि पुराणांतराज्ज्ञातव्यानि । यथोक्तम् । मेरौ नव पुराणि स्युर्मनोवत्यमरावती ॥ तेजोवती संयमनी तथा कृष्णांगना परा ॥ श्रद्धावती गंधवती तथा चान्या महोदया ॥ यशोवती च ब्रह्मेंद्रवह्न्यादीनां यथाक्रममिति ॥ २९ ॥ इति पंचमे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे गंगागमनं तच्चतुर्दिशम् ॥ इलावृते च रुद्रेण संकर्षण-निषेवणम् ॥ १ ॥ यज्ञलिंगस्य बलेर्यज्ञे लिंगं त्रिविक्रममूर्तिर्यस्य । विक्रमतो दक्षिणेन पदा भुवं क्रांत्वा वामपदमुत्क्षिपतो वामपादांगुष्ठनखेन निर्भिन्नमूर्ध्वमुपरिभागो यस्यांडकटाहस्य तस्य

कुरंगकुररकुसुंभवैकंकत्रिकूटशिशिरपतंगरुचकनिषधशिनीवासकपिलशंखवैदूर्यजारुधिहंसर्षभनागकालंजरनारदादयो विंशति गिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः ॥ २६ ॥ जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुंगौ भवतः। एवमपरेण पव-नपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागयतावेवमुत्तरतस्त्रिशृंगमकरावष्टभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति कांचनगिरिः ॥ २७॥ मेरोर्मूर्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौंभीं वदंति ॥ २८ ॥ तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः ॥ २९ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भुवनकोशवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ तत्र भगवतः साक्षाद्यज्ञलिंगस्य विष्णोर्विक्रमतो वामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टा या बाह्यजलधारा तच्चरणपंकजा-वनेजनारुणकिंजल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्ष-णेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः ॥ १ ॥ यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविंदोदकमिति यामनु-सवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानांतरहृदय औत्कंठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोम-पुलककुलकोऽधुनाऽपि परमादरेण शिरसा बिभर्ति ॥ २ ॥ ततः सप्तऋषयस्तत्प्रभावाभिज्ञा यां ननु तपस आत्यंतिकी सिद्धिरेतावती भगवति सर्वा-

विवरेणांतः प्रविष्टा या बाह्यजलधारा सा दिवो मूर्धन्यवततारेत्यन्वयः। तस्य यच्चरणपंकजं तस्यावनेजनेन क्षालनेनारुणं तद्गतं कुंकुमं तदेव किंजल्कास्तैरुपरंजिता अतएवाखिलस्य जगतोऽघमला-पहमुपस्पर्शनं यस्यास्तथाऽप्यमला तन्मलसंगशून्या साक्षाद्भगवत्पदीति यदनुपलक्षितं जाह्नवीभागीरथीत्याद्युपलक्षणांतररहितं वचो नाम तेनाभिधीयमाना तस्मिन्समये भगवत्पदी नाम पश्चान्ना-मांतराणि जातानीत्यर्थः। कोऽसौ दिवो मूर्धा तमाह। यदिति ॥ १ ॥ किं तद्विष्णुपदं तदाह। यत्रेति। वीरव्रतो दृढसंकल्पः अस्मत्कुलदेवताया हरेश्चरणारविंदोदकमिति हेतोः परमादरेण बिभर्तीत्यन्वयः। कथंभूतः सन्। प्रतिक्षणं वर्धमानेन भगवद्भक्तियोगेन दृढमत्यंतं क्लिद्यमानमंतर्हृदयं यस्य। अत एवौत्कंठ्येन विवशमामीलितं यल्लोचनयुगलं तदेव कुड्मले ताभ्यां विगलितममलं बाष्पं तस्य कलया सहाभिव्यज्यमानं रोमपुलकानां कुलं यस्य ॥ २ ॥ ततः सप्तऋषयस्तस्या गंगायाः प्रभावाभिज्ञाः संतो यां जटाजूटैरुद्वहंतीत्यन्वयः। एतावत्येव नातोऽधिकास्तीत्यभिप्रायवंतः।

गिरी दक्षिणोत्तरविस्तारौ दक्षिणोत्तरौ च पूर्वापरविस्तारौ द्रष्टव्यौ । सर्वतो दशयोजनसहस्रविस्तारांगीकारे त्विलावृतलोपात्पूर्वेणेलावृतमुपप्लावयतीत्यादिविरोधः स्यात् ॥ ११ ॥ अधिसहस्रमेकादश शतानि उन्नाहो येषाम् । तावत्प्रमाणा विटपविततिर्येषाम् । शतयोजनं परिणाहो विस्तारो येषाम् ॥ १२ ॥ यदुपस्पर्शिनो यत्सेविनः ॥ १३ ॥ १४ ॥ ललामो भूषणम् । सुरललनानां भूषणभूताः श्रेष्ठा याः स्त्रियस्तासां यूथस्य पतयः सह संभूय येषु विहरंति ॥ १५ ॥ एकादशशतयोजनमुत्तुंगो यो देवचूतस्तस्य शिरसः सकाशात् । फलप्रमाणमुक्तं वायुपुराणे । अरत्नीनां

दिशमवष्टंभगिरय उपक्लृप्ताः ॥ ११ ॥ चतुर्ष्वेतेषु चूतजंबूकदंबन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः ॥ १२ ॥ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ धारयंति ॥ १३ ॥ देवोद्यानानि च भवंति चत्वारि नंदनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥ १४ ॥ येष्वमरपरिवृढाः सहसुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरंति ॥ १५ ॥ मंदरोत्संग एकादशशतयोजनोत्तुंगदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतंति ॥ १६ ॥ तेषां विशीर्यमाणानामतिमधुरसुरभिसुगंधिबहुलारुणरसोदेनारुणोदानाम नदी मंदरगिरिशिखरान्निपतंती पूर्वेणेलावृतमुपप्लावयति ॥ १७ ॥ यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगंधवातो दशयोजनं समंतादनुवासयति ॥ १८ ॥ एवं जंबूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्राणायामिभकायनिभानां रसेन जंबूनाम नदी मेरुमंदरशिखरादयुतयोजनादवनितले निपतंती दक्षिणेनात्मानं यावदिलावृतमुपस्यंदयति ॥ १९ ॥ तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदाऽमरलोकाभरणं जांबूनदं नाम सुवर्णं भवति ॥ २० ॥ यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु धारयंति ॥ २१ ॥ यस्तु महाकदंबः सुपार्श्वनिरूढो यास्तस्य कोटरेभ्यो विनिःसृताः पंचायामपरिणाहाः पंच मधुधाराः सुपार्श्वशिखरात्पतंत्योऽपरेणात्मानमिलावृतमनुमोदयंति ॥ २२ ॥ या ह्युपयुंजानानां मुखनिर्वासितो वायुः समंताच्छतयोजनमनुवासयति ॥ २३ ॥ एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कंधेभ्यो नीचीनाः पयोदधिमधुघृतगुडान्नाद्यंबरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात्पतंतस्तमुत्तरेणेलावृतमुपयोजयंति ॥ २४ ॥ यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गंध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवंति यावज्जीवं सुखं निरतिशयमेव ॥ २५ ॥

शतान्यष्टावेकषष्ट्याधिकानि च ॥ फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिरिति ॥१६॥ अतिमधुरश्चासौ स्वतः सुरभिश्च सुगंधिश्च । न चान्येषां गंधैरधिवासितः । बहुलश्चारुणश्च रसः स एव उदमुदकं तेन ॥ १७ ॥ यदुपजोषणाद्यस्य रसस्य सेवनात् ॥ १८ ॥ अनस्थिप्रायाणामतिसूक्ष्मबीजानाम् । यत्र निपतति ततश्चारभ्यात्मनो दक्षिणतः सर्वमिलावृतं व्याप्य वहतीत्यर्थः ॥ १९ ॥ तावत्स्रवतः रोधसोस्तटयोः ॥ २० ॥ २१ ॥ आयामोऽत्र व्यामः । स च । व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगंतरमित्युक्तलक्षणः । पंच व्यामाः परिणाहः स्थौल्यं यासामित्यर्थः । केचित्तु पंचव्यामपरिणाह

शुक्लकृष्णपक्षयोर्नक्षत्रगणैः सह चंद्रमा वा दृश्यते तावत् ॥ १ ॥ यतो येभ्यः सिंधुभ्यः । एतस्या भुवः सूचितः संक्षेपतो दर्शितः ॥ २ ॥ जिज्ञासायाः फलमाह । भगवत इति ॥ ३ ॥ या मायागुणविभूतिस्तस्याः काष्ठामंतं रूपं सन्निवेशः लक्षणं चिह्नम् ॥ ४ ॥ कुवलयं भूमंडलं तदेव कमलं तस्य कोशाः सप्तद्वीपास्तेष्वभ्यंतरकोशः प्रथमो जंबूद्वीपो नियुतयोजनविशालो लक्षयोजनविस्तीर्णः ॥ ५ ॥ नवयोजनसहस्रमायामो येषाम् । आयामोऽत्र विस्तारः । एतच्च भद्राश्वकेतुमालव्यतिरेकेण द्रष्टव्यम् । तयोश्चैकत्रिंशद्योजनसहस्रायामत्वात् । केचित्तु नीलनिषधयोः संलग्नाग्रयोः समुद्रप्रवेशमंगीकृत्य तयोरपि संकुचितत्वेन नवसहस्रायामत्वं संपादयंति । संनिवेशश्च वायुनोक्तः । धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे ॥ दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतमिति ॥ ६ ॥ नाभ्यां मध्ये द्वीपस्यायामो लक्षयोजनप्रमाणं तावान्समुन्नाह उच्छ्रायो यस्य । मूले षोडशयोजनसहस्रं विततः । तावता षोडशयोजनसहस्रमानेन चतुरशीतियोजनसहस्रमानेन च बहिर्दृश्यते एवं लक्षयोजनोन्नाहः ॥ ७ ॥ उत्तरोत्तरेणेलावृतमिलावृतस्योत्तरोत्तरतः क्रमेण नीलादयस्त्रयो मर्यादागिरयः । प्रागायताः पूर्वतो दीर्घाः । क्षारोद एवावधिर्येषाम् । द्विसहस्रयोजनविस्तीर्णाः । दशांशादीषदधिको योंऽशस्तेन दैर्घ्य एव ह्रसंति नतूच्चत्वे पृथुत्वे वा । यथोक्तं विष्णुपुराणे । लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथा पर इति । एतच्च स्थूलदृष्टचैवोक्तम् । तयोरपि यथावन्मध्यमत्वाभावेन लक्षप्रमाणत्वाभावात् ॥ ८ ॥ अयुतयोजन उत्सेध उच्छ्रायो येषाम् । अयं चोत्सेधो नीलादीनामपि द्रष्टव्यः । नीलादिपृथुत्वं चैषामपि द्रष्टव्यम् । यथासंख्यं मर्यादागिरय इति शेषः ॥ ९ ॥

राज भगवतो मायागुणविभूतेः काष्ठां मनसा वचसा वाऽधिगंतुमलं विबुधायुषाऽपि पुरुषस्तस्मात्प्राधान्येनैव भूगोलकविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः ॥ ४ ॥ यो वाऽयं द्वीपः कुवलयकमलकोशाभ्यंतरकोशो नियुतयोजनविशालः समवर्तुलो यथा पुष्करपत्रम् ॥ ५ ॥ यस्मिन्नव वर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवंति ॥ ६ ॥ एषां मध्ये इलावृतं नामाभ्यंतरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडसहस्रं तावतांतर्भूम्यां प्रविष्टः ॥ ७ ॥ उत्तरोत्तरेणेलावृतं नीलः श्वेतः श्रृंगवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथव एकैकशः पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसंति ॥ ८ ॥ एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् ॥ ९ ॥ तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गंधमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्राश्वयोः सीमानं विदधाते ॥ १० ॥ मंदरो मेरुमंदरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतु-

आनीलनिषधायतौ उत्तरतो नीलपर्यंतं दक्षिणतो निषधपर्यंतं च दीर्घौ । पप्रथतुर्विस्तीर्णौ भवतः तावेव केतुमालभद्राश्वयोर्वर्षयोः सीमानं कुर्वाते । नन्वेवं सति पूर्वापररेखायामिलावृतवेष्टितो मेरुर्मध्ये ततः पूर्वापरतो गिरिद्वयं वर्षद्वयं च नातः किंचिदस्ति दक्षिणोत्तररेखायां तु तथैवेलावृतवेष्टितो मध्ये मेरुरुभयतस्त्रीणि वर्षाणि गिरयश्च षट् तत्कथं सर्वतो लक्षप्रमाणत्वं जंबुद्वीपस्य । उच्यते । मेरोः षोडश सहस्राणि सर्वतः स्थितत्वादिलावृतस्याष्टादश अन्येषां षण्णां चतुष्पंचाशत् गिरीणां षण्णां द्वादशेत्येवं दक्षिणोत्तररेखायां तावल्लक्षम् । पूर्वापररेखायामपि सुमेरोरिलावृतस्य चतुस्त्रिंशत गिर्योश्चत्वारि शेषाणि द्विषष्टिसहस्राणि पूर्वापरवर्षयोरासमुद्रं दैर्घ्ये द्रष्टव्यान्यतो न विरोधः ॥ १० ॥ अयुतयोजनप्रमाणौ विस्तारोन्नाहौ येषाम् । विस्तीर्णमूर्धो मेरोरवष्टंभत्वात्पूर्वपश्चिमौ

रूपो भगवत्कलां गयमृतेऽन्यः क इत्यनुषंगः । अभिमानी सर्वतो मानास्पदं मनस्वीति वा । समागता संप्राप्ता श्रीर्येन यमिति वा । सतां सदसः सभायाः पतिः । सतां सेवकः । यद्वा । यज्वादि-
रूपोऽपि भगवत्कलामृते गयं कोऽन्यः प्रतियातीत्यन्वयः ॥ ९ ॥ सतीः सत्यः सत्या आशिषो यासां ताः दक्षकन्याः श्रद्धामैत्रीदयेत्याद्याः । निराशिषोऽपि यस्य प्रजानामाशिषः कामान् धरा
दुदुहे । तस्य गुणा एव वत्सस्तेन स्नुतमूधो यस्याः पृथिव्याः । यच्छब्दानां तं गयं कः प्रतियातीति संबंधः ॥ १० ॥ छंदांसि वेदास्तद्विहितकर्माणि च दुदूहुर्दुदुहुः । युधि प्रत्यंचिता बाणैः
प्रतिपूजिता नृपा यस्य । बलिमाजहुरर्पयामासुः । धर्मेण पालनेन दक्षिणादिभिश्च यदा प्रत्यंचिता विप्रास्तदा परेत्य लोकांतरे आशिषां धर्मफलानां षष्ठमंशमाजहुः । पुण्यषड्भागमादत्ते
न्यायेन परिपालयन्निति स्मृतेः ॥ ११ ॥ उरुसोमपीथे बहुसोमपानेऽध्वरे मघोनि इंद्रे माद्यति मदं प्राप्नुवति सति श्रद्धया विशुद्धो योऽचलो भक्तियोगस्तेन समर्पितमिज्याफलमाजहार । अर्हण-

सतीः सत्याशिषो दक्षकन्याः सरिद्भिः ॥ यस्य प्रजानां दुदुहे धराऽऽशिषो निराशिषो गुणवत्सस्नुतोधाः ॥ १० ॥ छंदास्यकामस्य च यस्य कामा-न्दुदूहुराजहुरथो बलिं नृपाः ॥ प्रत्यंचिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य ॥ ११ ॥ यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसो-मपीथे ॥ श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार ॥ १२ ॥ यत्प्रीणनाद्बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिंच्यात् ॥ प्रीयते सद्यः सहविश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य ॥ १३ ॥ गयाद्गयंत्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुश्चित्ररथादूर्णायां सम्राडजनिष्ट ॥ १४ ॥ तत उत्कलायां मरीचिर्मरीचेर्बिंदुमत्यां बिंदुमानुदपद्यत तस्मात्सरघायां मधुनामाऽभवन्मधोः सुमनसि वीरव्रतस्ततो भोजायां मंथुप्रमंथू जज्ञाते मंथोः सत्यायां भौवनस्ततो दूषणायां त्वष्टाऽजनिष्ट त्वष्टुर्विरोचनायां विरजो विरजस्य शतजित्प्रवरं पुत्रशतं कन्या च विषूच्यां किल जातम् ॥ १५ ॥ तत्रायं श्लोकः ॥ प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः ॥ अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे प्रियव्रतवंशानुकीर्तनं नाम पंचदशोऽध्यायः ॥ १५ ॥ राजोवाच ॥ उक्तस्त्वया भूमंडलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चंद्रमा वा सह दृश्यते ॥ १ ॥ तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्त सिंधव उपक्लृप्ता यत एतस्याः सप्तद्वीपविशेष-कल्पस्त्वया भगवन्खलु सूचित एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञासामि ॥ २ ॥ भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणे-ऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु हैतद्गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥ ऋषिरुवाच ॥ न वै महा-

मिव प्रत्यक्षतः स्वीकृतवानित्यर्थः ॥ १२ ॥ यस्य भगवतः प्रीणनात् । देवादीनां द्वंद्वैक्यम् । तत्सद्यः प्रीयेत प्रीतिं गच्छेत् । स विश्वजीवः सर्वांतर्यामी स्वयं प्रीतरूप एव बर्हिषि यज्ञे गयस्य हे
स्फुटं प्रीतिमगात्तृप्तोऽस्मीति प्रत्यक्षं प्रीतिमाविष्कृतवानित्यर्थः ॥ १३ ॥ १४ ॥ सुमनसि स्त्रियाम् ॥ १५ ॥ कीर्त्या अतिशयेनालमकरोद्भूषितवान् ॥ १६ ॥ इति श्रीमद्भागवते पंचमस्कंधे
टीकायां पंचदशोऽध्यायः ॥ १५ ॥ पूर्वोक्तद्विपसिंध्वादिमानचिह्नस्वरूपतः ॥ स्पष्टं प्रवक्तुमारब्धा पंचाध्यायी ततः परम् ॥ १ ॥ षोडशेऽधस्तथा चोर्ध्वं परितः सन्निवेशतः ॥ मेरोः स्थितिर्मही
कंजकर्णिका चोपवर्ण्यते ॥ २ ॥ प्रियव्रतचरित्रोक्तावुक्ता द्वीपादिजल्पना ॥ तद्विशेषविजिज्ञासुः कथांते परिपृच्छति ॥ ३ ॥ उक्त इति । किं पर्यंतमुक्तस्तदाह । यावदादित्यस्तपति यत्र चासौ

पादिताय हरये नम इत्युदारमुच्चैर्यः सम्यगुच्चारितवान् मृगत्वं मृगदेहमपि हास्यन् त्यक्ष्यन् य एवंभूतस्तस्य तदुचितमिति वा तस्यानुवर्त्म नार्हतीति वा संबंधः ॥ ४५ ॥ भरतचरितश्रवणादिफल-
माह । य इदमिति । भागवतैः सभाजिता अवदाताः शुद्धा गुणाः कर्माणि च यस्य तस्य भरतस्यानुचरितं योऽनुशृणोति स आत्मन एव सकाशात्सर्वा आशिष आशास्ते स्वत एव प्राप्नोति ।
नतु कांचिदपि परस्मादपेक्षत इत्यर्थः ॥ ४६ ॥ इति पंचमे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ॥ ततः पंचदशे तस्य कीर्त्यंते वंशजा नृपाः ॥ १ ॥
ऋषभपदवीं जीवन्मुक्तमार्गमनुवर्तमानम् । यं दृष्ट्वेति शेषः । यद्वा । यं सुमतिमवेदसमाम्नातां देवतां कल्पयिष्यंति । बुद्धोऽयं साक्षादवतीर्ण इति मंस्यंत इत्यर्थः ॥ १ ॥ २ ॥ तत्तनयो देवताजितः

दारं हास्यन्मृगत्वमपि यः समुदाजहार॥ ४५ ॥ य इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वानुशृणोत्याख्यास्यत्यभिनंदति च सर्वा एवाशिष आत्मन आशास्ते न कांचन परत इति ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भरतोपाख्याने पारोक्ष्यविवरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ भरतस्यात्मजः सुमतिर्नामाभिहितो यमु ह वाव केचित्पाखंडिन ऋषभपदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यंति ॥ १ ॥ तस्माद्वृद्धसेनायां देवताजिन्नाम पुत्रोऽभवत् ॥ २ ॥ अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह उपजातः ॥ ३ ॥ य आत्मविद्यामाख्याय स्वयं संशुद्धो महापुरुषमनुसस्मार ॥ ४ ॥ प्रतीहात्सुवर्चलायां प्रतिहर्त्रादयस्त्रय आसन्निज्याकोविदाः सूनवः प्रतिहर्तुः स्तुत्यामजभूमानावजनिषाताम् ॥ ५ ॥ भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तावो देवकुल्यायां प्रस्तावान्नियुत्सायां हृदयज आसीद्विभुर्विभो रत्यां च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे नक्ताद्द्रुतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः॥ ६ ॥ स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनाऽर्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत् ॥ ७ ॥ तस्येमां गाथां पांडवेय पुराविद उपगायंति ॥ ८ ॥ गयं नृपः कः प्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद्धर्मगोप्ता ॥ समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ॥ ९ ॥ यमभ्यषिंचन्परया मुदा

पुत्रः ॥ ३ ॥ आत्मविद्यां बहुभ्य आख्याय व्याख्यानेनैव स्वयं संशुद्धोऽनुसस्मारापरोक्षतयाऽनुभूतवान् ॥ ४ ॥ प्रतिहर्ता प्रस्तोता उद्गातेति त्रयो यज्ञनिपुणाः सूनव आसन् । अजनिषातां जातौ
॥ ५ ॥ हृदयजः पुत्रः । जगतो रिरक्षिषया रक्षितुमिच्छया गृहीतं सत्त्वं येन तस्य विष्णोः कलांशः सन् ॥ ६ ॥ महापुरुषत्वमेवाह । स वै इति । धर्मस्तस्य द्विविधः । अभिषिक्तत्वात्प्रजापालनादिरेकः । गृहस्थत्वादिज्यादिश्चापरः । द्विविधोऽपि भगवति सर्वात्मनाऽर्पितः सन् परमार्थलक्षणस्तेन परिभाविता संस्कृताऽतिशुद्धा मतिर्यस्य अतएवोपरतमनात्म्यं देहाद्यहंभावो यस्मिंस्तस्मिन्नात्मनि चित्ते स्वयमेवोपलभ्यमाने ब्रह्मण्यात्मानुभवो यस्य तादृशोऽपि निरभिमान एवावनिमजूगुपत्पालयामास ॥ ७ ॥ ८ ॥ कर्मभिर्गयं कः प्रतियात्यनुकरोति न कोऽपि । अत्र हेतुः । यज्वादि-

गिरिकंदरप्राये तमसि रोगाद्यापदि पततीति शेषः ॥ ३३ ॥ क्वचिच्छीतवातेत्यादिपूर्वस्मादधिकोक्तिः । रोगाद्यापदि पतितः सन् शीतादिभिः क्लिश्यन्नास्त इत्यर्थः ॥ ३४ ॥ तदेवं सिंहावलोकन-न्यायेनोक्तमर्थं यथास्थानमपकृष्य व्याख्याय क्रमस्थमनुवर्तयितुं पूर्वोक्तमेवानुवदति । क्वचिन्मिथ इति । वित्तशाठ्येन कदाचिद्यत्किंचिद्धनमुपयाति ॥ ३५ ॥ क्वचित्क्वचित्क्षीणधनस्त्विति व्याचष्टे । क्वचित्क्षीणधन इति । अप्रतिलब्धं यन्मनोरथेनोपगतं वांछितं तस्याऽऽदाने स्वीकारे निश्चितमतिः सन् ॥ ३६ ॥ अन्योन्यवित्तव्यतिषंगेणेत्येतद्व्याचष्टे । एवं वित्तव्यतिषंगेति । अप-वहति त्यजति ॥ ३७ ॥ अध्वन्यमुष्मिन्नित्यादि व्याचष्टे । एतस्मिन्निति आपन्न आपदं प्राप्तः विपन्नो विनष्टो वा यत्र यस्तमितरस्तत्र विसृज्य । नह्यमानो वध्यमानः साधुवर्जितः साधुव्य-तिरिक्तः ॥ ३८ ॥ अनावृत्तौ हेतुमाह । यदिदमिति ॥ ३९ ॥ मनस्विन इत्यादि व्याचष्टे । यदपीति । ये वै राजर्षयस्तेऽपि नावरुंधते किंतु परं केवलं मृधे शयीरन् ॥ ४० ॥ प्रसज्जतीत्यादि-गिरिकंदर इत्यंतमपकृष्य व्याख्यातं ग्रंथमतिक्रम्य वल्लीं गृहीत्वेत्यादि ग्रंथं व्याचष्टे । कर्मवल्लीमिति । एवमुपरि स्वर्गं गतोऽपि नरलोकसार्थमेवोपयाति ॥ ४१ ॥ तदेवं भरतोक्तिं व्याख्याय

शय्यासनाशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनि जनादभिलभते ॥ ३६ ॥ एवं वित्तव्यतिषंग-विद्धवैरानुबंधोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति ॥ ३७ ॥ एतस्मिन्संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमु ह वावे-तरस्तत्र विसृज्य जातं जातमुपादाय शोचन्मुह्यन्बिभ्यद्विवदन्क्रंदन्संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्ततेऽद्यापि यत आरब्ध एष नरलोकसार्थो यमध्वनः पारमुपदिशंति ॥ ३८ ॥ यदिदं योगानुशासनं न वा एतदवरुंधते यन्न्यस्तदंडा मुनय उपशमशीला उपरतात्मानः समवगच्छंति ॥ ३९ ॥ यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किंतु परं मृधे शयीरन्नस्यामेव ममेयमिति कृतवैरानुबंधायां विसृज्य स्वयमुपसंहृताः ॥ ४० ॥ कर्मवल्लीमवलंब्य तत आपदः कथंचिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति एवमुपरिगतोऽपि ॥ ४१ ॥ तस्येदमुपगायंति—आर्षभ-स्येह राजर्षेर्मनसाऽपि महात्मनः ॥ नानुवर्त्माऽर्हति नृपो मक्षिकेव गरुत्मतः ॥ ४२ ॥ यो दुस्त्यजान्दारसुतान्सुहृद्राज्यं हृदिस्पृशः ॥ जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ४३ ॥ यो दुस्त्यजान्क्षितिसुतस्वजनार्थदारान्प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् ॥ नैच्छन्नृपस्तदुचितं महतां मधु-द्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ ४४ ॥ यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय ॥ नारायणाय हरये नम इत्यु-

तच्चरितसंग्रहश्लोकानाह । तस्येदं कर्म श्लोकैरुपगायंति । आर्षभस्य ऋषभपुत्रस्य अन्यो नृपोऽनुवर्त्म नार्हति वर्त्मानुगंतुं न शक्नोति ॥ ४२ ॥ तत्र हेतुमाह । य इति सुहृद्राज्ययोर्द्वंद्वैक्यम् । यो दुस्त्यजान्दारादीन्विष्ठामिव जहौ तस्यार्षभस्येति संबंधः । दुस्त्यजत्वे हेतुः । हृदिस्पृशो मनोज्ञान् । त्यागे हेतुः । उत्तमश्लोके लालसा लंपटत्वं यस्य ॥ ४३ ॥ तस्यैवं विषयत्यागो न चित्र-मित्याह । य एवंभूतोऽसौ नृपः स क्षित्यादीन्नैच्छदिति यत्तदुचितम् । सदयावलोकां भरतस्य दया यथा भवत्येवमवलोको यस्या इति परिजनावलोकः । श्रियामुपचर्यते । यतो मधुद्विषः सेवा-यामनुरक्तं मनो येषां तेषां महतामभवो मोक्षोऽपि फल्गुस्तुच्छ एव ॥ ४४ ॥ तस्य सेवानुरागमेवाह । यज्ञायेति । यज्ञरूपाय धर्मपतये यज्ञादिफलदात्रे विधौ नैपुण्यं यस्य तस्मै धर्मानुष्ठात्रे योगोऽष्टांगस्तस्मै । सांख्यं ज्ञानं तच्छिरः प्रधानं फलं यस्य तस्मै योगाय प्रकृतीश्वराय मायानियंत्रे अतएव नारं जीवसमूहः सोऽयनमाश्रयो यस्य सर्वजीवनियंत्रे एवं कर्मज्ञानदेवताकांडैः प्रति-

क्वचिन्मिथो यत्किंचिद्धनं व्यवहरन्काकिणिकामात्रं विंशतिकपर्दकमात्रं ततोऽपि न्यूनं वा यत्किंचिदपहरन्विद्वेषमेति ॥ २६ ॥ अध्वन्यमुष्मिन्नुरु-
स्तासाम् ॥ २५ ॥ क्वचिन्मिथ इत्येतद्व्याचष्टे । क्वचिन्मिथो यत्किंचिद्धनं व्यवहरन्काकिणिकामात्रं विंशतिकपर्दकमात्र ततोऽपि न्यूनं वा यत्किंचिदपहरन्विद्वेषमेति ॥ २६ ॥ अध्वन्यमुष्मिन्नुरु-
कृच्छ्रवित्तबाधोपसर्गैरित्युक्तानुपसर्गान्प्रपंचयति । अध्वन्यमुष्मिन्निमे उरुकृच्छ्रवित्तबाधादयस्तथा सुखदुःखादयश्च ॥ २७ ॥ व्युत्क्रमैः पुनरुक्तैश्च नानापाठैरतः परम् ॥ दुर्गमोऽपि भवाध्वायं
संप्रदायेन तीर्यते ॥ तत्र प्रसजति क्वापीत्यादिना सिंहावलोकनन्यायेनोक्तमर्थमपकृष्य क्रमेण व्याचष्टे । क्वापि देवमाययेति । प्रस्कन्नमपगतं विवेकविज्ञानं यस्य । यस्याः स्त्रिया विहारगृहं क्रीडा-
गृहं तदारंभे आकुलं हृदयं यस्य अनेन प्रसजतीति व्याख्यातम् । तदाश्रयेत्यादि व्याचष्टे । तस्या आश्रयेऽवसक्ताः संलग्नाः सुता दुहितरश्च कलत्रं च सैव स्त्री तेषां भाषितादिभिरपहृतं हृदयं यस्य ।
प्रहिणोति प्रक्षिपति ॥ २८ ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदाचिदीश्वरस्येति । परमाणुरादिः द्विपरार्धोऽपवर्गोऽन्तः तदेवोपलक्षणं यस्य तस्मात् कालोपलक्षणादिति पृथक्पदत्वेन

अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभ-
मप्यपहरन्यत्किंचिद्वा विद्वेषमेति वित्तशाठ्यात् ॥ २६ ॥ अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभ-
मात्सर्येर्ष्याऽवमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥ क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारं-
भाकुलहृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेऽन्धे तमसि प्रहिणोति ॥ २८ ॥ कदाचिदी-
श्वरस्य भगवतो विष्णोश्चक्रात्परमाण्वादिद्विपरार्धापवर्गकालोपलक्षणात्परिवर्तितेन वयसा रंहसा हरत आब्रह्मतृणस्तंबादीनां भूतानामनिमिषतो
मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रनिजायुधं साक्षाद्भगवंतं यज्ञपुरुषमनादृत्य पाखंडदेवताः कंकगृध्रबककवटप्राया आर्यसमयपरिहृताः सांकेत्ये-
नाभिधत्ते ॥ २९ ॥ तदा पाखंडिभिरात्मवंचितैस्तैरुरुवंचितो ब्रह्मकुलं समावसंस्तेषां शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतो यज्ञपुरुषस्या-
राधनमेव तदरोचयञ्छूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मिथुनीभावः कुटुंबभरणं यथा वानरजातेः ॥ ३० ॥ तत्रापि निरवरोधः स्वैरेण
विहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणादिना ग्राम्यकर्मणैव विस्मृतकालावधिः ॥ ३१ ॥ क्वचिद्द्रुमवदैहिकार्थेषु गृहेषु रंस्यन्यथा वानरः सुत-
दारवत्सलो व्यवायक्षणः ॥ ३२ ॥ एवमध्वन्यवरुंधानो मृत्युगजभयात्तमसि गिरिकंदरप्राये ॥ ३३ ॥ क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां
दुःखानां प्रतिनिवारणेऽकल्पो दुरंतविषयविषण्ण आस्ते ॥ ३४ ॥ क्वचिन्मिथो व्यवहरन्यत्किंचिद्धनमुपयाति वित्तशाठ्येन ॥३५॥ क्वचित्क्षीणधनः

पाठे कालस्वरूपादित्यर्थः । रंहसा शीघ्रेण परिवर्तितेन परिभ्रमणेन वयसा बाल्यादिक्रमेण ब्रह्माणमभिव्याप्य तृणस्तंबादीनि भूतानि हरतश्चक्रतः सकाशाद्वित्रस्तहृदयः सन्पाखंडदेवता अभि-
मुख्येन धत्त इत्यन्वयः । अनिमिषतो निमेषमकुर्वतः अप्रमत्तादित्यर्थः । मिषतां प्रतिकर्तुमशक्तानामित्यर्थः । कर्मणि षष्ठ्यः । कालचक्रं निजं नित्यमायुधं यस्य । सांकेत्येन मूलप्रमाणशून्येन
पाखंडागमेन ॥ २९ ॥ तैर्वंचित इत्येतद्व्याचष्टे । यदा त्विति । आत्मना वंचितैरुरु अधिकं वंचितः सन् । तेषां ब्राह्मणानां यच्छीलमुपनयनादि तदरोचयन् शूद्रवद्वर्तते । निगमोक्ताचारे अशु-
द्धितः स्वस्य शुद्ध्यभावात् यस्य शूद्रस्य केवलं मिथुनीभावः कुटुंबभरणं च व्यापारो नाग्निहोत्रादिः ॥ ३० ॥ तज्जातिरासेनेत्यादि व्याचष्टे । तत्रापि निरवरोधः प्रतिबंधरहितः स्वैरेण स्वेच्छया
क्रीडन्विस्मृतमृत्युकालः सन् ॥ ३१ ॥ द्रुमेषु रंस्यन्नित्येतद्व्याचष्टे । क्वचिद्द्रुमवदिति व्यवायक्षणो मैथुनोत्सवो भवति ॥ ३२ ॥ क्वचित्प्रमादादित्येतद्व्याचष्टे । एवमध्वनि सुखदुःखाद्यवरुंधानो

नित्येतद्व्याचष्टे । स यदेति । दुग्धमुपभुक्तं पूर्वसुकृतं येन तदाकारस्करो विषतिंदुस्तत्प्रमुखा येऽपुण्यद्रुमास्तथाविधा लताश्च विषोदपानाश्च विषकूपास्तत्तुल्यान् दृष्टादृष्टप्रयोजनशून्यधनान् ॥ १२ ॥ क्वचिद्वितीयाः सरित इत्येतद्व्याचष्टे । एकदा क्वचिदसतां प्रसंगान्निकृता वंचिता मतिर्यस्य सः निरुदकनदीगर्तपाते यथा सद्यः शिरः स्फुटति पश्चादपि तद्वेदनाऽनुवर्तते एवमिह परत्र च दुःखदम् ॥ १३ ॥ परस्परं चालयते निरंध इत्येतद्व्याचष्टे । यदा त्विति । अंधोऽन्नम् । नोपनमति नोपतिष्ठति । पितृपुत्राणां बर्हिः कुशस्तद्वतः पितुः पुत्राणां वा कुशादितृणमात्रमपि येषु पश्यति तान्भक्षयति बाधत इत्यर्थः । पितृपुत्रबर्हिष्मानिति तु पाठः सुगमः ॥ १४ ॥ आसाद्य दावमित्येतद्व्याचष्टे । क्वचिदासाद्येति ॥ १५ ॥ क्व च यक्षैर्हृतासुरित्येतद्व्याचष्टे । क्वचित्कालेन विषमितं प्रतिकूलतां नीतं यद्राजकुलं तदेव रक्षस्तेनापहृताः प्रियतमधनरूपा असवो यस्य । विगतानि जीवलक्षणानि हर्षादीनि यस्य शूरैर्हृतस्व इत्यप्यनेनैव व्याख्यातम् ॥ १६ ॥ क्वचिच्च गंधर्वपुरं प्रविष्ट इत्येतद्व्याचष्टे । कदाचिन्मनोरथप्राप्तं पित्राद्यसदेव सदिति मत्वा । पूर्वं गंधर्वपुरवदघटमानदर्शनमुक्तमिदानीं तन्निमित्तसुखासक्तिरुच्यत इति भेदः ॥ १७ ॥ चलन् क्वचिदित्येतद्व्याचष्टे । क्वचिद्गृहाश्रमे

परबाधयाऽन्ध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान्वा स खलु भक्षयति ॥ १४ ॥ क्वचिदासाद्य गृहं दाववत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥ १५ ॥ क्वचित्कालविषमितराजकुलरक्षसाऽपहृतप्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण आस्ते ॥ १६ ॥ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदिति स्वप्ननिर्वृतिलक्षणमनुभवति ॥ १७ ॥ क्वचिद्गृहाश्रमकर्मचोदनाऽतिभरगिरिमारुरुक्षमाणोऽलोकव्यसनकर्शितमनाः कंटकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥ १८ ॥ क्वचिच्च दुःसहेन कायाभ्यंतरवह्निना गृहीतसारः स्वकुटुंबाय क्रुद्ध्यति ॥ १९ ॥ स एव पुनर्निद्राजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत्किंचन वेद शव इवापविद्धः ॥ २० ॥ कदाचिद्भग्नमानदंष्ट्रो दुर्जनदंदशूकैरलब्धनिद्राक्षणो व्यथितहृदयेनानुक्षीयमाणविज्ञानोऽन्धकूपेऽन्धवत्पतति ॥ २१ ॥ कर्हिस्मचित्काममधुलवान्विचिन्वन्यदा परदारपरद्रव्याण्यवरुंधानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ २२ ॥ अथ च तस्मादुभयथापि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरंति ॥ २३ ॥ मुक्तस्ततो यदि बंधाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥ २४ ॥ क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणेऽकल्पो दुरंतचिंतया विषण्ण आस्ते ॥ २५ ॥ क्वचिन्मिथो व्यवहरन्यत्किंचिद्धनमन्येभ्यो वा काकिणिकामात्र-

याः कर्मचोदनास्तासामतिभरोऽतिविस्तारः स एव गिरिस्तमारुरुक्षुस्तदंतं गंतुमिच्छन् ॥ १८ ॥ पदेपदेऽभ्यंतरवह्निनेति व्याचष्टे । क्वचिच्च दुःसहेनेति ॥ १९ ॥ क्वचिन्निगीर्ण इत्येतद्व्याचष्टे । स एवेति ॥ २० ॥ दष्टः स्म शेते इति व्याचष्टे । कदाचिदिति । मानो गर्व एव दंष्ट्रा परपीडाकरत्वात् । भग्ना मानदंष्ट्रा यस्य अतएव न लब्धो निद्रायाः क्षणोऽपि येन ॥ २१ ॥ कर्हिस्मचित्क्षुद्ररसानित्येतद्व्याचष्टे । कर्हिस्मचित्काममधुलवानिति । यदा निहतो भवति तदा सद्य एव निरये पतति ॥ २२ ॥ प्रसंगात्प्रवृत्तस्य कर्मणः संसारहेतुत्वं स्फुटयति । अथ चेति । यस्मादेवं तस्मात् । अथ अनंतरमेव । उभयथा इह च परत्र च । अस्मिन्प्रवृत्तिमार्गे । संसारस्यावपनं जन्मक्षेत्रं कर्मोदाहरंति ॥ २३ ॥ तत्रातिकृच्छ्रं प्रतिलब्धमान इत्येतद्व्याचष्टे । मुक्त इति । यदि बंधान्मुक्तो भवति तर्हि ततः सकाशादन्यो हरति तस्मादप्यन्यः । नत्वसौ भोक्तुं लभत इत्यर्थः ॥ २४ ॥ क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्चेति शीतादयोऽनेका आधिदैविकाद्या या दशा दुःखावस्था-

यद्यस्माद्योऽयमावसथ आश्रम एष कामानां करंडः । यथा कर्पूर-
सृगालाश्च कदर्यस्यातिलुब्धस्य ॥ ३ ॥ प्रभूतवीरुत्तृणगुल्मगह्वरमित्येतद्व्याचष्टे । यथा हीति । न दग्धानि बीजानि यस्मिन् । यद्यस्माद्योऽयमावसथ आश्रम एष कामानां करंडः । यथा कर्पूर-
भाजने कर्पूरक्षयेऽपि परिमलो न क्षीयते एवमत्र वासनानामक्षीणत्वान्न कर्माण्युत्सीदंतीत्यर्थः ॥ ४ ॥ दंशमशकतुल्यैरपसदैर्नीचैः शलभादिभिश्चोपरुध्यमानः पीड्यमानो बहिःप्राणो वित्तं यस्य
तथाविधोऽप्यस्मिन्नध्वनि परिश्रमन्नविद्यादिभिरुपरक्तेन मनसा गंधर्वपुरतुल्यमघटमानं नरलोकं सत्यतया मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ प्रपश्यतीति प्रशब्दसूचितमर्थांतरं दर्शयति । तत्र च गंधर्व-
पुरे क्वचिदातपोदकं मृगतृष्णाजलं तत्तुल्यान्विषयानुपधावतीति ॥ ६ ॥ क्वचित्क्वचिच्चाशुरयोल्मुकग्रहमित्येतद्व्याचष्टे । क्वचिच्चाशेषाणां दोषाणां निषदनं स्थानं पुरीषविशेषमग्रेविंष्ठा तस्य पुरीषस्येव
लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता तद्विषया मतिर्यस्य स सुवर्णमुपादातुमिच्छति । अग्निकामेन कातरः परवश उल्मुकसदृशं पिशाचमिव । शीतातुरो ह्यरण्येऽग्निवज्ज्वाज्वल्यमानं ततस्ततो
धावंतमुल्मुकपिशाचमग्निबुद्ध्याऽनुधावति नतु तं प्राप्नोति कथंचित्प्राप्तश्चेत्तर्हि तेन भक्षितः सन् म्रियते । एवं सुवर्णमनुधावन्नपीत्यर्थः ॥ ७ ॥ निवासतोयद्रविणेत्येतद्व्याचष्टे । अथेति । निवासा-

गह्वरमिव भवत्येवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन्न हि कर्माण्युत्सीदंति यदयं कामकरंड एष आवसथः ॥ ४ ॥ तत्र गतो दंशमशकसमापसदैर्मनुजैः
शलभशकुंततस्करमूषकादिभिरुपरुद्ध्यमानबहिःप्राणः क्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थं नरलोकं गंधर्वनगरमु-
पपन्नमिति मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ तत्र च क्वचिदातपोदकनिभान्विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः ॥ ६ ॥ क्वचिच्चाशेष-
दोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिः सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ ७ ॥ अथ कदाचिन्निवासपानीयद्रविणाद्य-
नेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ ८ ॥ क्वचिच्च वात्यौपम्यया प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूता
इवासाधुमर्यादो रजस्वलाक्षोऽपि दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥ ९ ॥ क्वचित्सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशित-
स्मृतिस्तयैव मरीचितोयप्रायांस्तानेवाभिधावति ॥ १० ॥ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भर्त्सि-
तेनातिव्यथितकर्णमूलहृदयः ॥ ११ ॥ स यदा दुग्धपूर्वसुकृतस्तदाकारस्करकाकतुंडाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान्जीवन्मृता-
न्स्वयं जीवन्म्रियमाण उपधावति ॥ १२ ॥ एकदाऽसत्प्रसंगान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाखंडमभियाति ॥ १३ ॥ यदा तु

दिष्वनेकेष्वात्मन उपजीव्येष्वभिनिवेशो यस्य ॥ ८ ॥ क्वचिच्च वात्योत्थितेत्येतद्व्याचष्टे । क्वचिच्चेति । आरोहमंकम् । तस्मिन्काले यद्रजो रागस्तेन स्वदृष्ट्यावरकेण रजन्यां रात्रौ भूता इव । हस्व-
पाठे रजनीभूतस्तमोमय इवातीव रजसाच्छन्नमतिरतएव रजोव्याप्तचक्षुरिव दिक्षु स्थिता मर्यादातिक्रमसाक्षिभूता देवता न जानाति ॥ ९ ॥ अनुपादेयमेवोपादेयतया गृह्णातीति प्रक्रमसाजात्या-
दुत्तरश्लोकचतुर्थपादं प्रथमं व्याचष्टे । क्वचित्सकृदिति । कचिदातपोदकनिभानित्यत्र मिथ्याविषयेषु लंपटत्वमुक्तम् । निवासतोयेत्यत्र तदर्जनप्रयास उक्तः । अत्र तु बाधितेष्वपि पुनः प्रवृत्तिरुच्यते
इत्यपौनरुक्त्यम् । स्वयमेव सकृदवगतं विषयाणां वैतथ्यं विफलत्वं येन । पराभिध्यानेन देहाभिनिवेशेन विभ्रंशिता स्मृतिर्यस्य । तयैव विभ्रंशितया स्मृत्या स्मृतिभ्रंशादेवेत्यर्थः ॥ १० ॥ अदृश्य-
झिल्लीस्वनेत्येतद्व्याचष्टे । कचिदुलूकेति । अतिपरुषो रभस उत्साहस्तेनाटोपः संभ्रमो यथा भवत्येवं रिपूणां राजकुलस्य च निर्भर्त्सितेनातिव्यथितं कर्णमूलं हृदयं च यस्य ॥ ११ ॥ अपुण्यवृक्षा-

आत्ममतिं च विससर्ज । हे नृप ! भगवदाश्रितो भरतस्तदाश्रितो रहूगणो यस्तस्यानुभावः सद्यो देहाहंकारत्यागः ॥ २५ ॥ परोक्षेण वणिक्सार्थरूपकेण । आर्याणां विवेकिनां मनीषयैव दस्युस्थानी-यानींद्रियाणि गोमायुस्थानीयान्यपत्यादीनीत्येवं कल्पितविषयः अव्युत्पन्नस्य तु लोकस्य जनस्य सम्यगधिगमो न भवति । अथ अतस्तदेतदेव भवाध्वरूपं समवेतानुकल्पेन प्रस्तुते तत्तदनुरूपार्थो-पकल्पनेन ॥ २६ ॥ इति पंचमस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ चतुर्दशे भवारण्यरूपकव्याकृतिः कृता ॥ प्रस्तुते तस्य गोमायुमशकाद्यर्थकल्पनम् ॥ १ ॥ यः परीक्षिता पृष्टः स श्रीशुक उवाच । हेति स्तुतोक्तिः । दुरत्ययेऽध्वन्यजया निवेशित इति यदुक्तं तदेव निवेशनप्रकारकथनेन प्रपंचयति । य एष प्रसिद्धो जीवलोकोऽयं विष्णोर्मायया सुगमेऽध्वन्यापतितो भवाटवीं गतः सन् हरिरूपस्य गुरोश्चरणारविंदे ये मधुकराः सेवकास्तेषामनुपदवीं तैरनुष्ठितं भक्तिमार्गमद्यापि नावरुंधे न संप्राप्नोतीत्यन्वयः । मायायाः स्वकार्यद्वारेण संसारमार्गे पातहेतुत्वमाह । देहा-

न्यविद्याऽध्यारोपितां च देहात्ममतिं विससर्ज एवं हि नृप भगवदाश्रिताश्रितानुभावः ॥ २५ ॥ राजोवाच ॥ यो ह वा इह बहुविदा महाभागवत त्वयाऽभिहितः परोक्षेण वचसा जीवलोकभवाध्वा स ह्यार्यमनीषया कल्पितविषयो नांजसाऽव्युत्पन्नलोकसमधिगमः अथ तदेवैतद्दुरवगमं समवेतानु-कल्पेन निर्दिश्यतामिति ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भवाटव्युपवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ स होवाच ॥ य एष देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिंद्रियवर्गेण तस्मिन्दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनि-ष्पादितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविंदमधुकरानुपदवीमवरुंधे यस्यामु ह वा एते षडिंद्रियनामानः कर्मणा दस्यव एव ते ॥१॥ तद्यथा पुरुषस्य धनं यत्किंचिद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात्परमपुरुषाराध-नलक्षणो योऽसौ धर्मस्तं तु सांपराय उदाहरंति तद्धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योपभोगेन कुनाथस्याजिता-त्मनो यथा सार्थस्य तथाऽजितात्मनो विलुंपंति ॥ २ ॥ अथ च यत्र कौटुंबिका दारापत्यादयो नाम्ना कर्मणा वृकसृगाला एवानिच्छतोऽपि कदर्यस्य कुटुंबिन उरणकवत्संरक्ष्यमाणं मिषतोऽपि हरंति ॥ ३ ॥ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भि-

त्ममानिनां सत्त्वादिगुणविशेषैर्विकल्पितानि विभक्तानि यानि कुशलाकुशलविमिश्रकर्माणि तैर्विनिर्मिताभिर्विविधदेहावलिभिर्वियोगसंयोगादिर्योऽनादिः संसारस्तदनुभवस्य द्वारभूतेन षडिंद्रियवर्गेण तस्मिन्संसाररूपे दुर्गमार्गवद्सुगमेऽध्वन्यापतितो यथा वणिजां सार्थः समूहोऽर्थार्जनपरः । स्वदेहनिष्पादितानां कर्मणां फलद्वारेणानुभवो यस्य विफलाश्च बहुप्रतियोगा बहुविघ्नाश्च ईहाश्चेष्टा यस्य सः । तस्यां संसाराटव्यां ये तापास्तेषामुपशमनीं नाशनीम् । यस्यामित्यादि व्याचष्टे । यस्यां भवाटव्याम् ॥ १ ॥ दस्युतुल्यं तेषां कर्म दर्शयति । तद्यथेति । धर्मौपयिकं धर्मकारणम् । तमेव स्वाभिप्रेतं धर्ममाह । साक्षादिति । तं तु सांपराये परलोकार्थमुदाहरंति तद्धर्म्यं धर्मार्हं धनम् । दर्शनाद्याः पंचज्ञानेंद्रियाणां वृत्तयः संकल्पव्यवसायावंतःकरणस्य एतैर्गृहे यो ग्राम्य उपभोगस्तेन कुनाथस्य कुबुद्धेरजितात्मनो विलुंपंति । यथा चोराः कुपालकस्यानवहितात्मनः सार्थस्य धनं हरंति तद्वत् ॥ २ ॥ गोमायवो यत्रेत्येतद्व्याचष्टे । अथ चेत्यर्थांतरोपन्यासे । कर्मणा ते तु वृकाः

भुजाः शाखास्तद्वत्सुकुमारा ये स्त्रीणां भुजास्तदाश्रयः सन् । तदाश्रया अव्यक्तपदा अस्फुटाक्षराः कलभाषिणो ये द्विजाः पक्षिणस्तत्तुल्येषु स्त्रीसंगप्रसक्तेष्वपत्येषु स्पृहा यस्य तादृशो भूत्वा हरिचक्रं सिंहसमूहस्तत्तुल्यात्कालचक्रनिमित्ताज्जन्ममरणादेस्त्रस्तस्तत्परिहाराय कैश्चित्प्रलोभितो बकादिवद्वंचकैः क्षुद्रैः क्रूरैश्च पाखंडैः सह सख्यं करोति तेषु प्रविशति ॥ १६ ॥ तैर्वंचितस्तत्र फलाभावं ज्ञात्वा हंसानां ब्राह्मणानां कुलं पुनः प्रविशंस्तेषां शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचारमरोचयन्नप्रियं पश्यन्वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेन वानरजातिक्रीडया स्त्रिया मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतो जीवितावधिर्मरणकालो येन ॥ १७ ॥ द्रुमवत्केवलदृष्टार्थेषु गृहेषु व्यवायदीनः सुरतेच्छया कृपणः एवं स्वस्य यद्बंधनं प्राप्तं तस्मिन्विवशः परिहर्तुमशक्तः । पाठांतरे तु वने संसारे चरन्नित्यर्थः । गिरिकंदरवदतिभयानके रोगादिदुःखे पतन्कंदरस्थगजतुल्यान्मृत्योर्भीतः सन् वल्लीतुल्यं प्राचीनं कर्मावलंब्यावस्थितो भवति ॥ १८ ॥ सार्थं प्रविशति यथा पूर्वं प्रवृत्तिमार्गे रमते न वेद परमपुरुषार्थम् ॥ १९ ॥ त्वमपि अध्वनि निवेशित इत्यनुषंगः । अतोऽस्याध्वनः पारमतितर । असज्जितात्मा विषयेष्वनभिनिवेशितचित्तः सन् । हरिसेवया शितं

पदद्विजस्पृहः ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यं विधत्ते बककंकगृध्रैः ॥ १६ ॥ तैर्वंचितो हंसकुलं समाविशन्नरोचयञ्छीलमुपैति वानरान् ॥ तज्जातिरासेन सुनिर्वृतेंद्रियः परस्परोद्वीक्षणविस्मृतावधिः ॥ १७ ॥ द्रुमेषु रंस्यन्सुतदारवत्सलो व्यवायदीनो विवशः स्वबंधने ॥ क्वचित्प्रमादाद्गिरिकंदरे पतन्वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १८ ॥ अतः कथंचित्स विमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिंदम ॥ अध्वन्यमुष्मिन्नजया निवेशितो भ्रमन् जनोऽद्यापि न वेद कश्चन ॥१९॥ रहूगण त्वमपि ह्यध्वनोऽस्य संन्यस्तदंडः कृतभूतमैत्रः ॥ असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम् ॥ २० ॥ राजोवाच ॥ अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ॥ न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २१ ॥ न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ॥ मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥ नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आबटुभ्यः ॥ ये ब्राह्मणा गामवधूतलिंगाश्चरंति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥ श्रीशुक उवाच ॥ इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिंधुपतय आत्मसतत्त्वं विगणयतः परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवंदितचरण आपूर्णार्णव इव निभृतकरणोर्म्याशयो धरणिमिमां विचचार ॥ २४ ॥ सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्म-

तीक्ष्णीकृतम् ॥ २० ॥ अखिलजन्मसु शोभनं नृजन्मैव न परं श्रेष्ठं येभ्यो देवादिजन्मभ्यस्तैरपि किम् । अमुष्मिन् स्वर्गेऽपि जन्मभिः किं न किंचित् । यद्येषु जन्मसु यत्र स्वर्गे वा वो महात्मनां समागमः प्रचुरो न भवति । हृषीकेशस्य यशसा कृतः शोधित आत्मा यैस्तेषाम् ॥ २१ ॥ संततमुपासितैस्त्वत्पदाब्जरेणुभिर्हतमंहो यस्य तस्याधोक्षजे निर्मला भक्तिर्भवतीति नैवाद्भुतम् । यस्य तव मुहूर्तमात्रभवात्समागममात्रादपि दुस्तर्केण बद्धमूलोऽपि ममाविवेको नष्टः ॥ २२ ॥ ब्रह्मविदः केन रूपेण विचरंतीत्यज्ञानात्सर्वान्नमस्यति । नम इति । ये बटवः क्रीडारतत्वादश्रद्धेयधौरेयास्तानप्यभिव्याप्य सर्वेभ्यो नम इत्यर्थः । स्वदृष्टांतेन राज्ञां महदवज्ञां संभाव्याह । राज्ञां शिवमस्त्विति ॥ २३ ॥ उत्तरा माता यस्य हे उत्तरामातः । विगणयतो न गणयतः । अवमंतर्यपि परमकरुणाकरत्वेन सिंधुपतये आत्मतत्त्वमुपदिश्य । निभृतः शांता करणानामूर्मयो यस्मिन्स आशयो यस्य ॥ २४ ॥ सुजनात्तस्मात्सम्यगवगतं परमात्मसतत्त्वं येन तथाभूतः संस्तदानीमेव देहे

मरीचितोयानिति निष्फलत्वेन विज्ञातानपि विषयान् ॥ ५ ॥ वितोयासु सरित्सु पतितस्य गात्रभंगात्सद्यो दुःखं भवति । नचोदकलाभस्तद्वदिह च परत्र च दुःखदान्पाखंडानभियाति । आलषते दायादादिभ्योऽन्नादि वांछति । उभयत्रापि स एवार्थः । दावं दावाग्नितुल्यं दुःखदं गृहं प्राप्य शोकाग्निना तप्तो निर्विद्यते विषीदति । तत्र च यत्तराक्षसतुल्यैः राजभिर्हृतमसुवत्प्रेष्ठं धनं यस्य स निर्विद्यते ॥ ६ ॥ अन्यैश्च शूरैर्हृतं स्वं वित्तं यस्य । निर्विण्णं विषण्णं चेतो यस्य । कश्मलं मूर्छाम् । गंधर्वपुरमिव मनोरथोपगतपितृपुत्रादिसमाजं प्रविष्टः सन् ॥ ७ ॥ कंटकादिविद्धांघ्रिरिव विघ्नैरभिभूतः सन्नगतुल्यं महत्कर्मारोढुं कर्तुमिच्छुर्विमना इव आस्ते । पदे पदे क्षणे क्षणे । अभ्यंतरेण वह्निना जाठरेण ॥ ८ ॥ अजगराहिना निद्रारूपेण गिलितो न वेत्ति । विपिने त्यक्तः शव इव दंदशूकैर्हिंस्रैर्दुर्जनैर्दष्टः पीडितोंऽधो लुप्तविवेकोंऽधकूपे मोहे पतितस्तमिस्रे दुःखे शेते लीयते ॥ ९ ॥ क्षुद्ररसान्परयोषादीन्विचिन्वन्गवेषयंस्तन्मक्षिकाभिर्योषादिस्वामिभिर्विमानोऽवज्ञातस्ताडितः सन्व्यथितो भवति । यदि कथंचित्तत्रातिक्लेशेन प्रतिलब्धमानः प्राप्तयोपादिर्भवति तदा बलादन्येऽपहरंति तान्यदाऽभियुंक्ते तदा ततोऽप्यन्ये हरंति ॥ १० ॥ यत्किंचिदत्यल्पमपि मिथो व्यवहरन्

क्वचिद्वितोयाः सरितोऽभियाति परस्परं चालषते निरंधः ॥ आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥ शूरैर्हृतस्वः क्व च निर्विण्णचेताः शोचन्विमुह्यन्नुपयाति कश्मलम् ॥ क्वचिच्च गंधर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥ चलन्क्वचित्कंटकशर्करांघ्रिर्नगारुरुक्षुर्विमना इवास्ते ॥ पदेपदेऽभ्यंतरवह्निनार्दितः कौटुंबिकः क्रुध्यति वै जनाय ॥ ८ ॥ क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किंचिद्विपिनेऽपविद्धः ॥ दष्टः स्म शेते क्व च दंदशूकैरंधोऽन्धकूपे पतितस्तमिस्रे ॥ ९ ॥ कर्हिस्मचित्क्षुद्ररसान्विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः ॥ तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलुंपंत्यथ तं ततोऽन्ये ॥ १० ॥ क्वचिच्च शीतातपवातवर्षप्रतिक्रियां कर्तुमनीश आस्ते ॥ क्वचिन्मिथो विपणन्यच्च किंचिद्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥ क्वचित्क्वचित्क्षीणधनस्तु तस्मिन् शय्यासनस्थानविहारहीनः ॥ याचन्परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥ अन्योन्यवित्तव्यतिषंगवृद्धवैरानुबंधो विवहन्मिथश्च ॥ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन्विपन्नः ॥ १३ ॥ तांस्तान्विपन्नान्स हि तत्र तत्र विहाय जातं परिगृह्य सार्थः ॥ आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम् ॥ १४ ॥ मनस्विनो निर्जितदिग्गजेंद्रा ममेति सर्वे भुवि बद्धवैराः ॥ मृधे शयीरन्न तु तद्व्रजंति यन्न्यस्तदंडो गतवैरोऽभियाति ॥ १५ ॥ प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्त-

क्रयादिना गृह्णन् । वित्तशाठ्याद्धनवंचनात् ॥ ११ ॥ शय्यादिहीनः । आस्यतेऽस्मिन्नित्यासनं कंबलादि । स्थीयतेऽत्रेति स्थानं गृहम् । विहरंत्यनेनेति विहारो यानादि । याचमानोऽपि यदा परस्मादप्राप्तकामस्तदा परकीये वस्तुनि दृष्टिरभिलाषो यस्य सोऽवमानं प्राप्नोति ॥ १२ ॥ एवमन्योन्यं वित्तव्यतिषंगेण धनविनिमयेन विवृद्धो वैरानुबंधो यस्य तथाविधोऽपि परस्परं विवहन् विवाहादिसंबंधं कुर्वन्नुरुभिः कृच्छ्रैः श्रमैर्वित्तबाधैरुपसर्गैश्च द्वेषादिभिर्विपन्नो मृतप्रायो भवति ॥ १३ ॥ दुरत्ययत्वमध्वनो दर्शयति । तांस्तान्विपन्नान्मृतान्विहाय जातं जातं परिगृह्य विहरन्यतः प्रस्थितस्तं प्रति नावर्तते । हे वीर ! अध्वनः पारं यो योगस्तं च नोपैति । अत्र सार्थे कश्चिदतिसमर्थोऽपि ॥ १४ ॥ तदेवाह । मनस्विनः शूराः निर्जिता दिग्गजेंद्रा यैः ममेयं भूर्ममेयमिति भुवि निमित्तभूतायां बद्धं वैरं यैः । न्यस्तदंडः संन्यासी । यद्विष्णोः पदमभियाति तत्तु न व्रजंति ॥ १५ ॥ सिंहावलोकनेन पुनर्भवाटवीमेवानुवर्णयति । प्रसज्जत्यासक्तिं करोति । कीदृशः । लतानां

॥ १२ ॥ महत्सेवायास्तत्प्राप्त्युपायतामाह । यत्र येषु महत्सु । ग्राम्यकथानां विघातो यस्मात् ॥ १३ ॥ विषयसंगस्तु योगभ्रंशक इति वदन्कस्त्वं निगूढश्चरसीति प्रश्नस्योत्तरमाह । अहमिति द्वाभ्याम् । विमुक्तो दृष्टश्रुताभ्यां संगनिमित्तो बंधो येन । हतोऽर्थः प्रयोजनं यस्य ॥ १४ ॥ श्रीकृष्णार्चनं अष्टमप्युद्धरतीत्याह । सेति । जनसंगाद्विशंकमानः । अविवृत्तोऽप्रकटः ॥ १५ ॥ असंगै र्महद्भिर्यः सुसंगस्तेन जातं ज्ञानमेवासिः खड्गस्तेन छिन्नमोहः सन् अध्वनः संसारमार्गस्यातिशयितं श्रेष्ठं पारं हरिं याति । यद्वा । परमति अतिक्रम्य हरिं याति । अतिरतिक्रमणे चेति कर्मप्रव-चनीयत्वाद्द्वितीया । तस्य हरेरीहानां कथनस्मृतिभ्यां लब्धा स्मृतिर्येन सः ॥ १६ ॥ इति पंचमस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेऽविरक्ताय वृथा तत्त्वनिरूपणम् ॥ इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ १ ॥ अध्वनः पारमित्युक्तं तमेवाध्वानं प्रसिद्धमार्गरूपकेण वैराग्याय प्रपंचयति । दुरत्यये दुस्तरेऽध्वनि प्रवृत्तिमार्गे रजस्तमःसत्त्वैर्विभक्तानि कर्माणि कार्य-तया पश्यतीति तथा स एष प्रसिद्धः । सार्थो जीवसमूहोऽर्थः परः सुखार्थः सन् । यथा वणिक् सार्थोऽर्थार्जनाय गच्छन्नटवीं याति तद्वत् ॥ १ ॥ अस्याध्यायस्य व्याख्यानरूप उत्तराध्यायोऽस्ति तथापि सुखप्रतिपत्तये किंचित्किंचिद्व्याख्यायते । यस्यां भवाटव्यामिमे इंद्रियनामानः षड्दस्यवश्चोराः । कुत्सितो नायकः सारथिर्बुद्धिर्यस्य तं सार्थं विलुंपंति । तस्य धर्म्यं धनमुपभोगेन

॥ १४ ॥ सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति ॥ अथो अहं जनसंगादसंगो विशंकमानोऽविवृतश्चरामि ॥ १५ ॥ तस्मान्नरोऽसंगसुसंगजातज्ञानासिनेहैव विवृक्णमोहः ॥ हरिं तदीहाकथनस्मृतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ब्राह्मणरहूगणसंवादे द्वादशोऽध्यायः ॥ १२ ॥ ब्राह्मण उवाच ॥ दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमःसत्त्वविभक्तकर्मदृक् ॥ स एष सार्थोऽर्थपरः परिभ्रमन्भवाटवीं याति न शर्म विंदति ॥ १ ॥ यस्यामिमे षण्नरदेव दस्यवः सार्थं विलुंपंति कुनायकं बलात् ॥ गोमायवो यत्र हरंति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः ॥ २ ॥ प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः ॥ क्वचित्तु गंधर्वपुरं प्रपश्यति क्वचित्क्वचिच्चाशुरयोल्मुकग्रहम् ॥ ३ ॥ निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावति भो अटव्याम् ॥ क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः ॥ ४ ॥ अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितांतरात्मा ॥ अपुण्यवृक्षान् श्रयते क्षुधार्दितो मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥

पुष्णंतीत्यर्थः । गोमायवः सृगालतुल्या दारापत्यादयस्त्वं मे भर्ता पितेत्येवं प्रविश्य प्रमत्तं सार्थिकं सार्थे स्थितं हरंति इतस्तत आकर्षंति । उरणं मेषम् ॥ २ ॥ वीरुधो लतास्तृणानि च गुल्माश्च लतादिजालानि प्रभूतैरेतैर्गह्वरे दुष्प्रवेशे क्षेत्रे कठोरैस्तीव्रैर्दंशैर्मक्षिकाविशेषैर्मशकैश्च यथा कश्चिदुपद्रुतो भवत्येवं कामकर्मादिभिर्गह्वरे गृहाश्रमे वर्तमानो दुर्जनैरुपद्रुतो भवतीत्यर्थः । गंधर्वपुरवद्घट-मानमेव देहादिकं प्रकर्षेण सत्यमेवेदमिति पश्यति । क्वचित्क्वचित्क्वापि क्वाप्याशुरयोऽतिवेगो य उल्मुकाकारो ग्रहः पिशाचस्तत्तुल्यं सुवर्णमुपादेयत्वेन प्रपश्यतीत्यर्थः ॥ ३ ॥ निवासादिष्वात्मा स्वभावो यस्याः सा बुद्धिर्यस्य स ततस्ततो धावतीत्युभयत्र तावानेवार्थः वात्या चक्रवातस्तस्यामुत्थितः पांसुस्तेन धूम्रा दिशो रजस्वले रजोव्याप्ते अक्षिणी यस्य स यथा न जानाति तथा वात्येव भ्रमयंती या स्त्री तस्यामुद्भूते रागादिभिरप्रकाशमाना दिग्देवताः कर्मसाक्षिभूता न जानातीत्यर्थः ॥ ४ ॥ अदृश्यानां झिल्लीनां भृंगारिकासंज्ञानां कीटविशेषाणां स्वनैः कर्णयोः शूलो व्यथा यस्य । उलूका घूकास्तेषां वाग्भिर्व्यथितोंऽतरात्मा मनो यस्य । अत्र च परोक्षमप्रियवक्तारो झिल्लीतुल्याः प्रत्यक्षमप्रियवक्तारो घूकतुल्याः येषां छायाऽपि पापहेतुस्ते अपुण्यवृक्षास्तत्तुल्यानधार्मिकान्सेवते ।

तयोः षष्टिसहस्राणि निवातकवचाः पुत्रा जातास्तांश्च स्वर्गतः संस्ते पितामहोऽर्जुनो जघान ॥ ३६ ॥ राहुज्येष्ठो यस्य ॥ ३७ ॥ ३८ ॥ ३९ ॥ अश्वयताजनयत् । भुवि वर्तमाना ॥ ४० ॥ ततो
विवस्वतः ॥ ४१ ॥ चर्षणयः कृताकृतज्ञानवंतः । पश्यतिकर्मत्वेन निघंटावुक्तेः । यत्र येषु आत्मानुसंधानविशेषेण मानुषी जातिश्चोपकल्पिता । तथा च श्रुतिः । पुरुषत्वे चाविस्तरामात्मेति ॥४२॥
कुपितं हरमिति शेषः । विवृतद्विजः प्रकटितदंतः सन् ॥ ४३ ॥ ४४ ॥ यद्यदा विमतेनावज्ञातेन बृहस्पतिना परित्यक्तास्तदा द्विषतां शत्रूणां भागिनेयमपि विश्वरूपं पौरोहित्ये वृतवंतः ॥ ४५ ॥
इति षष्ठे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः ॥ गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् ॥ १ ॥ कस्य हेतोः कस्माद्धेतोरात्मनः शिष्याः सुराः परित्यक्ताः ।

शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३७ ॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ॥ यत्र नारायणो देवः स्वांशेनावत-
रद्विभुः ॥ ३८ ॥ विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥ ३९ ॥ विवस्वतः श्राद्धदेवं संज्ञाऽसू-
यत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥ सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि ॥ ४० ॥ छाया शनैश्चरं लेभे सावर्णिं च
मनुं ततः ॥ कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४१ ॥ अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ॥ यत्र वै मानुषी जातिर्ब्रह्मणा चोप-
कल्पिता ॥ ४२ ॥ पूषाऽनपत्यः पिष्टादो भग्नदंतोऽभवत्पुरा ॥ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४३ ॥ त्वष्टुर्दैत्यानुजा भार्या रचना
नाम कन्यका ॥ संनिवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४४ ॥ तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि ॥ विमतेन परित्यक्ता गुरुणांगिरसेन यत्
॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे षष्ठोऽध्यायः ॥ ६ ॥ राजोवाच ॥ कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व
भगवञ्छिष्याणामक्रमं गुरौ ॥ १ ॥ श्रीशुक उवाच ॥ इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैरृभुभिर्नृप ॥ २ ॥ विश्वेदेवैश्च
साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवा-
न्स्तूयमानश्च भारत ॥ ४ ॥ उपगीयमानो ललितमास्थानाध्यासनाश्रितः ॥ पांडुरेणातपत्रेण चंद्रमंडलचारुणा ॥ ५ ॥ युक्तश्चान्यैः पारमेष्ठ्यैश्चा-
मरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनंदत संप्राप्तं प्रत्युत्थानासना-
दिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ नोच्चचालासनादिंद्रः पश्यन्नपि सभागतम् ॥ ८ ॥ ततो निर्गत्य सहसा कविरांगिरसः प्रभुः ॥

अक्रममपराधम् ॥ १ ॥ स इंद्रो यदा संप्राप्तं वाचस्पतिं नाभ्यनंदत नादृतवांस्तदा स आंगिरसस्ततो निर्गत्य तूष्णीं स्वगृहमाययावित्यष्टानामन्वयः । अनादरे हेतुं मदं दर्शयितुं तं विशिनष्टि ।
त्रिभुवनैश्वर्यमदेनोल्लंघितः सतां पंथा येन सः ॥ २ ॥ परिश्रितः परिवृतः ॥ ३ ॥ ४ ॥ आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः ॥ ५ ॥ पारमेष्ठ्यैर्महाराजचिह्नैः । आसनस्यार्धं
स्थितया पौलोम्या सह विराजमानः सन् ॥ ६ ॥ प्रत्युत्थानादिना नाभ्यनंदत नादृतवान् ॥ ७ ॥ न चोच्चचाल आसन एव स्थितोऽपि किंचिन्न चलितवान् ॥ ८ ॥ श्रीमदेन या विक्रिया तां

मम कृतं कर्म अहो असाधु यद्यस्माद्दभ्रबुद्धिनाऽल्पमतिना मया कात्कृतास्तिरस्कृतः ॥ ११ ॥ विबुधानां सात्त्विकानां देवानामीश्वरोऽप्यहम्

विद्वान् जानन् ॥ ९ ॥ प्रतिबुध्यानुस्मृत्य ॥ १० ॥ कुपथं दिशंत्युपदिशंतीति कुपथदेष्टारस्तेषां वचः । अश्ममयः प्लवो

॥ १२ ॥ ननु सिंहासनस्थो राजाऽभ्युत्थानं न कुर्यादिति वृद्धा वदंति तत्राह । य इति द्वाभ्याम् । धिषणमासनम् ॥ १३ ॥ अधिकया आत्ममायया ॥ १६ ॥ गुरोः संज्ञां ज्ञानोपायं परीक्ष-

येषां ते यथा मज्जंतं प्लवमनु मज्जंति तद्वत् ॥ १४ ॥ अगाधा गंभीरा धिषणा यस्य तम् । निशठः शाठ्यहीनः सन् ॥ १५ ॥ वो युष्माकं कृतं करणं महदभद्रम् ।

माणोऽपि नाधिगतोऽप्राप्तः सन् ॥ १७ ॥ आततायिन उद्यतास्त्राः ॥ १८ ॥ निर्भिन्नान्यंगान्युत्तमांगानि शिरांसि ऊरवो बाहवश्च येषाम् ॥ १९ ॥ २० ॥

आययौ स्वगृहं तूष्णीं विद्वान् श्रीमदविक्रियाम् ॥ ९ ॥ तर्ह्येव प्रतिबुद्ध्येंद्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥ अहो बत ममासाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥ को गृद्ध्येत्पंडितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाऽ-हमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥ तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जंत्यश्मप्लवा इव ॥ १४ ॥ अथाहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥ एवं चिंतयतस्तस्य मघोनो भगवान्गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतः संज्ञां परीक्षन्भगवान्स्वराट् ॥ ध्यायन्धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥ तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् ॥ देवान्प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्रह्माणं शरणं जग्मुः सहेंद्रा नतकंधराः ॥ १९ ॥ तांस्तथाऽभ्यर्दितान्वीक्ष्य भगवानात्मभूरजः ॥ कृपया परया देव उवाच परिसांत्वयन् ॥ २० ॥ ब्रह्मोवाच ॥ अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ॥ ब्रह्मिष्ठं ब्राह्मणं दांतमैश्वर्यान्नाभ्यनंदत ॥ २१ ॥ तस्यायमनयस्यासीत्परेभ्यो वः पराभवः ॥ प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत्सुराः ॥ २२ ॥ मघवन्द्विषतः पश्य प्रक्षीणान्गुर्वतिक्रमात् ॥ संप्रत्युपचितान्भूयः काव्यमाराध्य भक्तितः ॥ आददीरन्निलयनं ममापि भृगुदेवताः ॥ २३ ॥ त्रिविष्टपं किं गणयंत्यभेद्यमंत्रा भृगूणामनुशिक्षितार्थाः ॥ न विप्रगोविंदगवीश्वराणां भवंत्यभद्राणि नरेश्वराणाम् ॥ २४ ॥ तद्विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवंतम् ॥ सभाजितोऽर्थान्स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥ श्रीशुक उवाच ॥ त एवमुदिता राजन्ब्रह्मणा विगत-

परेभ्यः शत्रुभ्यो वः पराभव इति यदयं तस्यानयस्यान्यायस्य संबंधी फलरूप आसीत् । उक्तं च । ब्राह्मणं कुलसंपन्नं भक्तं विष्णो-

तदाह । ब्रह्मिष्ठमिति । नाभ्यनंदत नाभिनंदितवंतः ॥ २१ ॥ गुरुतिरस्कारसत्कारावेवापचयोपचयकारणमित्यसुरदृष्टांतेनाह । मघवन्निति । द्विषतः

र्महात्मनः ॥ आयांतं वीक्ष्य नोत्तिष्ठेत्स दुःखैः परिभूयत इति । स्वयमेव वैरिणो हंतारो येषां तेभ्यः ॥ २२ ॥ यतो विप्रा गोविंदो गावश्चेश्वरा अनुग्राहका येषां

शत्रून् । काव्यं भार्गवं गुरुमेवासेव्योपचितान् । उपचितत्वमेवाह । आददीरन्गृह्णीयुः ॥ २३ ॥ अभेद्यो मंत्रो येषाम् । अनुशिक्षितार्थाः शिष्याः ।

तेषामेवाभद्राणि न भवंत्यन्येषां तु भवंति ॥ २४ ॥ तत्तस्मात् । अथानंतरमेव भजत । अस्य कर्मासुरपक्षपातम् ॥ २५ ॥ उदिता उक्ताः ॥ २६ ॥ २७ ॥ २८ ॥ अतिथीनां पितॄणां च प्रशंसार्थ-
माहुः । आचार्य उपनीय वेदाध्यापकः । ब्रह्मणो वेदस्य मूर्तिः ॥ २९ ॥ धर्मस्यात्मा मूर्तिरतिथिः । स्वयं साक्षात् । आत्मनः श्रीविष्णोः । यद्वा आत्मनः स्वस्य । सर्वभूतेष्वात्मदृष्टिः कर्तव्येत्यर्थः
॥ ३० ॥ परेभ्यः पराभव एवार्तिस्ताम् ॥ ३१ ॥ संदेशमाहुः वृणीमह इति ॥ ३२ ॥ ननूपाध्यायत्वे कनिष्ठस्य ममाभिवंदनं करिष्यथ तच्च गर्हितं तत्राहुः । नेति । अर्थेषु प्रयोजननिमित्तं
यविष्ठानामभिवादनं न निंदंति । किंच छंदोभ्यो मंत्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं न तु मंत्रेषु । अतोऽस्मभ्यं मंत्रदातृत्वेन त्वमेव ज्येष्ठो भविष्यसि । यद्वा छंदोभ्योऽन्यत्र वेदान्विहाय वय
एव ज्यैष्ठ्यस्य कारणं न भवति किंतु वेदा एव मुख्यं कारणं तत्साम्ये तु वयः । वेदज्ञत्वाच्च त्वमेव ज्येष्ठ इत्यर्थः ॥ ३३ ॥ ३४ ॥ निंदितमपीदं युष्मद्वाच्याभंगभयेन करिष्यामीत्याह सार्धेन ।

ज्वराः ॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः संपाद्यतां तात पितॄणां
समयोचितः ॥ २७ ॥ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन्किमुत ब्रह्मचारिणाम् ॥ २८ ॥ आचार्यो ब्रह्मणो
मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः ॥ २९ ॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ॥ अग्नेरभ्या-
गतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥ तस्मात्पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपनयंस्तात संदेशं कर्तुमर्हसि ॥ ३१ ॥ वृणीमहे
त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथांऽजसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयंति ह्यर्थेषु यविष्ठांघ्र्याभिवादनम् ॥ छंदोभ्योऽ-
न्यत्र न ब्रह्मन्वयो ज्यैष्ठ्यस्य कारणम् ॥ ३३ ॥ ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया
गिरा ॥३४॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यास्यति तच्छिष्यः
स एव स्वार्थ उच्यते ॥ ३५ ॥ अकिंचनानां हि धनं शिलोंछनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति
येन दुर्मतिः ॥ ३६ ॥ तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥ श्रीशुक उवाच ॥ तेभ्य एवं
प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८ ॥ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ॥ आच्छिद्यादान्महें-
द्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ॥ तां प्राह स महेंद्राय विश्वरूप उदारधीः ॥ ४० ॥ इति श्रीम-

विगर्हितं पौरोहित्यं धर्मशीलैः अधर्महेतुत्वात् । किंच ब्रह्मवर्चउपव्ययं पूर्वसिद्धस्य ब्रह्मवर्चसो व्ययकरम् । प्रत्याख्यातुं च मादृशो नार्हतीत्याह । कथं न्विति । तेषां शिष्यः शिक्षणार्हः । स एव
प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ उच्यते ॥ ३५ ॥ ननु पौरोहित्येन धनलाभाद्धर्मः सिद्ध्येत् अन्यथा निर्धनस्य कुतो धर्मः । अतएव तेन लोको हृष्यति तत्राह । अकिंचनानां शिलोंछनं
हि धनम् । क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलम् । हट्टादौ पतितव्रीह्यादेरुपादानमुंछनम् । इह गृहाश्रमे । तेनैव निर्वर्तिता साधूनां सत्क्रिया येन ॥ ३६ ॥ कियदेतत्प्रार्थितमल्पमेव । अभ्य-
धिकमपि करिष्यामीत्याह । भवतामिति ॥ ३७ ॥ परमेण समाधिना परमोद्यमेन ॥ ३८ ॥ वैष्णव्या श्रीनारायणकवचात्मिकया ॥ ३९ ॥ असुरचमूर्दैत्यसेनाः ॥ ४० ॥ इति षष्ठस्कंधे टीकायां

सप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् ॥ इंद्राय प्राह येनेंद्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥ त्रिलोक्याः संबंधिनीं श्रियम् ॥ १ ॥ २ ॥ ३ ॥ मंत्राभ्यामष्टाक्षरद्वादशा-
क्षराभ्यां कृतः स्वांगेषु करयोश्च न्यासो येन ॥ ४ ॥ नारायणमयं वर्म संनह्येद्बध्नीयात् । तत्राष्टाक्षरेण पादाद्यष्टांगेषु न्यासमाह । पादयोरिति सार्धेन ॥ ५ ॥ प्रणवसंपुटितमोंकाराद्येकैकमक्षरं
विन्यसेत् । विपर्ययं यथा भवत्येवं शिरआदिपादांतं वा विन्यसेत् । उत्पत्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ॥ ६ ॥ द्वादशाक्षरस्योद्धारः प्रणवादियकारांतमिति । प्रणवसंपुटितमेकैकमक्षरं
दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यंतमंगुलीषु परिशिष्टमक्षरचतुष्टयमंगुष्ठयोराद्यंतपर्वसु न्यसेत् ॥ ७ ॥ मंत्रांतरन्यासमाह । न्यसेदिति षकारणकारयोर्विश्लेषेण षडक्षराणि हृदयादिषु न्यसेत् ॥ ८ ॥

द्भागवते महापुराणे षष्ठस्कंधे सप्तमोऽध्यायः ॥ ७ ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या
बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाऽऽततायिनः शत्रून्येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः
पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौतांघ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥
कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं वर्म संनह्येद्भय आगते ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिर-
स्यानुपूर्व्यादोंकारादीनि विन्यसेत् ॥ ॐ नमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ प्रणवादिय-
कारांतमंगुल्यंगुष्ठपर्वसु ॥ ७ ॥ न्यसेद्धृदय ओंकारं विकारमनु मूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥ ८ ॥ वेकारं नेत्रयोर्यु-
ञ्ज्यान्नकारं सर्वसंधिषु ॥ मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद्बुधः ॥ ९ ॥ सविसर्गं फडंतं तत्सर्वदिक्षु विनिर्दिशेत् ॥ ॐ विष्णवे नम इति ॥ १० ॥
आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत् ॥ ११ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पत-
गेंद्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु
मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुंचतो यस्य महाट्टहासं
दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भर-
ताग्रजोऽस्मान् ॥ १५ ॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबंधात्

मकारमस्त्रमुद्दिश्य ध्यात्वा ॥ ९ ॥ तन्मकारास्त्रं मः अस्त्रायफडित्येवं दिग्बंधे विनिर्दिशेत् ॥ १० ॥ ध्येयमीश्वररूपमात्मानं ध्यायेत् । षट्शक्तिभिरैश्वर्यादिभिर्भगशब्दवाच्याभिः । विद्या च तेजश्च
तपश्च मूर्तिर्यस्य तम् । इमं वक्ष्यमाणं श्रीमन्नारायणकवचाख्यम् ॥ ११ ॥ अष्टगुणोऽणिमाद्यष्टैश्वर्ययुक्तः ॥ १२ ॥ यादसां गणा एव वरुणस्य पाशस्तस्मात् ॥ १३ ॥ अटवी आजिमुखं संग्रामो-
पक्रमश्च आदिर्येषां तेषु संकटस्थानेषु ॥ १४ ॥ असौ प्रसिद्धो वराहो मामध्वनि रक्षतु । यज्ञैरवयवरूपैः कल्प्यते निरूप्यत इति तथा । उन्नीतोद्धृता धरा येन सः । अद्रिकूटेषु गिरिशिखरेषु रामो

जा॰ पदमन्यः ॥ १५ ॥ उग्रधर्मादभिचारादिलक्षणात् । हासाद्दर्वान्नरोऽवतु । दत्तो दत्तात्रेयः । अयोगाद्योगभ्रंशात् ॥ १६ ॥ पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात् । पुरुषार्चनस्यांतराद्वे वपूजाछिद्राद्द्वात्रिंशदपराधरूपान्नारदः ॥ १७ ॥ लोकाज्जनापवादाद्यज्ञः । जननिमित्तो योऽत उपघातस्तस्माद्बलभद्रोऽवतात् । कृतांतादिति पाठे कृतांतात्कालाद्रक्षतु । क्रोधवशात्सर्पाणां गणात् । अहींद्रः शेषः ॥ १८ ॥ कालमलभूतात्कलेः कल्किः । धर्मावनाय धर्मरक्षणायोरुर्महान्कृतोऽवतारो येन ॥ १९ ॥ दिनस्य षट्सु भागेषु क्रमेण प्रातरादिसंज्ञेषु रात्रेश्च प्रदोषादिसंज्ञेषु रक्षाप्रार्थनम् । मां केशव इति त्रिभिः । आसंगवं संगवमभिव्याप्य ॥ २० ॥ त्रिधामा ब्रह्मादित्रिमूर्तिः श्रीमाधवः । दोषे प्रदोषे । अर्धरात्रे अर्धरात्रिपर्यंते काले निशीथे चैक एव पद्मनाभोऽवतु ॥२१॥ अपररात्रे ईशः श्रीवत्सधामाऽवतु । प्रत्यूष ईशः श्रीजनार्दनः । श्रीदामोदरः प्रभाते । श्रीविश्वेश्वरोऽनुसंध्याम् ॥ २२ ॥ युगांतानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सदरिसैन्यं

॥ १६ ॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनांतरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनांताद्बलो गणात्क्रोधवशादहींद्रः ॥ १८ ॥ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखंडगणात्प्रमादात् ॥ कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥ मां केशवो गदया प्रातरव्याद्गोविंद आसंगवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ॥ २० ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥ २२ ॥ चक्रं युगांतानलतिग्मनेमि भ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥ गदेऽशनिस्पर्शनविस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियाऽसि ॥ कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कंपयन् ॥ २५ ॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिंधि छिंधि ॥ चक्षूंषि चर्मन् शतचंद्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २६ ॥ यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥ २७ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः

दंदग्धि दंदग्ध्यतिशयेन दहति । तस्यायं स्वभाव एव नतु तस्मात्प्रार्थनीयमित्यर्थः । यद्वा दंदग्धीति लोण्मध्यमपुरुषः । अत्र त्वमेवंभूतं चक्रमिति स्वरूपमुक्त्वा संबोध्य प्रार्थ्यतेऽतिशयेन दहेति । कक्षं शुष्कतृणम् ॥ २३ ॥ अशनिवत्स्पर्शो येषां ते विस्फुलिंगा यस्यास्तस्याः संबोधनं हे गदे ! त्वमजितस्य प्रियाऽसि । अहमच्युतस्य दासः । अतः कूष्मांडादीन्निष्पिंढि निष्पिंढि संचूर्णय संचूर्णय । अरींश्च चूर्णय चूर्णय । सर्वत्र वीप्साऽतिशीघ्रत्वाय ॥ २४ ॥ हे दरेंद्र पांचजन्य ! त्वं याधातुनादीन्विद्रावय विप्रग्रहा ब्रह्मराक्षसा येऽन्ये च घोरदृष्टयस्तान् ॥ २५ ॥ तिग्मा धारा यस्य हे तिग्मधार । असिवर खड्गश्रेष्ठ । त्वं ममारिसैन्यं छिंधि छिंधि । शतं चंद्राकाराणि मंडलानि यस्मिन्हे शतचंद्र चर्मन् ! अघोनामघवतां द्विषां चक्षूंषि छादय पापचक्षुषां चोग्रदृष्टीनां चक्षूंषि हर

॥ २६ ॥ यत् येभ्यो भयम् । अंहोभ्यः पापेभ्यः ॥ २७ ॥ श्रेयःप्रतीपका इष्टव्याघातकाः ॥ २८ ॥ स्तोत्राणि बृहद्रथंतरादिसामानि तैः स्तोभ्यते संस्तूयत इति स्तोत्रस्तोभः । छंदोमयो वेदमूर्तिः । सुपर्णोऽसि गरुत्मानित्यादिश्रुतेः । एकपद्यपाठे स्तोभा गीतिपूरकाक्षराणि । स्तोत्रस्तोमेति पाठे सामाधारभूत ऋक्स्तोमः ॥ २९ ॥ नामानि च रूपाणि च यानानि च वाहनानि आयुधानि च नो बुद्ध्यादीन् पांतु पार्षदभूषणाः पार्षदमुख्याश्च पांतु ॥ ३० ॥ सच्च असच्च मूर्तामूर्तं यत्तत्सर्वं जगत् ॥ ३१ ॥ ऐकात्म्यस्यानुभावोऽनुध्यानं येषां तेषाम् । विकल्पो भेदस्तद्रहितोऽपि ॥ ३२ ॥ सत्यमानेन सत्यभूतेन प्रमाणेन ॥ ३३ ॥ पुनरपि श्रीनृसिंह एव प्राथ्यर्ते । विदिक्ष्विति पांत्वित्यनुषंगः । यद्वा नारसिंहः प्रह्लादः स्वनेन श्रीनृसिंहनामगर्जनेन स्वतेजसा स्वप्रभावेण ग्रस्तानि

॥ २८ ॥ गरुडो भगवान्स्तोत्रस्तोमश्छंदोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २९ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ॥ बुद्धींद्रियमनःप्राणान्पांतु पार्षदभूषणाः ॥ ३० ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन नः सर्वे यांतु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥ भूषणायुधलिंगाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः ॥ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥ विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम् ॥ विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ॥ पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३७ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः ॥ योगधारणया स्वांगं जहौ स मरुधन्वनि ॥ ३८ ॥ तस्योपरि विमानेन गंधर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४० ॥ श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥ ४१ ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे नारायणवर्म नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तस्यासन्वि-

समस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः ॥ ३४ ॥ दंशितः कवचितः ॥ ३५ ॥ सोऽपि साध्वसाद्भयाद्विमुच्यते ॥ ३६ ॥ तस्य तु भयं न भवेदेव ॥ ३७ ॥ एतद्विद्याप्रभावमितिहासेनाह । इमामिति सार्धैस्त्रिभिः । मरुधन्वनि निरुदके देशे । अनेन विद्यायाः क्षेत्रतीर्थानपेक्षत्वं दर्शितम् ॥ ३८ ॥ यत्र द्विजस्य क्षयो देहत्यागस्तस्योपरि ॥ ३९ ॥ सद्यस्तत्क्षणादेव गगनान्न्यपतत् । पाठांतरे अंगनाभिः सह । वालखिल्योपदेशात्तस्यास्थीनि प्रास्य प्रक्षिप्य विस्मितः सन् स्वं धाम गंधर्वलोकं जगाम ॥ ४० ॥ ४१ ॥ अधिगतः प्राप्तः सन् ॥ ४२ ॥ इति षष्ठे टीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमे विश्वरूपे तु हते शक्रेण कोपतः ॥ त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः ॥ १ ॥ सोमस्य पीथं पानं यस्मिन् । एवं सुरापीथम् । अन्नमत्तीत्यन्नादम् ।

अत्र विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदित्यादिश्रुतिरनुसंधेया ॥ १ ॥ तस्यासुरपक्षपातमाह । स वा इति द्वाभ्याम् । प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं देवेभ्यो हविर्भागमिंद्रायेद-
मग्नय इदमित्युच्चैरवदत् । अत्र हेतुः । यस्य पितरो देवाः सः ॥ २ ॥ असुरेभ्यस्तु परोक्षं गुप्तं भागं ददौ । तदेवाह । देवान्यजमानोऽसावसुरान्प्रति भागमवहत् केनाप्युपायेन प्रापयामास । यतो
मातृस्नेहवशेनासुराननुगच्छति ॥ ३ ॥ ४ ॥ ५ ॥ तां वारयितुं समर्थस्तथापि जग्राह । संवत्सरं तथैव स्थित्वा संवत्सरांते भूताक्रोशभीतः सन् भूतानां मध्ये विशुद्धये लोकापवादपरिहाराय म
हरिरिंद्रो भूम्यादिभ्यस्तदघं व्यभजद्विभज्य ददावित्यन्वयः ॥ ६ ॥ तुरीयं चतुर्थं भागम् । खातस्य गर्तस्य पूरः पूरणं तेन वरेण यदि खातपूरणं स्वत एव भविष्यति तर्हि ग्रहीष्यामीत्येवंभापावधेन
जग्राहेत्यर्थः ॥ ७ ॥ ईरणमूषरम् । अतएवोषरेऽध्ययनादि निषिद्ध्यते । छेदे सति पुनर्विरोहः प्ररोहो भवत्विति वरेण ॥ ८ ॥ निर्यासरूपेण ब्रह्महत्याया दृष्टत्वान्निर्यासो न भक्ष्यः । शश्वत्काम-
वरेण यावत्प्रसवं गर्भानुपघातेनैव संभोगवरेण । रज इति । अतएव रजोदर्शने तत्संगादि न कार्यम् ॥ ९ ॥ द्रव्यभूयोवरेण यस्मिन्द्रव्ये क्षीरादावापो मिश्रा भवेयुस्तस्य भूयस्त्वमाधिक्यं स्यादिति

श्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ३ ॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥ सोमपीथं तु यत्तस्य शिर आसीत्कपिंजलः ॥ कलविंकः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामंजलिना जग्राह यदपीश्वरः ॥ संवत्सरांते तदघं भूतानां स विशुद्धये ॥ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥ भूमिस्तुरीयं जग्राह खातपूरवरेण वै ॥ ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः ॥ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥ रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥ १० ॥ हतपुत्रस्ततस्त्वष्टा जुहावेंद्राय शत्रवे ॥ इंद्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥ ११ ॥ अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ॥ कृतांत इव लोकानां युगांतसमये यथा ॥ १२ ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ॥ १३ ॥ दग्धशैलप्रतीकाशं संध्याऽभ्रानीकवर्चसम् ॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १४ ॥ देदीप्यमाने त्रिशिखे शूल आरोप्य

वरेण । यद्वा स्वस्यैव निर्झरोद्गमादिना भूयस्त्ववरेण । द्रवभूय इति पाठेऽप्ययमेवार्थः । यद्वा द्रवभूयस्त्वं सांसिद्धिकद्रवत्वं तेन वरेण । अस्य विभागस्य विश्वरूपो वै त्वाष्ट्र इत्यस्यां श्रुतावुक्तेः ॥
तद्विभागफलमाह तत्पापं हरति निराकरोति । कः क्षिपन् । बुद्बुदादि जलाद्बहिः प्रक्षिपन्नित्यर्थः । यद्वा क्षिपन् जलं पापं हरत्याहरति गृह्णातीत्यर्थः । अयं च तस्मादापो न परिचक्ष्या इत्यादि-
श्रुत्यर्थ उक्तः । पाठांतरे हरिकिल्बिषमिंद्रपापम् ॥ १० ॥ इंद्रायेंद्रं हंतुम् । शत्रवे शत्रूत्पत्त्यै । तदाह । इंद्रशत्रो विवर्धस्वेति । अत्र चेंद्रशत्रुपदस्याद्युदात्तत्वाद्बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्मृतेर्बहु-
व्रीहिलक्षणापत्त्या इंद्र एव तस्य शत्रुरभूत् । तदुक्तं श्रुत्या तदब्रवीत्स्वाहेंद्रशत्रुर्वर्धस्वेति तस्मादस्येंद्रः शत्रुरभवदिति । तथा च शिक्षायाम् । मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थ-
माह । स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधादिति ॥ ११ ॥ अन्वाहार्यपचनाद्दक्षिणाग्नेः तं वीक्ष्य वित्रस्ता लोका दश दिशो विदुद्रुवुरिति पंचमेनान्वयः ॥ १२ ॥ कथंभूतम् ।

विष्वक्समंतत इषुविक्षेपमात्रं प्रतिदिनं वर्धमानम् ॥ १३ ॥ दग्धशैलप्रतीकाशं कृष्णवर्णम् । संध्याभ्रानीकवद्वर्चो दीप्तिर्यस्य तम् । तप्तताम्रवच्छिखाः श्मश्रूणि च यस्य । मध्याह्नार्कवदुग्रे लोचने यस्य ॥ १४ ॥ रोदसी आरोप्येवेत्यर्थः ॥ १५ ॥ दरीवद्गंभीरेण वक्त्रेण मुहुर्मुहुर्जृंभमाणमित्यन्वयः । कथंभूतेन । नभस्तलं पिबता । ऋक्षाणि जिह्वया लिहता । भुवनत्रयं ग्रसता ॥ १६ ॥ महता विस्तीर्णेन । रौद्रा दंष्ट्रा यस्मिन् ॥ १७ ॥ वृत्रनाम निर्वक्ति । येनावृता इति । त्वाष्ट्री मूर्तिर्यस्य तमसस्तेन । तथा च श्रुतिः । स इमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वमिति ॥ १८ ॥ अग्रसद्भक्षितवान् ॥ १९ ॥ ग्रस्तं तेजो येषाम् । प्रत्यञ्चमंतर्यामिणं त्रिभुवनस्य तेन व्याप्तत्वात्क्वापि गमनासंभवात्तत्रैव स्थित्वा तुष्टुवुरित्यर्थः । महाभये परित्राणमन्यतो न भवेदिति ॥ हरिमेव प्रपद्यंते सुराः शरणातुराः ॥ २० ॥ वाय्वादीनि पंच महाभूतानि तैर्निर्मितास्त्रयो लोकास्तेषामधिपतयो ब्रह्मादयश्च ततोऽर्वाचीना वयं च सर्वे यस्मै अंतकाय कालायोद्विजंतः संतो बलिं हरामासावपि यस्माद्बिभेति ततः परमेश्वरादेव नोऽस्माकमरणं शरणं रक्षणमस्तु ॥ २१ ॥ तत एवेत्यवधारणे हेतुमाहुः । अविस्मितं निरहंकारं कुतूहलशून्यं वा । कुतः । प्रशांतं रागादिशून्यम् । तच्च कुतः । स्वेनैव लाभेन

रोदसी ॥ नृत्यंतमुन्नदंतं च चालयंतं पदा महीम् ॥ १५ ॥ दरीगंभीरवक्त्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥ १६ ॥ महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १७ ॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ १९ ॥ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ॥ प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥ देवा ऊचुः ॥ वाय्वंबराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजंतः ॥ हराम यस्मै बलिमंतकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २१ ॥ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशांतम् ॥ विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुम् ॥ २२ ॥ यस्योरुशृंगे जगतीं स्वनावं मनुर्यथाऽऽबद्ध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरंतात्त्राता श्रितान्वारिचरोऽपि नूनम् ॥ २३ ॥ पुरा स्वयंभूरपि संयमांभस्युदीर्णवातोर्मिरवैः कराले ॥ एकोऽरविंदात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥ २४ ॥ य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ॥ वयं न यस्यापि पुरः समीहतः पश्याम लिंगं पृथगीशमानिनः ॥ २५ ॥ यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव ॥ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति

परिपूर्णकामम् । तच्च कुतः । सममुपाधिपरिच्छेदशून्यम् । एवंभूतं परमेश्वरं विना परं यः शरणार्थमुपसर्पति स बालिशोऽज्ञः । यतोऽसौ शुनो लांगूलेन पुच्छेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः । यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयणेन व्यसनार्णवतरणं न भवतीति भावः ॥ २२ ॥ महाभये स एव रक्षक इति दृष्टमित्याहुः । यस्येति द्वाभ्याम् । यस्य महामत्स्यस्य शृंगे जगतीं पृथ्वीमेव स्वनावं बद्ध्वा मनुः सत्यव्रतो यथावद्दुर्गं संकटं ततार स एव वारिचरो मत्स्यमूर्तिर्नोऽस्मानप्याश्रितान्सतो नूनं त्राता रक्षिष्यति ॥ २३ ॥ संयमांभसि प्रलयोदके उदीर्णैरुद्धतैर्वातैर्य ऊर्मयस्तेषां रवैः कराले भयंकरे । अरविंदान्नाभिकमलात्पतितप्राय एकोऽसहाय एव तस्माद्भयाद्येन ततार स एव नः पारस्तारकोऽस्तु ॥ २४ ॥ किंच । वयं भगवतैव सृष्टाः पालिताश्च बहुशोऽतस्तमेव शरणं व्रजामेत्याहुः । य एक इति त्रिभिः । येनानुगृहीताः संतो विश्वं सृजाम । ननु यूयमेव स्रष्टारो नान्यो युष्माकमनुग्राहकोऽस्ति तस्यादर्शनात्तत्राहुः अस्मत्तः पुरः पूर्वमेवांतर्यामितया

समीहमानस्यापि यस्य लिंगं रूपं न पश्यामः । तत्र हेतुः । पृथक्पृथगीशा इत्यभिमानिनः ॥ २५ ॥ देवादिषूपेंद्रपरशुराममत्स्यरामादितनुभिः कृतावतारः सन्नात्मसात्कृत्वा पाति च ॥ २६ ॥ आत्मभूतं दैवतं कुतो विश्वं विश्वात्मकम् । तथापि विकारं वारयंति । अन्यम् । विश्वात्मत्वे हेतुः । परं कारणम् । ननु प्रधानं पुरुषश्च विश्वस्य कारणं तत्राहुः । प्रधानं पुरुषं च । तदात्मकोऽपि स एवेत्यर्थः । स एव नः शं विधास्यति ॥ २७ ॥ प्रतीच्यां दिशि हृदि प्रथममाविरभूत् ॥ २८ ॥ पुनश्च तं पुरो दृष्ट्वेक्षणाह्लादेन विवशा अवनौ दंडवत्पतिताः संतः शनैरुत्थाय तुष्टुवुरित्यन्वयः । कथंभूतम् । श्रीवत्सकौस्तुभौ विना स्वतुल्यैः षोडशभिः सुनंदादिभिः परितः सेवितम् । उन्निद्रशरदंबुरुहवदीक्षणे यस्य तम् ॥ २९ ॥ ३० ॥ यज्ञो वीर्यं स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः । वयसे उत तत्फलपरिच्छेदककालात्मनेऽपि । तद्विघातकेषु दैत्येष्वस्तं प्रक्षिप्तं चक्रं येन । एवंभूतैः प्रभावैः सुपुरुहूतये शोभनबहुनाम्ने ॥ ३१ ॥ ननु मम गुणातीतं रूपं विहाय गुणोपाधिकं

युगे युगे च ॥ २६ ॥ तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यम् ॥ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥२७॥ श्रीशुक उवाच ॥ इति तेषां महाराज सुराणामुपतिष्ठताम् ॥ प्रतीच्यां दिश्यभूदाविः शंखचक्रगदाधरः ॥ २८ ॥ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदंबुरुहेक्षणम् ॥ २९ ॥ दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः ॥ दंडवत्पतिता राजन् शनैरुत्थाय तुष्टुवुः ॥ ३० ॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥ ३१ ॥ यत्ते गतीनां तिसृणामीशितुः परमं पदम् ॥ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥ ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममंगल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंस परिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुट-पारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥ ३३ ॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥ अथ तत्र भवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतंत्र्येण स्वकृतकुशलाकुशलं फलमुपाददात्याहोस्विदात्माराम उपशमशीलः समंजसदर्शन उदास्त इति ह वाव न विदामः ॥३५॥ न हि विरोध उभयं भगवत्यपरिमितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणाश्रय-

यज्ञवीर्यत्वादि किमिति वर्ण्यते तत्राहुः । यत्तव गुणत्रयस्येशितुर्नियंतुस्त्रिगुणात्मिकानां तिसृणां गतीनां परमं पदं निर्गुणस्वरूपं तद्विसर्गस्यार्वाचीन इदानींतनो हे धातर्वेदितुं नार्हति । अतः केवलं तस्मै ते नमोऽस्तु ॥ ३२ ॥ मिताक्षराणि पद्यानि न मीयंते हरेर्गुणाः ॥ इति पद्यैरतुष्यंतः सद्यो गद्येन तुष्टुवुः ॥ भक्त्युद्रेकेण बहुधा संबोधयंतो दुर्ज्ञेयत्वं प्रपंचयति । भगवन्नित्यादिना । परमं मंगलं शुद्धो धर्मो यस्मिन् । आत्मयोगेनाष्टांगेन यः समाधिश्चित्तैकाग्र्यं तेन परिभावितः सुशीलितः परिस्फुटो यः पारमहंस्यधर्मो भगवद्भजनं तेनोद्घाटितं तमोरूपं कपाटं यस्मिंस्तस्मिन् द्वारभूते चित्ते अपावृते प्रकट आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तं यन्निजसुखं तदनुभवरूपो भवान् ॥ ३३ ॥ ननु केवलानुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथं तत्राहुः । दुरवबोध इव तवायं विहारयोगो यद्यस्मादशरणो निराश्रयः । इदं विश्वम् । अनवेक्षितोऽस्माकं समवायो मेलनं साहाय्यं येन सः ॥ ३४ ॥ दुर्ज्ञेयांतरमाहुः । अथ तत्रेति । यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवान् ब्रह्मस्वरूपो जीवरूपेण गुणविसर्गे पतितः सन्नुपाददाति । यद्वा समंजसमप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवानुदास्ते उदासीनः साक्षितया

वर्तत इति ॥ ३५ ॥ तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाहुः । न हीति । विरुध्यत इति विरोधः । उभयं न विरुद्धमित्यर्थः । न ह्यन्यदृष्टांतेन त्वयि विकल्पो युज्यतेऽतर्क्यैश्वर्य-
त्वादित्याहुः । भगवतीति । अपरिमिता गुणगणा यस्य तस्मिन्नीश्वरे स्वतंत्रेऽनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । विकल्प एवं वा एवं वेति वितर्कः किमत्र युक्तमिति विचार इत्थमेवेति तत्र
प्रमाणाभासास्तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्ते येषु शास्त्रेषु तैः कलिलं व्याकुलमंतःकरणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरेऽगोचरे ।
ननु श्रद्धामात्रमेतत् । युक्तिरुच्यतां तत्राहुः । उपरतो मायामयः संसारो यस्मिंस्तस्मिन्केवलेऽप्यात्ममायां मध्ये निधाय को न्वर्थः कर्तृत्वादिर्न संभवति यदि वस्तुतः कर्तृत्वादि भवेत्तर्हि विरोधः
स्यान्न तु तदस्तीत्याहुः । स्वरूपद्वयाभावादिति ॥ ३६ ॥ अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः । समा विषमा च मतिर्येषां तेषां मतमभिप्रायम् । सर्पादिविषया
धीर्येषां तेषां यथा रज्जुखंडस्तथा तथा भाति । यद्वा तमेवाविरोधं पुरुषमतिभेदेन दर्शयति । समविषमेति ॥ ३७ ॥ तदेवं विरोधं परिहृत्य निश्चितं परमार्थमाहुः । स एव हि नानारूपेण प्रतीतः ।
वस्तुस्वरूपः सद्रूपः । सर्वेषां गुणानां विषयाणामाभासैः प्रकाशैरुपलक्षितः । ननु तैर्जीव एवोपलक्ष्यते । न । सर्वप्रत्यगात्मत्वात्सर्वजीवांतर्यामित्वात् । जडतादात्म्याध्यासेन जीवस्यापि जडप्राय-

दुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामंतर्धाय को न्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥ समविष-
ममतीनां मतमनुसरसि यथा रज्जुखंडः सर्पादिधियाम् ॥ ३७ ॥ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः
सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि
निष्यंदमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकांतिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरंतरं
निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणांबुजानुसेवां विसृजंति न यत्र पुनरयं संसारपर्यावर्तः
॥ ३९ ॥ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्म-
मायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दंडं दंडधर दधर्थ एवमेनमपि भगवन् जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ अस्माकं ताव-
कानां तव नतानां तत ततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिंगविवरणेनात्मसात्कृतानामनुकंपाऽनुरंजितविशदरुचिरशि-

त्वान्न तेन विना प्रकाश इति भावः । पर्यवशेषितो नेति नेतीत्यादिश्रुतिभिः ॥ ३८ ॥ अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः । अथ हेत्यादिपर्यावर्त इत्यंतेन । यस्मादेवंभूतस्त्वं परमेश्वरः । अथ
ह वाव अतएव हि । मधुमथन परमभागवता एते त्वत्पादांभोजानुसेवां कथं मुहुर्मुहुर्विसृजंतीत्यन्वयः । हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणाः । अतएव आत्मत्वमेव प्रियः सुहृच्च येषां ते साधवो
रागादिशून्याः । तत्र हेतुः । तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिंदुमात्रेण सकृदवलीढया आस्वादितया स्वमनसि निष्यंदमानमतिशयेन स्रवद्यन्निरंतरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः
सुखलेशाभासा येषां ते । अतएव भगवति त्वयि नितरां निरंतरं निर्वृतं च मनो येषां ते । यत्र यस्यामनुसेवायां सत्याम् ॥ ३९ ॥ प्रस्तुतं विज्ञापयंति त्रिभुवनेत्यादिना यावत्समाप्ति । त्रिभुवन-
मात्मा स्वरूपं भवनं च यस्य त्रिभुवनस्यात्मा भवनं चेति वा । त्रयो विक्रमा यस्य । त्रींल्लोकान्नयतीति तथा । त्रयाणां लोकानां मनोहरोऽनुभावो यस्य । एवं चतुर्धा संबोध्याहुः । तेषामनुप-
क्रमसमय उद्यमकालो न भवतीति मत्वा । हे दंडधर ! पूर्वं यथा दंडं दधर्थ धृतवानस्येवमेनं त्वाष्ट्रमपि जहि यदि मन्यसे हंतुं यदीच्छसि ॥ ४० ॥ प्रथमं तावत्त्वदीयानामस्माकमंतस्तापं शम-

वर्तंत इति ॥ ३५ ॥ तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाहुः । न हीति । विरुध्यत इति विरोधः । उभयं न विरुद्धमित्यर्थः । न ह्यन्यदृष्टांतेन त्वयि विकल्पो युज्यतेऽतक्यैश्वर्यत्वादित्याहुः । भगवतीति । अपरिमिता गुणगणा यस्य तस्मिन्नीश्वरे स्वतंत्रेऽनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । विकल्प एवं वा एवं वेति वितर्कः किमत्र युक्तमिति विचार इत्थमेवेति तत्र प्रमाणाभासास्तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्ते येषु शास्त्रेषु तैः कलिलं व्याकुलमंतःकरणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरेऽगोचरे । ननु श्रद्धामात्रमेतत् । युक्तिरुच्यतां तत्राहुः । उपरतो मायामयः संसारो यस्मिंस्तस्मिन्केवलेऽप्यात्ममायां मध्ये निधाय को न्वर्थः कर्तृत्वादिर्न संभवति यदि वस्तुतः कर्तृत्वादि भवेत्तर्हि विरोधः स्यान्न तु तदस्तीत्याहुः । स्वरूपद्वयाभावादिति ॥ ३६ ॥ अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः । समा विषमा च मतिर्येषां तेषां मतमभिप्रायम् । सर्पादिविषया धीर्येषां तेषां यथा रज्जुखंडस्तथा तथा भाति । यद्वा तमेवाविरोधं पुरुषमतिभेदेन दर्शयति । समविषमेति ॥ ३७ ॥ तदेवं विरोधं परिहृत्य निश्चितं परमार्थमाहुः । स एव हि नानारूपेण प्रतीतः । वस्तुस्वरूपः सद्रूपः । सर्वेषां गुणानां विषयाणामाभासैः प्रकाशैरुपलक्षितः । ननु तैर्जीव एवोपलक्ष्यते । न । सर्वप्रत्यगात्मत्वात्सर्वजीवांतर्यामित्वात् । जडतादात्म्याध्यासेन जीवस्यापि जडप्राय-

**दुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामंतर्धाय को न्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥ समविषममतीनां मतमनुसरसि यथा रज्जुखंडः सर्पादिधियाम् ॥ ३७ ॥ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यंदमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकांतिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरंतरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणांबुजानुसेवां विसृजंति न यत्र पुनरयं संसारपर्यावर्तः ॥ ३९ ॥ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दंडं दंडधर दधर्थ एवमेनमपि भगवन् जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ अस्माकं तावकानां तव नतानां तत ततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिंगविवरणेनात्मसात्कृतानामनुकंपाऽनुरंजितविशदरुचिरशि-**

त्वान्न तेन विना प्रकाश इति भावः । पर्यवशेषितो नेति नेतीत्यादिश्रुतिभिः ॥ ३८ ॥ अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः । अथ हेत्यादिपर्यावर्त इत्यंतेन । यस्मादेवंभूतस्त्वं परमेश्वरः । अथ ह वाव अतएव हि । मधुमथन परमभागवता एते त्वत्पादांभोजानुसेवां कथं मुहुर्मुहुर्विसृजंतीत्यन्वयः। हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणाः । अतएव आत्मत्वमेव प्रियः सुहृच्च येषां ते साधवो रागादिशून्याः । तत्र हेतुः । तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिंदुमात्रेण सकृदवलीढया आस्वादितया स्वमनसि निष्यंदमानमतिशयेन स्रवद्यन्निरंतरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशाभासा येषां ते । अतएव भगवति त्वयि नितरां निरंतरं निर्वृतं च मनो येषां ते । यत्र यस्यामनुसेवायां सत्याम् ॥ ३९ ॥ प्रस्तुतं विज्ञापयंति त्रिभुवनेत्यादिना यावत्समाप्ति । त्रिभुवनमात्मा स्वरूपं भवनं च यस्य त्रिभुवनस्यात्मा भवनं चेति वा । त्रयो विक्रमा यस्य । त्रींल्लोकान्नयतीति तथा । त्रयाणां लोकानां मनोहरोऽनुभावो यस्य । एवं चतुर्धा संबोध्याहुः । तेषामनुपक्रमसमय उद्यमकालो न भवतीति मत्वा । हे दंडधर ! पूर्वं यथा दंडं दधर्थ धृतवानस्येवमेनं त्वाष्ट्रमपि जहि यदि मन्यसे हंतुं यदीच्छसि ॥ ४० ॥ प्रथमं तावत्त्वदीयानामस्माकमंतस्तापं शम-

यितुमर्हसि । तावकानामित्यत्र हेतुः । हे पितः हे पितामह ! तव चरणनलिनयुगलध्यानेनैवानुबद्धो हृदये निगडः शृंखला येषाम् । स्वलिंगविवरणेन निजमूर्तिप्रकटनेन स्वीकृतानाम् । केन । अनुकंपयाऽनुरंजितं सानुरागं च तद्विशदं रुचिरं शिशिरं च स्मितं तत्सहितेनावलोकेन तथाऽनुकंपयैव विगलितो मधुरो मुखरसः प्रियवाक्सैवामृतकला तया च ॥ ४१ ॥ किंच । अस्मदभिप्रायस्त्वया ज्ञायत एव किमत्रास्माभिर्विज्ञापनीयमित्याहुः । अथ हे भगवंस्तवास्माभिरिह कियान्वार्थविशेषो विज्ञापनीयः स्यादित्यन्वयः । यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिंगादिभिः प्रकाशो न क्रियते तथा तवास्माभिः कार्यार्थप्रकाशनं न कार्यमित्यर्थः । अत्र हेतुगर्भाणि विशेषणानि । अखिलजगतामुत्पत्त्यादिषु निमित्तायमानया दिव्यमायया विनोदो यस्य । अतएव सर्वजीवनिकायानामंतर्हृदयेषु ब्रह्मस्वरूपेण प्रत्यगात्मांतर्यामी तद्रूपेण च बहिरपि प्रधानरूपेण देशकालदेहावस्थानविशेषाननुल्लंघ्यानुभवतः । कथम् । तेषामुपादानतयोपलंभकतया च उपादानस्योपलंभकतयेति वा । अतएव सर्वेषां प्रत्ययानां बुद्ध्यादीनामपि साक्षिणः । साक्षित्वे हेतुः । आकाशवदलिप्तं शरीरं स्वरूपं यस्य । अलिप्तत्वे हेतुद्वयम् । साक्षात्परब्रह्मणो निरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेश्च ॥ ४२ ॥ अत-

शिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चांतस्तापमनघार्हसि शमयितुम् ॥ ४१ ॥ अथ ह भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थिति-लयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामंतर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथा देशकालदेहावस्था-नविशेषं तदुपादानोपलंभकतयाऽनुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिंगादिभिरिव हिरण्यरेतसः ॥ ४२ ॥ अतएव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिन-संसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥ ४३ ॥ अथो ईश जहि त्वाष्ट्रं ग्रसंतं भुवनत्रयम् ॥ ग्रस्तानि येन नः कृष्ण तेजां-स्यस्त्रायुधानि च ॥ ४४ ॥ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ॥ सत्संग्रहाय भवपांथनिजाश्रमाप्तावंते परीष्टगतये हरये नमस्ते ॥ ४५ ॥ श्रीशुक उवाच ॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनंदितः ॥ ४६ ॥ श्रीभगवा-नुवाच ॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ४७ ॥ किं दुरापं मयि प्रीते तथाऽपि विबु-

एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापितास्तदस्माकं कार्यं स्वयमेवोपकल्पय संपादयेति । चरणमेव शतपलाशं कमलं तस्य छायां विविधैर्वृजिनैर्यः संसारपरिश्रमस्त-स्योपशमकरीमुपसृतानां प्राप्तानाम् ॥ ४३ ॥ पूर्वं भक्तेरुत्कर्षोक्तेस्तत्कामशंका माभूदिति स्वकामं कथयंति । अथोऽनंतरमेव ॥ ४४ ॥ शीघ्रं तद्वधाय पुनः प्रणमंति । हंसाय शुद्धाय हरये आर्ति-हराय ते नमः । शुद्धत्वे हेतवः । दह्रनिलयाय हृदयाकाशनिकेताय । निरीक्षकाय । बुद्ध्यादिसाक्षिणे । कृष्णाय सदानंदरूपाय । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते इति निरुक्तेः । आर्तिहरत्वे हेतवः । मृष्टं रुचिकरं यशो यस्य । निरुपक्रमायादिशून्याय । सद्भिः संगृह्यत इति तथा तस्मै । भवपांथो भवरूपे पथि वर्तमानस्तस्य जनस्य निजाश्रमाप्तौ स्वशरणप्राप्तौ सत्यां संसारस्यांते परीष्टा सर्वतः पूजिता उत्तमा गतिः फलं यस्तस्मै ॥ ४५ ॥ अभिनंदितः संतोषितः ॥ ४६ ॥ मदीयमुपस्थानं स्तोत्रं तत्सहितया विद्यया ज्ञानेन । आत्मन ऐश्वर्यमसंसारित्वं तस्य स्मृतिर्यया । नहि विरोध उभयमित्यादिना कर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः भक्तिश्च यया भवति ॥ ४७ ॥ अथ ह भगवन्नित्यादिना भक्तेः सर्वोत्कर्षोक्तेर्भक्तमभि-

नंदति । किमिति ॥ ४८ ॥ यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्संपादनं कृपालोर्ममानुचितमित्याशयेनाह । न वेदेति द्वाभ्याम् । गुणेषु विषयेषु तत्त्वदर्शी । तान्विषयान् । तथा विधोऽज्ञ एव ॥ ४९ ॥ कर्म न वक्ति प्रवृत्तिमार्गं न वक्ति हि । अपथ्यं यथा न राति न ददाति भिषक्तमः सद्वैद्यः ॥ ५० ॥ एवं तत्त्वकथनेनानौचित्यं परिहृत्य तदभिप्रायमनुसरन्नाह । मघवन्निति । विद्यया व्रतैस्तपसा च सारं दृढं गात्रं शरीरं याचत याचध्वम् ॥ ५१ ॥ तत्र तदीयं विद्यातिशयमाह । स वा इति द्वाभ्याम् । एवं ह्यत्र प्रसिद्धा कथा । निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः ॥ दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ ॥ भगवन्देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् ॥ कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् ॥ तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् ॥ उवाच भिषजोर्विद्यां मा वदीरश्विनोर्मुने ॥ यदि मद्वाक्यमुल्लंघ्य ब्रवीषि सहसैव ते ॥ शिरश्छिंद्यां न संदेह इत्युक्त्वा स ययौ हरिः ॥ इंद्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् ॥ तन्मुखादिंद्रगदितं श्रुत्वा तावूचतुः पुनः ॥ आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् ॥ संधास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज ॥ तस्मिन्निंद्रेण संछिन्ने पुनः संधाय मस्तकम् ॥ निजं ते दक्षिणां दत्त्वा गमिष्यावो यथातथम् ॥ एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः ॥ प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशंकित इति । ततश्चायमर्थः दध्यङ् निष्कलं शुद्धं ब्रह्माधिगतो ज्ञानवान् । पाठांतरे

धर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तो वांछति तत्त्ववित् ॥ ४८ ॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ॥ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः ॥ ४९ ॥ स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ॥ न राति रोगिणोऽपथ्यं वांछतो हि भिषक्तमः ॥ ५० ॥ मघवन्यात भद्रं वो दध्यंचमृषिसत्तमम् ॥ विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥५१॥ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम् ॥ यद्वा अश्वशिरो नाम तयोरमरतां व्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम् ॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥ युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽगानि दास्यति ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ ५४ ॥ येन वृत्रशिरो हर्ता मत्तेजउपबृंहितः ॥ तस्मिन्विनिहते यूयं तेजोऽस्त्रायुधसंपदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसंति च मत्परान् ॥ ५५ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ इंद्रमेवं समादिश्य भगवान्विश्वभावनः ॥ पश्यतामनिमेषाणां तत्रैवांतर्दधे हरिः ॥ १ ॥ तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् ॥ मोदमान उवाचेदं प्रहसन्निव भारत

तु निष्कृतं नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतो ज्ञातवान् । ततोऽश्विभ्यां प्रादादित्युत्तरस्यानुषंगः उपदिदेशेत्यर्थः । कथंभूतं ब्रह्म । यद्वा अश्वशिरसा प्रोक्तत्वादश्वशिरो नाम प्रसिद्धम् । तयोरमरतां जीवन्मुक्तत्वं व्यधात् तथा च श्रुतिः । अश्वस्य शीर्ष्णा प्रपदीमुवाचेति ॥ ५२ ॥ मदात्मकं वर्म श्रीनारायणकवचं चाधिगत इति पूर्वस्यानुषंगः । तत्र हेतुः । यस्मात्त्वष्ट्रे प्रादात् । किं तत् । यत्त्वष्टा विश्वरूपाय पुत्राय प्रादात् । कीदृशम् । यत्त्वं ततो विश्वरूपादधाः धृतवानसि । तदेवं विद्यया सारं गात्रं याचध्वमित्यर्थः ॥ ५३ ॥ ननु प्रेष्ठं देहं कथं दास्यति तत्राह । युष्मभ्यमंगान्यस्थीनि याचितः सन् दास्यति यतो धर्मज्ञः । विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति । अस्थीनीत्यनेन हेयत्वं दर्शितम् । तैरस्थिभिर्विश्वकर्मणा विनिर्मित आयुधश्रेष्ठो वज्रो भविष्यतीति शेषः ॥ ५४ ॥ येन भवान्वृत्रशिरो हर्ता हरिष्यति मम तेजसा उपबृंहितः सन् । तेजश्चास्त्राणि चायुधानि च संपदश्च भूयः प्राप्स्यथ । महाकायस्त्रिभुवनग्रासी स एवास्मान् हन्यादिति शंकाकुलचित्तान्प्रत्याह । मत्परांश्च केऽपि न हिंसंत्यतो युष्माकं भद्रमेवेति ॥ ५५ ॥ इति षष्ठस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥ दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रधृत् ॥ इंद्रोऽयुध्यत वृत्रेण सासुरेण

सनिर्जरः ॥ १ ॥ १ ॥ मोदमान एव तन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाण इवोवाच । अपीति द्वाभ्याम् ॥ २ ॥ हे वृंदारकाः ! अपि किं संस्थायां मृत्यौ योऽभिद्रोहो दुःखं तं न जानीथ ॥ ३ ॥ आत्मा देहः वयं जानीम एव किंतु श्रीविष्णुरस्मन्मुखेन याचत इति चेत्तत्राह । याचते विष्णवेऽपि दातुं क उत्सहेत ॥ ४ ॥ पुण्यश्लोकैरीड्यानि कर्माणि येषाम् ॥ ५ ॥ याचको यदि वेद तर्हि न याचेत यदीश्वरो दानसमर्थश्चेत्तर्हि सोऽपि नेति नाह । अतो यथा तव संकटं स्वार्थपरा वयं न जानीम एवं प्रत्याचक्षाणस्त्वमस्मत्संकटं न जानासीति भावः ॥ ६ ॥ मे मया प्रत्युदाहृताः प्रत्युक्ताः मां त्यजंतं त्यक्त्वा यांतमात्मानं देहम् ॥ ७ ॥ अध्रुवेणात्मना देहेन हे नाथाः ॥ ८ ॥ भूतानां शोकेन शोचति हर्षेण. हृष्यंति य आत्मा स्वयं तस्य यो धर्म एतावानेवाव्यय इत्यर्थः

॥ २ ॥ अपि वृंदारका यूयं न जानीथ शरीरिणाम् ॥ संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः ॥३॥ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ॥ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥ देवा ऊचुः ॥ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकंपिनाम् ॥ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥ ननु स्वार्थपरो लोको न वेद परसंकटम् ॥ यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥ ऋषिरुवाच ॥ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ॥ एष वः प्रियमात्मानं त्यजंतं संत्यजाम्यहम् ॥ ७ ॥ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ॥ ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ॥ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥ अहो दैन्यमहो कष्टं पारक्यैः क्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥ १० ॥ श्रीशुक उवाच ॥ एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ॥ परे भगवति ब्रह्मण्यात्मानं संनयन् जहौ ॥ ११ ॥ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबंधनः ॥ आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥ अथेंद्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ॥ मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसान्वितः ॥ १३ ॥ वृतो देवगणैः सर्वैर्गजेंद्रोपर्यशोभत ॥ स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥ वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ॥ पर्यस्तमोजसा राजन्क्रुद्धो रुद्र इवांतकम् ॥ १५ ॥ ततः सुराणामसुरै रणः परमदारुणः ॥ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥ १६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ॥ मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७॥ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वमायया ॥ नामृष्यन्नसुरा राजन्मृधे वृत्रपुरःसराः ॥ १८ ॥ नमुचिः शंबरोऽनर्वा द्विमूर्धा ऋषभोंऽबरः ॥ हयग्रीवः शंकुशिरा विप्रचित्तिरयोमुखः ॥ १९ ॥ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ॥ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥ २० ॥

॥ ९ ॥ पारक्यैः श्वसृगालादिभक्ष्यैः अस्वार्थैरात्मोपयोगशून्यैः स्वं वित्तम् । ज्ञातयः पुत्रादयः । विग्रहो देहः । तैर्नोपकुर्यादिति यत् ॥ १० ॥ कृतं व्यवसितं निश्चयो येन । आत्मानं क्षेत्रज्ञं सन्नयन्नेकीकुर्वंस्तनुं जहौ ॥ ११ ॥ यता अक्षादयो येन । तत्त्वं पश्यतीति तथा । ध्वस्तानि बंधनानि यस्य ॥ १२ ॥ अथेंद्रोऽशोभतेत्युत्तरेणान्वयः । मुनेः शुक्तिभिरस्थिभिर्निर्मितम् । उत्सिक्त ऊर्जितः । मुनेरस्थिभिरिति वा पाठः ॥ १३ ॥ १४ ॥ असुरानीकानां यूथपैः पर्यस्तं परिवृतम् ॥ १५ ॥ रणः संग्रामः । प्रथमे चतुर्युगे त्रेतायुगस्य मुखे आरंभे ॥ १६ ॥ १७ ॥ नामृष्यन्नासहंत

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ शतघ्नी च चतुर्हस्ता लोहकंटकसंचिता ॥ भुशुंडी सर्वतो लोहकंटकानुक्रमोन्नतेत्यभिधानम् ॥ २३ ॥ पुंखो मूलदेशः । एकस्य मूलदेशमनु तत्मूलमग्रोऽपरस्य पुंखो यथा भवति तथा नभस्थैर्घनैर्ज्योतींषीवेत्यनेन तेषां तदप्राप्तिः सूचिता ॥ २४ ॥ तामेवाह । न त इति । शस्त्राणामस्त्राणां च यानि वर्षाणि तेषामोघाः नाऽऽसेदुर्न प्रापुः । सिद्धपथे आकाशे ॥ २५ ॥ क्षीणा अस्त्राणां च ओघा येषाम् । गिरिशृंगैर्द्रुमैरुपलैश्च ॥ २६ ॥ तानिंद्रसैनिकान् शस्त्राणामस्त्राणां च पूगैः समूहैरक्षतान् क्षतशून्यान्स्वस्तिमतः सुखिनो द्रुमादिभिश्चाविक्षता-न्निशाम्य दृष्ट्वा । वृत्रो नाथो येषां ते तत्रसुर्भीताः ॥ २७ ॥ कृताःकृताः पुनःपुनः कृताः । कृष्णोऽनुकूलो येषां तेषु देवगणेषु । रुशतीः रुशत्यः । अकल्याण्यो रूक्षाः परुषा वाचो यथा महत्सु

सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ प्रतिषिद्धयं द्रसेनाग्र्यं मृत्योरपि दुरासदम् ॥ २१ ॥ अभ्यर्दयन्नसंभ्रांताः सिंहनादेन दुर्मदाः ॥ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥ २२ ॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुंडिभिः ॥ सर्वतोऽवाकिरन् शस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २३ ॥ न तेऽदृश्यंत संछन्नाः शरजालैः समंततः ॥ पुंखानुपुंखपतितैर्ज्योतींषीव नभोघनैः ॥ २४ ॥ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २५ ॥ अथ क्षीणास्त्रशस्त्रौघा गिरिशृंगद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २६ ॥ तानक्षतान्स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृंगैरविक्षतांस्तत्रसुरिंद्रसैनिकान् ॥ २७ ॥ सर्वे प्रयासा अभवन्विमोघाः कृताःकृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २८ ॥ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥ २९ ॥ वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३० ॥ कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वन् शंबर मे शृणुध्वम् ॥ ३१ ॥ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ॥ लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तम् ॥ ३२ ॥ द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ त एवं शंसतो धर्मं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पला-

क्षोभकर्त्र्यो न भवंति तद्वत् ॥ २८ ॥ हतो युद्धे दर्पो येषां ते । आत्तः परैर्गृहीतः सारो धैर्यं येषां ते अतिप्रसिद्धा अपि ते दैत्याः एवं ते इत्यस्यापौनरुक्त्यम् । आजिमुखे युद्धारंभे पतिं विसृज्य पलायनाय मनो दधुः । यतो हरावभक्ताः ॥ २९ ॥ प्रधावतः पलायमानान्प्रेक्ष्य आदावेव तीव्रेण भयेन पलायितं भग्नं च तद्बलं सैन्यं तच्च प्रेक्ष्य एतद्वक्ष्यमाणं बभाषे ॥ ३० ॥ तदेव विशिनष्टि । कालोपपन्नामवसरोचितां मनस्विनां रुचिरां हे मय ! हे अनर्वन् ! मे वाचं शृणुत ॥३१॥ ततो मृत्योरिह यशो लोकः स्वर्गश्च यदि स्यात् । अथ तर्हि । अमुं मृत्युं युक्तं समीचीनं प्राप्तं वा ॥३२॥ ब्रह्मसंधारणया कलेवरं जह्यादिति यत्स एको मृत्युः वीरशये रणभूमावनिवृत्तोऽपराङ्मुखः सन् जह्यादिति यत्स एकः । तौ द्वाविह शास्त्रे संमतौ मृत्यू । तथा च स्मृतिः । द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ ॥ परिव्राड्योगयुक्तश्च रणे चाभिमुखो हत इति ॥ ३३ ॥ इति षष्ठस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ एकादशे तु वृत्रस्य युध्यमानस्य वज्रिणा ॥ भक्तिज्ञानबलोदर्का-

मायाम् ॥ ४२ ॥ वत्स प्रह्लाद त्वां तावत्तारयिष्यामि तावत्व

तिप्रयासोऽसुरबालका हरेः कोऽन्वत्र तेऽखिलगुरो भगवन्प्रयासः ॥ प्रह्लाद इत्थमुपमंत्र्य मिथो नराणामीशेन सख्यमकरोदपनीय मायाम् ॥ ४२ ॥ वत्स प्रह्लाद त्वां तावत्तारयिष्यामि तावत्व कृतार्थः स्याः किमनेन निर्बंधेनेत्यत आह । नैवेति । हे पर सर्वोत्तम ! त्वद्वीर्यगायनमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्या नैवोद्विजे किंतु विमूढान् शोचामि । तानेवाह । ततो महामृताद्विमुखं चेतो येषाम् । प्रत्युतेंद्रियार्थनिमित्तं यन्मायासुखं तदर्थं भरं कुटुंबादिभारमुद्वहतः ॥ ४३ ॥ त्वं तावन्मुक्तिं गृहाण तांस्तु तत्त्वज्ञा मुनय उपदेक्ष्यंतीति चेत्तत्राह । प्रायेणेति । न विमुमुक्षे विमुक्तिं नेच्छामि । तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निर्बध्नासीति चेदत आह । त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥ ४४ ॥ नन्वेते स्त्रीसंभोगादिना सुखिन एव, न कृपणास्तत्राह । यदिति । करयोः कुंडूयनेन संघर्षणेनेव दुःखमनु दुखं यस्मिन् । तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरंस्तत्राह । कृपणाः कामुका बहुदुःखभाजोऽपीह गृहमेधिसुखे न तृप्यंत्यलमिति न मन्यंते कंडूतिवत्कामस्य दुःसहत्वात् । ननु केचित्कंडूतिमपि सहंते कामं चेत्यत्राह । त्वत्प्रसादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत न तु सर्वे । अत्रापि कंडूतिवदिति दृष्टांतः ॥ ४५ ॥ ननु मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिस्तत्राह । मौनेति । हे पुरुष अंतर्यामिन्ये मौनादयो दश आपवर्ग्या अपवर्गहेतवः प्रसिद्धाः । रहो विविक्तवासः ते तु प्रायशोऽजितेंद्रियाणामिंद्रिय-

प्रायेण देव मुनयः स्वविमुक्तिकामा मौनं चरंति विजनेन परार्थनिष्ठाः ॥ नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥ यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कंडूयनेन करयोरिव दुःखदुःखम् ॥ तृप्यंति नेह कृपणा बहुदुःखभाजः कंडूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥ मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ॥ प्रायः परं पुरुष ते त्वजितेंद्रियाणां वार्ता भवंत्युत न वात्र तु दांभिकानाम् ॥ ४६ ॥ रूपे इमे सदसती तव वेदसृष्टे बीजांकुराविव न चान्यदरूपकस्य ॥ युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥ त्वं वायुरग्निरवनिर्वियदंबुमात्राः प्राणेंद्रियाणि हृदयं चिदनुग्रहश्च ॥ सर्वं त्वमेव सगुणो विगुणश्च भूमन्नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥ नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः ॥ आद्यंतवंत उरुगाय विदंति हि त्वामेवं

भोगायार्थार्थं विक्रीणतां वार्ता जीवनोपाया भवंति । दांभिकानां तु वार्ता अपि भवंति वा न वा । दंभस्यानियतफलत्वात् ॥ ४६ ॥ त्वज्ज्ञानं भक्तिं विना सकामैर्मौनादिभिर्न भवत्येवेत्याह । रूपे इति त्रिभिः । बीजांकुराविव प्रवाहापन्ने इमे सदसती कार्यकारणे एव ते रूपे उपलक्षणभूते वेदेन सृष्टे प्रकाशिते न चान्यत् स्वसमवेतं गौरत्वादिकमिव देवदत्तादेः । कुतः । अरूपकस्य प्राकृत-रूपादिशून्यस्य । अतो युक्ताः संयता एव भक्तियोगेन प्रत्यक्षं त्वामुभयत्र कार्ये कारणे चानुगतं पश्यंति । मथनेन दारुषु वह्निमिव । नान्यतः स्यात्त्वज्ज्ञानमिति शेषः । यद्वा ज्ञानप्रकारमेवाह । एतदुभयमन्यतः प्रधानपरमाणुवादेर्न स्यात् । स ऐक्षतेत्यादिश्रुतेः । अतस्त्वमेव कारणत्वात्सर्वत्रानुस्यूत इति ॥ ४७ ॥ तदेवाह । त्वं वायुरिति । हृदयं मनः । चिच्चित्तम् । अनुग्रहोऽहंकारो देव-तावर्गो वा । सगुणः स्थूलः विगुणः सूक्ष्मः । मनश्च वचश्च मनोवचस्तेन निरुक्तं प्रकाशितं किमपि त्वत्तोऽन्यन्नास्ति ॥ ४८ ॥ अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानंतीत्याह । नैत इति । एते गुणाद्यभिमानिनो देवा आद्यंतवंतो जडोपाधित्वादनाद्यंतं निरुपाधिं त्वां विदंति हि यस्मात्सुधियो विद्वांस एवं विचार्य शब्दादध्ययनादिव्यापारादुपरमंति । त्वामेव समाधिनोपासत इत्यर्थः । तथा च श्रुतिः । किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामह इति । नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तदिति । स्मृतिश्च । यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥ तदा गंताऽसि

निर्वेदं श्रोतव्यस्य श्रुतस्य चेत्यादिः ॥ ४९ ॥ उपसंहरति तदिति। हे अर्हत्तम! नमःस्तुतिकर्मपूजाः प्रणिपातस्तुतिमर्वकर्मार्पणानि कर्म च परिचर्या चरणयोः स्मृतिश्च कथायां श्रवणं चेत्येवं षडंगया
सम्यक्सेवया विना परमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत। यस्मादेवं भक्तिं विना न मोक्षो न च भक्तिः संसेवया विनाऽतः प्राक् प्रार्थितं त्वद्दास्ययोगमेवं देहीति प्रकरणार्थः
॥ ५० ॥ एतावंतो वर्णिता गुणा यस्य। यतमन्युरुपसंहृतकोपः ॥ ५१ ॥ कामान्पूरयतीति तथा। यद्वा पुरुषार्थप्रवाहोऽस्मीत्यर्थः ॥ ५२ ॥ अप्रीणतः अप्रीणयतः तमुमपूर्णकामत्वेन शोचि-
तुम् ॥ ५३ ॥ प्रीणंति तोषयंति ॥ ५४ ॥ एकांतित्वान्निरुपाधिभक्तत्वात् ॥ ५५ ॥ इति श्रीमद्भागवते सप्तमे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे त्वनुगृह्यामुं भक्तमंतर्हिते हरौ ॥ प्रसंगाद्ध
रिणा रुद्रे कृतोऽनुग्रह ईर्यते ॥ १ ॥ तत्सर्वं वरजातम् ॥ १ ॥ उत्पत्त्या स्वभावेनैवासक्तं माम्। तेषां कामानां संगाद्भीतः ॥ २ ॥ ननु किमहं भक्तं प्रलोभयामि न हि किंतु वरं वृणीष्वेति

विमृश्य सुधियो विरमंति शब्दात् ॥ ४९ ॥ तत्तेऽर्हत्तम नमःस्तुतिकर्मपूजाः कर्म स्मृतिश्चरणयोः श्रवणं कथायाम् ॥ संसेवया त्वयि विनेति षडंगया
किं भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥ नारद उवाच ॥ एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ॥ प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत
॥ ५१ ॥ श्रीभगवानुवाच ॥ प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ॥ वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥ मामप्रीणत आयुष्म-
न्दर्शनं दुर्लभं हि मे ॥ दृष्ट्वा मां न पुनर्जंतुरात्मानं तप्तुमर्हति ॥ ५३ ॥ प्रीणंति ह्यथ मां धीराः सर्वभावेन साधवः ॥ श्रेयस्कामा महाभागाः सर्वा-
सामाशिषां पतिम् ॥ ५४ ॥ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ॥ एकांतित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥ इति श्रीमद्भागवते महापु-
राणे सप्तमस्कंधे प्रह्लादचरिते भगवत्स्तवो नाम नवमोऽध्यायः ॥ ९ ॥ नारद उवाच ॥ भक्तियोगस्य तत्सर्वमंतरायतयार्भकः ॥ मन्यमानो हृषीकेशं
स्मयमान उवाच ह ॥ १ ॥ प्रह्लाद उवाच ॥ मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः ॥ तत्संगभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥
भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ॥ भवान्संसारबीजेषु हृदयग्रंथिषु प्रभो ॥ ३ ॥ नान्यथा तेऽखिलगुरो घटेत करुणात्मनः ॥ यस्त आशिष
आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥ आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ॥ न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः
॥ ५ ॥ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥ यदि रासीश मे कामान्वरांस्त्वं वरदर्षभ ॥
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ७ ॥ इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ॥ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यंति जन्मना

वदतस्तत्राभिप्रायोऽन्य एवेत्याह भृत्यलक्षणेति। हृदयस्य ग्रंथिवद्बंधकेषु। अन्यथाऽनर्थसाधने प्रवर्तनं न घटेत इत्यर्थः ॥ ३ ॥ कथमेवं भृत्यलक्षणज्ञानं स्यात्तत्राह। य इति ते त्वत्तः ॥ ४ ॥
ननु कामनयाऽपि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसिद्धः सत्यम्। सोपाधिकोऽसौ न तु तात्त्विक इत्याह। स्वामिन्यात्मन आशिषोऽपेक्षमाणो नैव भृत्यः। भृत्यहेतुकमात्मनः स्वाम्यमिच्छन्यो
भृत्याय ददाति स च नैव स्वामी ॥ ५ ॥ आवयोस्तु तात्त्विकोऽसावित्याह। अहं त्विति। अनपाश्रयो निरभिसंधिः। अन्यथा कामाद्यभिसंधिनाऽर्थः प्रयोजनं नास्ति ॥ ६ ॥ ननु तथापि
परमोदारस्य मम संतोषार्थं किमपि वृणीष्वेति चेदत आह। यदीति। कामांकुराणामसंरोहमनुत्पत्तिं भवतः सकाशात् ॥ ७ ॥ ननु कामोत्पत्तौ सत्यां को दोषस्तत्राह। इंद्रियादीनि यस्य जन्मना

नश्यंति । आत्मा देहः ॥ ८ ॥ कामाभावे गुणमाह । विमुंचतीति । भगवत्त्वाय त्वत्समानैश्वर्याय । तथा च श्रुतिः । यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥ ९ ॥ निर्दोषान्कामान्दातुमिच्छंतं प्रत्याख्यास्यन्नमस्यति । नम इति ॥ १० ॥ सत्यमेकांतभक्तस्त्वं तथापि मदाज्ञाकरणीयेत्याह । नेति । मे एकांतिनः कदाचिद- पीहामुत्र च मय्याशिषो न वांछंत्येव तथाप्येतन्मन्वंतरमात्रं भोगान्भुंक्ष्व ॥ ११ ॥ ननु तर्हि बंधः स्यादित्यत आह । कथा इति द्वाभ्याम् । सर्वेषु भूतेषु संतमेकमीशं यज्ञाधिष्ठातारं मामात्मन्या- वेश्य यजस्व । तद्यनेनैवापि कर्मणा बंधः स्यान्नेत्याह । योगेन मय्यर्पणेन कर्म हिन्वंस्त्यजन्यजस्व ॥ १२ ॥ किंच भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा मुक्तबंधः संल्लोकानुग्रहार्थं कीर्तिं च विस्तार्य मां प्राप्स्यसि कुशलेन पुण्याचरणेन पापं हित्वेति बिभीषामात्रमन्यथा तस्य राज्येऽप्रवृत्तेः । न तु तस्य प्राचीनं पापमस्ति तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति न्यायात्

॥ ८ ॥ विमुंचति यदा कामान्मानवो मनसि स्थितान् ॥ तर्ह्येव पुंडरीकाक्ष भगवत्त्वाय कल्पते ॥ ९ ॥ नमो भगवते तुभ्यं पुरुषाय महात्मने ॥ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥ नृसिंह उवाच ॥ नैकांतिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः ॥ अथापि मन्वंतर- मेतदत्र दैत्येश्वराणामनुभुंक्ष्व भोगान् ॥ ११ ॥ कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि संतमेकम् ॥ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ॥ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्त- बंधः ॥ १३ ॥ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ॥ त्वां च मां च स्मरन्काले कर्मबंधात्प्रमुच्यते ॥ १४ ॥ प्रह्लाद उवाच ॥ वरं वरय एतत्ते वरदेशान्महेश्वर ॥ यदनिंदत् पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥ विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम् ॥ भ्रातृहेति मृषा दृष्टिस्त्व- द्भक्ते मयि चाघवान् ॥ १६ ॥ तस्मात्पिता मे पूयेत दुरंताद्दुस्तरादघात् ॥ पूतस्तेऽपांगसंदृष्टस्तदा कृपणवत्सल ॥ १७ ॥ श्रीभगवानुवाच ॥ त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ॥ यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥ यत्र यत्र च मद्भक्ताः प्रशांताः समदर्शिनः ॥ साधवः समुदाचारास्ते पूयंत्यपि कीकटाः ॥ १९ ॥ सर्वात्मना न हिंसंति भूतग्रामेषु किंचन ॥ उच्चावचेषु दैत्येंद्र मद्भावेन गतस्पृहाः ॥ २० ॥

तत्सुकृतदुष्कृते विधुनुत इति श्रुतेश्च । न चेदं प्रारब्धं पापाभिप्रायं तस्य भोगेनैव क्षयात्कुशलेन हित्वेति वचनानुपपत्तेः । न चासावविद्वानिति वाच्यं भगवतैव कृतार्थत्वस्यानंतरं वक्ष्यमाणत्वात् । अतएव योगेन कर्म हिन्वन्निर्तोदमपि लोकसंग्रहार्थं कर्माणि प्रवर्तितस्यानुद्वेगमात्रायेति सर्वमनवद्यम् ॥ १३ ॥ किंच । य इति । त्वां च मां चेदं मच्चरित्रं च स्मरन्नेतत्स्तोत्रं यः कीर्तयेत्सोऽपि कर्मबंधाद्विमुच्यते कुतस्तव बंधशंकेत्यर्थः ॥ १४ ॥ ईश्वराज्ञया प्राप्तकर्माधिकारः सन्पितुर्निष्कृतिं प्रार्थयते त्रिभिः । वरं वरणीयमेतदपरं वृणे ते त्वत्तः ॥ १५ ॥ विद्धोऽमर्षेण क्रोधेनाशयो यस्य ॥ १६ ॥ तेऽपांगेन संदृष्टोऽतः पूत एव तथापि भो कृपणवत्सल ! कार्पण्येन प्रार्थय इत्यर्थः ॥ १७ ॥ यद्यपि कश्यपो मरीचिर्ब्रह्मा चेति तत्पितृत्रय एव पूर्वजास्तथापि त्रिःसप्तभिः सहेति प्राक् त्वपगतपित्रभिप्रायेणोक्तम् । यद्यस्मात् ॥ १८ ॥ सम्यगुत्तम आचारो येषां ते कीकटा अपि देशास्तत्तुल्या वंशाश्च पूयंते शुद्धा भवंति ॥ १९ ॥ ननु त्वद्भक्तानामयं महिमेति न चित्रम् । अहं तु

तादृशो न भवामीति चेत्तत्राह । सर्वात्मनेति द्वाभ्याम् । मद्भावेन मद्भक्त्या विगता स्पृहा येषाम् ॥ २० ॥ त्वामनुगता ये केचित्पुरुषास्तेऽप्येवंलक्षणाः संतो मद्भक्ता भवंत्यतो भवान्मे भक्तानां सर्वेषां प्रतिरूपधृगुपमानास्पदम् । श्रेष्ठः खल्वित्यर्थः ॥ २१ ॥ मदंगस्पर्शनेन सर्वशः पूतस्य ते पितुः पापशंकैव नास्ति केवलं पुत्रकृत्यानि प्रेतकार्याणि कुरु ॥ २२ ॥ ब्रह्मवादिभिर्वेदवादिभिरुक्तमनतिक्रम्य मत्परः सन्कर्माणि कुरु ॥ २३–२६ ॥ मम सृष्टिभिर्मया सृष्टैर्भूतैः । समस्तान्निगमान्धर्मानित्यर्थः । अहन्हतवान् । स त्वया हत एतद्दिष्ट्या भद्रम् ॥ २७ ॥ समितः सम्यक्प्राप्तः

भवंति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ॥ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २१ ॥ कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ॥ मदंगस्पर्शनेनांग लोकान्यास्यति सुप्रजाः ॥ २२ ॥ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥२३॥ श्रीनारद उवाच ॥ प्रह्लादोऽपि तथा चक्रे पितुर्यत्सांपरायिकम् ॥ यथाऽऽह भगवान्राजन्नभिषिक्तो द्विजोत्तमैः ॥ २४ ॥ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ॥ स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्ष भूतभावन पूर्वज ॥ दिष्ट्या ते निहतः पापो लोकसंतापनोऽसुरः ॥ २६ ॥ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ॥ तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २७ ॥ दिष्ट्याऽस्य तनयः साधुर्महाभागवतोऽर्भकः ॥ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८ ॥ एतद्वपुस्ते भगवन्ध्यायतः प्रयतात्मनः ॥ सर्वतो गोप्तृ संत्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥ श्रीनृसिंह उवाच ॥ मैवं वरोऽसुराणां ते प्रदेयः पद्मसंभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥ नारद उवाच ॥ इत्युक्त्वा भगवान्राजंस्तत्रैवांतर्दधे हरिः ॥ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥ ततः संपूज्य शिरसा ववंदे परमेष्ठिनम् ॥ भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ॥ ३२ ॥ ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ॥ दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम् ॥ ३३ ॥ प्रतिनंद्य ततो देवाः प्रयुज्य परमाशिषः ॥ स्वधामानि ययू राजन्ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ॥ हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥ पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ॥ कुंभकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥ शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ॥ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥ ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ॥ हरौ वैरानुबंधेन पश्यतस्ते समीयतुः ॥ ३८ ॥ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ॥ जहुस्त्वंते तदात्मानः कीटः पेशस्कृतो यथा

॥ २८ ॥ सर्वतः संत्रासात् । गोप्तृ रक्षकम् ॥ २९ ॥ एवं वरस्त्वया न प्रदेयः । क्रूरो निसर्गः स्वभावो येषाम् । अमृतं क्षीरम् ॥ ३०–३४॥ शिशुपालदंतवक्त्रयोर्द्विषतोः श्रीकृष्णसायुज्यं कथमिति यत्पृष्टं तदेव तयोः पूर्वजन्मकथनादिभिरुपपादितमुपसंहरति । एवमिति सप्तभिः । दितेः पुत्रत्वं प्रापितौ । विप्रशापेनेत्युत्तरस्यानुषंगः ॥ ३५ ॥ ३६ ॥ तच्चित्तौ श्रीरामे चित्तं ययोस्तौ ॥ ३७ ॥ करूषजो दंतवक्त्रः । हरौ सायुज्यं समीयतुः ॥ ३८ ॥ कृष्णनिंदादिना पूर्वकृतं च यदेनः पापं तद्ध्यानेन तदात्मानः संतो जहुः । तदात्मत्वे दृष्टांतः । कीटः पेशस्कृतो ध्यानेन यथा तदात्मा

भवतीति ॥ ३९ ॥ अभेदाभेददर्शनशून्यया हरेः सात्म्यं सारूप्यम् ॥ ४० ॥ ४१ ॥ प्रह्लादचरितार्थमुपसंहरति । एषेति चतुर्भिः । अवतारः श्रीनृसिंहरूपस्तस्य कथाख्यातेति शेषः ॥ ४२ ॥ प्रह्लादस्यानुचरितमित्यादेः समास्नातमिति तृतीयेनान्वयः । अस्येत्यनेनोक्तं सर्गस्थित्यप्ययानामीशस्य हरेर्याथात्म्यं तत्त्वम् । अनेन कृतं हरेर्गुणकर्मानुवर्णनं चेत्यर्थः ॥ ४३ ॥ परावरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विपर्यासः ॥ ४४ ॥ आध्यात्मिकमात्मानात्मविवेकादि ॥ ४५ ॥ एतच्छ्रवणादिफलमाह । य इति द्वाभ्याम् । एतच्छ्रुत्वा यः कीर्तयेत् ॥ ४६ ॥ एतदेतां मृगेंद्रस्य लीलाम् । तामेवाह । दैत्येंद्रस्य यूथपानां च वधं यः शुचिः सन्पठेत । पुण्यमनुभावं प्रभावं मतिनिश्चयं वा लोकं वैकुंठम् ॥ ४७ ॥ अहो प्रह्लादस्य भाग्यं येन देवो दृष्टो वयं तु मंदभाग्या इति विषीदंतं प्रत्याह । यूयमिति त्रिभिः । येषां युष्माकं गृहान्मुनयोऽभियंति सर्वतः समायांति तत्कस्य हेतोर्येषु गृहेषु नराकारं गूढं सच्छ्रीकृष्णाख्यं परं ब्रह्म साक्षाद्वसतीति ॥ ४८ ॥ ननु कृष्णोऽ-

॥ ३९ ॥ यथा यथा भगवतो भक्त्या परमयाऽभिदा ॥ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिंतया ययुः ॥ ४० ॥ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान् ॥ दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ॥ अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥ प्रह्लादस्यानुचरितं महाभागवतस्य च ॥ भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४३ ॥ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ॥ परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४ ॥ धर्मो भागवतानां च भगवान्येन गम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥ य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशाद्विमुच्यते ॥ ४६ ॥ एतद्य आदिपुरुषस्य मृगेंद्रलीलां दैत्येंद्रयूथपवधं प्रयतः पठेत ॥ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वाऽनुभावमकुतोभयमेति लोकम् ॥ ४७ ॥ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियंति ॥ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिंगम् ॥ ४८ ॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ४९ ॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५० ॥ स एष भगवान्राजन्व्यतनोद्विहतं यशः ॥ पुरा रुद्रस्य देवस्य मयेनानंतमायिना ॥ ५१ ॥ राजोवाच ॥ कस्मिन्कर्मणि देवस्य मयोऽहन्जगदीशितुः ॥ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ ५२ ॥

स्माकं मातुलेयः कथं ब्रह्मेत्युच्यते तत्राह । स वा इति सोऽयं ब्रह्मैव । कथंभूतः । महद्भिर्विमृग्यं यत्कैवल्यनिर्वाणसुखं निरुपाधिः परमानंदस्तदनुभूतिरूपो वो युष्माकं खलु प्रियः सुहृदित्यादिरूपो भवति । विधिकृदाज्ञानुवर्ती ॥ ४९ ॥ ननु परं ब्रह्म चेत्कथं द्व्यष्टसहस्रस्त्रीषु रतिः कथं वा धर्माद्याचरणं तस्येत्यत आह । नेति । यस्य रूपं तत्त्वं भवादिभिरपि धिया स्वबुद्ध्या वस्तुतयेदमित्थमिति साक्षान्नोपवर्णितं स युष्माकं स्वयमेव प्रसन्नः । अस्माकं तु मौनादिसाधनैस्तत्प्रसादः प्रार्थनीय एवेत्याह । मौनेनेति । स एष सात्वतांपतिर्नः प्रसीदतु । न हि प्रह्लादस्य गृहेषु परं ब्रह्म वसति न च तद्दर्शनाय मुनयस्तद्गृहानभियंति न च तस्य ब्रह्म मातुलेयादिरूपेण वर्तते न च स्वयमेव प्रसन्नमतो यूयमेव ततोऽप्यस्मत्तोऽपि भूरिभागा इति भावः ॥ ५० ॥ नन्वन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान् । एवंभूत ईश्वरोऽप्यस्य तत्त्वं न जानातीति कथमित्यपेक्षायां तस्याप्येतत्साहाय्याद्देवासौ प्रभावो न केवलस्येति वक्तुमाख्यानमुपक्षिपति । स एष इति ॥ ५१ ॥ राजा युधिष्ठिर

उवाच । जगदीशितुर्देवस्य कीर्तिं कस्मिन्कर्मणि मयो हतवान् ॥ ५२ ॥ अनेन श्रीकृष्णेनोपबृंहितैः संवर्धितैः ॥ ५३ ॥ हैमी च रौप्या चायसी चेति तिस्रः पुरो निर्माय तेभ्यो ददाविति शेषः । दुर्लक्ष्यावपायसंयोगौ गमनागमने यासाम् । दुर्वितर्क्याः परिच्छदा यासु ॥ ५४ ॥ सेनान्यः सेनापतयः पूर्ववैरं स्मरंतः ॥ ५५ ॥ ५६ ॥ अस्त्रमभिमंत्रितं शरं पुरेषु व्यमुंचत ॥ ५७ ॥ ततः शरात् । सूर्यमंडलान्मयूखसंदोहा रश्मिसमूहा इव । यतो येभ्यः ॥ ५८ ॥ कूपरसे स्वयं निर्मितकूपामृते ॥ ५९ ॥ वज्रसारा वज्रवद्दृढांगा महौजसो महाबलाः मेघदलना मेघभेदिनो विद्युद्रूपा

नारद उवाच ॥ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ॥ मायिनां परमाचार्यं मयं शरणमाययुः ॥ ५३ ॥ स निर्माय पुरस्तिस्रो हैमी रौप्यायसा- विभुः ॥ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥ ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन्सेश्वरान्नृप ॥ स्मरंतो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५५ ॥ ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो ॥ त्राहि नस्तावकान्देव विनष्टांस्त्रिपुरालयैः ॥ ५६ ॥ अथानुगृह्य भगवान्मा भैष्टेति सुरा- न्विभुः ॥ शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुंचत ॥ ५७ ॥ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमंडलात् ॥ यथा मयूखसंदोहा नादृश्यंत पुरो यतः ॥ ५८ ॥ तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ॥ तानानीय महायोगो मयः कूपरसेऽक्षिपत् ॥ ५९ ॥ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ॥ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ॥ ६० ॥ विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ॥ तदाऽयं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥ ६१ ॥ वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ॥ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६२ ॥ तेऽसुरा ह्यपि पश्यंतो न न्यषेधन्विमोहिताः ॥ तद्विज्ञाय महायोगी रसपालानिदं जगौ ॥ ६३ ॥ स्वयं विशोकः शोकार्तान्स्मरन्दैवगतिं च ताम् ॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ॥ ६४ ॥ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ अथासौ शक्तिभिः स्वाभिः शंभोः प्राधनिकं व्यधात् ॥ ६५ ॥ धर्मज्ञानविरक्त्यृद्धितपो- विद्याक्रियादिभिः ॥ रथं सूतं ध्वजं वाहान्धनुर्वर्म शरादि यत् ॥ ६६ ॥ सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥ शरं धनुषि संधाय मुहूर्तेऽभिजि- तीश्वरः ॥ ६७ ॥ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ॥ दिवि दुंदुभयो नेदुर्विमानशतसंकुलाः ॥ ६८ ॥ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ॥ अवाकिरन्जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ ६९ ॥ एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ॥ ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ ७० ॥ एवंविधान्यस्य हरेः स्वमायया विडंबमानस्य नृलोकमात्मनः ॥ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥ ७१ ॥

॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः ॥ १० ॥ ॥ श्रीशुक उवाच ॥ श्रुत्वेहितं

वह्नय इव ॥ ६० ॥ ६१ ॥ काले मध्याह्ने ॥ ६२–६४ ॥ आत्मनो वाऽन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितमपोहितुं परिहर्तुमिह कश्चिदपीश्वरः समर्थो नास्ति । असौ श्रीकृष्णः । प्रधनं संग्रामस्तत्साधनम् ॥ ६५ ॥ ६६ ॥ अभिजिति मध्याह्ने ॥ ६७ ॥ विमानशतानि संकुलानि संकीर्णानि येषां ते देवादयः ॥ ६८ ॥ ६९ ॥ आदित आरभ्य स्कंधार्थं निगमयति एवंविधानीति ।

नृलोकं नराकारमात्मनो विडंबमानस्यानुकुर्वतः ॥ ७० ॥ ७१ ॥ इति श्रीमद्भागवते सप्तमे टीकायां दशमोऽध्यायः ॥ १० ॥ नदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ॥ अथ पंचभिरध्यायैः कर्म-
योगोऽनुवर्ण्यते ॥ १ ॥ एकादशे नृणां धर्माः साधारण्येन वर्णिताः ॥ विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ २ ॥ दैत्यपतेः प्रह्लादस्य साधूनां सभासु सभाजितं सत्कृतमीहितं चरितं
श्रुत्वा पुनर्नारदं पप्रच्छ । कथंभूतस्येहितम् । महत्तमानामग्रण्यो मुख्यस्य । तत्र हेतुः । उरुक्रमे आत्मा मनो यस्य ॥ १ ॥ श्रवणेच्छायां हेतुः । यद्यतो धर्मादनुष्ठितात्परं ज्ञानं भक्तिं च
विंदते ॥ २ ॥ ३ ॥ ननु स्मृतिकारैर्धर्म उक्त एव तत्राह । नारायणपरा इति ॥ ४ ॥ अजाय श्रीनारायणाय तस्यैव मुखाच्छ्रुतम् ॥ ५ ॥ तन्मुखादात्मनः श्रवणं संभावयन्विशिनष्टि । य इति ॥ ६ ॥
प्रथमं तावद्धर्मे प्रमाणमाह । धर्मेति । धर्मस्य मूलं प्रमाणम् । स्मृतं च स्मृतिः । तद्विदां वेदविदाम् येन चात्मा मनः प्रसीदति तुष्यति च । यथा च याज्ञवल्क्यः । श्रुतिः स्मृतिः सदाचारः
स्वस्य च प्रियमात्मनः ॥ सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतमिति ॥ मनुश्च । वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति ॥ ७ ॥ तत्र

साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ॥ युधिष्ठिरो दैत्यपतेर्मुदा युतः पप्रच्छ भूयस्तनयं स्वयंभुवः ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवञ्श्रो-
तुमिच्छामि नृणां धर्मं सनातनम् ॥ वर्णाश्रमाचारयुतं यत्पुमान्विदते परम् ॥ २ ॥ भवान्प्रजापतेः साक्षादात्मजः परमेष्ठिनः ॥ सुतानां संमतो
ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ॥ करुणाः साधवः शांतास्त्वद्विधा न तथा परे ॥ ४ ॥ नारद उवाच ॥
नत्वा भगवतेऽजाय लोकानां धर्महेतवे ॥ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥ योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ॥ लोकानां
स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥ धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ॥ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ७ ॥ सत्यं
दया तपः शौचं तितिक्षेक्षा शमो दमः ॥ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥ संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ॥ नृणां
विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथाऽर्हतः ॥ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पांडव ॥ १० ॥ श्रवणं
कीर्तनं चास्य स्मरणं महतां गतेः ॥ सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥ नृणामयं परो धर्मः सर्वेषां समुदाहृतः ॥ त्रिंशल्लक्षणवा-
न्राजन्सर्वात्मा येन तुष्यति ॥ १२ ॥ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ॥ इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ जन्म-

तावन्नरमात्रसाधारणधर्ममाह । सत्यमिति पंचभिः । तप एकादश्युपवासादि । ईक्षा युक्तायुक्तविवेकः । शमो मनसः संयमः । दमो बाह्येंद्रियाणाम् । त्यागो दानम् । स्वाध्यायो यथोचितजपः
॥ ८ ॥ संतोषो दैवलब्धेनालंबुद्धिः । समदृशा महतां सेवा । ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः । विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम् । मौनं वृथालापनिवृत्तिः । आत्मविमर्शनं देहादिव्य-
तिरिक्तात्मानुसंधानम् ॥ ९ ॥ आत्मेति देवतेति च बुद्धिः ॥ १० ॥ अस्य श्रीकृष्णस्य । श्रवणादयो नव । इज्याऽर्चनम् ॥ ११ ॥ एवं त्रिंशल्लक्षणवान् ॥ १२ ॥ इदानीं वर्णधर्मान्वक्तुं
द्विजानां लक्षणमाह । संस्कारा मंत्रवंतो गर्भाधानादयो यस्मिन्नविच्छिन्नाः स द्विजः । तर्हि शूद्रस्यापि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राह । अजो ब्रह्मा यमेवंभूतसंस्कारयुक्तं जगाद स
द्विजः शूद्रं तु न मंत्रवत्संस्कारयुक्तं जगाद न चोपनयनवंतमतो नासौ द्विजः । तथा च स्मृतिः । विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ॥ न केनचित्समसृजच्छंदसा तं प्रजापतिरिति । श्रुतिश्च ।

गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रमिति । अतो विवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्य तु सर्वथा निषेधान्न तस्य द्विजत्वमित्यर्थः । पाठांतरे वैदिकादय इति गर्भाधानादय इत्यर्थः । त्रैवर्णिकानामावश्यकान्धर्मानाह । इज्येति । जन्मना विशुद्धेन कुलेन कर्मणा चाचारेणावदातानां शुद्धानां दुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः । ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च । शूद्रस्य तु वर्णधर्मा एव । आश्रमभेदकृतविशेषाभावात् ॥ १३ ॥ ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान्धर्मानाह । विप्रस्येति सार्धैः सप्तभिः । विप्रस्य षट्कर्माणि विहितानीत्यनुषंगः । तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका । यथाह मनुः । षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इति । अन्यस्य क्षत्रियस्य अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनमध्यापनं चापद्यनुजानाति । वक्ष्यति चानंतरमेव ऋते राजन्यमिति । श्रूयते चाश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि । प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यंतरमाह । राज्ञ इति । आदिशब्देन दंडशुल्कादि ॥ १४ ॥ वार्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य । शूद्रस्य द्विजानां शुश्रूषा विहिता । स्वामिनो द्विजस्य

**कर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥ विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः ॥ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥ १४ ॥ वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ॥ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥ वार्ता विचित्रा शालीनयायावरशिलोंछनम् ॥ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ॥ १६ ॥ जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥ १७ ॥ ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥१८॥ ऋतमुंछशिलं प्रोक्तममृतं यदयाचितम् ॥ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम् ॥ १९ ॥ सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥ शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवम् ॥ ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २१ ॥ शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ॥ ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २२ ॥ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ॥ आस्तिक्यमुद्यमो नित्यं नैपुणं वैश्यलक्षणम् ॥ २३ ॥ शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ॥ अमंत्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥ २४ ॥ स्त्रीणां च**

तु शुश्रूषा वृत्तिश्च भवेत् ॥ १५ ॥ विप्रस्य मुख्यानुकल्पभेदेन वृत्त्यंतराण्याह । वार्तेति । वार्ता विचित्रा कृष्यादिरूपा शालीनं धाष्टर्यं विनैव प्राप्तमयाचितम् । यायावरं प्रत्यहं धान्ययाच्ञा शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम् । उंछनमापणादिपतितकणोपादानम् । शिलोंछनद्वयमेकीकृत्य चतुर्धेत्युक्तम् । श्रेयसी उत्तमा ॥ १६ ॥ वृत्तिष्वेव व्यवस्थां दर्शयन्नापद्वृत्तीराह । जघन्यो नीचः उत्तमामध्यापनादिरूपाम् । ऋते राजन्यं क्षत्रियस्तु प्रतिग्रहादन्यां भजेत् ॥ १७ ॥ चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह । ऋतामृताभ्यामिति ॥ १८ ॥ श्लोकं व्याचष्टे । ऋतमिति ॥ १९ ॥ तयोस्तद्वर्जने हेतुमाह । सर्ववेदमय इति ॥ २० ॥ वर्णानामभिव्यंजकरूपान्धर्मानाह । शम इति चतुर्भिः । अच्युतात्मत्वं श्रीविष्णुपरत्वम् ॥ २१ ॥ शौर्यं युद्धोत्साहः । वीर्यं प्रभावः । तेजः प्रागल्भ्यम् । त्यागो दानम् । आत्मनो मनसो जयः ॥ २२ ॥ २३ ॥ अमंत्रयज्ञो नमस्कारेणैव पंचयज्ञानुष्ठानम् । तथा च याज्ञवल्क्यः । नमस्कारेण मंत्रेण पंच यज्ञान्न हापयेदिति ॥ २४ ॥ स्त्रीधर्मानाह । स्त्रीणामिति पंचभिः । देवो यासां तस्य पत्युरेव शुश्रूषा पादसंवाहनादिभिः । तदनुकूलता च हिताचरणं तस्य यद्व्रतं नियमस्तस्य धारणमाचरणम् ।

एतच्चतुष्टयं पतिव्रतानां लक्षणं धर्मश्च ॥ २५ ॥ किंच । संमार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः । परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदा गृहोपकरणानि यया ॥२६॥२७॥ किंच । संतुष्टा यथालाभेन तावन्मात्रभोगेऽप्यलोलुपा दक्षाऽनलसा प्रिया सत्या च वाग्यस्याः सर्वत्राप्यप्रमत्ताऽवहिता । अपतितं महापातकशून्यम् । यथाह याज्ञवल्क्यः । आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषित इति ॥ २८ ॥ तत्परा सती भजेत् । श्रीर्हरिमिव हर्यात्मना पत्या सह ॥ २९ ॥ प्रतिलोमजानुलोमजानां वृत्तिमाह । वृत्तिरिति । तत्तत्कुलकृता कुलपरंपराप्राप्ता । परंपराप्राप्तमपि चौर्यं हिंसादिकं च प्रतिषेधति । अचौराणामपापानां चेति । तत्तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह । अंत्यजेति । रजकश्चर्मकारश्च नटो बुरुड एव च ॥ कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृताः ॥ अंतेवसायिनस्तु चांडालपुल्कसमातंगादयः । तेषां परंपराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ॥ ३० ॥ श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एव श्रेयानित्याह । प्राय इति । स्वभावेन सत्त्वादिप्रकृत्या विहितो धमः शर्मकृत्सुखहेतुः स्मृतः । कैः । वेद एव दृक् चक्षुर्येषां तैः । भगवता चोक्तम् । श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितादिति ॥ ३१ ॥ ननु स्वाभाविकस्य

पतिदेवानां तच्छुश्रूषानुकूलता ॥ तद्बंधुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २५ ॥ संमार्जनोपलेपाभ्यां गृहमंडलवर्तनैः ॥ स्वयं च मंडिता नित्यं परिमृष्टपरिच्छदा ॥ २६ ॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥ वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम् ॥ २७ ॥ संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ २८ ॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ २९ ॥ वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत् ॥ अचौराणामपापानामंत्यजांतेऽवसायिनाम् ॥ ३० ॥ प्रायः स्वभाव-विहितो नृणां धर्मो युगे युगे ॥ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ॥ ३१ ॥ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ॥ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥ उप्यमानं बहु क्षेत्रं स्वयं निर्वीर्यतामियात् ॥ न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ ३३ ॥ एवं कामा-शयं चित्तं कामानामतिसेवया ॥ विरज्येत यथा राजन्नाग्निवत्कामबिंदुभिः ॥ ३४ ॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यंजकम् ॥ यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नाम एकादशोऽध्यायः ॥११॥

कर्मणो बंधहेतुत्वात्कथं सुखहेतुत्वं तत्राह । वृत्त्येति ॥ ३२ ॥ ननु काम्यानि कर्माणि कुर्वतस्तत्फलभोगपरस्य कथं नैर्गुण्यं स्यात् । तदुक्तं प्रह्लादेन । औपस्थ्यजैह्व्यं बहु मन्यमानः कथं विरज्येत दुरंतमोह इत्यादि । तत्राधिकारिभेदेन व्यवस्थां सदृष्टांतामाह । उप्यमानमिति द्वाभ्याम् । पुनः सूत्यै सस्यप्रसवाय ॥ ३३ ॥ कामा आशेरते वासनारूपेण यस्मिंस्तत् । अयं भावः । उत्कटवासनाविष्टस्य सहसैव कामत्यागासंभवाद्वेदोक्तनियमेन बहुशः कामान्भुंजानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेन ययातिसौभरिप्रमुखानामिव शनैर्विरागो भवति । यथा सवीर्यं क्षेत्रं शनैर्निर्वीर्यं भवति यथा च प्रज्वलितोऽग्निर्न घृतबिंदुभिः शाम्यति महता तु घृतपूरेण शाम्यत्येव तद्वत् । प्रह्लादकृतस्तुतौ कौमार एव निवृत्त्युपदेशो मंदवासनानामधिकारेण । तदुक्तं तत्रैव । बालान-दूषितधियो द्वंद्वारामैरितेहितैरिति । अतः सर्वमनवद्यम् ॥ ३४ ॥ शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याह । यस्येति । यद्यदि अन्यत्र वर्णांतरेऽपि दृश्येत तद्वर्णांतरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत् । न तज्जातिनिमित्तेनेत्यर्थः ॥ ३५ ॥ इति स० टी० एकादशोऽध्यायः ॥ ११ ॥ द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणां च साधार-

एयेन कश्चन ॥ १ ॥ वर्णादीनां धर्मा उक्ता इदानीमाश्रमधर्मा उच्यंते । तत्रास्मिन्द्वादशेऽध्याये ब्रह्मचारिवानप्रस्थयोरसाधारणाश्चतुर्णां साधारणाश्चोच्यंते । त्रयोदशे यतेर्धर्माः । चतुर्दशे गृहस्थ-
स्य । पंचदशे सर्वधर्मसारसंग्रहः । ब्रह्मचारी गुरुकुले वसन्गुर्वादीनुपासीतेत्युत्तरेणान्वयः ॥ १ ॥ तानाह । सायमिति । ब्रह्म गायत्रीं जपन् संध्यात्रयमुपासीत । उभे संध्ये तु यतवाक् । सायं
प्रातः संध्याकालनिमित्तं मौनं कुर्यादित्यर्थः ॥ २ ॥ उपक्रमे आदाववसाने अंते गुरोश्चरणौ नमेत् ॥ ३ ॥ यथोदितमिति । पालाशो दंडो ब्राह्मणस्येत्यादिनियममनतिक्रम्य । जटाधारणं तु केश-
प्रसाधनाभावमात्रम् ॥ ४ ॥ ५ ॥ यावदर्थं यथोपयोगमेव ॥ ६ ॥ बृहद्व्रतो ब्रह्मचर्यवान्गृहस्थव्यतिरिक्तः सर्वोऽपि प्रमदागाथां वर्जयेत् । तत्र हेतुः । इंद्रियाणि बलवंति संयतस्यापि मनो हरंतीति
॥ ७ ॥ ८ ॥ न कारयेदित्यत्र हेतुः । नन्विति । रहः एकांते । अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकांतावसरे वा । यावदर्थं तदुक्तं कुर्यात् ॥ ९ ॥ ननुमिथ्यात्वादतिकश्मलत्वाच्च स्वयं

नारद उवाच ॥ ब्रह्मचारी गुरुकुले वसन्दांतो गुरोर्हितम् ॥ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥ सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्त-
मान् ॥ उभे संध्ये च यतवाग्जपन्ब्रह्म समाहितः ॥ २ ॥ छंदांस्यधीयीत गुरोराहूतश्चेत्सुयंत्रितः ॥ उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥
मेखलाजिनवासांसि जटादंडकमंडलून् ॥ बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥ सायं प्रातश्चरेद्भैक्ष्यं गुरवे तन्निवेदयेत् ॥ भुंजीत यद्यनुज्ञातो
नोचेदुपवसेत्क्वचित् ॥ ५ ॥ सुशीलो मितभुग्दक्षः श्रद्दधानो जितेंद्रियः ॥ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥ वर्जयेत्प्रमदागाथामगृह-
स्थो बृहद्व्रतः ॥ इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥ ७ ॥ केशप्रसाधनोन्मर्दस्नपनाभ्यंजनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा
॥ ८ ॥ नन्वग्निः प्रमदा नाम घृतकुंभसमः पुमान् ॥ सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥ कल्पयित्वाऽऽत्मना यावदाभासमिदमीश्वरः ॥
द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥ एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ॥ गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥ अंजना-
भ्यंजनोन्मर्दस्त्र्यवलेखामिषं मधु ॥ स्रग्गंधलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥ उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च ॥ त्रयीं सांगोपनिषदं
यावदर्थं यथाबलम् ॥ १३ ॥ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ॥ गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि

त्यक्तप्रायं स्यादि जह्यादिति कोऽयमतिनिर्बंधस्तत्राह । कल्पयित्वेति । आत्मना स्वरूपसाक्षात्कारेणेदं देहेंद्रियाद्याभासमात्रं कल्पयित्वा निश्चित्य यावदसौ जीव ईश्वरः स्वतंत्रो न भवेत्तावद्द्वैतमयं
पुमानियं स्त्रीत्यादिभेदो न विरमेत् ततः किमत आह । ततो हि द्वैतात् । विपर्ययो गुणाध्यासेन भोग्यताबुद्धिः । अतो जह्यादेवेत्यर्थः ॥ १० ॥ एतत्सर्वं सुशील इत्याद्युक्तं गृहस्थस्य विशेषमाह ।
गुरुवृत्तिरिति ॥ ११ ॥ अंजनादीनामामिषांतानां द्वंद्वैक्यम् । अंजनं शरीरस्य । अभ्यंजनं शिरसः । स्त्रियं चावलेखां च । चित्रकर्म स्त्रीणां कुड्यादौ लेखनं वा तन्निरीक्षणं वा अत्राभ्यंगादि
स्वरूपतो निषिध्यते । पूर्वं तु कथंचिदापदि प्राप्तमपि स्त्रीकर्तृकं निषिद्धमिति भेदः ॥ १२ ॥ अंगैः शिक्षादिभिरुपनिषद्भिश्च सहितां वेदत्रयीमधीत्यावबुध्य च तदर्थं च विचार्य । यावदर्थं स्वाधिका-
रानुसारेण ॥ १३ ॥ यदीश्वरः शक्तस्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाद्याश्रमं स्वीकुर्यात्प्रव्रजेत वा तत्रैव वा वसेत् । नैष्ठिकः स्यादित्यर्थः ॥ १४ ॥ स्वधामभिः स्वाश्रयैर्भू-

तैर्जीवैः सह तन्नियंतृतया ॥ १५ ॥ चरन्नेवमाचरन् । विदितं विज्ञानं विज्ञेयं येन सः ॥ १६ ॥ ऋषिलोकं महर्लोकम् ॥ १७ ॥ अकृष्टमकृष्टपच्यम् । अकालतः पाककालात्पूर्वमेव निष्पन्नमित्यर्थः । अर्कपक्वं फलादि आहरेदश्नीयात् ॥ १८ ॥ वन्यैर्नीवारादिभिश्चरुपुरोडाशान् । कालचोदितान्नित्यान् । पुराणं पूर्वसंचितम् ॥ १९ ॥ हिमादीन्सहत इति तथा ॥ २० ॥ केशादीन्मलं चाप्रक्षालनेन धारयन् । कमंडल्वादींश्च दधत् ॥ २१ ॥ कृच्छ्रतस्तपःक्लेशाद्यथा बुद्धिर्न नश्येत्तथा चरेत् ॥ २२ ॥ द्वादशाब्दाद्यनंतरमपि यदि स्वधर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत् । यदि तु ज्ञानाभ्यासे योग्यस्तर्हि संन्यसेदित्युत्तराध्याये वक्ष्यति । तदुभयरहितस्य तु यत्कृत्यं तदाह । यदाऽकल्पोऽसमर्थः । आन्वीक्षिक्यां विद्यायां ज्ञानाभ्यासे ॥ २३ ॥ अनशनादि करिष्यतः पूर्वकृत्यमाह । आत्मनीत्यादि यावत्समाप्ति । यथाऽर्हतो यथायोग्यं स्वकारणेष्वाकाशादिषु संघातं देहं न्यसेत्प्रविलापयेत् ॥ २४ ॥ तदेव विभज्य दर्शयति । खे आकाशे खानि देहगतच्छिद्राणि । आत्मवान्धीमान् ।

चरन्विदितविज्ञानः परं च सर्वभूतेष्वधोक्षजम् ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥ एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ॥ चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥ वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहांजसा ॥ १७ ॥ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ॥ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥ अग्न्यर्थमेव शरणमुटजं वाद्रिकंदराम् ॥ श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥ केशरोमनखश्मश्रुमलानि जटिलो दधत् ॥ कमंडल्वजिने दंडवल्कलाग्निपरिच्छदान् ॥ २१ ॥ चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ॥ द्वावेकं वा यथाबुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥ यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथवा ॥ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥ आत्मन्यग्नीन्समारोप्य संन्यस्याहंममात्मताम् ॥ कारणेषु न्यसेत्सम्यक्संघातं तु यथाऽर्हतः ॥ २४ ॥ खे खानि वायौ निश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥ वाचमग्नौ सवक्तव्यामिंद्रे शिल्पं करावपि ॥ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ॥ दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥ २७ ॥ रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् ॥ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥ २८ ॥ मनो मनोरथैश्चंद्रे बुद्धिं बोध्यैः कवौ परे ॥ कर्माण्यध्यात्मना रुद्रे यदहंममताक्रिया ॥ सत्त्वेन

शेषमस्थिमांसादिकठिनांशम् ॥ २५ ॥ एवं स्थूलशरीरस्य लयमुक्त्वा लिंगशरीररूपस्याध्यात्मादित्रयस्य लयमाह । वाचमित्यादिना । तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहंकारादिषु लयो वाच्यस्तथापीह तेषां लयभावनेयमद्वितीयात्मप्रतिपत्तिपरेति यथाकथंचिल्लये भाव्ये देवतानां प्रवर्तकत्वेन प्राधान्यादिंद्रियतद्विषययोर्देवतासु लयः कथ्यते । वक्तव्यसहितां वाचमग्नौ न्यसेत् । एवं सर्वत्र । पदानि पादौ । वयसि विष्णौ ॥ २६ ॥ सनादेन शब्देन सह । अध्यात्मनि वायौ । अध्यात्मविदिति पाठे वायाविति ज्ञातव्यम् ॥ २७ ॥ ज्योतिष्यादित्ये । रसगंधयोस्त्विंद्रियाद्याकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्येंद्रियस्य विषये लयमाह । प्रचेतसा सह जिह्वां रसनमप्सु रसरूपासु । घ्राणशब्देनाश्विनोरप्युपलक्षणं अश्विभ्यां सह घ्राणं घ्रेयैर्गंधैरुपलक्षितायां क्षिताविस्यर्थः ॥ २८ ॥ परे कवौ ब्रह्मणि । अध्यात्मनाऽहंकारेण । अध्यात्मतामिति पाठे कर्माण्यहंकारं चेत्यर्थः । कथंभूते रुद्रे । यद्यस्मादहंममतापूर्विका क्रिया

भवति तस्मिन् सत्त्वेन चेतनया गुणैर्गुणकार्यैः प्रागवशिष्टैर्देवैः सह यद्वा सत्त्वादिभिर्गुणैर्हेतुभूतैः । वैकारिकं भोक्तृत्वादिविकारवंतं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि ॥ २९ ॥ ननु विकारवतः कथं परेऽ-
विकारे लयः स्यात् विकारहेतूनां सर्वोपाधीनां लयद्वारेणेत्याह । अप्स्विति । अदो ज्योतिः । तच्च नभः कूटस्थेऽहंतत्त्वे । तच्च कूटस्थं महति महत्तत्त्वे । तदव्यक्ते प्रधाने । तच्चाव्यक्तमक्षरे परमा-
त्मनि ॥ ३० ॥ इति सर्वोपाधिलयाद्धेतोरवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वाऽद्वयः सन्विरमेत् । दग्धकाष्ठो यथाऽनलः ॥ ३१ ॥ इति सप्तमे टीकायां द्वादशोऽध्यायः ॥ १२ ॥
त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् ॥ अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १ ॥ एवं ध्यात्वाऽकल्पोऽनशनादिकं कुर्यात् । आन्वीक्षिक्यां कल्पस्त्वेवं ध्यात्वा परिव्रज्येति संबंधः ।
कियदत्र त्याज्यं देहव्यतिरिक्तं सर्वमित्याह । देहमात्रेति । तस्य धर्मानाह । ग्रामैकरात्रेति नवभिः ॥ १ ॥ कौपीनं गुह्यमाच्छाद्यते यावता तावन्मात्रं परं केवलमन्यदिति वा त्यक्तं प्रेषोच्चार-
णात्पूर्वमेव ॥ २ ॥ ३ ॥ सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥ नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः न हि बद्धमुक्तयोरैक्यं संभवति तत्राह । सुप्तेति । सुषुप्तौ हि तमसावृ-

चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥ अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ॥ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥ ३० ॥
इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम् ॥ ज्ञात्वाऽद्वयोऽथ विरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे द्वादशो-
ऽध्यायः ॥ १२ ॥ नारद उवाच ॥ कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ॥ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥ बिभृयाद्यद्यसौ वासः
कौपीनाच्छादनं परम् ॥ त्यक्तं न दंडलिंगादेरन्यत्किंचिदनापदि ॥ २ ॥ एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतो नारायण-
परायणः ॥ ३ ॥ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ॥ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥ सुप्तप्रबोधयोः संधावात्मनो गति-
मात्मदृक् ॥ पश्यन्बंधं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥ नाभिनंदेद्ध्रुवं मृत्युमध्रुवं वाऽस्य जीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभ-
वाप्ययम् ॥ ६ ॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥ वादवादांस्त्यजेत्तर्कान्पक्षं कं च न संश्रयेत् ॥ ७ ॥ न शिष्याननुबध्नीत ग्रंथान्नै-
वाभ्यसेद्बहून् ॥ न व्याख्यामुपयुंजीत नारंभानारभेत्क्वचित् ॥ ८ ॥ न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ॥ शांतस्य समचित्तस्य बिभृयादुत वा
त्यजेत् ॥ ९ ॥ अव्यक्तलिंगो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥ अत्राप्युदाहरंतीममितिहासं

तमात्मतत्त्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते संधौ तु न तमो नापि विक्षेपः । अतस्तदाऽऽत्मदृगात्मानं लक्षीकृत्य स्थितः सन्नात्मनो गतिं तत्त्वं पश्यन् अतएव बंधं मोक्षं च मायामात्रं पश्यन्
आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः । तदुक्तं योगग्रंथे । निद्रादौ जागरस्यांते यो भाव उपजायते ॥ तं भावं भावयन्नित्यं मुच्यते नेतरो यतिरिति ॥ ५ ॥ अस्य देहस्य प्रभवोऽप्ययश्च
यस्मात्तं कालम् ॥ ६ ॥ असच्छास्त्रेष्वनात्मनरेषु । जीविकां नक्षत्रविद्यादिवृत्तिम् । वादवादान् जल्पवितंडादिनिष्ठान् । कंच कमपि पक्षं निर्बंधेन न संश्रयेत् ॥ ७ ॥ शिष्यान्नानुबध्नीत प्रलोभना-
दिना बलान्नापादयेत् । आरंभान्मठादिव्यापारान् ॥ ८ ॥ परमहंसस्य विशेषमाह । न यतेराश्रमो धर्मार्थः कथंभूतस्य यतेः । महात्मनः । तस्य लक्षणं शांतस्येत्यादि । प्राय इत्यस्यायं भावः ।
ज्ञानोत्पत्तिपर्यंतं बहूदकादिलिंगमाश्रित्य सत्त्वशुद्ध्यर्थं यमान्नियमांश्चाचरन्नेव ज्ञानोत्पत्तौ यतेत । उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति । यमाश्च स्वत एव स्युः । अतस्तदा लिंगादिभिः प्रयो-

जनाभावाल्लोकसंग्रहार्थं धारयेद्वा त्यजेद्वेति ॥ ९ ॥ तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह । न बहिर्व्यक्तं लिंगं यस्य व्यक्तोऽर्थः प्रयोजनानुसंधानं यस्य स मनीष्यप्युन्मत्तवद्बालवच्च कविरपि मूकवदात्मानं नृणां दृष्ट्या दर्शयेत् । यथोन्मत्तोदिरूपं मन्येरंस्तथा वर्तेत । स्वदृष्ट्येति पाठे बाह्यानुसंधानाभावेनेत्यर्थः ॥ १० ॥ परमहंसधर्ममेवेतिहासेन स्फुटयति । अत्रापीति यावद-ध्यायसमाप्ति । अजगरव्रतस्य मुनेश्च ॥ ११ ॥ धरोपस्थे भूपृष्ठे सह्याद्रेस्तटे रजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलं तेजो यस्य तम् ॥ १२ ॥ १३ ॥ कर्मादिभिर्जना यं न विदुस्तं पादयोः शिरसा स्पृशन्नत्वा अप्राक्षीदित्युत्तरेणान्वयः ॥ १४ ॥ १५ ॥ उद्यमसहित इव भोगवानिव पीवानं स्थूलं देहं धारयसि तत्र हेतुं वदेति तृतीयेनान्वयः । उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राह । वित्तं चेति ॥ १६ ॥ नु इति निश्चये । ह इति प्रसिद्धौ । तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः । यतोऽर्थादेव यतो हेतोः पीवा क्षमं योग्यं चेत् ॥ १७ ॥ किंच वित्तार्जनाद्यसमर्थोऽप्ययं जनस्तदर्थ-

पुरातनम् ॥ प्रह्रादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥ तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥१२॥ ददर्श लोकान्विचरँल्लोकतत्त्वविवित्सया ॥ वृतोऽमात्यैः कतिपयैः प्रह्रादो भगवत्प्रियः ॥ १३ ॥ कर्मणाकृतिभिर्वाचा लिंगैर्वर्णाश्रमादिभिः ॥ न विदंति जना यं वै सोऽसाविति न वेति च ॥ १४ ॥ तं नत्वाऽभ्यर्च्य विधिवत्पादयोः शिरसा स्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ॥ वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ॥ भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १६ ॥ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नु हार्थो यत एव भोगः ॥ अभोगिनोऽयं तव विप्रदेहः पीवा यतस्तद्वद नः क्षमं चेत् ॥ १७ ॥ कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ॥ लोकस्य कुर्वतः कर्म शेषे तद्वीक्षितापि वा ॥ १८ ॥ नारद उवाच ॥ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥ स्मयमानस्तमभ्याह तद्वागमृतयंत्रितः ॥ १९ ॥ ब्राह्मण उवाच ॥ वेदेदमसुरश्रेष्ठ भवान्नन्वार्यसंमतः ॥ ईहोपरमयोर्नॄणां पदान्यध्या-त्मचक्षुषा ॥ २० ॥ यस्य नारायणो देवो भगवान्हृद्गतः सदा ॥ भक्त्या केवलयाऽज्ञानं धुनोति ध्वांतमर्कवत् ॥ २१ ॥ अथापि ब्रूमहे प्रश्नांस्तव राजन्यथाश्रुतम् ॥ संभावनीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥ २२ ॥ तृष्णया भववाहिन्या योग्यैः कामैरपूरया ॥ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥ यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ २४ ॥ अत्रापि दंपतीनां

मुद्यमं करोति त्वं तु समर्थोऽपि किमिति न करोषीत्याह । कविर्विद्वान् कल्पो दक्षः । निपुणदृक्चतुरः । चित्राः प्रियाः लोकरंजनाः कथाः यस्य । तथाऽपि लोकस्य कर्म कुर्वतः सतः शेषे । तद्वी-क्षिताऽपि तत्सर्वं पश्यन्नपि । पाठांतरे न द्वेक्षि तत्कर्म न द्वेक्षि नौषि वा न च स्तौषीत्यर्थः ॥ १८ ॥ तस्य वागेवामृतं तेन यंत्रितो वशीकृतः सन्प्राह ॥ १९ ॥ अध्यात्मचक्षुषांऽतर्दृष्ट्या भवान्वेदैव । आर्याणां ज्ञानिनां संमतो ननु भवान् इदमिति यदुक्तं तदेवाह । नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानीत्यर्थः ॥ २० ॥ वेदेत्यत्र हेतुः । यस्येति । हृदि प्रविष्टः सन्नज्ञानं धुनोति अर्को यथा बहिर्ध्वांतम् ॥ २१ ॥ यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम् ॥ २२ ॥ लोकः कर्मसु प्रवर्तते त्वं तु निवृत्तः सन्किं शेषे इति यदुक्तं तत्राह । तृष्णयेति चतुर्भिः । भवप्रवाहकारिण्या यथोचितैरपि विषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानोऽहं पूर्वं नानायोनिषु प्रवेशितः ॥ २३ ॥ तयैव तृष्णयेमं लोकं मनुष्यदेहं यदृच्छया प्रापितः । कथंभूतं लोकम्

धर्मेण स्वर्गस्य द्वारं साधनम् । अधर्मेण तिरश्चां श्वसूकरादियोनेर्द्वारं मिश्राभ्यां ताभ्यां पुनरप्यस्य मनुष्यत्वस्य द्वारं सर्वतो निवृत्त्याऽपवर्गस्य द्वारमित्यर्थः ॥ २४ ॥ अत्रापि मनुष्यत्वेऽपि ।
अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दृष्ट्वा निवृत्तोऽस्मि ॥ २५ ॥ ननु प्रवृत्त्या कदाचित्सुखं स्यान्निवृत्त्या तु किं स्यादिति चेत्तत्राह । सुखमस्य जीवस्य स्वरूपमेव । तर्हि किं न प्रकाशते
तत्राह । सर्वेति । तनोतीति तनुः सर्वक्रियानिवृत्तौ स्वत एव प्रकाशत इत्यर्थः । भोगांश्च मनःसंस्पर्शजान्मनोरथमात्रजानशाश्वतान् दृष्ट्वा स्वप्स्यामि निरुद्यमोऽस्मीत्यर्थः । तर्हि कदाचित्कथं भुंक्ते
तत्राह । संविशन् । प्रारब्धभोगान्भुंजान इत्यर्थः ॥ २६ ॥ एवं चेत्कोऽपि संसारं न प्राप्नुयात्तत्राह । इत्येतदात्मनः सुखात्मकं रूपं स्वार्थं स्वस्मिन्नेव संतं पुरुषार्थं विस्मृत्य असत्यपि द्वैते ॥२७॥
एतदेव दृष्टांतेन स्पष्टयति । जलमिति । तदुद्भवैस्तृणशैवालादिभिः जलकाम्यया जलेच्छया । स्वत आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन् ॥ २८ ॥ एवं स्वस्य निरुद्यमत्वे कारणमुक्त्वा विपर्ययं

च सुखायान्यापनुत्तये ॥ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २५ ॥ सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः ॥ मनःसंस्पर्शजान्दृष्ट्वा भोगा-
न्स्वप्स्यामि संविशन् ॥ २६ ॥ इत्येतदात्मनः स्वार्थं संतं विस्मृत्य वै पुमान् ॥ विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥ जलं तदु-
द्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ॥ मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक्स्वतः ॥ २८ ॥ देहादिभिर्दैवतंत्रैरात्मनः सुखमीहतः ॥ दुःखात्ययं चानी-
शस्य क्रिया मोघाः कृताः कृताः ॥ २९ ॥ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥ मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥
पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणां सर्वतोऽभिविशंकिनाम् ॥ ३१ ॥ राजतश्चोरतः शत्रोः स्वजनात्पशुपक्षितः ॥
अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाः स्युर्नृणां जह्यात्स्पृहां प्राणार्थयोर्बुधः
॥ ३३ ॥ मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३४ ॥ विरागः सर्वकामेभ्यः शिक्षितो मे
मधुव्रतात् ॥ कृच्छ्राप्तं मधुवद्वित्तं हत्वाऽप्यन्यो हरेत्पतिम् ॥ ३५ ॥ अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ॥ नो चेच्छये बह्वहानि महाहिरिव
सत्त्ववान् ॥ ३६ ॥ क्वचिदल्पं क्वचिद्भूरि भुंजेऽन्नं स्वाद्वस्वादु वा ॥ क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥ श्रद्धयोपाहृतं क्वापि कदाचिन्मा-
नवर्जितम् ॥ भुंजे भुक्त्वाऽथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया ॥ ३८ ॥ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ॥ वसेऽन्यदपि संप्राप्तं दिष्टभुक्तुष्टधी-

दृष्ट्वेति यदुक्तं तद्विवृणोति । देहादिभिरिति पंचभिः । ईहत इच्छतः अनीशस्य निर्दैवस्य पुनः पुनः प्रारब्धाः क्रिया मोघा विफला एव भवंति ॥ २९ ॥ क्रियाणां सफलत्वेऽपि फलस्यानुपयोग-
गमाह । । आध्यात्मिकादिभिरिति । मर्त्यस्य मरिष्यतः कृच्छ्रेण दुःखेनोपनतैः प्राप्तैः ॥ ३० ॥ कृच्छ्रं विनैव प्राप्तेऽप्यर्थे दुःखं तदवस्थमित्याह । पश्यामीति ॥ ३१ ॥ भयं प्रपंचयति । राजत
इति । स्वस्मान्मत्त एव कथंचित्त्यागभोगविस्मरणादिना नाशः स्यादिति प्राणवतामर्थवतां च भयं नित्यम् ॥ ३२ ॥ अतोऽनर्थहेतुत्वात्प्राणेऽर्थे च स्पृहा न कार्येत्याह । शोकेति ॥ ३३ ॥ नन्वे-
वमनर्थाननुभवंतोऽपि न केचिद्विरज्यंते न च यथालाभेन तुष्यंति त्वं तु कथं वैराग्यादिकं प्राप्तोऽसि तत्राह । मधुकारेति । मधुमक्षिकाऽजगरौ । ययोः शिक्षया वृत्तपर्यालोचनया ॥ ३४ ॥
मधुकाराच्छिक्षितमाह । विराग इति । वित्तपतिं हत्वाऽन्यो वित्तं हरेदित्येवम् ॥ ३५ ॥ अजगराच्छिक्षितमाह । अनीह इति । सत्त्ववान्धैर्यवान् ॥ ३६ ॥ पीनत्वे हेतुं वदन्यदृच्छया प्राप्तात्परितोषं

प्रपंचयति । क्वचिदल्पमिति षड्भिः ॥ ३७ ॥ ३८ ॥ चीरं जीर्णवस्त्रखंडम् । वसे परिदधे । दिष्टभुक् प्रारब्धकर्मफलभोगी ॥ ३९ ॥ प्रासादमध्ये पर्यंके तत्रापि कशिपौ तूलिकायाम् ॥ ४० ॥ चरे विचरामि । क्वचिद्ग्रहवद्दिगंबरो विचरामि ॥ ४१ ॥ न च मानापमानकर्तृषु मम वैषम्यमित्याह । नाहमिति । नाहं निंदामि न च स्तौमि । महात्मनि विष्णौ ॥ ४२ ॥ एवंभूतत्वेन स्थितावुपायमाह । विकल्पमिति द्वाभ्याम् । चित्तौ भेदग्राहकमनोवृत्तौ । अर्थरूपो विभ्रमो यस्मिन्मनसि तन्मनो वैकारिकेऽहंकारे । तमहंकारमन्वनंतरं महत्तत्त्वद्वारेणेत्यर्थः ॥ ४३ ॥ सत्यमेव पश्यतीति तथा ॥ ४४ ॥ मंददृष्ट्या लोकशास्त्राभ्यां व्यपेतं न तु तत्त्वदृष्ट्या यतो भवान्भगवत्परः ॥ ४५ ॥ ४६ ॥ इति श्रीमद्भागवते सप्तमे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते ॥ देशकालादिभेदेन पुनः श्रेयो विशेषकृत् ॥ १ ॥ गृहस्थमुल्लंघ्य मोक्षं प्रत्यंतरंगत्वेन प्रथमं वनस्थयतिधर्मेष्वभिहितेषु तर्हि गृहस्थस्य मोक्षो न स्यादिति शंकितचित्तः पृच्छति । गृहस्थ

रहम् ॥ ३६ ॥ क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यंके कशिपौ वा परेच्छया ॥ ४० ॥ क्वचित्स्नातोऽनुलिप्तांगः सुवासाः स्रग्व्यलंकृतः ॥ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥ ४१ ॥ नाहं निंदे न च स्तौमि स्वभावविषमं जनम् ॥ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥ मनो वैकारिके हुत्वा तं मायायां जुहोत्यनु ॥ ४३ ॥ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः ॥ ततो निरीहो विरमेत्स्वानुभूत्याऽऽत्मनि स्थितः ॥ ४४ ॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ॥ व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्परः ॥ ४५ ॥ नारद उवाच ॥ धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ पूजयित्वा ततः प्रीत आमंत्र्य प्रययौ गृहम् ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे युधिष्ठिरनारदसंवादे यतिधर्मे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चांजसा ॥ याति देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥ नारद उवाच ॥ गृहेष्ववस्थितो राजन्क्रियाः कुर्वन्गृहोचिताः ॥ वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ २ ॥ शृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम् ॥ श्रद्दधानो यथाकालमुपशांतजनावृतः ॥ ३ ॥ सत्संगाच्छनकैः संगमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ४ ॥ यावदर्थमुपासीनो देहे गेहे च पंडितः ॥ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् ॥ ५ ॥ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ॥ यद्वदंति यदिच्छंति चानुमोदेत निर्ममः ॥ ६ ॥ दिव्यं भौमं चांतरिक्षं वित्तमच्युतनिर्मितम् ॥ तत्सर्वमुपभुंजान एतत्कुर्यात्स्वतो बुधः ॥ ७ ॥ यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो

इति ॥ १ ॥ तस्य मोक्षधर्मानाह । गृहेष्वित्यादि यावदध्यायसमाप्ति । साक्षाद्वासुदेवार्पणं यथा भगवत्येवं कुर्वन्नुपासीत ॥ २ ॥ ३ ॥ स्वयमेव मुच्यमानेषु वियुज्यमानेषु यथा स्वप्नादुत्थितः पुमान्स्वप्नदृष्टेषु पुत्रादिषु संगं विमुंचति तद्वत् ॥ ४ ॥ नन्वेवंभूतस्य दुर्जनैरभिभूयमानस्य कुतो गृहोचिताः क्रियाः स्युस्तत्राह । यावदर्थमिति अंतस्त्वनासक्तो बहिस्त्वासक्त इव नृलोके जनमध्ये नरतां मनुष्यतां न्यसेत् । पुरुषकारमाविष्कुर्यादित्यर्थः ॥ ५ ॥ आग्रहं तु क्वापि न कुर्यादित्याह । ज्ञातय इति ॥ ६ ॥ नन्वेवं सर्वानुमोदने वित्तक्षयप्रसंगात्कुतो जीवनं कुतो वा कर्मकरणं तत्राह । दिव्यं वृष्ट्यादिभिर्जातं धान्यादि । भौमं निधानादि । आंतरिक्षमकस्मादेव प्राप्तम् । एवं स्वत एवाच्युतनिर्मितं दैवलब्धं यत् । एतत्पूर्वोक्तं कर्मादि ॥ ७ ॥ दैवाद्भूरिलाभे जातेऽपि तत्राभिमानो

रिंचान्विरिंचपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ इति नवमे टीकायां पंचमोऽध्यायः ॥ ५ ॥ षष्ठारंभेऽम्बरीषस्य वंशमुक्त्वा ततः परम् ॥ षष्ठाध्यायविस्तार्येक्ष्वा-
कोर्वंश उच्यते ॥ १ ॥ तत्र षष्ठे शशादादिर्मांधात्रंतो निरूप्यते ॥ प्रसंगात्सौभरेराख्या मांधातृतनयापतेः ॥ २ ॥ १ ॥ तंतवे संतानार्थम् ॥ २ ॥ ये आंगिरसा जनिता एते रथीतरस्य क्षेत्रे प्रसूत-
त्वेन रथीतरगोत्राः संतोंऽगिरसो वीर्येण प्रसूतत्वादांगिरसाश्च । पुनरपि रथीतराणामन्येषां जातानां प्रवरा मुख्याः स्मृताः । यतः क्षत्रोपेता ब्राह्मणा इत्यर्थः ॥ ३ ॥ तदेवं मनोर्दशसु पुत्रेषु पृषध्रश्च
कविश्च विरक्तत्वान्न वंशप्रवर्तकौ करूषादीनां च सप्तानां वंशास्तारतम्यक्रमेणोक्ताः इदानीमतिविततमिक्ष्वाकोर्वंशमाह । क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावः । क्षुतं कुर्वतो मनोर्घ्राणतो जज्ञे ।
श्रद्धायां जनयामास दश पुत्रानिति पूर्वोक्तं बाहुल्याभिप्रायेणेति द्रष्टव्यम् । पुत्राणां शते ज्येष्ठाः ॥ ४ ॥ आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः । तस्मिन्पुरस्तात्समुद्रपर्यंतं मंडलविभागेन

षचरितं नाम पंचमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ विरूपः केतुमाञ्शंभुरंबरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥
रथीतरस्याप्रजस्य भार्यायां तंतवेऽर्थितः ॥ अंगिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥ एते क्षेत्रे प्रसूता वै पुनस्त्वांगिरसाः स्मृताः ॥ रथी-
तराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥ क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ॥ तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदंडकाः ॥ ४ ॥ तेषां पुर-
स्तादभवन्नार्यावर्ते नृपा नृप ॥ पंचविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥ स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ॥ मांसमानीयतां
मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥ तथेति स वनं गत्वा मृगान्हत्वा क्रियार्हणान् ॥ श्रांतो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥ शेषं
निवेदयामास पित्रे तेन च तद्गुरुः ॥ चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ॥ देशान्निःसारया-
मास सुतं त्यक्तविधिं रुषा ॥ ९ ॥ स तु विप्रेण संवादं जापकेन समाचरन् ॥ त्यक्त्वा कलेवरं योगी स तेनावापयत्परम् ॥ १० ॥ पितर्युपरतेऽ-
भ्येत्य विकुक्षिः पृथिवीमिमाम् ॥ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥ पुरंजयस्तस्य सुत इंद्रवाह इतीरितः ॥ ककुत्स्थ इति चाप्युक्तः
शृणु नामानि कर्मभिः ॥ १२ ॥ कृतांत आसीत्समरो देवानां सह दानवैः ॥ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥ वचनाद्देवदेवस्य
विष्णोर्विश्वात्मनः प्रभोः ॥ वाहनत्वे वृतस्तस्य बभूवेंद्रो महावृषः ॥ १४ ॥ स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्शितान् ॥ स्तूयमानः समारुह्य

पंचविंशतिर्नृपा अभवन् । हे नृप ! तथैव पश्चाच्च पंचविंशतिः । मध्ये तु ज्येष्ठास्त्रयः । अपरे त्वन्यतो दक्षिणोत्तरादिषु ॥ ५ ॥ विकुक्षिरेव शशाद इति विश्रुत इति वक्ष्यति तत्र हेतुमाह । स
एकदेति चतुर्भिः ॥ ६ ॥ क्रियार्हणान् श्राद्धार्हान् । आददभक्षयत् ॥ ७ ॥ तद्गुरुर्वसिष्ठः प्रोक्षणाय श्राद्धोचितसंस्काराय ॥ ८ ॥ त्यक्तो विधिः सदाचारो येन तम् ॥ ९ ॥ स त्विक्ष्वाकुः जापकेन
वसिष्ठेन । राज्यभोगेन विरक्तो योगी संस्तेन योगेन कलेवरं त्यक्त्वा स यत्परं तत्त्वं तदवाप ॥ १० ॥ शासत्पालयन्हरिमीजे ॥ ११ ॥ दैत्यपुरस्य जयात्पुरंजयः इंद्रो वाहो यस्येतींद्रवाहः
ककुदि स्थितत्वात्ककुत्स्थ इति च शशादसुतस्य त्रीणि नामानि तत्तत्कर्मनिमित्तानि ॥ १२ ॥ तान्येव व्याचक्षाण आह कृतांत इति सप्तभिः । कृतं विश्वमंतयतीति तथा ! पार्ष्णिग्राहः सहायः

॥ १३ ॥ इंद्रो यदि मम वाहनं स्यात्तर्हि दैत्यान्हनिष्यामीति तेन वाहनत्वेन वृतः सन्निन्द्रो लज्जया तदनंगीकुर्वन्विष्णोर्वचनात्तस्य वाहनत्वाय महान्वृषो बभूवेत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ येऽभिमुखं ययुस्तान् यमं दर्शयितुं सदेहानेव भल्लैरनयदित्यर्थः ॥ १७ ॥ तच्च दृष्ट्वाऽन्ये दुद्रुवुः । स्वमालयं पातालम् ॥ १८ ॥ इति एतैः कर्मभिः पुरंजयादिनामभिः आहूतो व्याहृतः । पाठांतरे आहूत इत्यर्थः ॥ १९ ॥ २० ॥ शाबस्तिः शाबस्तस्य पुत्रः कुवलयाश्वक एव धुंधुमार इति ख्यातः ॥ २१ ॥ तत्र कारणमाह । य इति । सुतानामेकविंशत्या सहस्रैर्वृतः सन्हतवान् ॥ २२ ॥ धुंधुमार इति चेति चकारस्यान्वयः ॥ २३ ॥ २४ ॥ अथ तस्मान्निकुंभात्कृशाश्वः ॥ २५ ॥ भार्याणां शतेन सह अस्य पुत्रार्थमिन्द्रदेवत्यामिष्टिं वर्तयामासुः । स्मेत्याश्चर्यं ॥ २६ ॥ तदेवाह

युयुत्सुः ककुदि स्थितः ॥ १५ ॥ तेजसाऽप्यायितो विष्णोः पुरुषस्य परात्मनः ॥ प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् ॥ १६ ॥ तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् ॥ यमाय भल्लैरनयद्दैत्यान्येऽभिययुर्मृधे ॥ १७ ॥ तस्येषुपाताभिमुखं युगांताग्निमिवोल्बणम् ॥ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ॥ प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥ १९ ॥ पुरंजयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ॥ विश्वरंधिस्ततश्चंद्रो युवनाश्वश्च तत्सुतः ॥ २० ॥ शाबस्तस्तत्सुतो येन शाबस्ती निर्ममे पुरी ॥ बृहदश्वस्तु शाबस्तिस्ततः कुवलयाश्वकः ॥ २१ ॥ यः प्रियार्थमुतंकस्य धुंधनामासुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥ २२ ॥ धुंधुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ धुंधोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ॥ दृढाश्वपुत्रो हर्यश्वो निकुंभस्तत्सुतः ॥ २४ ॥ बर्हणाश्वो निकुंभस्य कृशाश्वोऽथास्य सेनजित् ॥ युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥ भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ॥ इष्टिं स्म वर्तयांचक्रुरैंद्रीं ते सुसमाहिताः ॥ २६ ॥ राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ॥ दृष्ट्वा शयानान्विप्रांस्तान्पपौ मंत्रजलं स्वयम् ॥ २७ ॥ उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ॥ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥ राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ॥ ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ॥ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥ कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ॥ मां धाता वत्स मा रोदीरितींद्रो देशिनीमदात् ॥ ३१ ॥ न ममार पिता तस्य विप्रदेवप्रसादतः ॥ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥ त्रसद्दस्युरितींद्रोऽंग विदधे नाम तस्य वै ॥ यस्मात्त्रसंति ह्युद्विग्ना दस्यवो

राजेति षड्भिः । तर्षितस्तृषितः सन् जलार्थं प्रविष्टो मंत्राभिमंत्रितं जलं पत्न्यै देयं स्वयं पपौ ॥ २७ ॥ व्युदकं निरुदकम् ॥ २८ ॥ अहो दैवबलमेव मुख्यं बलं पुरुषबलं तु न किञ्चिदिति वदंत ईश्वराय नमस्कारं चक्रुः ॥ २९ ॥ ३० ॥ अयं कं धास्यतीति दुःखितैर्विप्रैरुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रो मां धाता पाता हे वत्स ! मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमदादित्यर्थः ॥ ३१ ॥ तस्य पिता युवनाश्वो भिन्नकुक्षिरपि न ममार किन्तु कालांतरे तपसा सिद्धिमन्वगात् ॥ ३२ ॥ मांधातुर्महिमानमाह त्रसद्दस्युरिति षड्भिः । अंग हे राजन्यस्मान्मांधातुर्दस्यव उद्विग्नाः

कंपिताः संतस्त्रसंत्यत इंद्रो यस्य त्रसदस्युरिति नाम विदधे स मांधताऽवनीमेकः शशासेत्युत्तरेणान्वयः ॥ ३३ ॥ अच्युतस्य तेजसा । अप्रच्युततेजसेति वा ॥ ३४ ॥ आत्मविदपि स यज्ञं विष्णुमीजे । तमेव विशिनष्टि सर्वदेवमयमिति सार्द्धेन ॥ ३५ ॥ ३६ ॥ प्रतितिष्ठत्यस्तं गच्छति ॥ ३७ ॥ ३८ ॥ प्रसंगात्सौभरेश्चरितमाह तेषामिति यावत्समाप्ति । तेषां स्वसारो मांधातुः कन्याः । ननु महातापसस्य कुतो विवाहप्रसंगः कथं वा जराजर्जरं तं राजकन्या वव्रिरे तदाह । यमुनांतर्जल इति षड्भिः ॥ ३९ ॥ नृपं मांधातारम् ॥ ४० ॥ सोऽपि मांधाता स्वयंवरे कामं गृह्यतामित्याह स विप्रः स्त्रीणामप्रियं मां विचिन्त्यानेनाहं प्रत्युक्तोऽत आत्मानं तथा साधयिष्यामीति व्यवसितो निश्चितवानिति द्वयोरन्वयः । अप्रियत्वे हेतुः । जरठो वृद्धः वलीभिर्युक्तः पलितश्च । एजत्कः कंपमानशिराः । तापसत्वादिना वाऽसंमतोऽहमिति कृत्वा ॥ ४१ ॥ तथेत्यस्य प्रपंचः । सुरस्त्रीणामपीप्सितं किं पुनर्मनुजेंद्राणां याः स्त्रियस्तासामिति ॥ ४२ ॥ ततः किं वृत्तं

रावणादयः ॥ ३३ ॥ यौवनाश्वोऽथ मांधाता चक्रवर्त्यवनीं प्रभुः ॥ सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥ ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्वात्मकमतींद्रियम् ॥ ३५ ॥ द्रव्यं मंत्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ॥ धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥ ३६ ॥ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ॥ ३७ ॥ शशबिंदोर्दुहितरि बिंदुमत्यामधान्नृपः ॥ पुरुकुत्समंबरीषं मुचुकुंदं च योगिनम् ॥ ३८ ॥ तेषां स्वसारः पंचाशत्सौभरिं वव्रिरे पतिम् ॥ यमुनांतर्जले मग्नस्तप्यमानः परं तपः ॥ ३९ ॥ निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ॥ ४० ॥ सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्या स्वयंवरे ॥ स विचिंत्याप्रियं स्त्रीणां जरठोऽयमसंमतः ॥ वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥ साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणामभीप्सितम् ॥ किं पुनर्मनुजेंद्राणामिति व्यवसितः प्रभुः ॥ ४२ ॥ मुनिः प्रवेशितः क्षत्त्रा कन्यांतःपुरमृद्धिमत् ॥ वृतश्च राजकन्याभिरेकः पंचाशताऽवरः ॥ ४३ ॥ तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ॥ ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥ स बह्वृचस्ताभिरपारणीयतपःश्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषु नानोपवनामलांभः सरःसु सौगंधिककाननेषु ॥ ४५ ॥ महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलंकृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृंगवंदिषु ॥ ४६ ॥ यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ॥ विस्मितः स्तंभमजहात्सार्वभौमश्रियान्वितः ॥ ४७ ॥ एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः ॥ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥ स कदाचिदुपासीन आत्मापह्नवमात्मनः ॥ ददर्श बह्वृचाचार्यो

तदाह मुनिरिति द्वाभ्याम् । क्षत्त्रा प्रतीहारेण । पंचाशताऽपि राजकन्याभिः स एक एव वरो वृतः ॥ ४३ ॥ ४४ ॥ तस्य गार्हस्थ्यं वर्णयति । स इति चतुर्भिः । बह्वृच इति मंत्रसामर्थ्यमुक्तम् । ताभिः स रेम इत्युत्तरेणान्वयः । क्व रेमे । अपारणीयं दुरंतं यत्तपस्तस्य श्रिया समृद्ध्याऽनर्घ्याः परिच्छदा येषु तेषु गृहेषु तथा नानाविधेषूपवनेषु च अमलान्यंभांसि येषां तेषु सरःसु च । कथंभूतेषु । सौगंधिकानां कह्लाराणां च काननानि स्तोमा येषु ॥ ४५ ॥ कथंभूतेषु गृहादिषु । स्वलंकृताः स्त्रियः पुरुषाश्च येषु अनुगायंतो द्विजाश्च पक्षिणो भृंगाश्च वंदिनश्च येषु । कथंभूतः । महार्हशय्यादिभिरुपलक्षितः सन् ॥ ४६ ॥ स्तंभं गर्वम् ॥ ४७ ॥ आज्यस्तोकैर्घृतबिन्दुभिः ॥ ४८ ॥ इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह स कदाचिदिति सप्तभिः । आत्मनो मनसो हेतो-

रात्मनोऽपह्नवं तपोहानिं ददर्श ॥ ४९ ॥ संश्वासौ चरितव्रतश्च योऽहं तस्य ब्रह्म तपः ॥ ५० ॥ मिथुनव्रतिनां दांपत्यधर्मवताम् । चेद्यदि प्रसङ्गस्तर्हि । तद्व्रतिषु ईश्वरार्थधर्मपरेष्वकार्य इति शेषः ॥ ५१ ॥ सङ्गाज्जातं दोषं प्रपंचयति । एक इति । पंचाशता भार्याभिः सम्बंधात्पंचाशदासमभूवमित्यर्थः । ततश्च सुतैः पंचसहस्रसर्ग आसम् । प्रत्येकं तासु पुत्रशतरूपेणोत्पत्तेः । उभयकृत्यान्यैहिक-पारत्रिकाणि कर्माणि तद्विषयाणां मनोरथानाम् । अर्थभावः परुषार्थबुद्धिमान् ॥ ५२ ॥ न्यासोऽत्र संगत्याग एव । वानप्रस्थधर्म इत्यर्थः ॥ ५३ ॥ ५४ ॥ आध्यात्मिकीं गतिं ब्रह्मणि लयम् ॥ ५५ ॥ इति नवमस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ मांधातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ॥ पुरुकुत्सस्य चाख्यानं हरिश्चंद्रस्य चोत्तमम् ॥ १ ॥ पुत्रप्रवरः पुत्रश्रेष्ठः । स पितामहेन युवनाश्वेन प्रवृतः पुत्रत्वेन स्वीकृतः अतएव तस्य मांधातृप्रवर्यत्वम् । तत्सुतोंऽबरीषस्य सुतः इमे यौवनाश्वांबरीषहारीता मांधातृगोत्रस्य प्रवरा अवांतरविशेषप्रवर्तकाः । यद्वा यौवनाश्वविशेषणम् । पितामहेन

मीनसंगसमुत्थितम् ॥ ४९ ॥ अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ॥ अंतर्जले वारिचरप्रसंगात्प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥५०॥ संगं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिंद्रियाणि ॥ एकश्चरन्रहसि चित्तमनंत ईशे युंजीत तद्व्रतिषु साधुषु चेत्प्रसंगः ॥ ५१ ॥ एकस्तपस्व्यहमथांभसि मत्स्यसंगात्पंचाशदासमुत पंचसहस्रसर्गः ॥ नांतं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥ एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः ॥ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥ तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्षणमात्मवान् ॥ सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥ ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ॥ अन्वीयुस्तत्प्रभावेन अग्निं शांतमिवार्चिषः ॥ ५५ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे सौभर्याख्याने षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ मांधातुः पुत्रप्रवरो योंऽबरीषः प्रकीर्तितः ॥ पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ॥ हारीतस्तस्य पुत्रोऽभून्मांधातृप्रवरा इमे ॥ १ ॥ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ॥ तया रसातलं नीतो भुजगेंद्रप्रयुक्तया ॥ २ ॥ गंधर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक् ॥ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ ३ ॥ त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ निबंधनः ॥ ४ ॥ तस्य सत्यव्रतः पुत्रस्त्रिशंकुरिति विश्रुतः ॥ प्राप्तश्चांडालतां शापाद्गुरोः कौशिकतेजसा ॥ ५ ॥ सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ पातितोऽवाक्शिरा देवैस्तेनैव स्तंभितो बलात् ॥ ६ ॥ त्रैशंकवो हरिश्चंद्रो

मांधात्रा सह आर्षेयवरणे प्रवृतः मांधाता प्रवरो येषां ते इमे अंबरीषयौवनाश्वहारीताः । यथाऽऽहाश्वलायनः । हरितकुत्सपिंगदर्भैमगवानामांगिरसांबरीषयौवनाश्वेति ॥ मांधातारं हैके ब्रुवते ॥ अतीत्यांगिरसं मांधात्रंबरीषयौवनाश्वेतीति ॥ १ ॥ पुरुकुत्सस्य वंशं कथयिष्यन्नादौ तावत्तस्य विवाहं प्रभावं चाह । उरगैर्भ्रातृभिर्या दत्ता नर्मदा तया ॥ २ ॥ वध्यान्वधार्हान् । स च पुरुकुत्सो नागाल्लब्धवरोऽभूत् । वरमाह । इदं नर्मदया रसातलानयनादिकं स्मरतां सर्पादभयमिति ॥ ३ ॥ देहकृत्पिता । त्रसदस्योः सुतोऽनरण्य इत्यर्थः ॥ ४ ॥ त्रयः शंकव इव दुःखहेतवो दोषा यस्यासौ त्रिशंकुः । तदुक्तं हरिवंशे । पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ॥ अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रम इति । परिणीयमानविप्रकन्याऽपहरणात्क्रुद्धस्य गुरोः पितुः शापात् । कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेन ॥ ५ ॥ तेनैव कौशिकेन ॥ ६ ॥ पक्षिणोराडीबकयोः । विश्वामित्रो राजसूयदक्षिणाछलेन हरिश्चंद्रसर्वस्वमपहृत्य यातयामास तच्छ्रुत्वा कुपितो वसिष्ठोऽपि विश्वामित्रं

त्वमाडी भवेति शशाप सोऽपि त्वं बको भवेति वसिष्ठं शशाप तयोश्च युद्धमभूदिति प्रसिद्धम् ॥ ७ ॥ हरिश्चंद्रो ह वैधस ऐक्ष्वाको राजा पुत्र आसेत्यादिश्रुतिप्रसिद्धं हरिश्चंद्रस्य चरितमाह । सोऽनपत्य इत्यादि यावत्समाप्ति । कथं शरणं यातस्तदाह । पुत्रो मे जायताम् ॥ ८ ॥ यदि वीरः पुत्रो मे जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजामीति भाषया तथेत्युक्तवता वरुणेन निमित्तेनास्य रोहितो नाम पुत्रो जातः ॥ ९ ॥ जाते पुत्रे स वरुणो जातः सुतो मामनेन यजस्वेत्यब्रवीत् । यदा पशुर्निर्दशो निर्गतदशदिवसः स्यादित्यत्र स राजाऽब्रवीदित्यनुषंगः ॥ १०–१३ ॥ राजन् हे वरुण ! राजन्यः पशुर्यदा सान्नाहिकः कवचसंबंधार्हः संग्रामसमर्थः अथ तदा शुचिः ॥१४॥ इत्येवं तं तं कालं वंचयता राज्ञोक्तः प्रार्थितो देवो वरुणस्तं तं कालं प्रत्यैक्षतेत्यर्थः ॥ १५ ॥ चिकीर्षितमात्मना पशुना वरुणयजनम् ॥ १६ ॥ ततश्च कुपितेन वरुणेन ग्रस्तमत एव जातं महदुदरं यस्य तं पितरं श्रुत्वा ॥ १७ ॥ समां वर्षम् ॥ १८ ॥ द्वितीये च वर्षे वृत्रहा अभ्येत्याभ्येत्य तथैव तं प्रतिषेधन्किंचित्किंचिदाह ॥ १९–२१ ॥ वरुणेन मुक्तमुदरं यस्य । महत्तु कथा यस्य सः । आत्मवान् जमदग्निरध्वर्युरभूत् ॥ २२ ॥ अयास्यो मुनिः सामग उद्गाता अभूदित्यर्थः ॥ २३ ॥ उपरिष्टाद्विश्वामित्रसुताख्यानप्रसंगेन ॥ २४ ॥ अविहतां गतिं ज्ञानम् । तामवगतिमाह सार्द्धाभ्याम् । मनः पृथिव्यां धारयन्ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहंस्तां च हित्वा मुक्त्वा मुक्तबंधन-

विश्वामित्रवसिष्ठयोः ॥ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥ सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ८ ॥ यदि वीरो महाराज तेनैव त्वां यजे इति ॥ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥ जातः सुतो ह्यनेनांग मां यजस्वेति सोऽब्रवीत् ॥ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ १० ॥ निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ॥ दंताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥ ११ ॥ जाता दंता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ यदा पतंत्यस्य दंता अथ मेध्यो भवेदिति ॥ १२ ॥ पशोर्निपतिता दंता यजस्वेत्याह सोऽब्रवीत् ॥ यदा पशोः पुनर्दंता जायंतेऽथ पशुः शुचिः ॥ १३ ॥ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः ॥ १४ ॥ इति पुत्रानुरागेण स्नेहयंत्रितचेतसा ॥ कालं वंचयता तं तमुक्तो देवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुःपाणिररण्यं प्रत्यपद्यत ॥ १६ ॥ पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ॥ रोहितो ग्राममेयाय तमिंद्रः प्रत्यषेधत ॥ १७ ॥ भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत्समाम् ॥ १८ ॥ एवं द्वितीये तृतीये चतुर्थे पंचमे तथा ॥ अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वा ह वृत्रहा ॥ १९ ॥ षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ॥ उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥ शुनःशेपं पशुं पित्रे प्रदाय समवंदत ॥ ततः पुरुषमेधेन हरिश्चंद्रो महायशाः ॥ २१ ॥ मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः ॥ विश्वामित्रोऽभवत्तस्मिन्होता चाध्वर्युरात्मवान् ॥ २२ ॥ जमदग्निरभूद्ब्रह्मा वसिष्ठोऽयास्यसामगः ॥ तस्मै तुष्टो ददाविंद्रः शातकौंभमयं रथम् ॥ २३ ॥ शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते ॥ सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ २४ ॥ विश्वामित्रो भृशं प्रीतो ददा-

स्तस्थावित्यन्वयः । मनोमूलो हि संसारः मनश्चान्नमयम् । अन्नमयं हि सौम्य मन इति श्रुतेः । अतोऽन्नशब्दवाच्यायां पृथिव्यां मनो धारयन्नेकीकुर्वंस्तां पृथिवीमद्भिरेकीकुर्वन्नपस्तेजसा तत्तेजोऽनिलेन ॥ २५ ॥ तं च खे आकाशे तच्च भूतादावहंकारे तंच भूतादिमहंकारम् महात्मनि महत्तत्त्वे तस्मिन्विषयाकारं व्यावर्त्य ज्ञानकलां ज्ञानांशमात्मत्वेन ध्यात्वा तया ध्यानवृत्तिरूपयाऽऽत्मावरकमज्ञानं विनिर्दहन् ॥ २६ ॥ निर्वाणसुखसंविदा तां च हित्वा मुक्तबंधः सन्ननिर्देश्येनाप्रतर्क्येण स्वेन भावेन स्वस्वरूपेण तस्थौ ॥ २७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ॥ सगरः कपिलात्तेपान्निर्दग्धा यस्य सूनवः ॥ १ ॥ चंपस्तस्मादभूत् येन चंपापुरी निर्मिता । अतश्चंपात्सुदेवः ॥ १ ॥ हता भूर्यस्य ॥ २ ॥

वविहतां गतिम् ॥ मनः पृथिव्यां तामद्भिस्तेजसापोऽनिलेन तत् ॥ २५ ॥ खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ॥ तस्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥ २६ ॥ हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ॥ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबंधनः ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे हरिश्चंद्रोपाख्यानं नाम सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ हरितो रोहितसुतश्चंपस्तस्माद्विनिर्मिता ॥ चंपापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥ अरुकस्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः ॥ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥ २ ॥ वृद्धं तं पंचतां प्राप्तं महिष्यनुमरिष्यती ॥ और्वेण जानताऽऽत्मानं प्रजावंतं निवारिता ॥ ३ ॥ आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽधसा सह ॥ सह तेनैव संजातः सगराख्यो महायशाः ॥ ४ ॥ सगरश्चक्रवर्त्यासीत्सागरो यत्सुतैः कृतः ॥ यस्तालजंघान्यवनान् शकान्हैहयबर्बरान् ॥ ५ ॥ नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ॥ मुंडान् श्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुंडितान् ॥ ६ ॥ अनंतर्वाससः कांश्चिदबहिर्वाससोऽपरान् ॥ सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥ और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरंदरः ॥ ८ ॥ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ॥ हयमन्वेषमाणास्ते समंतान्न्यखनन्महीम् ॥ ९ ॥ प्रागुदीच्यां दिशि हयं ददृशुः कपिलांतिके ॥ एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥ १० ॥ हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ॥ उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥ स्वशरीराग्निना तावन्महेंद्रहृतचेतसः ॥ महद्व्यतिक्रमहता भस्मसादभवन्क्षणात् ॥ १२ ॥ न साधुवादो मुनिकोपभर्जिता नृपेंद्रपुत्रा इति सत्त्वधामनि ॥ कथं तमो रोषमयं विभाव्यते जगत्पवि-

और्वेण ऋषिणा । आत्मानं देहम् । प्रजावंतं सगर्भम् ॥ ३ ॥ गरो विषम् । तेन गरेण सहैव जातः ॥ ४ ॥ ५ ॥ गुरुवाक्येनौर्ववचनेन । कांश्चिदहत्वैव विकृतवेषिणश्चक्रे । तदेवाह । मुंडानिति मुक्तकेशानर्धमुंडितांश्च ॥ ६ ॥ ७ ॥ और्वेणोपदिष्टो योग उपायस्तेन ॥ ८ ॥ तस्य द्वे भार्ये सुमतिः केशिनी च । तत्र सुमत्याः पुत्राणां प्रभावं मृत्युं चाह । सुमत्या इति षड्भिः ॥ ९ ॥ ॥ १० ॥ एष वाजिहर इति ब्रुवंतोऽभिययुः । षष्टिसहस्राणि परिच्छेदकतया संति येषाम् । उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥ १२ ॥ केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयंति तन्निराकरोति । नेति । कुत इत्यत आह । सत्त्वधामनि शुद्धसत्त्वमूर्तौ । जगतः पवित्रः शुद्धिकर आत्मा यस्य तस्मिन्कथं विभाव्यते संभाव्यते । असंभावनायां दृष्टांतः । भुवो रजः खे कथं

संभाव्यते इति ॥ १३ ॥ किंच । यस्य येनेरिता प्रवर्तिता तस्य विपश्चितः सर्वज्ञस्य कथं पृथङ्मतिरिरिमित्रादिभेददृष्टिः ॥ १४ ॥ तदेवं सुमत्याः पुत्रेषु मृतेषु केशिन्याः पौत्रेणांशुः सभाजनः पितृव्योद्धरणप्रयत्नश्च कृत इति दर्शयितुमाह । योऽसमंजस इत्युक्तः केवलमज्ञैर्वस्तुतस्तु समंजस एव । स तु केशिन्याः सुतः क्षेत्रजत्वमिव प्रतीतं वारयति । तस्यैव नृपस्यात्मनो देहाज्जातः ॥१५॥ तस्य कथामाह चतुर्भिः । असमंजसः पुरा पूर्वजन्मनि योगी सत्संगाद्धेतोर्योगाद्विचालितोऽत इदानीं जातिस्मरः सत्संगपरिहाराय जनमुद्वेजयन् लोके गर्हितं ज्ञातीनां च विप्रियं कर्माचरन् क्रीडतो बालान्सरय्वां प्रास्यत प्राक्षिपादिति द्वयोरन्वयः ॥ १६ ॥ १७ ॥ एवंविधं वृत्तं कर्म यस्य सः ॥ १८ ॥ १९ ॥ पितृव्यख्यातमनु यः पंथास्तं ययौ भस्मांति भस्मसमीपे ॥ २० ॥ २१ ॥ अजानंतोऽवजानतोऽप्यनुकंप्या वयं त्विति ॥ तुष्टाव षड्भिरीशानमंशुमानेवमाशयः ॥ अजनोऽजो ब्रह्माऽपि त्वामद्याऽपि न पश्यति न च बुध्यते । कथंभूतम् । आत्मनः स्वस्मात्परं परमेश्वरम् । कैर्हेतुभिः । समाधियुक्तिभिः समाधिनाऽप्यपरोक्षं न पश्यति युक्तिभिः परोक्षमपि सम्यङ्न बुध्यत इत्यर्थः । अपरेऽर्वाचीनास्तु कुतस्त्वां पश्येयुः । अर्वाचीनत्वे हेतुः । तस्य ब्रह्मणो मनश्च शरीरं

त्रात्मनि खे रजो भुवः ॥ १३ ॥ यस्येरिता सांख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ॥ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥ योऽसमंजस इत्युक्तः स केशिन्या नृपात्मजः ॥ तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥ असमंजस आत्मानं दर्शयन्नसमंजसम् ॥ जातिस्मरः पुरा संगाद्योगी योगाद्विचालितः ॥ १६ ॥ आचरन्गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ॥ सरय्वां क्रीडतो बालान्प्रास्यदुद्वेजयन् जनम् ॥ १७ ॥ एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ॥ योगैश्वर्येण बालांस्तान्दर्शयित्वा ततो ययौ ॥ १८ ॥ अयोध्यावासिनः सर्वे बालकान्पुनरागतान् ॥ दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितो राज्ञा तुरंगान्वेषणे ययौ ॥ पितृव्यखातानुपथं भस्मांति ददृशे हयम् ॥ २० ॥ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ॥ अस्तौत्समाहितमनाः प्रांजलिः प्रणतो महान् ॥ २१ ॥ अंशुमानुवाच ॥ न पश्यति त्वां परमात्मनो जनो न बुद्ध्यतेऽद्यापि समाधियुक्तिभिः ॥ कुत परेतस्य मनः शरीरधीविसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥ ये देहभाजस्त्रिगुणप्रधाना गुणान्विपश्यंत्युत वा तमश्च ॥ यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिः प्रकाशाः ॥ २३ ॥ तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनंदनाद्यैर्मुनिभिर्विभाव्यं कथं हि मूढः परिभावयामि ॥ २४ ॥ प्रशांतमायागुणकर्मलिंगमनामरूपं सदसद्वि-

च धीश्च सत्त्वतमोरजःकार्याणि ताभिर्ये विविधा देवतिर्यङ्नराणां सर्गास्तेषु सृष्टास्तत्रापि वयमप्रकाशा अज्ञाः कुतः पश्यामेत्यर्थः ॥ २२ ॥ अपरे तर्हि किं पश्यंति तदाह । ये देहभाजस्ते स्वस्मिन्सम्यक् स्थितमपि त्वां न विदुः किंतु गुणानेव विपश्यंति । अथवा न गुणानपि तु तम एव पश्यंति । यतस्त्रिगुणा बुद्धिरेव प्रधानं येषामतो बहिरेव प्रकाशो ज्ञानं येषाम् । बुद्धिपरतंत्रतया जाग्रत्स्वप्नयोर्विषयान्पश्यंति सुषुप्तौ तम एव केवलं न तु निर्गुणं त्वाम् । सर्वत्र हेतुः । यद्यतः यस्य तव माययेति वा मोहितं चेतो येषां ते ॥ २३ ॥ तथाऽप्यहं विचारेण ज्ञास्यामीति चेत्तत्राह । तं त्वामहं विमूढः कथं परिभावयामि विचारयामि । कथंभूतम् । ज्ञानघनं शुद्धज्ञानमूर्तिम् । स्वत एव प्रध्वस्तौ मायागुणनिमित्तौ भेदमोहौ येषां तैर्विभाव्यं विचिंत्यम् । अयं भावः । ज्ञानघनत्वान्न तावज्ज्ञानविषयत्वम् । विचारविषयत्वेऽपि मायागुणैरभिभूतोऽहं न विचारे समर्थ इति ॥ २४ ॥ हे प्रशांत तस्मात्त्वां पुरुषं पुराणं केवलं नमामीत्यन्वयः । पुराणपुरुषत्वे हेतुः मायाया

गुणाः कर्माणि च विश्वसृष्ट्यादीनि लिंगानि च ब्रह्मादिरूपाणि यस्य तम् । प्रशांतत्वे हेतुः । सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां वा विमुक्तम् । अतोऽनामरूपं तत्तत्कृतनामरूपशून्यं किंतु ज्ञानोपदेशाय गृहीतः प्रकटितो देहः शुद्धसत्त्वमूर्त्तिर्येन तम् । यद्वा हे अगुणेति च संबोध्य कर्मभिः सृष्ट्यादिकार्यैर्लिङ्गानि यस्येति योज्यम् । यद्वा प्रशांता मायागुणादयो यस्मिन्नित्येकमेव पदम् ॥ २५ ॥ स्वभाग्यं श्लाघते त्वन्मायेति द्वाभ्याम् । कामादिभिर्विभ्रांतानि चेतांसि येषां ते इमे सर्वे गृहादिषु भ्रमंति ॥ २६ ॥ हे सर्वभूतात्मन् ! नोऽस्माकं त्वत्कृपयैव घटितात्त्वद्दर्शनादतिदृढोऽपि मोहमयः पाशश्छिन्नः । कथंभूतः । कामादीनामाशय आश्रयः । त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः ॥ २७ ॥ २८ ॥ अश्वं लब्ध्वाऽपि साकांक्षं प्रत्याह । इमे चेति ॥ २९ ॥ तं परिक्रम्येति शुकोक्तिः ॥ ३० ॥ ३१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमेंऽशुमतो वंशः खट्वांगावधि वर्ण्यते ॥ गंगां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १ ॥ यथा

मुक्तम् ॥ ज्ञानोपदेशाय गृहीतदेहं नमाम हे त्वां पुरुषं पुराणम् ॥ २५ ॥ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ॥ भ्रमंति कामलोभेर्ष्यामोहविभ्रांतचेतसः ॥ २६ ॥ अद्य नः सर्वभूतात्मन्कामकर्मेंद्रियाशयः ॥ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥ श्रीशुक उवाच ॥ इत्थं गीतानुभावस्तं भगवान्कपिलो मुनिः ॥ अंशुमंतमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥ श्रीभगवानुवाच ॥ अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ॥ इमे च पितरो दग्धा गंगांभोऽर्हंति नेतरत् ॥ २९ ॥ तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ॥ सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥ राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबंधनः ॥ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे सगरोपाख्यानेऽष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ अंशुमांश्च तपस्तेपे गंगानयनकाम्यया ॥ कालं महांतं नाशक्नोत्ततः कालेन संस्थितः ॥ १ ॥ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ॥ भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ २ ॥ दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ॥ इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥ ३ ॥ कोऽपि धारयिता वेगं पतंत्या मे महीतले ॥ अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥ ४ ॥ किं चाहं न भुवं यास्ये नरा मय्यामृजंत्यघम् ॥ मृजामि तदघं कुत्र राजंस्तत्र विचिंत्यताम् ॥ ५ ॥ भगीरथ उवाच ॥ साधवो न्यासिनः शांता ब्रह्मिष्ठा लोकपावनाः ॥ हरंत्यघं तेंऽगसंगात्तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥ धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ॥ यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तंतुषु ॥ ७ ॥ इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम् ॥ कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥ ८ ॥ तथेति राज्ञाऽभिहितं सर्वलोकहितः

सगरः पौत्राय राज्यं दत्त्वा तपस्तेपे तथांऽशुमांश्च स्वपुत्राय राज्यं दत्त्वा महांतं कालं तपस्तेपे इति चकारस्यार्थः । नाशक्नोत् गंगामानेतुमिति शेषः । संस्थितो मृतः ॥ १ ॥ कालं मृत्युमेयिवान्प्राप्तः ॥ २ ॥ तं प्रत्यात्मानं दर्शयामास । ते वरदास्मीति गंगयोक्तः सन्स्वमभिप्रायं पूर्वजोद्धरणं शशंस कथयामास ॥ ३ ॥ आह गंगा । कोऽपि गगनात्पतंत्या मे वेगं धारयिता धारयिष्यति ॥ ४ ॥ किंच । आमृजंति क्षालयिष्यंति तत्रोपायो विचिंत्यताम् ॥ ५ ॥ अघं हरंति हरिष्यंति । अघं भिनत्तीत्यघभित् ॥ ६ ॥ आत्मा कथंभूतः । यस्मिन्निदं विश्वमोतं ग्रथितमूर्द्ध्वतंतुषु शाटीव पट इव प्रोतं च तिर्यक्तंतुषु पट इव । असौ सर्वाधारस्त्वद्वेगं धारयिष्यतीत्यर्थः ॥ ७ ॥ इत्येवं गंगामुक्त्वा । तच्छ्रुत्वेति पाठे श्रावयित्वेत्यर्थः ॥ ८ ॥ राज्ञाऽभिहितं तथेत्यंगीकृत्य । हरेः पादेन

पूतं जलं यस्याः ॥ ९ ॥ १० ॥ ११ ॥ प्रसंगाद्गंगामाहात्म्यमाह चतुर्भिः । यस्या जलस्पर्शमात्रेण तच्च केवलं देहभस्मभिरेव न साक्षात् । ब्रह्मणि स्वकृतेन दंडेन हता अपि तां श्रद्धया ये सेवंते इति शेषः ॥ १२ ॥ तत्प्रपंचयति । भस्मीभूतेनांगेन यः संगस्तेन ॥ १३ ॥ १४ ॥ अनंतस्य विशेषणं संनिवेश्येति त्रैगुण्यं देहसंबंधम् ॥ १५ ॥ १६ ॥ नलस्य सखा । अयान्नाश्वः । तत्सुतः ऋतुपर्णस्य सुतः ॥ १७ ॥ तत्पुत्रः सौदासः ॥ १८ ॥ न रहो न रहस्यम् ॥ १९ ॥ मृगयां चरन्कंचिद्राक्षसं जघान तस्य भ्रातरं मुमोच । स भ्राता पलाय्य गतः ॥ २० ॥ अघमनिष्टम् ।

शिवः ॥ दधारावहितो गंगां पादपूतजलां हरेः ॥ ९ ॥ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ॥ यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥ १० ॥ रथेन वायुवेगेन प्रयांतमनुधावती ॥ देशान्पुनंती निर्दग्धानासिंचत्सगरात्मजान् ॥ ११ ॥ यज्जलस्पर्शमात्रेण ब्रह्मदंडहता अपि ॥ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ १२ ॥ भस्मीभूतांगसंगेन स्वर्याताः सगरात्मजाः ॥ किं पुनः श्रद्धया देवीं ये सेवंते धृतव्रताः ॥ १३ ॥ न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ॥ अनंतचरणांभोजप्रसूताया भवच्छिदः ॥ १४ ॥ सन्निवेश्य मनो यस्मिञ्छ्रद्धया मुनयोऽमलाः ॥ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ १५ ॥ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ॥ सिंधुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥ ऋतुपर्णोऽनलसखो योऽश्वविद्यामयान्नलात् ॥ दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥ १७ ॥ ततः सुदासस्तत्पुत्रो मदयंतीपतिर्नृपः ॥ आहुर्मित्रसहं यं वै कल्माषांघ्रिमुत क्वचित् ॥ वशिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥ १८ ॥ राजोवाच ॥ किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः ॥ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥ श्रीशुक उवाच ॥ सौदासो मृगयां कंचिच्चरन्रक्षो जघान ह ॥ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ २० ॥ स चिंतयन्नघं राज्ञः सूदरूपधरो गृहे ॥ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ २१ ॥ परिवेक्ष्यमाणं भगवान्विलोक्याभक्ष्यमंजसा ॥ राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ २२ ॥ रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् ॥ सोऽप्यपोंऽजलिनादाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥ वारितो मदयंत्याऽपो रुशतीः पादयोर्जहौ ॥ दिशः खमवनीं सर्वं पश्यन् जीवमयं नृपः ॥ २४ ॥ राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौको दंपती द्विजौ ॥ २५ ॥ क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ॥ न भवान्राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ २६ ॥ मदयंत्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥ २७ ॥ देहोऽयं मानुषो

सूदः पाचकस्तद्रूपधरः सन् राज्ञो गृहे वर्तमानः ॥ २१ ॥ अभक्ष्यमंजसा विलोक्य एवं नरमांसव्यवहारेण ॥ २२ ॥ वसिष्ठ एव तं शापं द्वादशवार्षिकं चक्रे ॥ २३ ॥ रुशतीस्तीक्ष्णा अपः स्वपादयोर्जहौ नान्यत्र । तत्र हेतुः । दिशि इति । एवमनेन मित्रसहत्वमपि दर्शितम् । मित्रस्य कलत्रस्य वाचःसहनात् ॥ २४ ॥ तदेवं राक्षसत्वे कल्माषांघ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपंचयति । व्यवायकाल इत्यादिना कर्मणा अप्रजा इत्यंतेन । वनमोको निवासो ययोस्तौ वनौकसौ च तौ दंपती च । पृथक्पदत्वे सकारलोप आर्षः ॥ २५ ॥ अकृता

र्थवद्दीनवत् ॥ २६ ॥ अकृतार्थमसमाप्तरतिम् ॥ २७ ॥ २८ ॥ सर्वभूतानामात्मेति भावनयाऽऽराधयितुमिच्छुः । यद्वा सर्वभूतानामात्मभावेन भूतेषु स्थितमपि गुणैरंतर्हितं ब्रह्मेति संबंधः । पाठांतरे अंतर्हितः सोऽयमित्युत्तरेणान्वयः ॥ २९ ॥ ३० ॥ भ्रूणस्य श्रोत्रियस्य । गर्भस्य सत इति वा । बभ्रोर्गोः । सतां मतो भवान्वधं कथं साधु मन्यते इत्यर्थः ॥ ३१ ॥ क्षणमपि येन विना न जीविष्यामि सोऽयं यदि भक्षः क्रियते तर्हि मृतकं यथा मृतप्रायां मां पूर्वं भक्षय ॥ ३२ ॥ ३३ ॥ दिधिषुं गर्भाधानकर्तारम् ॥ ३४ ॥ आधानान्मैथुनात् । हे अकृतप्रज्ञ ! मृत्युर्मया दर्शितः

राजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ २८ ॥ एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः ॥ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वंतर्हितं गुणैः ॥ २९ ॥ सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ॥ ३० ॥ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते संमतो भवान् ॥ ३१ ॥ यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥ एवं करुणभाषिण्या विलपंत्या अनाथवत् ॥ व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः ॥ ३३ ॥ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचंत्यात्मानमुर्वीशमशपत्कुपिता सती ॥ ३४ ॥ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञदर्शितः ॥ ३५ ॥ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥ ३६ ॥ विशापो द्वादशाब्दांते मैथुनाय समुद्यतः ॥ विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥ ३७ ॥ तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजः ॥ वसिष्ठस्तदनुज्ञातो मदयंत्यां प्रजामधात् ॥ ३८ ॥ स वै सप्तसमा गर्भमबिभ्रन्न व्यजायत ॥ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥ ३९ ॥ अश्वकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥ ततो दशरथस्तस्मात्पुत्र ऐडविडस्ततः ॥ राजा विश्वसहो यस्य खट्वांगश्चक्रवर्त्यभूत् ॥ ४१ ॥ यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं संदधे मनः ॥ ४२ ॥ न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः ॥ न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥ ४३ ॥ न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ न पश्याम्युत्तमश्लोकादन्यत्किंचन वस्त्वहम् ॥ ४४ ॥ देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ न वृणे तमहं कामं भूतभावनभावनः ॥ ४५ ॥ ये विक्षिप्तेंद्रियधियो देवास्ते स्वहृदि स्थितम् ॥ न विंदंति प्रियं शश्वदात्मानं किमुतापरे ॥ ४६ ॥ अथेशमायारचितेषु

॥ ३५ ॥ ३६ ॥ ३७ ॥ तदेवं कर्मणा अप्रजः ॥ ३८ ॥ अबिभ्रद्धारेत्यर्थः । न व्यजायत न प्रासूत अतो वसिष्ठ एव तस्या उदरमश्मना जघान । स उत्पन्नः सुतोऽश्मकः ॥ ३९ ॥ स्त्रीभिः संवेष्ट्य परशुरामात्परिरक्षितोऽतो नारीकवच इत्युक्तः । निःक्षत्रे सति क्षत्रवंशस्य मूलमभवदतो मूलक इति चोक्तः ॥ ४० ॥ ४१ ॥ प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वांगेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति । देवैश्चोक्तं मुहूर्तमात्रमिति । तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे संदधे ॥ ४२ ॥ एतदेव स्वसाधुवृत्तानुस्मरणपूर्वकं तत्कृतेन निश्चयेन दर्शयति ।

नेति सप्तभिः । कुलदैवाद्ब्रह्मकुलात्सकाशान्मे प्राणादयो नातिवल्लभा नातिप्रियाः ॥ ४३ ॥ मह्यं मम ॥ ४४ ॥ भूतभावनो हरिस्तस्मिन्नेव भावना यस्य सोऽहं तं कामं न वृणे ॥ ४५ ॥ तत्र हेतुः । य इति । विक्षिप्तानींद्रियाणि धीश्च येषां ते देवा अपि ॥ ४६ ॥ अथ तस्मात्प्रकृत्या स्वभावेनात्मनि रूढं गुणेषु संगं विश्वकर्तुर्भावेन हित्वा तमेवाहं प्रपद्ये ॥ ४७ ॥ अन्यभावं देहाद्यभिमानरूपमज्ञानं हित्वा ॥ ४८ ॥ स्वं भावमेवाह । यत्तदिति । शून्यवत्कल्पितं वागाद्यविषयत्वात् । वासुदेव इति यं गृणंति । ब्रह्मण एव भक्तानुग्रहार्थमाविष्कृततनोर्वासुदेवत्वात् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे प्राह खट्वांगवंशे श्रीरामसंभवम् ॥ तच्चरित्रं च लंकेशं हत्वाऽयोध्यागमावधि ॥ १ ॥ खट्वांगाच्च दीर्घबाहुः ॥ १ ॥ २ ॥ ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं त्वया मुहुः श्रुतं तथापि संक्षेपतः कथ्यमानं शृणु ॥ ३ ॥ ग्रंथकोटिभिराकीर्णमद्भुतं रामविक्रमम् ॥ अध्यायद्वयतो वक्ष्यन्नेकश्लोके समस्यति ॥ स कोशलेंद्रः श्रीरामो नोऽस्मानवतात्पातु ॥ कथंभूतः । यो गुर्वर्थे पितुः सत्यस्य पालनार्थं त्यक्तराज्यः सन् । पद्मवदतिसुकुमाराभ्यां पद्भ्याम् तदेवाह । प्रियायाः पाणिनाऽपि स्पर्शो नास्ति क्षमा ययोस्ताभ्यां

संगं गुणेषु गंधर्वपुरोपमेषु ॥ रूढं प्रकृत्यात्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥ इति व्यवसितो बुद्ध्या नारायणगृहीतया ॥ हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ४८ ॥ यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ॥ भगवान्वासुदेवेति यं गृणंति हि सात्वताः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे सूर्यवंशानुवर्णने नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ खट्वांगाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततो महाराज तस्माद्दशरथोऽभवत् ॥ १ ॥ तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ॥ अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः ॥ २ ॥ रामलक्ष्मणभरतशत्रुघ्ना इति संज्ञया ॥ तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ३ ॥ गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरींद्रानुजाभ्याम् ॥ वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भत्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेंद्रोऽवतान्नः ॥ ४ ॥ विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ॥ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुंगवाः ॥ ५ ॥ यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ॥ आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभंज मध्ये ॥ ६ ॥ जित्वाऽनुरूपगुणशीलवयोंगरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम् ॥ मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं दर्पं महीमकृत यस्त्रिरराजबी-

प्रतिवनं व्यचरत् । हरींद्रो हनुमान्सुग्रीवो वाऽनुजो लक्ष्मणस्ताभ्यां मृजिताऽपनीता पथरुजा मार्गश्रमो यस्य । शूर्पणख्या वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहारात्प्रियाया विरहस्तेन रुट् तयाऽऽरोपितयोर्भ्रुवोर्विजृंभेणैव त्रस्तोऽब्धिर्यस्मात् । ततस्तद्विज्ञापनेन बद्धः सेतुर्येन । ततः खला रावणादय एव दवो वनं तस्य दहनः ॥ ४ ॥ संक्षेपतो वर्णितं रामचरितमादित आरभ्य विस्तरेणाह । विश्वामित्राध्वर इत्यादिना यावदुत्तराध्यायसमाप्ति । पश्यत एव लक्ष्मणस्य । तमप्यनपेक्ष्यैव हता इत्यर्थः । तच्छब्दानां स कोशलेंद्रोऽवतादित्यनेनैवान्वयः ॥ ५ ॥ लोके ये वीरास्तेषां समितौ समाजे ऐशं त्रैयंबकं धनुरिक्षुयष्टिमिव लीलयैवादाय सज्जीकृतमारोपितं विकृष्य मध्ये बभंज । हे नृप ! उग्रं कठिनं गरिष्ठम् । तदाह । वाहकानां त्रिभिः शतैरुपनीतम् । लोके ... बालगजस्य लीलेव लीला यस्य सः ॥ ६ ॥ अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासंज्ञां पूर्वमुरस्यभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भंगमहानादश्रवणान्निर्गतस्य भृगु-

पतेर्दर्पं व्यनयदपनीतवान् । कथंभूतस्य । त्रिःसप्तकृत्वो राजबीजशून्यां महीं योऽकरोत्तस्य ।। ७ ।। इदानीं गुर्वर्थ इति श्लोकं विवृण्वन्नाह । य इति । कदाचित्कैकेय्यास्तुष्टेन राज्ञा त्वपेक्षितं दास्यामीति प्रतिश्रुतम् । ततः श्रीरामस्य युवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य च वने वासः प्रार्थितस्तदा सत्यपाशेन परिवीतस्य पितुर्निदेशमाज्ञां शिरसा जगृहे । ततो राज्यादिकं त्यक्त्वा सभार्यो वनं ययौ । दुस्त्यजस्यापि सहर्षत्यागे दृष्टांतः । मुक्तसंगो योगी असून्प्राणानिवेति ।। ८ ।। रक्षसो रावणस्य स्वसुः शूर्पणखाया अशुद्धबुद्धेः सीतां जिघृक्षोः कामातुराया इति वा रूपं व्यकृत विकारमनयत् । तस्या खरत्रिशिरदूषणमुख्या बंधवो येषु तांश्चतुर्दशसहस्रं जघान । अपारणीयमलंघ्यमसह्यं कोदंडं पाणौ यस्य सः ।। ९ ।। सीतायाः कथाश्रवणेन दीपिता हृच्छया यस्य तेन सीतां हरिष्यता स्वस्माद्भीतेन स्वस्याश्रमादपकर्षणार्थं सृष्टं निसृष्टं मारीचं विलोक्य जघान । कथंभूतम् । अद्भुतैणवपुषा स्वर्णहरिणदेहेनोपलक्षितम् । अतएव गलोभनेनाश्रमतस्तेनापकृष्टः सन् । कं दक्षं यथा उग्रः श्रीरुद्रः ।। १० ।। ततश्च रक्षोऽधमेन रावणेनासमक्षमपनीतायाम् । प्रियया वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवद्वने चचार । किमभिप्रायः मन इत्यनेन प्रका-

जाम् ।। ७ ।। यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ।। राज्यं श्रियप्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसंगः ।। ८ ।। रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबंधून् ।। जघ्ने चतुर्दशसहस्रमपारणीयकोदंडपाणिरटमान उवास कृच्छ्रम् ।। ९ ।। सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकंधरेण ।। जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथा कमुग्रः ।। १० ।। रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् ।। भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसंगिनां गतिमिति प्रथयंश्चचार ।। ११ ।। दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन्कबंधं सख्यं विधाय कपिभिर्दयितागतिं तैः ।। बुद्ध्वाऽथ वालिनिहते प्लवगेंद्रसैन्यैर्वेलामगात्स मनुजोऽजभवार्चितांघ्रिः ।। १२ ।। यद्रोषविभ्रमविवृत्तकटाक्षपातसंभ्रांतनक्रमकरोभयगीर्णघोषः ।। सिंधुः शिरस्यर्हणं परिगृह्य रूपी पादारविंदमुपगम्य बभाष एतत् ।। १३ ।। न त्वां वयं जडधियोऽनुविदाम भूमन्कूटस्थमादिपुरुषं जगतामधीशम् ।। यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योश्च भूतपतयः स भवान्गुणेशः ।। १४ ।। कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीरपत्नीम् ।। बध्नीहि सेतुमिह ते यशसो वितत्यै गायंति दिग्विजयिनो यमुपेत्य भूपाः ।। १५ ।। बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपींद्रकरकंपितभूरुहांगैः ।। सुग्रीवनीलहनुमत्प्रमुखैरनीकै-

रेण स्त्रीसंगिनां दुःखोदर्कां गतिं प्रख्यापयन् ।। ११ ।। आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतं कृत्यं शास्त्रीयं दहनादिकं यस्य तं जटायुषं पुत्र इव दग्ध्वा कबंधं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन् । अथ वालिनि हते तैः कपिभिर्दयितायाः गतिं बुध्वा अजभवाभ्यामर्चितावंघ्री यस्य स मनुजो वेलां समुद्रतीरमगात् ।। १२ ।। तत्र त्रिरात्रमुपवासेन प्रतीक्षितोऽपि सिंधुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो यः कटाक्षस्तस्य पातेन संभ्रांता नक्रा मकराश्च यस्मिन् । भयेन गीर्णो ग्रस्तः स्तंभितो घोषो येन स सिंधुरेतद्वक्ष्यमाणं बभाषे । अर्हणमर्घादिकम् । रूपी मूर्तिमान् ।। १३ ।। भाषणमेवाह । न त्वामिति द्वाभ्याम् । एतावत्पर्यंतं नु निश्चितं त्वां न विदाम न जानीम इत्यर्थः । इदानीं तु ज्ञातोऽसीत्याह । यदिति पृथक् पदम् । यस्येत्यर्थः । यद्गुणेभ्यः सत्त्वादिभ्यः सुरगणादयो भवंति स भवानिति ।। १४ ।। कामं यथेच्छं जलमाक्रम्यापि प्रयाहि । अवमेहं पुरीषप्रायम् । त्रैलोक्यं रावयत्याक्रंदयतीति तथा तं जहि । हे वीर!

यद्यपि तव जलं प्रतिबंधकं न भवति तथापीह सेतुं बध्नीहि । तर्हि किमर्थम् । ते यशसो विस्ताराय । तदेवाह । यं सेतुमुपेत्य दुष्करं कर्मावेक्ष्य त्वद्यशो गास्यन्ति भूपास्तम् ॥ १५ ॥ नद्वाऽपाम-
भिनंद्य यत्कृतं तदाह । बद्धेति । विविधैरद्रीणां कूटैः शृंगैः सेतुं बध्वाऽग्रे सीतान्वेषणे हनुमतैव दग्धां लंकामाविशत् । कथंभूतैः शृंगैः । कपींद्राणां करैः कंपितानि भूरुहाणामंगानि शाखादीनि
येषु तैः । विभीषणस्य दृशा बुद्ध्या । कैः सहाविशत् । सुग्रीवादयः प्रमुखा येषां तैरनीकैः ॥ १६ ॥ ततश्च सा लंका घूर्णा प्रचलिता बभूव । कथंभूता । वानरेंद्राणां बलैं रुद्धा विहारकोष्ठा-
यस्याम् । निर्भज्यमाना धिषणादयो यस्यां सा । तत्र विहारः क्रीडास्थानम् । कोष्ठं धान्यागारादि । श्रीः कोशः द्वारं गृहादीनाम् । गोपुरं पुरद्वारम् । सदः सभा । वलभी प्रासादादिपुरोभागकक्षा-
दीनि । विटंकः कपोतपालिका । धिषणं वेदिकादि शृङ्गाटकं चतुष्पथम् ॥ १७ ॥ रक्षःपती रावणः । पुत्रमिंद्रजितं प्रहस्तादींश्च समहिनोत्प्रायुंक्त ॥ १८ ॥ असिशूलादिभिर्दुर्गमां तां यातुधान-

लंकां विभीषणदृशा विशदग्रदग्धाम् ॥ १६ ॥ सा वानरेंद्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटंका ॥ निर्भज्यमानधिषणध्वजहेमकुंभ-
शृंगाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ १७ ॥ रक्षःपतिस्तदवलोक्य निकुंभकुंभधूम्राक्षदुर्मुखसुरांतनरांतकादीन् ॥ पुत्रं प्रहस्तमतिकायविकंपनादीं-
न्सर्वानुगान्समहिनोदथ कुंभकर्णम् ॥ १८ ॥ तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगंधमादनी-
लांगदर्क्षपनसादिभिरन्वितोऽगात् ॥ १९ ॥ तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वंद्वं वरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरंगदाद्याः सीता-
भिमर्शहतमंगलरावणेशान् ॥ २० ॥ रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ॥ स्वःस्यंदने द्युमति मातलिनोपनीते
विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥ रामस्तमाह पुरुषादपुरीष यन्नः कांताऽसमक्षमसताऽपहृता श्ववत्ते ॥ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य
यच्छामि काल इव कर्तुरलंघ्यवीर्यः ॥ २२ ॥ एवं क्षिपन्धनुषि संधितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ॥ सोऽसृग्वमन्दशमुखैर्न्यपतद्वि-
मानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥ ततो निष्क्रम्य लंकाया यातुधान्यः सहस्रशः ॥ मंदोदर्या समं तस्मिन्प्ररुदन्त्य उपाद्रवन् ॥ २४ ॥
स्वान्स्वान्बंधून्परिष्वज्य लक्ष्मणेषुभिरर्दितान् ॥ रुरुदुः सुस्वरं दीना घ्नंत्य आत्मानमात्मना ॥ २५ ॥ हा हताः स्म वयं नाथ लोकरावण
रावण ॥ कं यायाच्छरणं लंका त्वद्विहीना परार्दिता ॥ २६ ॥ नैवं वेद महाभाग भवान्कामवशं गतः ॥ तेजोऽनुभावं सीताया येन नीतो दशा-

पृतनां सुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात् । मरुत्सुतो हनुमान् । ऋक्षो जांबवान् ॥ १९ ॥ ते रघुपतेरनीकपा अंगदाद्याः सर्वे रावणस्येभादिभिर्यद्वरूथं सैन्यं तत्र द्वंद्वं यथा भवति तथाऽभि-
पत्य संगम्य द्रुमादिभिर्जघ्नुः । कान् । सीताया अभिमर्शेन हतं मंगलं यस्य स रावण ईशो येषां तान् ॥ २० ॥ स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः क्रुद्धः सन्यानकं पुष्पकं विमानं रथं वाऽऽरुह्य
श्रीराममभिससार । अथ तं स्वःस्यंदने स्वर्गस्थे इंद्रस्य रथे मातलिनेंद्रसारथिनोपनीते द्युमति दीप्तियुक्ते विभ्राजमानमहनदहन् ॥ २१ ॥ हे पुरुषादपुरीष राक्षसपुरीषप्राय । यद्यस्मादपहृता ।
श्ववत् श्वा यथाऽसमक्षं गृहं प्रविश्य किमपि हरति तद्वत् । तस्माज्जुगुप्सितस्य कर्मणः कर्तुस्तेऽद्य काल इवालंघ्यवीर्योऽहं फलं यच्छामि । अधर्मकर्तुः पुंसः कालो यथा यच्छतीति वा ॥ २२ ॥
रिक्तः क्षीणपुण्यः सुकृती विमानादिव । विमानात्पुष्पकान्न्यपतदिति वा ॥ २३ ॥ राक्षसस्त्रीणां विलापमाह तत इति पंचभिः । मंदं स्वल्पमुदरं यस्यास्तया रावणभार्यया सह ॥ २४ ॥ २५ ॥

परैरर्दिता पीडिता ॥ २६ ॥ २७ ॥ गृध्राणामन्नं भक्ष्यः । नरकहेतवे नरकभोगाय ॥ २८ ॥ सांपरायिकमौर्ध्वदेहिकम् ॥ २९ ॥ ३० ॥ आत्मनः स्वस्य संदर्शनेन च आह्लादस्तेन विकसन्मुख-पंकजं यस्यास्ताम् ॥ ३१ ॥ यानं पुष्पकम् । भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्याम् ॥ ३२ ॥ आयुश्च दत्त्वा तेनापि सहैव ययौ ॥ ३३ ॥ गोमूत्रपक्वयवान्नभोजनं भ्रातरं भरतम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ स्वशिबिराद्ग्रामं विनाऽयोध्यामप्रविशन् स्वस्य वासं यत्र निर्मितवांस्तस्मात्सकाशाद्गीतादिभिर्युक्तो रामं प्रत्युद्यतोऽभिमुखं ययौ ब्रह्मघोषेण महता घोषेण पठद्भिः स्वर्णरसाक्ताः कक्षाः प्रांता यासां

मिमाम् ॥ २७ ॥ क्वैषा विधवा लंका वयं च कुलनंदन ॥ देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ २८ ॥ श्रीशुक उवाच ॥ स्वानां विभीषणश्चक्रे कोशलेंद्रानुमोदितः ॥ पितृमेधविधानेन यदुक्तं सांपरायिकम् ॥ २९ ॥ ततो ददर्श भगवानशोकवनिकाश्रमे ॥ क्षामां स्वविरहव्याधिं शिंशपामूलमास्थिताम् ॥ ३० ॥ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकंपत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपंकजाम् ॥ ३१ ॥ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ॥ बिभीषणाय भगवान्दत्त्वा रक्षोगणेशताम् ॥ ३२ ॥ लंकामायुश्च कल्पांतं ययौ चीर्णव्रतः पुरीम् ॥ अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ३३ ॥ उपगीयमानचरितः शतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलांबरम् ॥ ३४ ॥ महाकारुणिकोऽतप्यज्जटिलं स्थंडिलेशयम् ॥ ३५ ॥ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ॥ ३६ ॥ नंदिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ॥ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ॥ ३७ ॥ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ सदश्वैरुक्मसन्नाहैर्भटैः पुरटवर्मभिः ॥ ३८ ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ॥ ३९ ॥ पादयोर्न्यपतत्प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ पादुके न्यस्य पुरतः प्रांजलिर्बाष्पलोचनः ॥ ४० ॥ तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥ रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ॥ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ ४१ ॥ धुन्वंत उत्तरासंगान्पतिं वीक्ष्य चिरागतम् ॥ उत्तराः कोशला माल्यैः किरंतो ननृतुर्मुदा ॥ ४२ ॥ पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ॥ बिभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ ४३ ॥ धनुर्निषंगाञ्छत्रुघ्नः सीता तीर्थकमंडलुम् ॥ अबिभ्रदंगदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ ४४ ॥ पुष्पकस्थोऽन्वितः स्त्रीभिः स्तूयमानश्च बंदिभिः ॥ विरेजे भगवान्राजन्ग्रहैश्चंद्र इवोदितः ॥ ४५ ॥ भ्रातृभिर्नंदितः सोऽपि सोत्सवां प्राविशत्पुरीम् ॥ प्रविश्य राजभवनं गुरुपत्नीः स्वमातरम् ॥ ४६ ॥ गुरून्वयस्यावरजान्पूजितः प्रत्यपूजयत् ॥ वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ ४७ ॥ पुत्रान्स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ॥ आरोप्यांकेऽभिषिंचंत्यो बाष्पौघै-

ताभिः पताकाभिः हैमैरिति चत्वारि रथविशेषणानि ॥ ३७ ॥ ३८ ॥ पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि ॥ ३९ ॥ प्रेम्णा प्रक्लिन्नं हृदयमीक्षणे नेत्रे च यस्य ॥ ४० ॥ नेत्रजैर्जलैः स्नापयन्नाश्लिष्य येऽर्हसत्तमाः कुलवृद्धास्तेभ्योऽपि नमनं चक्रे ॥ ४१ ॥ ४२ ॥ अयोध्याप्रवेशप्रकारमाह । पादुके इति सार्द्धैस्त्रिभिः ॥ ४३ ॥ धनुश्च निषंगौ च तान् । ऋक्षराट् जांबवान् ॥ ४४ ॥

॥ ४५ ॥ गुरुपत्नीः कैकेय्याद्याः ॥ ४६ ॥ वयस्यानवरजांश्च । यथावदनुक्रमेण समुपेयतुः ॥ ४७ ॥ बाष्पौघैरभिषिंचंत्यः शुचः शोकान्विजहुः । शेषं स्पष्टम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥
॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ इति नवमस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह ॥ यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥ १ ॥ १ ॥ २ ॥

विंजहुः शुचः ॥ ४८ ॥ जटा निर्मुच्य विधिवत्कुलवृद्धैः समं गुरुः ॥ अभ्यषिंचद्यथैवेंद्रं चतुःसिंधुजलादिभिः ॥ ४९ ॥ एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलंकृतः ॥ स्वलंकृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ ५० ॥ अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ॥ प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥ जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥ ५१ ॥ त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ॥ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ ५२ ॥ वनानि नद्यो गिरयो वर्षाणि द्वीपसिंधवः ॥ सर्वे कामदुघा आसन्प्रजानां भरतर्षभ ॥ ५३ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥ ५४ ॥ एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ स्वधर्मं गृहमेधीयं शिक्षयन्स्वयमाचरत् ॥ ५५ ॥ प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ॥ धिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे रामचरिते दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ भगवानात्मनात्मानं राम उत्तमकल्पकैः ॥ सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥ होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ॥ अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥ आचार्याय ददौ शेषां यावती भूस्तदंतरा ॥ मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥ इत्ययं तदलंकारवासोभ्यामवशेषितः ॥ तथा राज्ञ्यपि वैदेही सौमंगल्यावशेषिता ॥ ४ ॥ ते तु ब्रह्मण्यदेवस्य वात्सल्यं वीक्ष्य संस्तुतम् ॥ प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥ अप्रत्तं नस्त्वया किं नु भगवन्भुवनेश्वर ॥ यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥ ६ ॥ नमो ब्रह्मण्यदेवाय रामायाकुंठमेधसे ॥ उत्तमश्लोकधुर्याय न्यस्तदंडार्पितांघ्रये ॥ ७ ॥ कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ॥ चरन्वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात्सीतां रामो नाहं भजे पुनः ॥ ९ ॥ इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥ अंतर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥ अंगदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ गंधर्वान्कोटिशो जघ्ने भरतो विजये दिशाम् ॥ १३ ॥ तदीयं धन-

तदंतरा तासां दिशां मध्ये यावती भूस्तां ब्राह्मण एवार्हतीति मन्यमानः ॥ ३ ॥ अयं श्रीरामः । तत्तदा । सौमङ्गल्यमाभरणादिकं तावन्मात्रमवशेषितं यस्याः । तद्व्यतिरिक्तं हिरण्यादि सर्वं ददावित्यर्थः ॥ ४ ॥ ५ ॥ किमप्रत्तं सर्वं दत्तमित्यर्थः । विश्य प्रविश्य ॥ ६ ॥ न्यस्तदंडैर्मुनिभिरर्पितौ चित्ते न्यस्तावंघ्री यस्य तस्मै । तेष्वर्पितावंघ्री येनेति वा ॥ ७ ॥ ८ ॥ ९ ॥ असंविदो-

ऽज्ञात् । प्राचेतसो वाल्मीकिस्तस्याश्रमं प्राप्ता ॥ १० ॥ अंतर्वत्नी गर्भिणी । क्रिया जातकर्माद्याः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥ १६ ॥ न चातिचित्रमेतत् । स्त्रीपुंसोः प्रसंग आसक्तिः । त्रासमावहतीति तथा । विभक्तेरलुगार्षः । पाठांतरं सुगमम् । किमुतेति प्रासंगिकोक्तिः ॥ १७ ॥ अग्निहोत्रमजुहोत् । प्रभुः रामः ॥ १८ ॥ आत्मज्योतिर्निजं धाम ॥ १९ ॥ जलधिबंधनमस्त्रपूगैश्च रक्षसां वध इतीदं कविभिराश्चर्यमिव वर्णितमपि यशः स्तुतिर्न भवति । तत्र हेतुः । अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य तस्य किं कपयः सहायाः । अतः सुग्रीवाद्याश्रयणं यथा लीलामात्रं तथैवेदमपि । युक्तं चैतदित्याह । सुराणां याच्ञयाऽऽत्ता स्वीकृता लीलार्था तनुर्येन तस्य ॥ २० ॥ एवंविधलीलाप्रयोजनं दर्शयन्प्रणमति । यस्य यशो नृपाणां युधिष्ठिरादीनां सदःसु ऋषयो मार्कंडेयादयो गायंति । दिगिभेन्द्राणां पट्टवदाभरणरूपम् । तत्पर्यंतं व्याप्तमित्यर्थः । नाकपाला देवा वसुपाला वसुधापालाश्च तेषां

मानीय सर्वं राज्ञे न्यवेदयत् ॥ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥ १४ ॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ॥ ध्यायंती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥ तच्छ्रुत्वा भगवान्रामो रुंधन्नपि धिया शुचः ॥ स्मरंस्तस्य गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ १६ ॥ स्त्रीपुंप्रसंग एतादृक्सर्वत्र त्रासमावहः ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः ॥ १७ ॥ तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखंडितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दंडककंटकैः ॥ स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ॥ रक्षोवधो जलधिबंधनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥ यस्यामलं नृपसदःसु यशोऽधुनाऽपि गायंत्यघघ्नमृषयो दिगिभेंद्रपट्टम् ॥ तन्नाकपालवसुपालकिरीटजुष्टपादांबुजं रघुपतिं शरणं प्रपद्ये ॥ २१ ॥ यैः स स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ॥ कोशलास्ते ययुः स्थानं यत्र गच्छंति योगिनः ॥ २२ ॥ पुरुषो रामचरितं श्रवणैरुपधारयन् ॥ आनृशंस्यपरो राजन्कर्मबंधैर्विमुच्यते ॥ २३ ॥ राजोवाच ॥ कथं स भगवान्रामो भ्रातॄन्वा स्वयमात्मनः ॥ तस्मिन्वा तेऽन्ववर्तंत प्रजाः पौराश्च ईश्वरे ॥ २४ ॥ श्रीशुक उवाच ॥ अथादिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः ॥ आत्मानं दर्शयन्स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥ आसिक्तमार्गां गंधोदैः करिणां मदसीकरैः ॥ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥ विन्यस्तहेमकलशैः पताकाभिश्च मंडिताम् ॥ २७ ॥ पूगैः सवृंदैः रंभाभिः पट्टिकाभिः सुवाससाम् ॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम्

किरीटैर्जुष्टं पादांबुजं यस्य तं रघुपतिम् । पाठांतरे तत्तस्य रघुपतेर्नाकपालादिभिर्जुष्टं पादांबुजं प्रपद्य इत्यर्थः ॥ २१ ॥ स रामः । संविष्ट उपवेशितोऽनुगतो वा यैस्ते कोशलदेशवासिनः सर्वेऽपि यत्र योगिनो गच्छंति तत्स्थानं ययुः ॥ २२ ॥ आनृशंस्यपर उपशमनिष्ठः सन्विमुच्यते ॥ २३ ॥ स रामः स्वयं कथमवर्तत भ्रातॄन्प्रति वा कथमवर्तत । कथंभूतान् आत्मन आत्मांशभूतान् । तस्मिन्वा ईश्वरे ते भ्रात्रादयोऽनु अनंतरं कथमवर्तंतेति प्रश्नत्रयम् ॥ २४ ॥ तत्र श्रीरामस्य भ्रात्रादिषु प्रवृत्तिप्रकारमाह । अथेति अनेनैव भ्रातॄणामपि तदाज्ञाऽनुसारितया प्रवृत्तिरुक्ता । अथ सिंहासनस्वीकारानंतरम् ॥ २५ ॥ पुरीं वर्णयति त्रिभिः । गंधोदकैर्मदबिंदुभिश्चासिक्ता मार्गा यस्याम् । सुतरां मत्तामिव समृद्धाम् । वा इति वितर्के । पाठांतरे । वासितगां वासितां कामोन्मत्तां

गामिवेत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ पौराणां तस्मिन्वृत्तिमाह । तमुपेयुरिति वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति ॥ २९ ॥ प्रजानां तस्मिन्वृत्तिमाह । ततः प्रजा इति ॥ ३० ॥ स्वयं कथमवर्ततेत्यस्योत्तरमाह । अथेति यावत्समाप्ति । स्वगृहं प्रविष्टः संस्तस्मिन् रेम इति पंचमेनान्वयः । गृहं वर्णयति । सार्द्धैस्त्रिभिः । अनंता येऽखिलानां रत्नादीनां कोशास्तैराढ्यम् । अनर्घ्या उरवः परिच्छदा यस्मिन् ॥ ३१ ॥ विद्रुममया उदुंबरा देहल्यो येषु तैर्द्वारैः । स्वच्छैः स्थलैः । तृतीयांतानां मंडितमिति तृतीयेनान्वयः ॥ ३२ ॥ वाससां मणिगणानां चांशुकैर्दीप्तिभिः । चित् चैतन्यं तद्वदुल्लासैरुज्ज्वलैः । यद्वा चिदिति क्वचित् वैदूर्यस्तंभादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मंडितमित्यर्थः । कांताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभिः ॥ ३३ ॥ भूषणानां भूषणभूतैः

॥ २८ ॥ तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ॥ आशिषो युयुजुर्देव पाहीमां प्राक्त्वयोद्धृताम् ॥ २९ ॥ ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥ आरुह्य हर्म्याण्यरविंदलोचनमतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥ अनंताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥ विद्रुमोदुंबरद्वारैर्वैदूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैः स्वच्छैर्भ्राजत् स्फटिकभित्तिभिः ॥ ३२ ॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैः कांतकामोपपत्तिभिः ॥ ३३ ॥ धूपदीपैः सुरभिभिर्मंडितं पुष्पमंडितैः ॥ स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥ तस्मिन्स भगवान्रामः स्निग्धया प्रिययेष्टया ॥ रेमे स्वारामधीराणामृषभः सीतया किल ॥ ३५ ॥ बुभुजे च यथाकालं कामान्धर्ममपीडयन् ॥ वर्षपूगान्बहून्नॄणामभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे श्रीरामोपाख्याने एकादशोऽध्यायः ॥ ११ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥ पुंडरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलस्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥ शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रंथिभेदकम् ॥ ४ ॥ पुष्यो हिरण्यनाभस्य ध्रुवसंधिस्ततोऽभवत् ॥ सुदर्शनोऽग्निवर्णश्च शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥ कलेरंते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥ तस्मात्प्रसुश्रुतस्तस्य संधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ॥ ७ ॥ ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥ एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ बृहद्बलस्य

॥ ३४ ॥ ३५ ॥ नृणां मध्ये । यद्वा नॄणां नृभिरभिध्यातमंघ्रिपल्लवं यस्येति ॥ ३६ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ॥ एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १ ॥ कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत् ॥ १ ॥ अर्कसंभवोऽर्कस्यांशात्संभूतः ॥ २ ॥ ततो विधृतेर्हिरण्यनाभः । कथंभूतः । जैमिनेः शिष्यो योगाचार्यः ॥३॥ तदाह । यतः सकाशात् कौशल्यो याज्ञवल्क्य ऋषिराध्यात्मं योगमध्यगात् । महांत उदयाः सिद्धयो यस्मिंस्तम् । हृदयग्रंथेर्भेदकं च ॥४॥५॥ मरुं विशिनष्टि । योऽसाविति । पुनर्भावयिता

भावयिष्यति ॥ ६ ॥ ७ ॥ पित्राऽभिमन्युना ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तत्तस्मादमित्रजित् ॥ १२ ॥ १३ ॥ १४ ॥ निष्ठा वंशस्य स्थितिस्तस्या अंतः ॥ १५ ॥ तदेवाह । इक्ष्वाकूणामिति ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ॥ वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १ ॥ निमेरौरसः पुत्रो नाभूदिति दर्शयन्कथामाह निमिरित्येकादशभिः । सत्रमारभ्य वसिष्ठमृत्विजमवृत वव्रे ॥ १ ॥ तं शक्रस्य मखं निर्वर्त्य । प्रतिपालय प्रतीक्षस्वेति गृहपतिर्निमिः ॥ २ ॥ इदं जीवितं चलमस्थिरं

भविता पुत्रो नाम बृहद्रणः ॥ ९ ॥ उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥ १० ॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ॥ ११ ॥ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ तस्यांतरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥ १२ ॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतंजयः ॥ रणंजयस्तस्य सुतः संजयो भविता ततः ॥ १३ ॥ तस्माच्छाक्योऽथ शुद्धोदो लांगलस्तत्सुतः स्मृतः ॥ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥ १४ ॥ रणको भविता तस्मात्सुरथस्तनयस्ततः ॥ सुमित्रो नाम निष्ठांत एते बार्हद्बलान्वयाः ॥ १५ ॥ इक्ष्वाकूणामयं वंशः सुमित्रांतो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे इक्ष्वाकुवंशवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनया वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्त्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः ॥ १ ॥ तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ॥ तूष्णीमासीद्गृहपतिः सोऽपींद्रस्याकरोन्मखम् ॥ २ ॥ निमिश्चलमिदं विद्वान्सत्त्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः ॥ ३ ॥ शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ॥ अशपत्पतताद्देहो निमेः पंडितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥ ५ ॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥ गंधवस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्त्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह माभून्मे देहबंधनम् ॥ ८ ॥ यस्य योगं न वांछंति वियोगभयकातराः ॥ भजंति चरणांभोजं मुनयो हरिमेधसः ॥ ९ ॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥ अराजकभयं नृणां

विद्वान् ॥ ३ ॥ इंद्रस्य मखं निर्वर्त्यागतो गुरुः शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देहः पतत्वित्यशपत् ॥ ४ ॥ ५ ॥ उर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुंभे निषिक्तं तस्मात्प्रपितामहो वसिष्ठो जज्ञे । तदाह । मित्रावरुणयोरिति । तथा च श्रुतिः । कुंभे रेतः सिषिचतुः समानमिति ॥ ६ ॥ ७ ॥ यदि प्रसन्नाः प्रभवः समर्थाश्चेत्तर्हि जीवत्वित्यूचुः ॥ ८ ॥ यस्य देहस्य योगं न वांछंत्यपि तु मोक्षायैव भजंति ॥ ९ ॥ १० ॥ निमिर्विदेह एव सन्नुष्यतां वसतु कामं यथेच्छम् । एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबंध इति भावः । स चाध्यात्मसंस्थितौ लोच-

नयोः स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तत इति शेषः ॥ ११ ॥ तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति । अराजकभयमिति ॥ १२ ॥ तस्यान्वर्थानि त्रीणि नामान्याह । जन्मनाऽसाधारणेन । जन एव जनकः । यद्वा स्वदेहद्वारा जनकत्वात्स निमिर्जनकोऽभूदित्यर्थः । मिथिला येन निर्मिता इत्यनेन व्युत्पत्त्यंतरमर्थादुक्तम् ॥ १३ ॥ १४ ॥ सुधृत् सुधृतिस्तस्य पिता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्य केशिध्वजस्य भानुमान् ॥ २१ ॥ २२ ॥ ततस्मात्सुपार्श्वकः ॥ २३ ॥ अग्निसंभवोऽग्नेरंशात्संभूतः ॥ २४ ॥ यद्यस्मात्सुभाषणः

मन्यमाना महर्षयः ॥ देहं ममंथुः स्म निमेः कुमारः समजायत ॥१२॥ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ॥ मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥१३॥ तस्मादुदावसुस्तस्य पुत्रोऽभून्नंदिवर्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥१४॥ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृतिपिता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥१५॥ मरोः प्रतीपकस्तस्माज्जातः कृतिरथो यतः ॥ देवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥१६॥ कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७॥ ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥१८॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ॥ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥ कृतध्वजात्केशिध्वजः खांडिक्यस्तु मितध्वजात् ॥ कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥२०॥ खांडिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्द्रुतः ॥ भानुमांस्तस्य पुत्रोऽभूच्छत्रुद्युम्नस्तु तत्सुतः ॥२१॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥२२॥ अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथो यस्य क्षेमधीर्मिथिलाधिपः ॥२३॥ तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः ॥ आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥ वस्वनंतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः ॥ २५ ॥ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ॥ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥ २६ ॥ एते वै मिथिला राजन्नात्मविद्याविशारदाः ॥ योगेश्वरप्रसादेन द्वंद्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे निमिवंशानुवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीशुक उवाच ॥ अथातः श्रूयतां राजन्वंशः सोमस्य पावनः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः ॥ १ ॥ सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥ सोऽयजद्राजसूयेन विजित्य भुवनत्रयम् ॥ पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात् ॥ ४ ॥ यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ॥ नात्यजत्तत्कृते जज्ञे सुरदानववि-

॥ २५ ॥ २६ ॥ योगेश्वरा याज्ञवल्क्यादयस्तेषां प्रसादेन ॥ २७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशादिभिः सोमवंशमाहासमापितः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः ॥ १ ॥ चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद्बुधात् ॥ जातश्चैलः षड्वर्श्यामायुमुख्यानजीजनत् ॥ २ ॥ १ ॥ २ ॥ दृग्भ्यः आनंदाश्रुभ्यः अतएवामृतमयः । किले-

त्याश्चर्ये । पाठांतरे दृशो नेत्रात् । वक्ष्यमाणदर्पकारणमाह । विप्रेति ॥ ३ ॥ सोमस्य पुत्रो बुध इति कथाद्वारेणाह । पत्नीमिति सार्धैर्नवभिः ॥ ४ ॥ तत्कृते तन्निमित्तम् ॥ ५ ॥ सुराणां दानवानां च विग्रहे कारणमाह । शुक्र इति । असुरैः सहितः उडुपमग्रहीदित्यर्थः । संधिरार्षः गुरोः सुतं बृहस्पतिमग्रहीत् । अंगिरसः सकाशात्प्राप्तविद्यो हर इति प्रसिद्धिः ॥ ६ ॥ ७ ॥ निवेदितो विज्ञापितः । विश्वकृद्ब्रह्मा । अवैदबुध्यत ॥ ८ ॥ बृहस्पतिराह । त्यज त्यजेति । परैराहितं गर्भम् । गर्भे त्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह । नाहमिति । सांतानिकः संतानार्थी । सांतानिके इति पाठे हे सत्पुत्रे इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ रहः एकांते ॥ १३ ॥ पुरूरवस उर्वश्यामायुप्रमुखाः षट्पुत्रा जाता इति वक्तुं कथामाह । तस्येत्यादिना यावत्समाप्ति

ग्रहः ॥ ५ ॥ शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम् ॥ हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः ॥ ६ ॥ सर्वदेवगणोपेतो महेंद्रो गुरुमन्वयात् ॥ सुरासुरविनाशोऽभूत्समरस्तारकामयः ॥ ७ ॥ निवेदितोऽथांगिरसा सोमं निर्भर्त्स्य विश्वकृत् ॥ तारां स्वभर्त्रे प्रायच्छदंतर्वत्नीमवैत्पतिः ॥ ८ ॥ त्यज त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ॥ नाहं त्वां भस्मसात्कुर्यां स्त्रियं सांतानिकः सति ॥ ९ ॥ तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ॥ स्पृहामांगिरसश्चक्रे कुमारे सोम एव च ॥ १० ॥ ममायं न तवेत्युच्चैस्तस्मिन्विवदमानयोः ॥ पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा ॥ ११ ॥ कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ किं नावोचस्त्वसद्वृत्ते आत्मावद्यं वदाशु मे ॥ १२ ॥ ब्रह्मा तां रह आहूय समप्राक्षीच्च सांत्वयन् ॥ सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥ १३ ॥ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ बुद्ध्या गंभीरया येन पुत्रेणापोडुराण्मुदम् ॥ १४ ॥ ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥ श्रुत्वोर्वशींद्रभवने गीयमानान्सुरर्षिणा ॥ तदंतिकमुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥ मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ निशम्य पुरुषश्रेष्ठं कंदर्पमिव रूपिणम् ॥ १७ ॥ धृतिं विष्टभ्य ललना उपतस्थे तदंतिके ॥ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ १८ ॥ राजोवाच ॥ स्वागतं ते वरारोहे आस्यतां करवाम किम् ॥ संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ १९ ॥ उर्वश्युवाच ॥ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुंदर ॥ यदंगांतरमासाद्य च्यवते ह रिरंसया ॥ २० ॥ एतावुरणकौ राजन्न्यासौ रक्षस्व मानद ॥ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २१ ॥ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ॥ विवाससं तत्तथेति प्रतिपेदे महामनाः ॥ २२ ॥ अहो रूपमहो भावो नरलोकविमोह-

॥ १४ ॥ १५ १६ ॥ ननु देवी कुतो मनुष्यस्यांतिकमुपागच्छेत्तत्राह । मित्रावरुणयोः शापान्नरलोकतां मनुष्यभावमापन्ना सती ॥ १७ ॥ १८ ॥ नौ आवयो रतिरस्त्विति ॥ १९ ॥ यस्य तवांगांतरं वक्ष आसाद्य रिरंसया रंतुमिच्छया ह स्फुटं न च्यवते नापयाति । यद्यस्मादिति वा ॥ २० ॥ शापावसाने भाषाभंगमिषेण जिगमिषोस्तस्या भाषाबंधमाह एताविति द्वाभ्याम् । उरणकौ मेषौ न्यासौ निक्षेपरूपौ रक्षस्व । यः श्लाघ्यः स एव स्त्रीणां वरः स्मृतः । अतो विजातीयत्वं न दोष इति भावः ॥ २१ ॥ हे वीर ! घृतं मे भक्ष्यं स्यात् । अमृतं वा आज्यमिति श्रुतेः । देवानां

चामृताशित्वात् । मैथुनादन्यत्र विवाससं त्वां नेक्षिष्ये । इति प्रतिपेदेंऽगीकृतवान् ॥ २२ ॥ तदेवाह । अहो इति ॥ २३ ॥ २४ ॥ पद्मकिंजल्कस्य गंध इव गंधो यस्यास्तस्या मुखामोदेन मुषितः प्रलोभितः सन् ॥ २५ ॥ मह्यं मम ॥ २६ ॥ महारात्रे मध्यरात्रे । महानिशा द्वे घटिके रात्रौ मध्यमयामयोरिति स्मृतेः ॥ २७ ॥ जिगमिषोस्तस्याः परुषोक्तिमाह । हताऽस्मीति सार्धेन । नपुंसा नपुंसकेन ॥ २८ ॥ यथा नारी तथा संत्रस्तः शेते ॥ २९ ॥ ३० ॥ विद्युतो विशिष्टद्युतिमंतो व्यद्योतंत दीप्तिमकुर्वत । यद्वा तदैव तडितः प्राकाशंतेत्यर्थः । नग्नमैक्षत । अतो भाषाभंगान्निर्जगामेति ज्ञेयम् ॥ ३१ ॥ ३२ ॥ तस्याः सखीश्च पंच वीक्ष्य । सूक्तं शोभनं वचनम् । हये जाये इत्यादि ॥ ३३ ॥ तदेवार्थत आह । अहो इति द्वाभ्याम् । अनिर्वृत्य मत्कृतां निर्वृतिमप्राप्य । पाठांतरे

नम् ॥ को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २३ ॥ तया स पुरुषश्रेष्ठो रमयंत्या यथार्हतः ॥ रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २४ ॥ रममाणस्तया देव्या पद्मकिंजल्कगंधया ॥ तन्मुखामोदमुषितो मुमुदेऽहर्गणान्बहून् ॥ २५ ॥ अपश्यन्नुर्वशीमिंद्रो गंधर्वान्समनोदयत् ॥ उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २६ ॥ त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ॥ उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २७ ॥ निशम्याक्रंदितं देवी पुत्रयोर्नीयमानयोः ॥ हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ २८ ॥ यद्विश्रंभादहं नष्टा हृतापत्या च दस्युभिः ॥ यः शेते निशि संत्रस्तो यथा नारी दिवा पुमान् ॥ २९ ॥ इति वाक्सायकैर्विद्धः प्रतोत्रैरिव कुंजरः ॥ निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥ ते विसृज्योरणौ तत्र व्यद्योतंत स्म विद्युतः ॥ आदाय मेषावायांतं नग्नमैक्षत सा पतिम् ॥ ३१ ॥ ऐलोऽपि शयने जायामपश्यन्विमना इव ॥ तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम् ॥ ३२ ॥ स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ॥ पंच प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥ ३३ ॥ अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ॥ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥ ३४ ॥ सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ॥ खादंत्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३५ ॥ उर्वश्युवाच ॥ मा मृथाः पुरुषोऽसि त्वं मास्म त्वाद्युर्वृका इमे ॥ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ३६ ॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ॥ घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ ३७ ॥ विधायालीकविश्रंभमज्ञेषु त्यक्तसौहृदाः ॥ नवं नवमभीप्संत्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥ संवत्सरांते हि भवानेकरात्रं मयेश्वर ॥ वत्स्यत्यपत्यानि च ते भविष्यंत्यपराणि भोः ॥ ३९ ॥ अंतर्वत्नीमुपालभ्य देवीं स प्रययौ पुरम् ॥ पुनस्तत्र गतोऽब्दांत उर्वशीं वीरमातरम् ॥ ४० ॥ उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ ४१ ॥ गंधर्वानुपधावेमांस्तुभ्यं दास्यंति मामिति ॥ तस्य संस्तुवतस्तुष्टा अग्नि-

मां निवृत्तिमगमयित्वा मंत्राननुक्त्वेति वा । वचांसि कृणवावहै गोष्ठीः करवावहै ॥ ३४ ॥ सुदेहोऽतिकमनीयोऽयं मम देहः ॥ ३५ ॥ पुरूरवो मा मृथा इत्यादि तस्याः सूक्तं तदप्यर्थत आह मा मृथा इति चतुर्भिः । मा म्रियस्व पुरुषोऽसि अतो धैर्यमावहेति भावः । इमे वृकाः प्रसिद्धा इंद्रियाणि वा त्वा इति त्वां मास्म अद्युर्भक्षयेयुः । इन्द्रियवशो मा भवेत्यर्थः ॥ ३६ ॥ प्रिये निमित्ते साहसं यासाम् ॥ ३७ ॥ ३८ ॥ तं सांत्वयति । संवत्सरांत इति ॥ ३९ ॥ अपराणीति वचनादंतर्वत्नीमुपालभ्य ज्ञात्वा ॥ ४० ॥ ४१ ॥ अनेनाग्निना कर्म कृत्वा तद्वशादुर्वशीं प्राप्स्यतीत्यभि-

प्रायेणाग्निस्थालीं ददुः । स तु तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन्नेयमुर्वशी किंत्वग्निस्थालीत्यबुध्यत ॥ ४२ ॥ ततश्च । तां स्थालीं वने स्थापयित्वा गृहान्गत्वा निशि नित्यं तामेव ध्यायतस्तस्य मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत् ॥ ४३ ॥ ततः स्थालीस्थानं गतः सन् शम्या गर्भे जातमश्वत्थं विलक्ष्यास्मिन्नसावग्निरस्तीति विशेषेण लक्षयित्वा तेनाश्वत्थेन द्वे अरणी कृत्वाऽग्निं ममंथेति शेषः । शमीगर्भादग्निं ममंथेति श्रुतिः ॥ ४४ ॥ मथनप्रकारमाह । अधरारणिमुर्वशीं ध्यायन्नुत्तरारणिमात्मानं ध्यायन्नुभयोर्मध्ये यत्काष्ठं यत्प्रजननं पुत्रं ध्यायन् । तथा च मंत्रः । उर्वश्यास्यायुरसि पुरूरवा इति ॥ ४५ ॥ तेन तस्य कृताग्निर्मंथनाद्विभावसुरग्निर्जातः । कथंभूतः । जातं वेदो धनं भोग्यं यस्मात् । स च त्रय्या विद्यया विहितेनाधानसंस्कारेण । त्रिवृदाहवनीयादिरूपः सन्राज्ञा पुरूरवसा पुत्रत्वे कल्पितः पुण्यलोकप्रापकत्वात् ॥ ४६ ॥ तदाह तेनेति ॥ ४७ ॥ नन्वनादिर्वेदत्रयबोधितो ब्राह्मणादीनामिंद्राद्यनेकदेवयजनेन स्वर्ग-

स्थालीं ददुर्नृप ॥ उर्वशीं मन्यमानस्तां सोऽबुद्ध्यत चरन्वने ॥ ४२ ॥ स्थालीं न्यस्य वने गत्वा गृहांस्तां ध्यायतो निशि ॥ त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत ॥ ४३ ॥ स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ॥ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४४ ॥ उर्वशीं मंत्रतो ध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः ॥ ४५ ॥ तस्य निर्मंथनाज्जातो जातवेदा विभावसुः ॥ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४६ ॥ तेनायजंत यज्ञेशं भगवंतमधोक्षजम् ॥ उर्वशीलोकमन्विच्छन्सर्वदेवमयं हरिम् ॥ ४७ ॥ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ॥ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥ पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप ॥ अग्निना प्रजया राजा लोकं गांधर्वमेयिवान् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे ऐलोपाख्याने चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥ श्रुतायोर्वसुमान्पुत्रः सत्यायोश्च श्रुतंजयः ॥ रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥ २ ॥ भीमस्तु विजयस्याथ कांचनो होत्रकस्ततः ॥ तस्य जह्नुः सुतो गंगां गंडूषीकृत्य योऽपिबत् ॥ जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ३ ॥ ततः कुशः कुशस्यापि कुशांबुर्मूर्तयो वसुः ॥ कुशनाभश्च चत्वारो गाधिरासीत्कुशांबुजः ॥ ४ ॥ तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥ एकतः श्यामकर्णानां हयानां चंद्रवर्चसाम् ॥ सहस्रं दीयतां शुल्कं कन्यायाः

प्राप्तिहेतुः कर्ममार्गः कथं सादिरिव वर्ण्यते तत्राह एक एवेति द्वाभ्याम् । पुरा कृतयुगे सर्ववाङ्मयः सर्वासां वाचां बीजभूतः प्रणव एक एव । वेदः देवश्च नारायण एक एव । अग्निश्चैक एव लौकिकः । वर्णश्चैक एव हंसो नाम ॥ ४८ ॥ वेदत्रयी तु पुरूरवसः सकाशादासीत् । एयिवान्प्राप । अयं भावः । कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽपि ध्याननिष्ठाः रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गः प्रकटो बभूवेति ॥ ४९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पंचदशे गाधिरैलपुत्रान्वयेऽजनि ॥ यद्दौहित्रसुतो रामः कार्तवीर्यमहन् रुषा ॥ १ ॥ १ ॥ सुग्रहत्वायाल्पादिक्रमेण श्रुतायुप्रभृतिपण्णां वंशनाह श्रुतायोरित्यादिना । एक एकसंज्ञः । अमितस्तत्संज्ञः ॥ २ ॥ जह्नोः पूरुस्तस्य बलाकस्तस्याजकः ॥ ३ ॥ ४ ॥ गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभूदित्युत्तराध्यायांते वक्ष्यति गाधेरभून्महातेजा इत्यादिना । तत्र तावत्तदुपोद्घातत्वेन भृगुवंशसंभवस्य ऋचीकस्य चरित्रं प्रसक्तानुप्रसक्तेन च परशुरामावतारचरितमाह

तस्य सत्यवतीमित्यादिना । विसदृशमननुरूपम् । भार्गवमृचीकम् ॥ ५ ॥ दक्षिणवामयोरेकतः श्यामः कर्णो येषाम् । सर्वस्मिन्नंगे चन्द्रस्येव वर्चो येषाम् । न चेदमपि पर्याप्तमस्मत्कन्यायाः । यतः कुशिकाः कौशिका वयम् ॥ ६ ॥ ७ ॥ उभयैर्मंत्रैः पत्न्यै ब्राह्मैर्मंत्रैः श्वश्र्वे तु क्षात्रैरित्यर्थः ॥ ८ ॥ यावत्स्नात्वा मुनिर्नागतस्तावद्भार्यायां भर्तृस्नेहाधिक्यात्पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मत्वा तया मात्रा सत्यवती याचिता सती ब्राह्ममंत्राभिमंत्रितं स्वचरुं मात्रे अयच्छत्प्रादात् । मातुश्चरुं क्षात्रमंत्राभिमंत्रितं स्वयमदददात् ॥ ९ ॥ कष्टं जुगुप्सितम् । तदेवाह । ते पुत्रो घोरो भविष्यति भ्राता तु ब्रह्मवित्तमो भविष्यतीति ॥ १० ॥ एवं माभूदिति प्रसादितो भार्गव आह । अथ तर्हि पौत्रो घोरो भविष्यति । जमदग्निः पुत्रोऽभवदित्यर्थः ॥ ११ ॥ सा च सत्यवती कौशिकी नद्यभूत् ॥ १२ ॥ भार्गवऋषेः

कुशिका वयम् ॥ ६ ॥ इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणांतिकम् ॥ आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥ स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ॥ श्रपयित्वोभयैर्मंत्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥ तावत्सत्यवती मात्रा स्वचरुं याचिता सती ॥ श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदत्स्वयम् ॥ ९ ॥ तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ॥ घोरो दंडधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥ प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ॥ अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥ सा चाभूत्सुमहापुण्या कौशिकी लोकपावनी ॥ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥ तस्यां वै भार्गवऋषेः सुता वसुमदादयः ॥ यवीयान् यज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥ यमाहुर्वासुदेवांशं हैहयानां कुलांतकम् ॥ त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥ दुष्टं क्षत्रं भुवो भारमब्रह्मण्यमनीनशत् ॥ रजस्तमोवृतमहन्फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥ राजोवाच ॥ किं तदंहो भगवतो राजन्यैरजितात्मभिः ॥ कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥ श्रीशुक उवाच ॥ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ॥ दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥ बाहून्दशशतं लेभे दुर्धर्षत्वमरातिषु ॥ अव्याहतेंद्रियौजः-श्रीतेजोवीर्ययशोबलम् ॥ १८ ॥ योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥ स्त्रीरत्नैरावृतः क्रीडन्रेवां-भसि मदोत्कटः ॥ वैजयंतीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥ विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः ॥ नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ॥ माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥ स एकदा तु मृगयां

र्जमदग्नेः सुताः ॥ १३ ॥ १४ ॥ अनीनशन्नाशयामास । तदेवाह । रजस्तमोवृतमिति । पाठांतरे सुगमम् ॥ १५ ॥ १६ ॥ कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह । हैहयानामिति षड्भिः । परिकर्मभिः परिचर्याभिर्दत्तं दत्तात्रेयमाराध्यम् ॥ १७ ॥ अव्याहतमिंद्रियादिकं च लेभे ॥ १८ ॥ यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः ॥ १९ ॥ रेवांभसि नर्मदाजले सरितं नर्मदाम् ॥ २० ॥ रावणदिग्विजये माहिष्मत्याः समीपे नर्मदायां देवपूजां कुर्वंस्तेन प्रवाहस्यावरोधात्प्रतिस्रोतसः सत्यास्तस्याः सरितो जलैर्विप्लावितं स्वशिबिरमालक्ष्य तस्य तद्वीर्यं न सेहे ॥ २१ ॥ ततश्च कृतकिल्बिषः क्रीडंतमभिभवितुं प्रवृत्तः सन्गृहीतो माहिष्मत्यां स्वपुर्यां कपिरिव सन्निरुद्धश्च पुनश्चावज्ञया येन मुक्तः ॥ २२ ॥ इदानीं तत्कृतमपराधं दर्शयन्नाह स एकदेत्या-

दिना ॥ २३ ॥ अर्हणमातिथ्यादि । हविष्मत्या कामधेन्वा ॥ २४ ॥ तदर्हणं नाद्रियत तस्मिन्नातुष्यत् । यतोऽग्निहोत्र्यां होमधेनौ साभिलापः महैहयो हैहयेः सह वर्तमानः ॥ २५ ॥ दर्पाद्धेतोः अपेर्हविर्धानीमग्निहोत्रधेनुं हर्तुं नरानचोदयत्प्रेरितवान् ॥ २६ ॥ २७ ॥ सतूणं कार्मुकं चर्म चादाय ॥ २८ ॥ ऐणेयं चर्म कृष्णाजिनमंबरं यस्य ॥ २९ ॥ ३० ॥ प्रहरन्परश्वधो यस्य । मनश्चानिलश्च तयोरिवौजो वीर्यं यस्य । परेषां चक्रं सैन्यं सूदयतीति तथा । छिन्ना भुजा ऊरवः कंधराश्च येषाम् । हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥ विवृक्णाधर्मादयो यस्य

विचरन्विपिने वने ॥ यदृच्छयाश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥ तस्मै स नरदेवाय मुनिरर्हणमाहरत् ॥ स सैन्यामात्यवाहाय हविष्मत्या तपोधनः ॥ २४ ॥ स वीरस्तत्र तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ॥ तन्नाद्रियताऽग्निहोत्र्यां साभिलापः सहैहयः ॥ २५ ॥ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ ते च माहिष्मतीं निन्युः सवत्सां क्रंदतीं बलात् ॥ २६ ॥ अथ राजनि निर्याते राम आश्रम आगतः ॥ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥ घोरमादाय परशुं सतूणं चर्म कार्मुकम् ॥ अन्वधावत दुर्धर्षो मृगेंद्र इव यूथपम् ॥ २८ ॥ तमापतंतं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ॥ ऐणेयचर्मांबरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥ यतो यतोऽसौ प्रहरत्परश्वधो मनोऽनिलौजाः परचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकंधरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥ दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ॥ विवृक्णवर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा ॥ ३२ ॥ अथार्जुनः पंचशतेषु बाहुभिर्धनुःषु बाणान्युगपत्स संदधे ॥ रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम् ॥ ३३ ॥ पुनः स्वहस्तैरचलान्मृधेंऽघ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥ कृत्तबाहोः शिरस्तस्य गिरेः शृंगमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥ राम राम महाबाहो भवान्पापमकारषीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥ वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ॥ यया लोकगुरुर्देवः पारमेष्ठ्यमियात्पदम् ॥ ३९ ॥ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥ राज्ञो मूर्द्धावसिक्तस्य वधो ब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवया चांहो जह्यंगाच्युतचेतनः ॥ ४१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे पंचदशोऽध्यायः

॥ ३२ ॥ पंचशतेषु धनुःषु सोऽर्जुनो रामाय संदधे । एकमेव धनुर्यस्य सः । पाठांतरे एक एव बंधः संधानं येषां तैरिषुभिः । तानि धनूंषि समं सह तत्क्षणमेवाच्छिनत् ॥ ३३ ॥ मृधे साधनभूतानचलानंघ्रिपांश्चोत्क्षिप्याभिधावतस्तस्य भुजांश्चिच्छेद । अहेः फणा इवेत्यर्थः ॥ ३४ ॥ ३५ ॥ समर्पयत्समार्पयात् ॥ ३६ ॥ ३७ ॥ ३८ ॥ अर्हणतां पूज्यताम् ॥ ३९ ॥ सौरी सूर्यस्य प्रभेव

॥ ४० ॥ तीर्थसंसेवया चकाराघमनियमैश्च । अच्युते चेतना चित्तं यस्य सः ॥ ४१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ षोडशेऽथार्जुनसुतैर्जमदग्नौ हते सुतैः ॥ रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ १ ॥ १ ॥ २ ॥ किंचिदीषच्चित्ररथे गंधर्वराजे स्पृहा यस्याः सा । किंचिन्न सस्मारेति वा ॥ ३ ॥ कलशं पुरोधायाग्रे निधाय ॥ ४ ॥ व्यभिचारं मानसं ज्ञात्वा ॥ ५ ॥ आज्ञाऽतिलंघिनां भ्रातॄणां मातुश्च वधे संचोदितः सन् मुनेर्यः समाधिस्तपश्च तयोः प्रभावज्ञः । यदि न हन्यां तर्हि मामपि शप्तुं समर्थः यदि तु हन्यां तर्हि मयि संतुष्टः

॥ १५ ॥ श्रीशुक उवाच ॥ पित्रोपशिक्षितो रामस्तथेति कुरुनंदन ॥ संवत्सरं तीर्थयात्रां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुका याता गंगायां पद्ममालिनम् ॥ गंधर्वराजं क्रीडंतमप्सरोभिरपश्यत ॥ २ ॥ विलोकयंती क्रीडंतमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किंचिच्चित्ररथे स्पृहा ॥ ३ ॥ कालात्ययं तं विलोक्य मुनेः शापविशंकिता ॥ आगत्य कलशं तस्थौ पुरोधाय कृतांजलिः ॥ ४ ॥ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥ रामः संबोधितः पित्रा भ्रातॄन्मात्रा सहावधीत् ॥ प्रभावज्ञो मुनेः सम्यक्समाधेस्तपसश्च सः ॥ ६ ॥ वरेण छंदयामास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥ उत्तस्थुस्ते कुशलिनो निद्रापाय इवांजसा ॥ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥ येऽर्जुनस्य सुता राजन्स्मरंतः स्वपितुर्वधम् ॥ रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥ एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ॥ वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥ दृष्ट्वाऽग्न्यगार आसीनमावेशितधियं मुनिम् ॥ भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥ याच्यमानाः कृपणया राममात्राऽतिदारुणाः ॥ प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबंधवः ॥ १२ ॥ रेणुका दुःखशोकार्ता निघ्नंत्यात्मानमात्मना ॥ राम रामेहि तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥ तदुपश्रुत्य दूरस्था हा रामेत्यार्तवत्स्वनम् ॥ त्वरयाऽऽश्रममासाद्य ददृशे पितरं हतम् ॥ १४ ॥ तद्दुःखरोषामर्षार्तिशोकवेगविमोहिताः ॥ हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान्स्वर्गतो भवान् ॥ १५ ॥ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ॥ प्रगृह्य परशुं रामः क्षत्रांताय मनो दधे ॥ १६ ॥ मत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ॥ तेषां स शीर्षभी राजन्मध्ये चक्रे महागिरिम् ॥ १७ ॥ तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ॥ हेतुं कृत्वा पितृवधं क्षत्रेऽमंगलकारिणि ॥ १८ ॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ॥ स्यमंतपंचके चक्रे शोणितोदान् ह्रदान्नव ॥ १९ ॥ पितुः कायेन संधाय

संस्तानपि जीवयितुं समर्थ इति जानन्नित्यर्थः ॥ ६ ॥ ७ ॥ नन्वतिनिंदितं तत्कथं कृतवांस्तत्राह । पितुर्विद्वानिति पूर्वोक्त एवाभिप्रायः ॥ ८ ॥ सर्वक्षत्रियवधे कारणं वक्तुमाह येऽर्जुनस्य सुता इत्यादिना ॥ ९ ॥ १० ॥ भगवत्यावेशिता धीर्येन तम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ दुःखादीनां वेगेन विमोहितः ॥ १५ ॥ १६ ॥ ब्रह्मघ्नैर्विहिता श्रीर्यस्यास्ताम् । हे राजन्स रामस्तेषां शीर्षभिर्माहिष्मत्यां मध्ये महांतं गिरिं चक्रे ॥ १७ ॥ तेषां रक्तेनाब्रह्मण्यानां भयावहां घोरां नदीं चक्रे । तथाऽपि सर्वक्षत्रियवधे किं कारणं तदाह हेतुं कृत्वेति सार्धेन । अमंगलकारिण्यन्या-

यवर्तिनि सति ॥ १८ ॥ त्रिःसप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतं ततो रामस्तावत्कृत्वः क्षत्रमुत्सादितवानिति प्रसिद्धिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं स्वदेहं लब्ध्वा स ऋषीणां मंडले सप्तम ऋषिरभूत् ॥ २४ ॥ बृहद्ब्रह्म वेदम् । वेदप्रवर्तकेषु सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥ भुवो भारमहन् । भारमेवाह । नृपानिति ॥ २७ ॥ तदेवं प्रसक्तानुप्रसक्तं समाप्य प्रस्तुतमाह । गाधेरिति । महातेजा विश्वामित्रः ॥ २८ ॥ ते सर्वे लिंगसमवायन्यायेन प्राणभृत उपदधातीतिवन्मधुच्छंदस एवोच्यंते । तथा च श्रुतिः । तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पंचाशदेव ज्यायांसो मधुच्छंदसः पंचाशत्कनीयांस इत्यादिः । तत्र च विश्वामित्रेषु भार्गवस्याजीगर्तस्य देवरातस्य ज्येष्ठत्वमवगम्यते । तथा आश्वलायनबौधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तम् । प्रवरश्च तस्मिन्नेव वंशेऽवांतरभेदो न तु वंशांतरम् । तथा च स्मृतिः । एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते तावत्समानगोत्रत्वं विना

शिर आदाय बर्हिषि ॥ सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥ ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ॥ अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥ अन्येभ्योऽवांतरदिशः कश्यपाय च मध्यतः ॥ आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥ ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥ स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ॥ ऋषीणां मंडले सोऽभूत्सप्तमो रामपूजितः ॥ २४ ॥ जामदग्न्योऽपि भगवान्रामः कमललोचनः ॥ आगामिन्यंतरे राजन्वर्तयिष्यति वै बृहत् ॥ २५ ॥ आस्तेऽद्यापि महेंद्राद्रौ न्यस्तदंडः प्रशांतधीः ॥ उपगीयमानचरितः सिद्धगंधर्वचारणैः ॥ २६ ॥ एवं भृगुषु विश्वात्मा भगवान्हरिरीश्वरः ॥ अवतीर्य परं भारं भुवोऽहन्बहुशो नृपान् ॥ २७ ॥ गाधेरभून्महातेजाः समिद्ध इव पावकः ॥ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥ विश्वामित्रस्य चैवासन्पुत्रा एकशतं नृप ॥ मध्यमस्तु मधुच्छंदा मधुच्छंदस एव ते ॥ २९ ॥ पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ॥ आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥ यो वै हरिश्चंद्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबंधनात् ॥ ३१ ॥ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातः शुनःशेपः स भार्गवः ॥ ३२ ॥ ये मधुच्छंदसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥ ३३ ॥ सहोवाच मधुच्छंदाः सार्धं पंचशता ततः ॥ यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥ ज्येष्ठं मंत्रदृशं

भृग्वंगिरोगणादिति ॥ २९ ॥ तत्कुतो भृगुवंशसंभवस्य देवरातस्य कौशिकप्रवरत्वमित्याशंक्य तदुपपादयन्नाह । पुत्रं कृत्वेत्यादि यावत्समाप्ति । पूर्वमजीगर्तसुतत्वे मध्यमत्वेन पितृभ्यां ममतां विहाय विक्रीतत्वात्तस्य कृपया सुतानाह । ज्येष्ठ एष प्रकल्प्यतामिति ॥ ३० ॥ एतदेव स्पष्टयितुं विशिनष्टि य इति द्वाभ्याम् । मुमुचे अमुच्यत ॥ ३१ ॥ भार्गवोऽपि गाधिषु गाधेर्वंशजेषु देवरात इति ख्यातः ॥ ३२ ॥ तत्तस्य ज्येष्ठत्वं कुशलं न मेनिरे । मध्यमस्यानर्थावहत्वं दृष्ट्वा नांगीकृतवंतः । मुनिर्विश्वामित्रः ॥ ३३ ॥ पंचाशता कनिष्ठैः साकं स मध्यमो मधुच्छंदा उवाच । नोऽस्माकं यज्ज्येष्ठत्वं कनिष्ठत्वं वा भवान्पिता संजानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥ ३४ ॥ एवमुक्त्वा मंत्रदृशं कस्य नूनं कतमस्यामृतानामित्यादिमंत्राणां द्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः । तदाह । वयं सर्वे

त्वामन्वंचः स्म हि अनुगंतारः । कनिष्ठाः स्म इत्यर्थः । ततः प्रसन्नो विश्वामित्रस्तान्सुतानाह । वीरवंतः पुत्रवंतो भविष्यथ । ये यूयं मे मानं पूज्यत्वमनुगृह्णंतोऽनुवर्तमानाः मंतो मां वीरवंतं पुत्रवंतमकर्त कृतवंत इत्यर्थः ॥ ३५ ॥ हे कुशिकाः ! एष देवरातो वो युष्मदीयः कौशिक एव । यतो वीरो मत्पुत्रस्तमेनमन्वितानुगच्छत । अन्ये चाष्टकादयस्तस्य सुता आसन् ॥ ३६ ॥ उपसंहरति । एवमिति । एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं तच्च प्रवरांतरमापन्नं प्राप्तम् । हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां षोडशोऽध्यायः ॥ १६ ॥ आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पंचसु ॥ सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥ १ ॥ इह श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमण-

चकुस्त्वामन्वंचो वयं स्म हि ॥ विश्वामित्रः सुतानाह वीरवंतो भविष्यथ ॥ ये मानं मेऽनुगृह्णंतो वीरवंतमकर्त माम् ॥ ३५ ॥ एष वः कुशिका वीरो देवरातस्तमन्वितः ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम् ॥ प्रवरांतरमापन्नं तद्धि चैवं प्रकल्पितम् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे षोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रंभश्च वीर्यवान् ॥ १ ॥ अनेना इति राजेंद्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः ॥ २ ॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥ ३ ॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रं दीर्घतमःपिता ॥ धन्वंतरिर्दर्घतम आयुर्वेदप्रवर्तकः ॥ ४ ॥ यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥ ५ ॥ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥ षष्टिंवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन्मेदिनीं बुभुजे युवा ॥ ७ ॥ अलर्कात्संततिस्तस्मात्सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥ धृष्टकेतुः सुतस्तस्मात्सुकुमारः क्षितीश्वरः ॥ वीतिहोत्रस्य भर्गोतो भार्गभूमिरभून्नृपः ॥ ९ ॥ इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ॥ रंभस्य रभसः पुत्रो गंभीरश्चाक्रियस्ततः ॥ १० ॥ तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ॥ शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥ ११ ॥ ततः शांतरयो जज्ञे कृतकृत्यः स आत्मवान् ॥ रजेः पंचशतान्यासन्पुत्राणाममितौजसाम् ॥ १२ ॥ देवैरभ्यर्थितो दैत्यान्हत्वेंद्रायाददाद्दिवम् ॥ इंद्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥ १३ ॥ आत्मानमर्पयामास प्रह्रादाद्यरिशंकितः ॥ पितर्युपरते पुत्रा याचमा-

मैलादिक्रमेण प्रक्रांतमिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽतिविततत्वादंते निरूप्यते अतः पुरूरवसः पुत्राणां पंचानां कनिष्ठानां वंशानुक्त्वेदानीं प्रथमस्य वंशमाह । य इति । एवं नहुषययातियदुप्रभृतिष्वपि द्रष्टव्यम् ॥ १ ॥ क्षत्रवृधः क्षत्रवृद्धस्य ॥ २ ॥ ३ ॥ दीर्घतमसः पिता ॥ ४ ॥ स्मृतमात्र एवार्तिं रोगदुःखं नाशयतीति तथा ॥ ५ ॥ ततः प्रतर्दनादिशब्दवाच्या द्युमतः सकाशादलर्कादयः ॥ ६ ॥ ७ ॥ अलर्कात्संततिसंज्ञः ॥ ८ ॥ सत्यकेतोर्धृष्टकेतुस्तस्मात्सुकुमारस्तस्माद्वीतिहोत्रस्तस्य भर्गः । अतो भर्गाद्भार्गभूमिः ॥ ९ ॥ काशयः काशेर्वंश्याः काशेः प्रपितामहस्य

क्षत्रवृद्धस्यान्वयमयं ते यांतीति तथा ॥ १० ॥ ततोऽनेनसः शुद्धो जज्ञे ॥ ११ ॥ कृतकृत्यः सः यत आत्मवान् ज्ञानी । अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥ १२–१४ ॥ तेषां मतिभ्रंशाय गुरुणा बृहस्पतिनाऽभिचारविधानेनाग्नौ हूयमाने सति ॥ १५ ॥ सिंहावलोकनेनाह । क्षात्रवृद्धात्क्षत्रवृद्धपौत्रात्कुशात्प्रतिः । प्रतेः संजयः ॥ १६–१८ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ॥ यस्य पंचसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ १ ॥ १ ॥ तस्य राज्यस्य परिणाममनर्थावहत्वं वेत्तीति तथा । तत्र हेतुः । यत्रेति ॥ २ ॥ स्थानात्स्वर्गात् । द्विजैरगस्त्यादिभिः ॥ ३ ॥ यवीयसो भ्रातॄनादिशत् । काव्यस्य शुक्रस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् ॥ ४ ॥ ५ ॥ नात्र प्रतिलोमतादोष ईश्वरघटनादिति दर्शयन्कथा-

नाय नो ददुः ॥ १४ ॥ त्रिविष्टपं महेंद्राय यज्ञभागान्समाददुः ॥ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ १५ ॥ अवधीद्भ्रंशितान्मार्गान्न कश्चिदवशेषितः ॥ कुशात्प्रतिः क्षात्रवृद्धात्संजयस्तत्सुतो जयः ॥ १६ ॥ ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ॥ सहदेवस्ततो हीनो जयसेनस्तु तत्सुतः ॥ १७ ॥ संकृतिस्तस्य च जयः क्षत्रधर्मा महारथः ॥ क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् ॥ १८ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे चंद्रवंशानुवर्णने सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीशुक उवाच ॥ यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः ॥ षडिमे नहुषस्यासन्निंद्रियाणीव देहिनः ॥ १ ॥ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ॥ यत्र प्रविष्टः पुरुष आत्मानं नावबुद्ध्यते ॥ २ ॥ पितरि भ्रंशिते स्थानादिंद्राण्या धर्षणाद्द्विजैः ॥ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥ चतसृष्वादिशद्दिक्षु भ्रातॄन्भ्राता यवीयसः ॥ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबंधुश्च नाहुषः ॥ राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥ ५ ॥ श्रीशुक उवाच ॥ एकदा दानवेंद्रस्य शर्मिष्ठा नाम कन्यका ॥ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥ देवयान्या पुरोद्याने पुष्पितद्रुमसंकुले ॥ व्यचरत्कलगीतालिनलिने पुलिनेऽबला ॥ ७ ॥ ता जलाशयमासाद्य कन्याः कमललोचनाः ॥ तीरे न्यस्य दुकूलानि विजह्रुः सिंचतीर्मिथः ॥ ८ ॥ वीक्ष्य व्रजंतं गिरिशं सह देव्या वृषस्थितम् ॥ सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ॥ स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥ अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसांप्रतम् ॥ अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥ यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये ॥ धार्यते यैरिह ज्योतिः शिवः पंथाश्च दर्शितः ॥ १२ ॥ यान्वंदंत्युपतिष्ठंते लोकनाथाः सुरेश्वराः ॥ भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥ १३ ॥ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः ॥ अस्मद्धार्यं धृतवती शूद्रो

माह । एकदेत्यादिना प्रतिजग्राह तद्वच इत्यंतेन । गुरोः शुक्रस्य पुत्र्या देवयान्या च व्यचरदिति द्वयोरन्वयः ॥ ६ ॥ कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिंस्तस्मिन्पुरोद्याने । अबला शर्मिष्ठा ॥ ७ ॥ सिंचतीः सिंचंत्यः ॥ ८ ॥ ९ ॥ अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समव्ययत्पर्यधात् ॥ १० ॥ असांप्रतमन्याय्यम् ॥ ११ ॥ अन्यायमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति यैरिति त्रिभिः । ये ब्राह्मणाः परस्य पुंसो मुखं मुखादुत्पन्नत्वेन तृप्तिद्वारत्वेन श्रेष्ठा इत्यर्थः । ज्योतिर्ब्रह्म । पंथा वेदमार्गः ॥ १२ ॥ १३ ॥ तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं तत्रापि [illegible]

अस्याश्च पिता नः शिष्यः । एवं सत्यप्यस्माभिर्धार्यं वास इयमसती धृतवती ॥ १४–२० ॥ निषिद्धोऽयं प्रतिलोमसंबंध इति चेत्तत्राह । एष इति ॥ २१ ॥ ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह । न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात् । तदा च देवयानी तं पतिं चकमे । स च गुरुपुत्री मम पूज्येति न तामुदवहत् । ततश्च कुपिता गती तवेयं विद्या निष्फला भवत्विति तं शशाप । स च तव ब्राह्मणः पतिर्न भवेदिति तां शशाप । तदेतदाह । यमहमशपं तस्य शापात् ॥ २२ ॥ अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा

वेदमिवासती ॥ १४ ॥ एवं शपंतीं शर्मिष्ठा गुरुपुत्रीमभाषत ॥ रुषा श्वसंत्युरंगीव धर्षिता दष्टदच्छदा ॥ १५ ॥ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि ॥ किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा ॥ १६ ॥ एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ॥ शर्मिष्ठा प्राक्षिपत्कूपे वासम आदाय मन्युना ॥ १७ ॥ तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ॥ प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥ दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ॥ गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ॥ राजंस्त्वया गृहीतो मे पाणिः परपुरंजय ॥ २० ॥ हस्तग्राहोऽपरे माभूद्गृहीतायास्त्वया हि मे ॥ एष ईशकृतो वीर संबंधो नौ न पौरुषः ॥ २१ ॥ यदिदं कूपलग्नाया भवतो दर्शनं मम ॥ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ॥ कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥ २२ ॥ ययातिरनभिप्रेतं दैवोपहृतमात्मनः ॥ मनस्तु तद्गतं बुध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥ दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ॥ गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥ क्षणार्धमन्युर्भगवान् शिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥ स्वानां तत्संकटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत् ॥ २९ ॥ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशना ॥ तमाह राजञ्छर्मिष्ठामाधास्तल्पेन कर्हिचित् ॥ ३० ॥ विलोक्यौशनसीं राजन् शर्मिष्ठा सप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥ ३१ ॥ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरन् शुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं

तद्गतं तस्यां सकामं स्वं मनश्च बुद्ध्वा न ह्यधर्मे मदीयं मनः प्रविशेदिति तस्याः वचः प्रतिजग्राहांगीकृतवान् ॥ २३ ॥ शर्मिष्ठासंबंधोऽपि दैववशादेवाभवदिति दर्शयन्नाह गते राजनीति नवभिः । उक्तं भिक्षुकीत्यादि । कृतं कूपे प्रक्षेपादि ॥ २४ ॥ कापोतीमुंछवृत्तिम् ॥ २५ ॥ प्रत्यनीका देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्य तथाभूतं ज्ञात्वा । प्रत्यनीकानां विवक्षितमिति वा ॥ २६ ॥ २७ ॥ सानुगा सखीसहिता शर्मिष्ठा मामनुयात्विति ॥ २८ ॥ तत्तस्मान्निर्गताच्छुक्रात्संकटं वीक्ष्य । तत्तस्मादवस्थितादर्थस्य प्रयोजनस्य गौरवं च वीक्ष्य ॥ २९ ॥ तल्पे नाधाः नोप-

गच्छेरित्यर्थः ॥ ३० ॥ ३१ ॥ अपत्यार्थमृतुकाले प्रार्थनात्तस्याः कामपूरणं धर्ममवेत्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्संगमभ्यपद्यत । न तु कामत इत्यर्थः ॥ ३२ ॥ ३३ ॥ आगुर्याः शर्मिष्ठायाः । भर्तुः सकाशात् ॥ ३४ ॥ उपमंत्रयन्प्रसादयन् ॥ ३५ ॥ विकृतं रूपं करोतीति तथा ॥ ३६ ॥ ते दुहितरि कामैरद्याप्यतृप्तोऽस्मि । कामानां भोगैरिति वा । शुक्र आह । तर्हि योऽभिधास्यत्यभितो धारयिष्यति तस्य वयसा यथाकामं व्यत्यस्यतां यथेच्छं जरा व्यत्ययं यातु । व्यत्ययं नीयतामिति वा । यद्वा व्यत्यस्वेति छेदः । तां जरां व्यत्यस्य व्यत्यासंगमयेत्यर्थः ॥ ३७ ॥ इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ॥ ३८–४० ॥ यतो न धर्मज्ञाः अनित्ये च यौवने नित्यबुद्धयः ॥ ४१ ॥ त्वं जरां किं ग्रहीष्यसीत्यपृच्छत् । प्रत्याख्यानं माकृथा इत्याह ।

च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥ गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ॥ ३४ ॥ प्रियामनुगतः कामी वचोभिरुपमंत्रयन् ॥ न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥ शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ॥ त्वां जरा विशतां मंद विरूपकरणी नृणाम् ॥ ३६ ॥ ययातिरुवाच ॥ अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्दुहितरि स्म ते ॥ व्यत्यस्यतां यथाकामं वयसा योऽभिधास्यति ॥ ३७ ॥ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ॥ यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥ मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ॥ वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥ यदुरुवाच ॥ नोत्सहे जरसा स्थातुमंतरा प्राप्तया तव ॥ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥ तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ॥ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ॥ न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥ पूरुरुवाच ॥ को नु लोके मनुष्येंद्र पितुरात्मकृतः पुमान् ॥ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विंदते परम् ॥ ४३ ॥ उत्तमश्चिंतितं कुर्यात्प्रोक्तकारी तु मध्यमः ॥ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥ इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ॥ सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप ॥ ४५ ॥ सप्तद्वीपपतिः सम्यक्पितृवत्पालयन्प्रजाः ॥ यथोपजोषं विषयान् जुजुषेऽव्याहतेंद्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ॥ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥ यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ॥ नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥ तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ॥ नारायणमणीयांसं निराशीरजयत्प्रभुम् ॥ ५० ॥ एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ॥ विदधानोऽपि नातृप्यत्सार्वभौमः कदिंद्रियैः ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीशुक उवाच ॥ स इत्थमाचरन्कामा-

न्त्व मिति ॥ ४२ ॥ आत्मकृतः स्वदेहकर्तुः प्रत्युपकारं कर्तुं को नु क्षमः ॥ ४३ ॥ तथाऽपि पितुर्यच्चिंतितं कुर्यात्स उत्तमः । यस्तु प्रोक्तकारी स मध्यमः । यस्त्वश्रद्धया कुर्यात्सोऽधमः । अकर्ता पितुरुच्चरितं पुरीषप्रायः ॥ ४४ ॥ जुजुषे सेवितवान् ॥ ४५ ॥ यथोपजोषं यथाप्रीति जुजुषे ॥ ४६–४८ ॥ नानेव भाति यावदिंद्रियप्रवृत्तिः । तदुपरमे नाभाति । स्वप्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ॥ ४९ ॥ ५० ॥ मनःसुखं कामभोगम् । कदिंद्रियैः कुत्सितैः पराङ्मुखैरिंद्रियैः ॥ ५१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशे ययातिः स्वं चेष्टितं

नन्वजोपमम् ॥ देवयानीं समाश्राव्य विरक्तो मुक्तिमाश्रवान् ॥ १ ॥ भुक्तभोगामजां हास्यन्नजवद्वृत्तमात्मनः ॥ विडंबयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ २ ॥ कामानाचरन्नुपभुंजानः । गाथा मितिहासम् ॥ १ ॥ मद्विधेन मत्सदृशेनाचरितामनुष्ठिताम् । मद्विधस्याचरितं यस्यामिति वा । यस्य ग्रामनिवासिनः कामिनो मद्विधस्याचरितं वने स्थिता धीराः शोचंति तस्य गाथां शृणु ॥ २ ॥ आत्मानमनुलक्ष्याह । बस्त इति । प्रियामनुलक्ष्याह । अजामिति । वने संसारे । प्रियं विषयम् ॥ ३ ॥ रोधसी तटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थनिर्गमाय मार्गं व्यधत्त ॥ ४ ॥ बह्व्य इति शर्मिष्ठाप्रमुखाः कामयामासुः कांतं प्रति कामिन्यः कामवत्यः ॥ ५ ॥ पीवानं पुष्टम् । श्मश्रुलं श्मश्रुबहुलम् । रतिसमर्थमित्यर्थः । मीढ्वांसं रेतःसेक्तारम् । याभे कोविदमभिज्ञम्

न्स्त्रैणोपहवमात्मनः ॥ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥ शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ॥ धीरा यस्यानुशोचंति वने ग्रामनिवासिनः ॥ २ ॥ बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥ तस्या उद्धरणोपायं बस्तः कामी विचिंतयन् ॥ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसि ॥ ४ ॥ सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल ॥ तथा वृतं समुद्वीक्ष्य बह्व्योऽजाः कांतकामिनीः ॥ ५ ॥ पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ॥ स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ॥ रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥ तमेव प्रेष्ठतमया रममाणमजान्यया ॥ विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥ ७ ॥ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ॥ इंद्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ॥ कुर्वन्निडविडाकारं नाशक्नोत्पथि संधितुम् ॥ ९ ॥ तस्यास्तत्र द्विजः कश्चिदजा स्वाम्यच्छिनद्रुषा ॥ लंबंतं वृषणं भूयः संदधेऽर्थाय योगवित् ॥ १० ॥ संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया ॥ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥ तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयंत्रितः ॥ आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ न दुह्यंति मनः प्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥ यदा न कुरुते भावं सर्वभूतेष्वमंगलम् ॥ समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ॥ तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥ मात्रा स्वस्रा दुहित्रा वा

एव प्रेष्ठम् । नावबुध्यत नान्वबुध्यत ॥ ६ ॥ ७ ॥ स्वामिनमिति शुक्राभिप्रायेणाह ॥ ८ ॥ इडविडाकारं बस्तजातिशब्दम् । संधितुं प्रसादयितुम् ॥ ९ ॥ वृषणमच्छिनज्जरया संभोगासमर्थमकरोत् । अर्थाय स्वपुत्र्याः कामोपभोगाय । योगविदुपायज्ञः । जराव्यत्ययेन रतिशक्तिं ददावित्यर्थः ॥ १० ॥ कूपलब्धया सह कामैः सेव्यमानैर्न तुष्यति ॥ ११ ॥ १२ ॥ ननु तर्हि पुनरपि बहवो विषयाः सेव्यंतां ततो मनसि प्रीते सति कामोपशांत्या मोहो निवर्तेतेति चेत्तत्राह यदिति द्वाभ्याम् । न दुह्यंति न पूरयंति ॥ १३ ॥ हविषा घृतेन कृष्णवर्त्माऽग्निरिव ॥ १४ ॥ तर्हि कदा केनोपायेन वा मनसः संपूर्णा प्रीतिः स्याद्यया कामोपशमः स्यादित्यत आह यदेति षड्भिः । अमंगलं भावं रागद्वेषादिवैषम्यम् ॥ १५ ॥ दुःखानि नितरां वहतीति तथा ताम् ॥ १६ ॥ स्त्रीसं-

विधानं तु सर्वथा त्याज्यमित्याह । मात्रेति । अविविक्तं संकीर्णमासनं यस्य सः । कर्षत्याकर्षति ॥ १७-१९ ॥ ननु तृष्णात्यागस्यातिदुष्करत्वात्कथं ब्रह्मणि मनस आधानं स्यात्तत्राह । दृष्टमिति । यो नानुध्यायेन्न संविशेन्न चोपभुंजीत । तत्र दृष्टश्रुतयोरनुध्यानादौ । स आत्मदृक् भवति ॥ २०-२२ ॥ तस्य पूरोर्वंशे स्थापयित्वा ॥ २३ ॥ विषयेषु शब्दादिष्वासेवितं षड्वर्गं षडिंद्रियसुखं मुमुचे तत्याज । यद्वा विषयेष्वासेवितं सेवां कारितं षण्णामिंद्रियाणां वर्गं मुमुचे उपैक्षतेत्यर्थः ॥ २४ ॥ विधुतं निरस्तं त्रिगुणात्मकं लिंगं येन । प्रतीतः प्रख्यातः ॥ २५ ॥ प्रस्तोभमेवाह ।

नाविविक्तासनो भवेत् ॥ बलवानिंद्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥ पूर्णं वर्षसहस्रं मे विषयान्सेवतोऽसकृत् ॥ तथापि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वंद्वो निरहंकारश्चरिष्यामि मृगैः सह ॥ १९ ॥ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् ॥ संसृतिं चात्मनाशं च तत्र विद्वान्स आत्मदृक् ॥ २० ॥ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ॥ दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ॥ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥ २२ ॥ भूमंडलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ॥ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥ आसेवितं वर्षपूगान्षड्वर्गं विषयेषु सः ॥ क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥ स तत्र निर्मुक्तसमस्तसंग आत्मानुभूत्या विधुतत्रिलिंगः ॥ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥ श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ॥ स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम् ॥ २६ ॥ सा संनिवासं सुहृदां प्रपायामिव गच्छताम् ॥ विज्ञायेश्वरतंत्राणां मायाविरचितं प्रभोः ॥ २७ ॥ सर्वत्र संगमुत्सृज्य स्वप्नौपम्येन भार्गवी ॥ कृष्णे मनः समावेश्य व्यधुनोल्लिंगमात्मनः ॥ २८ ॥ नमस्तुभ्यं भगवते वासुदेवाय वेधसे ॥ सर्वभूताधिवासाय शांताय बृहते नमः ॥ २९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे एकोनविंशोऽध्यायः ॥ १९ ॥ श्रीशुक उवाच ॥ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ॥ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥ जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥ तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥ ऋतेयुस्तस्य कुक्षेयुः स्थंडिलेयुः कृतेयुकः ॥ जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ॥ घृताच्यामिंद्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥ ऋतेयो रंतिभारोऽभूत्त्रयस्तस्यात्मजा नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः

परिहासमिवेति । यद्वा प्रस्तोभं निवृत्तिमार्गे प्रोत्साहनं मेने ॥ २६-२८ ॥ कथं समावेश्य तदाह । नम इति । नमनादिभिः समावेश्येत्यर्थः । शुको वा नमस्करोति ॥ २९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे पितृप्रसादाप्तराजासनमहोन्नतेः ॥ पूरोर्वंशे हि दौष्यंतेर्भरतस्येर्यते यशः ॥ १ ॥ १ ॥ २ ॥ तत्सुतः अहंयातेः सुतः ॥ ३ ॥ धर्मेयुश्च व्रतेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ वनेयुश्चावमः स्मृतः । एवं दशैते ऋतेयुप्रमुखास्तस्य रौद्राश्वस्य घृताच्यामप्सरसि पुत्रा जाताः । अप्सरस इति षष्ठी सप्तम्यर्थे । वशवर्तित्वे दृष्टांतः । जगदात्मनो

जगत आत्मभूतस्य मुख्यस्य प्राणस्येंद्रियाणीव ॥ ५–७ ॥ दुष्यंतस्य शकुंतलायां भरतः पुत्रोऽभवदिति कथाद्वारेणाह दुष्यंतो मृगयामिति पंचदशभिः । तमाश्रमं मंडयंतीम् ॥ ८ ॥ स्त्रीयं विलोक्य मुमुहेऽमुह्यत् ॥ ९ ॥ तस्या दर्शनेन प्रमुदितोऽतएव सन्निवृत्तः परिश्रमो यस्य ॥ १० ॥ ११ ॥ पौरवाणां चेतो न ह्यधर्मे रमते अतो मच्चेतमस्त्वयि रमणादेवाहं त्वां राजन्यतनयां वेद्मि ॥ १२ ॥ विश्वामित्रस्यात्मजाऽहं मेनकायां जाता तया च स्वर्गं गच्छंत्याऽत्र त्यक्ता । अतो राजकन्यैवाहमित्यर्थः ॥ १३ ॥ १४ ॥ किं करवामेत्यादिवाक्यात्तदभिप्रायं ज्ञात्वाऽऽह । उपपन्नमिति ॥ १५ ॥ गांधर्वविधिना मिथः समयपूर्वकेण ॥ १६–१८ ॥ दुरत्ययं विक्रांतं विक्रमणं यस्य ॥ १९ ॥ २० ॥ भस्त्रा चर्मपात्रं तद्वन्माता आधारपात्रम् । पितुरेव तु पुत्रः । तत्र हेतुः । येनेति । आत्मा वै

॥ ६ ॥ तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ॥ पुत्रोऽभूत्सुमते रैभ्यो दुष्यंतस्तत्सुतो मतः ॥ ७ ॥ दुष्यंतो मृगयां यातः कण्वाश्रमपदं गतः ॥ तत्रासीनां स्वप्रभया मंडयंतीं रमामिव ॥ ८ ॥ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ॥ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥ तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ॥ पप्रच्छ कामसंतप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥ का त्वं कमलपत्राक्षि कस्यासि हृदयंगमे ॥ किंवा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ११ ॥ व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ॥ नहि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥ शकुंतलोवाच ॥ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ॥ वेदैतद्भगवान्कण्वो वीर किं करवाम ते ॥ १३ ॥ आस्यतां ह्यरविंदाक्ष गृह्यतामर्हणं च नः ॥ भुज्यतां संति नीवारा उष्यतां यदि रोचते ॥ १४ ॥ दुष्यंत उवाच ॥ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ॥ स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥ ओमित्युक्ते यथाधर्ममुपयेमे शकुंतलाम् ॥ गांधर्वविधिना राजा देशकालविभागवित् ॥ १६ ॥ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ॥ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥ कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ॥ बद्ध्वा मृगेंद्रां-स्तरसा क्रीडति स्म स बालकः ॥ १८ ॥ तं दुरत्ययविक्रांतमादाय प्रमदोत्तमा ॥ हरेरंशांशसंभूतं भर्तुरंतिकमागमत् ॥ १९ ॥ यदा न जगृहे राजा भार्यापुत्रावनिंदितौ ॥ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यंत मावमंस्थाः शकुंतलाम् ॥ २१ ॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुंतला ॥ २२ ॥ पितुर्युपरते सोऽपि चक्रवर्ती महायशाः ॥ महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ ईजे महाभिषेकेन सोऽभिषिक्तोऽ-

पुत्रनामासीति श्रुतेः । भरस्व पुषाण । अनेन भरतनाम निरुक्तम् ॥ २१ ॥ किंच रेतोधा रेतःसेक्ता वंशकृत्पुत्रो यमक्षयात्पितरं नयति तारयति । तथाच श्रुतिः । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवेति । पाठांतरे मातापित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशाद्रेतोधा रेतःसेक्ता पितैव धर्मेण विजित्य पुत्रं नयति न तु मातेत्यर्थः । ततश्च भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥ २२ ॥ चक्रवर्ती बभूवेति शेषः । तस्य महिमा गीयते तदप्येते श्लोका अभिगीता इत्यादिबह्वृचश्रुत्या । हरेरंशभुवोंऽशाज्जातस्य ॥ २३ ॥

तत्र लिंगमाह । चक्रमिति ॥ २४ ॥ गंगायामनुलोमं पंचपंचाशता वाजिभिरीजे । पुरोधाय पुरोहितं कृत्वा । यमुनायामनु च यमुनायाश्चानुलोमम् ॥ २५ ॥ अष्टाधिकसप्तति मेध्यानश्वान्बबंध । किं कुर्वन् । वसु धनं प्रकर्षेण ददत् । साचीगुणे प्रकृष्टमगुणवति देशेऽग्निश्चितोऽभूत् । यस्मिन्नग्निचयने देशे वा सहस्रं ब्राह्मणा भरतेन भूरिदानेन दत्ता गा बद्वशः प्रत्येकं बद्वं बद्वं विभेजिरे विभज्य जगृहुः । चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकं बद्वं भवति । तथा हि । हिरण्येन परिवृतान्कृष्णान् शुक्लदतो मृगान् ॥ मष्णारे भरतोऽददाच्छतं बद्वानि सप्त चेति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन संगृहीतानि अदात्कर्मणि मष्णारे नियुतानि चतुर्दशेति । एवं चतुर्दशलक्षाणां सप्ताधिकशतभागो बद्वमित्युक्तम् । इयं च बद्वसंख्या श्लोकेन संगृह्यते । चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश ॥ २६ ॥ देवानामपि मायां वैभवमत्यगादत्यशेत । यतः गुरुं पूज्यं हरिमाययौ प्राप्तः तदंशभवत्वात् । मायवत्तर इति पाठे ह्रस्वः श्रुत्यनुसारेण । मायावतां श्रेष्ठो हरिरेवासावित्यर्थः ॥ २७ ॥ मृगान् श्रेष्ठगजान् । भद्रमंद्रमृगादयो गजजातिभेदाः । मष्णारे इत्यस्य श्रुतिपदस्य व्याख्यानं कर्मणीति कस्मिंश्चि-

धिराड्विभुः ॥ २४ ॥ पंचपंचाशता मेध्यैर्गंगायामनु वाजिभिः ॥ सामंतेयं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥ अष्टसप्ततिमेध्याश्वान्बबंध प्रददद्वसु ॥ भरतस्य हि दौष्यंतेरग्निः साचीगुणे चितः ॥ सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे ॥ २६ ॥ त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन्नृपान् ॥ दौष्यंतिरत्यगान्मायां देवानां गुरुमाययौ ॥ २७ ॥ मृगान् शुक्लदतः कृष्णान्हिरण्येन परीवृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २८ ॥ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ॥ नैवापुर्नैव प्राप्स्यंति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥ किरातहूणान्यवनानंध्रान्कंकान्कशान् शकान् ॥ अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान् ॥ ३० ॥ जित्वा पुराऽसुरा देवान्ये रसौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ॥ ३१ ॥ सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥ स सम्राट् लोकपालाख्यमैश्वर्यमधिराट्श्रियम् ॥ चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह ॥ ३३ ॥ तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ॥ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥ तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥ अंतर्वत्न्यां भ्रातृपत्न्यां

त्कर्मविशेषे केचित्तु मष्णारे तीर्थे इति व्याचक्षते ॥ २८–३० ॥ पुरा देवान् जित्वा येऽसुरा रसौकांसि रसातलादिस्थानि भेजिरे तैः प्राणिभिर्बलिभिर्देवस्त्रियो रसातलं नीताः सतीः पुनराहरदानिन्ये । प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता इति वा । पणिभिरिति पाठे पणयोऽसुरास्तैर्नीताः सतीः । यद्वा पणयो दूतास्तैर्दूतान्प्रस्थाप्याहरदित्यर्थः ॥ ३१ ॥ त्रिणवसाहस्रीः समा सप्तविंशतिसहस्रं वत्सरान् । चक्रं सेना आज्ञा वा ॥ ३२ ॥ तस्य वैराग्येण मोक्षप्रकारमाह । स इति । मृषेति विचार्येति शेषः ॥ ३३ ॥ नानुरूपा मत्सदृशा न भवंतीति भर्त्रा ईरिते सति व्यभिचारशंकयाऽस्मांस्त्यक्ष्यतीति भयात्पुत्रान् जघ्नुः पुनः पुत्राणां दर्शने वैसादृश्यानुसंधानेन त्यजेन्नान्यथेत्याशयेन हतवत्यः ॥ ३४ ॥ वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नाः संतो मरुतो भरद्वाजं नाम पुत्रमुपाददुः समर्पयामासुः ॥ ३५ ॥ मरुतां भरद्वाजागमप्रकारं प्रदर्शयन्नाह अंतर्वत्न्यामिति चतुर्भिः । अंतर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां चौर्येण मैथुनाय कदाचित्प्रवृत्तौ बृहस्पतिस्तदा द्वितीयगर्भस्यावकाशाभावादाक्रोशपूर्वकं गर्भस्थेन वारितस्ततः क्रुद्धो बृहस्पतिरंधो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिंचत्ततो बृहस्पतेः शापाद्गर्भस्थो दीर्घ-

तमा अंधो बभूव तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निःसारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥ ३६ ॥ तं च परवीर्यजं भर्तुस्त्यागाद्विशंकितां सतीं त्यक्तुकामां ममतां प्रति गुरा एनं बृहस्पतेर्ममतायाश्च विवादरूपं श्लोकं जगुः । किमर्थं जगुरत आह । तस्य नाम निरुच्यते येन तत् । तन्नामनिर्वचनेनैव भर्तुस्त्यागशंकामपाकर्तुमित्यर्थः ॥ ३७ ॥ तत्र पुत्रं त्यक्त्वा यांतीं ममतां बृहस्पतिराह । हे मूढे ! इमं पुत्रं भर पुषाण । भर्तुर्बिभेमीति चेत्तत्राह । द्वाजमेकस्य क्षेत्रेऽन्यस्य बीजादित्येवं द्वाभ्यां जातमतस्तस्य।ऽयं पुत्र इति न तस्माद्भयशंकेत्यर्थः । एवमुक्ता सती तं प्रत्याह। हे बृहस्पते ! त्वमिमं भर यतो द्वाजं द्वाभ्यामावाभ्यामन्यायतो जातम् । अतो नाहमेकाकिनी भरामीत्यर्थः। यद्यस्मादेवमुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाज इति । पाठांतरे यस्य त्यागदुःखात्पितरौ यातावित्यर्थः ॥ ३८ ॥ वितथं व्यभिचारसंभवात्तमात्मजं वितथं निरर्थकं मत्वा ममता व्यसृजत्तत्याज । पाठांतरे आदिजं प्रथमजं भर्तुर्वीर्याजा-

मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥ तं त्यक्तुकामां ममतां भर्तृत्यागविशंकिनाम् ॥ नामनिर्वचनं तस्य श्लोक-मेनं सुरा जगुः ॥ ३७ ॥ मूढे भर द्वाजमिमं भरद्वाजं बृहस्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतो बिभ्रन्दत्तोऽयं बितथेऽन्वये ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे विंशोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ॥ महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥ १ ॥ गुरुश्च रंतिदेवश्च संकृतेः पांडुनंदन ॥ रंति-देवस्य हि यश इहामुत्र च गीयते॥ २॥ वियद्वित्तस्य ददता लब्धं लब्धं बुभुक्षतः॥ निष्किंचनस्य धीरस्य सकुटुंबस्य सीदतः॥ ३ ॥ व्यतीयुरष्टचत्वा-रिंशदहान्यपिबतः किल ॥ घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥ कृच्छ्रप्राप्तकुटुंबस्य क्षुत्तृड्भ्यां जातवेपथोः ॥ अतिथिर्ब्राह्मणः काले भोक्तु-कामस्य चागमत् ॥ ५ ॥ तस्मै संव्यभजत्सोऽन्नमादृत्य श्रद्धयान्वितः ॥ हरिं सर्वत्र संपश्यन्स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥ अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ॥ विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥ याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ॥ राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥ स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतम् ॥ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ॥ पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥ तस्य तां करुणां वाचं निशम्य विपुलश्रमाम् ॥ कृपया भृशसंतप्त इदमाहामृतं वचः ॥ ११ ॥

तमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः । एवं तया त्यक्तं मरुतोऽबिभ्रन्नबिभरुः । तदेवं मरुद्भिः प्राप्तोऽयं भरतस्यान्वये वितथे सति दत्तः ॥३९॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥ एकविंशे तु दौष्यंतेः सुतस्यान्वय उच्यते । रंतिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ १ ॥ भरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञो भरद्वाजः स च ब्राह्मणोऽपि भरतस्य दत्तः पुत्रो जात इति तद्वंशोऽनुक्रम्यते । वितथस्य सुतो मन्युस्तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाः पंच पुत्रा बभूवुः ॥ १ ॥ २ ॥ वियद्वित्तस्य वियतो गगनादिवोद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य । यद्वा वियद्वच्चयं प्राप्नुवद्वित्तं भोग्यं यस्य । तदेवाह । बुभुक्षतोऽपि सतो लब्धं लब्धं ददतः । तत्प्रपंचयति । निष्किंचनस्येत्यादिसार्धैः पंचदशभिः ॥ ३ ॥ अपिबतो जलपानमप्य-कुर्वतः । घृतादित्रयाणां द्वंद्वैक्यम् । तोयं च ॥ ४–६ ॥ अथान्यो वृषलोऽतिथिरागमत् । विभक्तस्य कुटुंबार्थमन्नादिकं विभक्तवतः ॥ ७ ॥ सगणाय श्वयूथसहिताय ॥ ८ ॥ ९ ॥ उच्छेषमुर्वरि-

तम् । एकमेव तर्पयतीति तथा ॥ १० ॥ ११ ॥ परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयं भोक्तुमाशास्ते । नेति । अणिमाद्यष्टमहर्द्धियुक्तां गतिमपि मोक्षमपि चाहं न कामये । तर्हि किं कामयसे तदाह । अखिलदेहभाजामार्तिं दुःखं तत्तद्भोक्तृरूपेणांतःस्थितः सन्नहं प्रपद्ये प्राप्नुयामित्येवं कामये येन तद्दुःखभोक्त्रा मया हेतुभूतेन ते सर्वेऽदुःखा भवंति ॥ १२ ॥ ननु दुःखं किमिति प्रार्थयसे परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तिरित्याह । क्षुत्तृडिति कृपणस्य जंतोर्जीवनहेतोर्जलस्यार्पणान्मे सर्वे क्षुत्तृडादयो निवृत्ताः ॥ १३ ॥ इत्येवं प्रभाष्य ॥ १४ ॥ त्रिभुवनाधीशा ब्रह्मादयः । माया-स्तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीताः संत इत्यर्थः ॥ १५ ॥ परं केवलं वासुदेवे भक्त्या नमश्चक्रे न तु तान्किमपि याचितवान् ॥ १६ ॥ अनन्यराधस ईश्वरातिरिक्तफलांत-रानपेक्षस्य । प्रत्यलीयतात्मन्येव लीना बभूव ॥ १७ ॥ १८ ॥ मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्यैव गर्गस्य वंशमाह । गर्गादिति । महावीर्यस्य वंशमाह । दुरितक्षयस्तस्य त्र्य्यारुणिः

न कामयेऽहं गतिमीश्वरात्परामष्टर्धियुक्तामपुनर्भवं वा ॥ आर्तिं प्रपद्येऽखिलदेहभाजामंतःस्थितो येन भवंत्यदुःखाः ॥ १२ ॥ क्षुत्तृट्श्रमो गात्रपरि-श्रमश्च दैन्यं क्लमः शोकविषादमोहाः ॥ सर्वे निवृत्ताः कृपणस्य जंतोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥ इति प्रभाष्य पानीयं म्रियमाणः पिपा-सया ॥ पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥ १४ ॥ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ॥ आत्मानं दर्शयांचक्रुर्माया विष्णुविनि-र्मिताः ॥ १५ ॥ स वै तेभ्यो नमस्कृत्य निःसंगो विगतस्पृहः ॥ वासुदेवे भगवति भक्त्या चक्रे नमः परम् ॥ १६ ॥ ईश्वरालंबनं चित्तं कुर्वतोऽन-न्यराधसः ॥ माया गुणमयी राजन्स्वप्नवत्प्रत्यलीयत ॥ १७॥ तत्प्रसंगानुभावेन रंतिदेवानुवर्तिनः ॥ अभवन्योगिनः सर्वे नारायणपरायणाः ॥१८॥ गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत ॥ दुरितक्षयो महावीर्यात्तस्य त्र्य्यारुणिः कविः ॥ १९ ॥ पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम् ॥ २० ॥ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ अजमीढश्च वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥ अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ॥ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ २२ ॥ तत्सुतो विशदस्तस्य सेनजित्समजायत ॥ रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥ रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः ॥ पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥२४॥ सकृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ स योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् ॥ २५ ॥ जैगीषव्योपदेशेन योगतंत्रं चकार ह ॥ उदक्स्व-

कविः पुष्करारुणिश्चेति त्रयः पुत्राः ॥ १९ ॥ कथंभूताः । ये अत्र वंशे ब्राह्मणगतिं ब्राह्मणरूपतां गतास्ते । मन्युपुत्राणां पंचानां ज्येष्ठस्य वंशमाह । बृहत्क्षत्रस्येति । यद्येन हस्तिनापुरं कृतमित्यर्थः ॥ २० ॥ अजमीढादयस्त्रयो हस्तिनः पुत्राः ॥ २१ ॥ अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाऽभवत् ॥ २२ ॥ २३ ॥ पारस्य तनयो नीपः । नीपस्य पुत्रशतम् ॥ २४ ॥ स एव कृत्वीसंज्ञायां शुक-कन्यायां ब्रह्मदत्तं जनयामास । तदुक्तं हरिवंशादिषु । पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिवोज्ज्वलन् ॥ स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति ॥ कृष्णं गौरप्रभं शंभुं तथा भूरिश्रुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य चेति । यद्यपि शुक उत्पत्त्यैव विमुक्तसंगो निर्गतस्तथाऽपि विरहातुरं व्यासमनुयांतं दृष्ट्वा छायाशुकं निर्माय गतवांस्तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्यविरोधः स ब्रह्मदत्तो योगी । गवि वाचि सरस्वत्याम् ॥ २५ ॥ स एव योगतंत्रं चकार । बार्हदीषवा बृह-

दिवोर्वंश्या इमे । दीर्घत्वमार्षम् ॥ २६ ॥ सुपार्श्वकृत्सुपार्श्वस्य पिता ॥ २७ ॥ प्राच्यसाम्नां षट् संहिता जगौ विभज्यार्पितवान् ॥ २८ ॥ २९ ॥ अजमीढस्य वंश्याः प्रियमेधादयः केचिद्ब्राह्मणा बभूवुर्बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम् । तस्यैव वंशांतरमाह । नलिन्यामिति यावत्समाप्ति ॥ ३० ॥ ३१ ॥ मुद्गल एको यवीनरादयश्चत्वार इत्येवं पंच ॥ ३२ ॥ ३३ ॥ मार्म्याद्धर्म्याश्व-पुत्रात् । मिथुनं चाभूत् । तदेवाह । दिवोदासः पुमानहल्या च कन्यकेति ॥ ३४–३६ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ द्वाविंशे तु दिवोदासवंशश्चक्र्वाऽऽ

नस्ततस्तस्माद्भल्लादो बार्हदीषवाः ॥ २६ ॥ यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ॥ नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥ २७ ॥ सुपार्श्वात्सुमतिस्तस्य पुत्रः संनतिमांस्ततः ॥ कृती हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥ २८ ॥ संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुध-स्ततः ॥ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुंजयः ॥ २९ ॥ ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्य नीलः शांतिः सुत-स्ततः ॥ ३० ॥ शांतेः सुशांतिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्य पंचासन्मुद्गलादयः ॥ ३१ ॥ यवीनरो बृहदिषुः कांपिल्यः संजयः सुताः ॥ भर्म्याश्वः प्राह पुत्रा मे पंचानां रक्षणाय हि ॥ ३२ ॥ विषयाणामलमिमे इति पंचालसंज्ञिताः ॥ मुद्गलाद्ब्रह्मनिर्वृत्तं गोत्रं मौद्गल्य-संज्ञितम् ॥ ३३ ॥ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ॥ अहल्या कन्यका यस्यां शतानंदस्तु गौतमात् ॥ ३४ ॥ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥ शरस्तंबेऽपतद्रेतो मिथुनं तदभूच्छुभम् ॥ तद्दृष्ट्वा कृपयाऽगृह्णाच्छंतनुर्मृगयां चरन् ॥ कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे एकविंशोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ मित्रेयुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ॥ सुदासः सहदेवोऽथ सोमको जंतुजन्मकृत् ॥ १ ॥ तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः ॥ द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥ धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पंचालका इमे ॥ योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥ तपत्यां सूर्य-कन्यायां कुरुक्षेत्रपतिः कुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥ ४ ॥ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती ॥ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥ कुशांबमत्स्यप्रत्यग्रचेदिपाद्याश्च चेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥ जज्ञे सत्यहितोऽपत्यं पुष्पवां-स्तत्सुतो जहुः ॥ अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥ ते मात्रा बहिरुत्सृष्टे जरया चाभिसंधिते ॥ जीव जीवेति क्रीडंत्या जरा-संधोऽभवत्सुतः ॥ ८ ॥ ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥ ९ ॥ ततो विदूरथस्तस्मात्सार्वभौम-

वर्णिताः ॥ ऋक्षवंशे जरासंधपार्थदुर्योधनादयः ॥ १ ॥ १ ॥ तस्य सोमकस्य पुत्राणां शतं बभूव । तेषां जंतुर्ज्येष्ठो यवीयान्पृषतः ॥ २ ॥ अजमीढस्यैव वंशांतरमाह । य इति । ततः संवरणात्कुरुः ॥ ३ ॥ ४ ॥ तस्य कृतिनः उपरिचरो वसुः । ततो वसोः बृहद्रथो मुखमादिर्येषाम् ॥ ५ ॥ तानेवाह । कुशांबेति । तत्सुतः पुष्पवान् जज्ञे । तस्यापत्यं सत्यहित इति योज्यम् ॥ ६ ॥ ७ ॥

या राज्ञस्या ॥ ८ ॥ यद्यस्मात्सोमापेः श्रुतश्रवाः । कुरोः पुत्रः परीक्षिदनपत्यः । जाह्नवो जह्नोः पुत्रः ॥ ९ ॥ अतो राधिकादयुतोऽभूदित्यर्थः ॥ १० ॥ ११ ॥ तस्य प्रतीपशंतनुवाल्हीकाः ॥ १२ ॥ प्राक् पूर्वजन्मनि महाभिष इति संज्ञा यस्य सः ॥ १३ ॥ यदा देवो न ववर्ष तदा शंतनुस्तत्र कारणं ब्राह्मणानपप्रच्छ ॥ १४ ॥ ब्राह्मणैश्चैवमुक्तः । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥ परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वज इति स्मृतेर्योऽग्रभुक् भुवमग्रतो भुनक्ति अयं त्वादृशोऽपि परिवेत्तैव भवति । अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्येवमुक्तः शंतनुर्वनं गत्वा ज्येष्ठं छंदयामास राज्ञः प्रजापालनादिः परो धर्मोऽतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततः पूर्वमेव तस्य मंत्रिणा अश्मरावसंज्ञेन देवापिं पाखंडीकृत्य राज्यानर्हं कर्तुं ये

स्ततोऽभवत् ॥ जयसेनस्तत्तनयो राधिकोतोऽयुतोह्यभूत् ॥ १० ॥ ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ॥ ऋष्यस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः ॥ ११ ॥ देवापिः शंतनुस्तस्य बाह्लीक इति चात्मजाः ॥ पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥१२॥ अभवच्छंतनू राजा प्राङ्महाभिषसंज्ञितः ॥ यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥ शांतिमाप्नोति चैवाग्र्यां कर्मणा तेन शंतनुः ॥ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥ १४ ॥ शंतनुर्ब्राह्मणैरुक्तः परिवेत्ता त्वमग्रभुक् ॥ राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥ एवमुक्तो द्विजैर्ज्येष्ठं छंदयामास सोऽब्रवीत् ॥ तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥ १६ ॥ वेदवादातिवादान्वै तदा देवो ववर्ष ह ॥ देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥ शलश्च शंतनोरासीद्गंगायां भीष्म आत्मवान् ॥ सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ १९ ॥ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ शंतनोर्दाशकन्यायां जज्ञे चित्रांगदः सुतः ॥ २० ॥ विचित्रवीर्यश्चावरजो नाम्ना चित्रांगदो हतः ॥ यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥ २१ ॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ हित्वा स्वशिष्यान्पैलादीन् भगवान्बादरायणः ॥ २२ ॥ मह्यं पुत्राय शांताय परं गुह्यमिदं जगौ ॥ विचित्रवीर्योऽथोवाह काशिराजसुते बलात् ॥ २३ ॥ स्वयंवरादुपानीते अंबिकां बालिके उभे ॥ तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ॥ धृतराष्ट्रं च पांडुं च विदुरं चाप्यजीजनत् ॥ २५ ॥ गांधार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ॥ तत्र दुर्योधनो ज्येष्ठो दुःशला चापि

प्रहिता विप्रास्तैः पाखंडमताश्रयया गिरा वेदाद्विभ्रंशितः सन् वेदवादस्यातिवादान्निंदावचनानि सोऽब्रवीत् । ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शंतनोर्दोषाभावाद्देवो ववर्षेत्यर्थः ॥ १५-१७ ॥ ततः सोमदत्ताद्भूरिर्भूरिश्रवाः शलश्चेति त्रयः ॥ १८ ॥ १९ ॥ रामो जामदग्न्यः । दाशकन्यायामिति । उपरिचरस्य वसोर्वीर्ये मत्स्यगर्भादुत्पन्ना दाशैः कैवर्तैः पालिताऽतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥ २० ॥ नाम्ना तत्समाननाम्ना चित्रांगदेन गंधर्वेण युद्धे हतः । यस्यां सत्यवत्यां शंतनुपरिग्रहात्पूर्वमेव ॥ २१ ॥ वेदा गुप्ता येन । यतोऽहं जात इदं भागवतं चाध्यगामधिगतवानस्मि ॥ २२ ॥ २३ ॥ स्वयंवराद्भीष्मेण बलादुपानीते ॥ २४ ॥ मात्रा सत्यवत्योक्त इति निषेधाभावमाह । अपतिरपत्यलिप्सुर्देवराद्गुरुप्रयुक्ता ऋतुमतीयादित्यादिवचनात् ॥ २५ ॥ दुःशला-

नाम कन्या च जज्ञे ॥ २६ ॥ अरण्ये मृगशापान्मैथुनेन रुद्धस्य प्रतिबद्धस्य ॥ २७ ॥ नासत्यदस्राभ्यामश्विनीकुमाराभ्याम् । पंचभ्यो युधिष्ठिरादिभ्यः पंचाऽभवन् ॥ २८ ॥ २९ ॥ तथाऽपरे भार्यांतरेषु ॥ ३० ॥ काली चान्या भीमस्य भार्या तस्यां ततो भीमसेनात्सर्वगतो नाम पुत्रोऽभवदित्यर्थः ॥ ३१ ॥ उलूप्यां नागकन्यायाम् । मणिपूरपतेः सुतायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनमसूत अतस्तत्पुत्रः सन्नपि स पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२–३६ ॥ पुरसंज्ञं पुरोहितं कृत्वा ॥ ३७ ॥ भविष्यानाह । तस्य पुत्र इति यावत्समाप्ति । याज्ञवल्क्यात्क्रियाज्ञानं परं ज्ञात्वा

कन्यका ॥ २६ ॥ शापान्मैथुनरुद्धस्य पांडोः कुंत्यां महारथाः ॥ जाता धर्मानिलेंद्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥ नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ॥ द्रौपद्यां पंच पंचभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥ युधिष्ठिरात्प्रतिविंध्यः श्रुतसेनो वृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥ सहदेवसुतो राजन् श्रुतकर्मा तथापरे ॥ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥ भीमसेनाद्धिडिंबायां काल्यां सर्वगतस्ततः ॥ सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥ करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ॥ इरावंतमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥ तव तातः सुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥ ३४ ॥ तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥ जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ सर्पान्वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ॥ ३६ ॥ कावषेयं पुरोधाय तुरं तुरगमेधयाट् ॥ समंतात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥ तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन् ॥ अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापि निमिचक्रस्तु तत्सुतः ॥ ३९ ॥ गजाह्वये हृते नद्या कौशांब्यां साधु वत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात्कविरथः सुतः ॥ ४० ॥ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महा-पतिः ॥ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥ ४१ ॥ परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ नृपंजयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति ॥ ४२ ॥ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ शतानीकाद्दुर्दमनस्तस्यापत्यं बहीनरः ॥ ४३ ॥ दंडपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥ क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ अथ मागधराजानो भवितारो वदामि ते ॥ ४५ ॥ भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ॥ ततो युतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥ सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्म-

शौनकात्प्राप्स्यत्यस्त्रज्ञानं च कृपाचार्यादिति द्रष्टव्यम् । याज्ञवल्क्यात्त्रयीमधीत्य कृपादस्त्राण्यवाप्येति वैष्णवोक्तेः । क्वचित्तु अस्त्रज्ञानं कृपाचार्यादित्येव पाठः ॥ ३८–४० ॥ यत्तस्मात्सुखीनलः पुत्रः ॥ ४१ ॥ तस्मात्परिप्लवात्सुनयस्तस्यात्मजो मेधावीत्यर्थः ॥ ४२ ॥ तस्मात्सुदासस्ततः शतानीक इत्यर्थः ॥ ४३–४५ ॥ बृहद्रथस्य जरासंधस्य सहदेवस्तस्य मार्जारिः । यस्मान्मार्जारिः

श्रुतश्रवाः ॥ ४६–४८ ॥ सहस्रसंवत्सरमंते भाव्या भूपालास्ततः परं भाव्यान् द्वादशस्कंधे वक्ष्यति ॥ ४९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे त्वनो-
द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ॥ यदोश्च वंशोऽनुक्रांतो यावज्ज्यामघसंभवः ॥ १ ॥ तदेवं ययातेः पुत्राणां पंचमस्य पूरोर्वंशोऽनुक्रांत इदानीं चतुर्थस्य वंशमनुक्रामति । अनोरिति कर्णस्य जगतीप-

जित् ॥ ततः सृतंजयाद्विप्रः शुचिस्तस्य भविष्यति ॥ ४७ ॥ क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः शमस्ततः ॥ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ४८ ॥ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुंजयः ॥ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीशुक उवाच ॥ अनोः सभानरश्चक्षुः परोक्षश्च सुतास्त्रयः ॥ सभानरात्कालनरः सृंजयस्तत्सुतस्ततः ॥ १ ॥ जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ॥ उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥ शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ वृषादर्भः सुवीरश्च मद्रः कैकेय आत्मजाः ॥ ३ ॥ शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ॥ ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥ अंगवंगकलिंगाद्याः सुह्मपुंड्रांध्रसंज्ञिताः ॥ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥ चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्यकांश्च ते ॥ खनपानोऽगतो जज्ञे तस्माद्दिविरथस्ततः ॥ ६ ॥ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजः ॥ रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥ शांतां स्वकन्यां प्रायच्छदृष्यशृंग उवाह ताम् ॥ ७ ॥ देवे वर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥ नाट्यसंगीतवादित्रैर्विभ्रमालिंगनार्हणैः ॥ ८ ॥ स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ॥ ९ ॥ चतुरंगो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥ १० ॥ बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ॥ आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ ११ ॥ विजयस्तस्य संभूत्यां ततो धृतिरजायत ॥ ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ १२ ॥ योऽसौ गंगातटे क्रीडन्मंजूषांतर्गतं शिशुम् ॥ कुंत्यापविद्धं कानीनमनपत्योऽकरोत्सुतम् ॥ १३ ॥ वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः ॥ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ १४ ॥ आरब्धस्तस्य गांधारस्तस्य धर्मसुतो धृतः ॥ धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम् ॥ १५ ॥ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ॥ १६ ॥ त्रिभानुस्तत्सुतोऽस्यापि करंधम उदारधीः ॥ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥ दुष्यंतः स पुनर्भेजे स्वं वंशं राज्यकामुकः ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥ १८ ॥ वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥ यत्रावतीर्णो भगवान्परमात्मा नराकृतिः ॥ यदोः सहस्रजित्क्रोष्टानलो रिपुरिति श्रुताः ॥ २० ॥ चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः ॥ महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥

तेरित्यंतेन ॥ १ ॥ तस्य जनमेजयस्य महाशीलस्तस्य महामनाः ॥ २ ॥ चत्वार उशीनरात्मजाः । संधिरार्षः ॥ ३–१७ ॥ स दुष्यंतः । स्वं वंशं पौरवं वंशम् ॥ १८–२० ॥ प्रथमस्य सहस्रजितः

आत्मजः ॥ २१ ॥ कुंतेः सोहंजिः सोहंजेर्महिष्मान्महिष्मतो भद्रसेनकः ॥ २२ ॥ भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ । कृतवीर्यस्य जनकः । कृतवीर्यादयश्चत्वारो धनकस्यात्मजा इत्यर्थः ॥ २३–२५ ॥ अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य सः । अत्यर्थं पड्वसु पडिंद्रियविषयं बुभुजे ॥ २६ ॥ २७ ॥ और्वस्य तेजसा समरेणोपसंहतमित्यर्थः ॥ २८ ॥ तेषां तालजंघ-पुत्राणां ज्येष्ठः । तस्य मधोः पुत्रशतम् । वृष्णिर्ज्येष्ठो यस्मिन् । यतो मधोर्वृष्णेर्यदोश्च हेतोरिदं कुलम् ॥ २९–३१ ॥ चतुर्दश महारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः । तानि च मार्कंडेयपुराणे वर्णितानि । गजवाजिरथस्त्रीषु निधिमाल्यांबरद्रुमाः ॥ शक्तिपाशमणिच्छत्रविमानानि चतुर्दशेति । दशानां पत्नीसहस्राणां भार्यायुतस्य प्रत्येकं लक्षं लक्षमित्येवं तासु पुत्राणां दशलक्षसहस्राणि

धर्मस्तु हैहयसुतो नेत्रः कुंतेः पिता ततः ॥ सोहंजिरभवत्कुंतेर्महिष्मान्भद्रसेनकः ॥ २२ ॥ दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ॥ कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २३ ॥ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः ॥ २४ ॥ न नूनं कार्तवीर्यस्य गतिं यास्यंति पार्थिवाः ॥ यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २५ ॥ पंचाशीतिसहस्राणि ह्यव्याहतबलः समाः ॥ अनष्टवित्तस्मरणो बुभुजेऽक्ष-य्यषड्वसु ॥ २६ ॥ तस्य पुत्रसहस्रेषु पंचैवोर्वरिता मृधे ॥ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥ जयध्वजात्तालजंघस्तस्य पुत्रशतं त्व-भूत् ॥ क्षत्रं यत्तालजंघाख्यमौर्वतेजोपसंहृतम् ॥ २८ ॥ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ तस्य पुत्रशतं त्वासीद्वृष्णिर्ज्येष्ठं यतः कुलम् ॥ २९ ॥ माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः ॥ यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ ३० ॥ श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथ-स्ततः ॥ शशबिंदुर्महायोगी महाभोजो महानभूत् ॥ ३१ ॥ चतुर्दश महारत्नश्चक्रवर्त्यपराजितः ॥ तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥३२॥ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ ३३ ॥ धर्मो नामोशना तस्य हयमेधशतस्य याट् ॥ तत्सुतो रुचकस्तस्य पंचाशन्नात्मजाः शृणु ॥ ३४ ॥ पुरुजिद्रुक्मरुक्मेषु पृथुज्यामघसंज्ञिताः ॥ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ ३५ ॥ नाविंदच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ॥ रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता ॥ ३६ ॥ केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ स्नुषा तवेत्यभिहिते स्मयंती पतिमब्रवीत् ॥ ३७ ॥ अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ॥ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥३८॥ अन्वमोदंत तद्विश्वेदेवाः पितर एव च ॥ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् ॥ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥ इति

जनयामास ॥ ३२ ॥ पृथुश्रवाः पृथुकीर्तिः । पृथुयशा इत्यादयः षट् प्रधानाः श्रेष्ठा येषां तेषां मध्ये ॥ ३३ ॥ पंच आत्मजा आसंस्तान् शृणु ॥ ३४ ॥ तानेवाह । पुरुजिदिति । भार्याभयादेकैक-भार्यस्य वंध्यापतेर्ज्यामघस्यापुत्रस्य तद्भयमेव पुत्रप्रदमभवदिति दर्शयन्नाह । ज्यामघस्त्विति ॥ ३५ ॥ ३६ ॥ ३७ ॥ यदि मे सपत्नी स्यात्तर्हि स्नुषेयं युज्येतापि न त्वेतदस्तीत्याह । असपत्नी चेति । अतिभयव्याकुल आह जनयिष्यसीति ॥ ३८ ॥ भार्याभयप्रकंपमानस्विन्नसर्वांगस्य राज्ञः प्राणसंकटमालोक्यानुकंपितास्तेन पूर्वं बहुकालमाराधिताश्च विश्वेदेवाः पितरश्च तथेत्यन्वमोदंत । ततश्च देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तगुणेन च निवृत्तरजस्काऽपि शैब्या गर्भमधात् । तस्य च महिमा पराशरादिभिरुक्तः । यथोक्तम् । भार्यावश्यास्तु ये केचिद्भविष्यंत्यथवा मृताः ॥

तेषां तु ज्यामघः श्रेष्ठः शैव्यापतिरभून्नृप इति ॥ ३९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ॥ वंशा नानामुख्याः प्रोक्ता रामकृष्णोद्भवावधि ॥ १ ॥ १ ॥ चैद्यादयो दमघोषादयः ॥ २ ॥ ३ ॥ ततो दशरथाच्छकुनिः । पुराणांतरादेवमादिविशेषो द्रष्टव्यः ॥ ४ ॥ ततः कुरुवंशादनुः । अनोः पुत्रः पुरुहोत्रः ॥ ५ ॥ ६ ॥ महाभोजश्चेत्येवं सप्त । मारिष हे आर्य ॥ ७ ॥ ८ ॥ ९ ॥ ततस्तदुपदेशेन ये पंचषष्ट्यादिसंख्याः पुरुषास्तेऽमृतत्वं मोक्षं प्राप्ताः ॥ १० ॥ ११ ॥ तस्य युधाजितः शिनिरनमित्रश्च ॥ १२ ॥ १३ ॥

श्रीमद्भागवते महापुराणे नवमस्कंधे यदुवंशानुवर्णने त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीशुक उवाच ॥ तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ ॥ तृतीयं रोमपादं च विदर्भकुलनंदनम् ॥ १ ॥ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ॥ उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृप ॥ २ ॥ क्रथस्य कुंतिः पुत्रोऽभूद्वृष्टिस्तस्याथ निर्वृतिः ॥ ततो दशार्हो नाम्नाऽभूत्तस्य व्योमः सुतस्ततः ॥ ३ ॥ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ॥ ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥ करंभिः शकुनेः पुत्रो देवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥ पुत्रहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ॥ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोंऽधकः ॥ सात्वतस्य सुताः सप्त महाभोजश्च मारिष ॥ ६ ॥ भजमानस्य निम्लोचिः किंकिणो धृष्टिरेव च ॥ एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ॥ शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ७ ॥ बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठंत्यमू ॥ ८ ॥ यथैव शृणुमो दूरात्संपश्यामस्तथांऽतिकात् ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ ९ ॥ पुरुषाः पंचषष्टिश्च षट्सहस्राणि चाष्ट च ॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ १० ॥ महाभोजोऽपि धर्मात्मा भोजा आसन् तदन्वये ॥ ११ ॥ वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परंतप ॥ शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥ सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ॥ अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः ॥ १३ ॥ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥ युगंधरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः ॥ १४ ॥ श्वफल्कश्चित्ररथश्च गांदिन्यां च श्वफल्कतः ॥ अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः ॥ १५ ॥ आसंगः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥ शत्रुघ्नो गंधमादश्च प्रतिबाहुश्च द्वादश ॥ तेषां स्वसा सुचीराख्या द्वावक्रूरसुतावपि ॥ १७ ॥ देववानुपदेवश्च तथा चित्ररथात्मजाः ॥ पृथुर्विदूरथाद्याश्च बहवो वृष्णिनंदनाः ॥ १८ ॥ कुकुरो भजमानश्च शुचिः कंबलबर्हिषः ॥ कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥ १९ ॥ कपोतरोमा तस्यानुः सखा यस्य च तुंबुरुः ॥ अंधको दुंदुभिस्तस्मादरिद्योतः पुनर्वसुः ॥ २० ॥

सत्यकस्य पुत्रो युयुधानस्तस्य जयस्तस्य कुणिस्ततः कुणेर्युगंधरः । अनमित्रस्यैवापरो वृष्णिर्नाम पुत्रः ॥ १४ ॥ अक्रूरः प्रमुखो येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ १५ ॥ अतोऽक्रूरातिरिक्तान्द्वादश दर्शयति आसंग इति ॥ १६ ॥ १७ ॥ पृथुरेकः विदूरथाद्या अन्ये च बहवः । विपृथुधामा इति पाठे आद्यशब्देन विदूरथोऽप्युक्तस्ततश्च शूरो विदूरथादासीदिति वक्ष्यमाणनिर्देशोपपत्तिः ॥ १८ ॥ कुकुरादयश्चत्वारोंऽधकस्य सुता इति ज्ञेयम् । तथा च पराशरः । कुकुरभजमानशुचिकंबलबर्हिषाख्यास्तथांधकस्य पुत्रा इति ॥ १९ ॥ अनोरंधकोंऽधकाद्दुंदुभिरित्यपि तद्वचनादेव ज्ञेयम्

॥ २० ॥ २१ ॥ धृतदेवा आदिर्यासां शांतिदेवादीनां षण्णां ताः सप्त ॥ २२ ॥ ताः सप्त ॥ २३ ॥ औग्रसेनय उग्रसेनस्य सुताः ॥ २४ ॥ वसुदेवस्य येऽनुजा देवभागादयस्तेषां स्त्रियो भार्याः ॥ २५ ॥ अंधकसुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तो द्वितीयस्य भजमानस्य वंशमाह । शूरो विदूरथादिति । भजमानाच्च विदूरथः पुत्रोऽभूद्विदूरथाच्च शूर इति पराशरादिवचनात् । न... पृथुर्विदूरथाद्याश्चेति पूर्वोक्तचित्ररथात्मजाद्विदूरथात् ॥ २६ ॥ देवमीढस्य यः शूरो नाम पुत्रस्तस्य । देवमीढो हृदीकस्यैव सुतः । तथाह पराशरः । तस्यापि कृतवर्मशतधनुर्देवमीढुषाद्या अभूवन् ...

तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ॥ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥ देववानुपदेवश्च सुदेवो देववर्धनः ॥ तेषां स्वसारः सप्तासन्धृतदेवादयो नृप ॥ २२ ॥ शांतिदेवोपदेवा च श्रीदेवा देवरक्षिता ॥ सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥ कंसः सुनामा न्यग्रोधः कंकः शंकुः सुहूस्तथा ॥ राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसा कंसावती कंका शूरभू राष्ट्रपालिका ॥ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥ शूरो विदूरथादासीद्भजमानः सुतस्ततः ॥ शिनिस्तस्मात्स्वयंभोजो हृदीकस्तत्सुतो मतः ॥ २६ ॥ देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ॥ देवमीढस्य शूरस्य मारिषानाम पत्न्यभूत् ॥ २७ ॥ तस्यां स जनयामास दश पुत्रानकल्मषान् ॥ वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥ सृंजयं श्यामकं कंकं शमीकं वत्सकं वृकम् ॥ देवदुंदुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥ वसुदेवं हरेः स्थानं वदंत्यानकदुंदुभिम् ॥ पृथा च श्रुतदेवा च श्रुतिकीर्तिः श्रुतश्रवाः ॥ ३० ॥ राजाधिदेवी चैतेषां भगिन्यः पंच कन्यकाः ॥ कुंतेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥ साऽऽप दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ॥ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिम् ॥ ३२ ॥ तदैवोपागतं देवं वीक्ष्य विस्मयमानसा ॥ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥ ३३ ॥ अमोघं दर्शनं देवि आधत्से त्वयि चात्मजम् ॥ योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥ इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ॥ सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥ ३५ ॥ तं सा त्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ॥ प्रपितामहस्तामुवाह पांडुर्वै सत्यविक्रमः ॥ ३६ ॥ श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ॥ यस्यामभूद्दंतवक्त्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥ कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविंदत ॥ संतर्दनादयस्तस्यां पंचासन्कैकयाः सुताः ॥ ३८ ॥ राजाधिदेव्यामावंत्यौ जयसेनोऽजनिष्ट ह ॥ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥ शिशुपालः सुतस्तस्याः कथितस्तस्य संभवः ॥ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ

देवमीढुषस्य शूरस्यापि मारिषानाम पत्न्यभवत्तस्यां चासौ दशपुत्रानजयद्वसुदेवपूर्वानिति ॥ २७ ॥ २८ ॥ आनकाश्च नेदुः ॥ २९ ॥ हरेः प्रादुर्भावस्य स्थानम् ॥ ३० ॥ पृथायाः कन्यकावस्थायां कर्णोत्पत्तिप्रकारमाह कुंतेरिति पंचभिः ॥ ३१ ॥ कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास ततश्च सा तस्माद्देवहूतिं देवाह्वानहेतुं विद्यामवाप तदाह । साऽऽपेति ॥ ३२ ॥ देवमुपागतं वीक्ष्य सा प्राह । प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता न तु त्वया किंचित्कार्यमित्यभिसंधिनाऽतो याहीति ॥ ३३ ॥ एवमुक्तो रविरुवाच । अमोघं दर्शनमिति । ...

त्राह । यथा योनिर्न दुष्येत तथाऽहं कर्ता करिष्यामि ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ आवंत्यौ विंदानुविंदौ ॥ ३९ ॥ तदेवं वसुदेवस्य भगिनीनां पतीन्पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाह । देवभागस्येति नवभिः श्लोकार्धैः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ वसुदेवस्य पत्नीः पुत्रांश्चाह पौरवीत्येकादशभिः ॥ ४५ ॥ ४६ ॥ ४७ ॥ कौशल्या भद्रा ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ अष्टमस्तु स्वयमेवासीन्न तु कर्मादिना हेतुना ताभ्यां जनितो वा । यतोऽसौ हरिः ॥ ५५ ॥ तदेवोपपादयति यदेति त्रिभिः ॥ ५६ ॥ ईशस्य

॥ ४० ॥ कंसावत्यां देवश्रवसः सुवीर इषुमांस्तथा ॥ कंकायामानकाज्जातः सत्यजित्पुरुजित्तथा ॥ ४१ ॥ सृंजयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥ ४२ ॥ मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा ॥ तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे ॥ ४३ ॥ सुमित्राऽर्जुनपालादीन् शमीकात्तु सुदामिनी ॥ कंकश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला ॥ देवकीप्रमुखा आसन्पत्न्य आनकदुंदुभेः ॥ ४५ ॥ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥ ४६ ॥ सुभद्रो भद्रवाहश्च दुर्मदो भद्र एव च ॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४७ ॥ नंदोपनंदकृतकशूराद्या मदिरात्मजाः ॥ कौशल्या केशिनं त्वेकमसूत कुलनंदनम् ॥ ४८ ॥ रोचनायामतो जाता हस्तहेमांगदादयः ॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठो धृतदेवायामेक आनकदुंदुभेः ॥ शांतिदेवात्मजा राजन् श्रमप्रतिश्रुतादयः ॥ ५० ॥ राजानः कल्पवर्षाद्या उपदेवसुता दश ॥ वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ॥ ५३ ॥ कीर्तिमंतं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं संमर्दनं भद्रं संकर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल ॥ सुभद्रा च महाभागा तव राजन्पितामही ॥ ५५ ॥ यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥ अक्षौहिणीनां पतिभिरसुरैर्नृपलांछनैः ॥ भुव आक्राम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥ कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ॥ सहसंकर्षणश्चक्रे भगवान्मधुसू-

मायानियंतुः । परस्यासंगस्य । द्रष्टुः साक्षिणः । आत्मनः सर्वगस्य । नह्येवंभूतस्य मायाविनोदं विना जन्मनः कर्मणो वा हेतुः संभवतीत्यर्थः ॥ ५७ ॥ किंच यस्य मायाचेष्टितं पुंसो जीवस्यानुग्रहस्तस्य जीवानुग्राहकस्य कुतः कर्मादिपारतंत्र्येण जन्मादिसंभवः । अनुग्रहमेवाह । हि यस्मात्तदेव स्थित्यादये इष्यते । प्रलये लीनोपाधेर्जीवस्य धर्माद्यसंभवादुपाधिसृष्ट्यादिना धर्मादिसंपादनेनानुग्रहः । तथाऽऽत्मलाभाय मोक्षाय चेष्यते । तत्र हेतुः । तेनैव श्रूयमाणेन तस्य स्थित्यादेर्निवृत्तेः ॥ ५८ ॥ तस्य चेष्टितं भूमेरनुग्रह इत्याह अक्षौहिणीनामिति द्वाभ्याम् । अभाराय भारपरि-

हाराय ॥ ५९ ॥ सुरेश्वरैरपि मनसाऽप्यपरिमेयाण्यवितर्क्याणि । संकर्षणसहितश्चक्रे ॥ ६० ॥ संकल्पमात्रेण भूभारहरणसमर्थस्यापि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह कलाविति द्वाभ्याम् । दुःखशोकतमांसि नुदतीति तथा तद्यशो व्यतनोत् ॥ ६१ ॥ यस्मिन्सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवांजलिः पानसाधनं यस्य स पुरुषः सकृदप्युपस्पृश्याचमनमात्रं कृत्वा तत्सौंदर्याकृष्टचित्तः कर्मवासनां धुनुते ॥ ६२ ॥ तदेवाह द्वाभ्याम् । भोजादिभिः श्लाघनीयमीहितं यस्य ॥ ६३ ॥ सर्वैरंगै रम्यया मूर्त्या च ॥ ६४ ॥ तत्प्रदर्शनार्थं मुखशोभामाह । यस्याननं दृशिभिर्नेत्रैः पिबंत्यो नार्यो नराश्च न ततृपुर्न तृप्ताः । निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिताश्च बभूवुः । कथंभूतमाननम् । मकरकुंडलाभ्यां चारू कर्णौ भ्राजंतौ कपोलौ

दनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥ यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्रांजलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितः शश्वत्कुरुसृंजयपांडुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकं रमयामास मूर्त्या सर्वांगरम्यया ॥ ६४ ॥ यस्याननं मकरकुंडलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ॥ नित्योत्सवं न ततृपुर्दृशभिः पिबंत्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥ जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामंतःसमुत्थकलिना युधि भूपचम्वः ॥ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥ ६७ ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामष्टादशसाहस्र्यां नवमस्कंधे श्रीसूर्यसोमवंशानुकीर्तनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायं नवमस्कंधः ॥ ९ ॥

च तैः सुभगम् । सविलासो हासो यस्मिन् । नित्यमुत्सवो यस्मिन् ॥ ६५ ॥ श्रीकृष्णस्य चरितं समासतो वर्णयति जात इति द्वाभ्याम् । जातो निजेन रूपेण पश्चात्पुरुषो मनुष्याकारः सन् व्रजं गतः । व्रजवासिनामेधिता अर्था येन तेषु दारेषु सुतानां शतान्युत्पाद्य । आत्मनिगमं स्वकीयं वेदमार्गम् ॥ ६६ ॥ अंतःसमुत्थेन कलिना निमित्तेन गुरुभारं क्षपयन् दृष्ट्यैव भूपचमूर्विधूय विजये जयमर्जुनेन जितमित्येवमुद्घोषं कृत्वा परं तत्त्वमुद्धवायोपदिश्य स्वधाम सम्यक् स्वेनैव रूपेण जगामेति ॥ ६७ ॥ इति श्रीमद्भागवते नवमस्कंधे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायं नवमस्कंधः ॥ ९ ॥

॥ श्रीरामार्पणमस्तु ॥

श्रीधरीटीकासहिते-

# श्रीमद्भागवते दशमस्कन्धः

## ( पूर्वार्द्धम् )

श्रीगणेशाय नमः ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥ १ ॥ दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम् ॥ क्रीडद्यदुकुलांभोधौ परानंद-मुदीर्यते ॥ २ ॥ दशमे कृष्णसत्कीर्तिवितानायानुवर्ण्यते ॥ धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥ ३ ॥ प्राकृतादिश्चतुर्धा यो निरोधः स तु वर्णितः ॥ तत्तत्प्रसंगतः सृष्टिसंहारादिनिरूपणैः ॥ ४ ॥ कृता नवतिरध्याया दशमे कृष्णकीर्तये ॥ आद्यैश्चतुर्भिरध्यायैर्ब्रह्मप्रार्थनयाऽवनेः ॥ भारं हर्तुं हरेर्जन्म सप्रसंगं निरूप्यते ॥ ५ ॥ गोकुले मथुरायां च द्वारवत्यां ततः क्रमात् ॥ कृष्णलीला त्रिधा प्रोक्ता तत्तद्भेदैस्त्वनेकधा ॥ ६ ॥ सपंचत्रिंशताध्यायैर्बृहद्वृंदावनादिषु ॥ गोकुले वसतो लीला वर्ण्यते सुरदुष्करा ॥ ७ ॥ एकेन यमुनावारिण्यक्रूरेण कृता स्तुतिः ॥ एकादशभिराख्याता लीला मधुवने कृता ॥ ८ ॥ शेषैर्द्वारवतीलीला तन्निर्माणादि वर्ण्यते ॥ एवं नवतिरध्याया दशमे विशदार्थकाः ॥ ९ ॥ तत्र तु प्रथमे कंसः स्वमृत्युं देवकीसुतात् ॥ श्रुत्वा भीतोऽवधीत्तस्याः षड्-र्भानिति वर्ण्यते ॥ १० ॥ कृष्णावतारचरितश्रवणामृतनिर्वृतः ॥ उक्तानुवादेनौत्सुक्याद्राजा पृच्छति तत्पुनः ॥ ११ ॥ कथितो वंशविस्तार इति ॥ १ ॥ अंशेनेति प्रतीत्यभिप्रायेणोक्तम् ॥ २ ॥ ननूक्तानि जातो गतः पितृगृहाद्व्रजमेधितार्थ इत्यादिना सत्यं पुनर्विस्तरेण वदेत्याह । अवतीर्येति ॥ ३ ॥ अत्र लोके त्रिविधा जना मुक्ता मुमुक्षवो विषयिणश्च तेषां मध्येऽत्र न कस्याप्यलं प्रत्यय

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ कथितो वंशविस्तारो भवता सोमसूर्ययोः ॥ राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥ यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ॥ तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥ अवतीर्य यदोर्वंशे भगवान्भूतभावनः ॥ कृतवान्यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ॥ क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विनाऽप-शुघ्नात् ॥ ४ ॥ पितामहा मे समरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥ दुरत्ययं कौरवसैन्यसागरं कृत्वा तरन्वत्सपदं स्म यत्प्लवाः ॥ ५ ॥ द्रौण्य-स्त्रविप्लुष्टमिदं मदंगं संतानबीजं कुरुपांडवानाम् ॥ जुगोप कुक्षिगत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥ ६ ॥ वीर्याणि तस्याखिलदेहभाजाम-तर्बहिः पूरुषकालरूपैः ॥ प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥ रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ॥ देवक्या

इत्याह । निवृत्ततर्षैरिति । गततृष्णैर्मुक्तैरित्यर्थः । मुमुक्षूणामयमेवोपाय इत्याह । भवौषधादिति । विषयिणां परमो विषयोऽयमेवेत्याह । श्रोत्रमनोऽभिरामादिति । अपगता शुग्यस्मात्तमात्मानं हंतीत्यपशुघ्नस्तस्मात् । पशुघातिन इति वा ॥ ४ ॥ किंच अस्मत्कुलदैवतं कृष्णोऽतस्तत्कथैव नित्यं श्रोतव्येत्याशयेनाह पितामहा इति । अमरान् जयंति ये तैर्देवव्रतो भीष्मस्तदाद्यैरतिरथैस्ति-मिंगिलतुल्यैर्दुरत्ययं वत्सपदमिवात्यल्पं कृत्वा तुच्छीकृत्यातरन्स्म । यः श्रीकृष्ण एव प्लवो येषां ते । तस्य वीर्याणि वदस्वेति तृतीयश्लोकगतेनान्वयः ॥ ५ ॥ न केवलं पांडवानेवारक्षदिदं मम शरीरमपि यो रक्षितवानित्याह । द्रौण्यस्त्रविप्लुष्टमिति । द्रौणेरश्वत्थाम्नो ब्रह्मास्त्रेण दग्धमिदं मच्छरीरं च कुरूणां पांडवानां च संतानस्य निदानं मम मातुः कुक्षौ प्रविष्टो धृतचक्रो यो जुगोपेति ॥ ६ ॥ अखिलदेहभाजां सर्वप्राणिनामंतश्च बहिश्च पुरुषरूपेण कालरूपैश्च । अंशाभिप्रायेण बहुवचनम् । मृत्युं संसारमुत अपि अमृतमपि प्रयच्छतो वीर्याणि वदस्व ब्रूहि । अयं भावः । अंतर्यामि-रूपेणांतर्दृष्टीनां मुक्तिं बहिर्दृष्टीनां च कालरूपेण मृत्युं ददाति यतोऽतोऽन्तर्दृष्ट्या तद्वीर्याण्येव श्रोतव्यानीति ॥ ७ ॥ ननु बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृतादीनुद-

पादयदिति रोहिण्यास्तनयो रामः प्रोक्तः । वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ॥ कीर्तिमंतं सुषेणं च भद्रसेनमुदारधीः ॥ मृदुं मंतर्दनं भद्रं संकर्षणमहीश्वरम् ॥ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किलेति पुनर्देवक्या गर्भसंबंधस्तस्यैवोक्तः स कुतो घटत इत्याक्षेपः ॥ ८ ॥ कस्मादिति । भगवतः कंसभयशंकाया असंभवादित्यर्थः ॥ ९ ॥ मातुर्भ्रातरं कंसं तस्मादवधानर्हमद्धा साक्षात्कस्मादवधीत् ॥ १० ॥ ११ ॥ १२ ॥ ननु क्षुत्तृड्भ्यां पीडितस्य तव कुतः श्रवणावकाशस्तत्राह । नैषेति । त्यक्तोदकस्यापि मम जीवनं हरिकथामृतपाननिमित्तं तदुपरमे सद्य एव जीवितं न स्यादि-

गर्भसंबंधः कुतो देहांतरं विना ॥ ८ ॥ कस्मान्मुकुंदो भगवान्पितुर्गेहाद्व्रजं गतः ॥ क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतां पतिः ॥ ९ ॥ व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः ॥ भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम् ॥ १० ॥ देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ॥ यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभोः ॥ ११ ॥ एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ॥ वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥ १२ ॥ नैषाऽतिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ॥ पिबंतं त्वन्मुखांभोजच्युतं हरिकथामृतम् ॥ १३ ॥ सूत उवाच ॥ एवं निशम्य भृगुनंदन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ॥ प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥ श्रीशुक उवाच ॥ सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ॥ वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ॥ वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥ १६ ॥ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ॥ आक्रांता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥ गौर्भूत्वाऽश्रुमुखी खिन्ना क्रंदंती करुणं विभोः ॥ उपस्थिताऽन्तिके तस्मै व्यसनं स्वमवोचत ॥ १८ ॥ ब्रह्मा तदुपधार्याथ सहदेवैस्तया सह ॥ जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥ तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ॥ पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥ गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ॥ गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥ २१ ॥ पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ॥ स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ २२ ॥ वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः ॥ जनिष्यते तत्प्रियार्थं संभवंतु सुरस्त्रियः ॥ २३ ॥ वासुदेवकलाऽनंतः सहस्रवदनः स्वराट् ॥ अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥ विष्णोर्माया भगवती यया संमोहितं जगत् ॥ आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति ॥ २५ ॥ श्रीशुक उवाच ॥ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ॥ आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ

त्यर्थः ॥ १३ ॥ एवं साधुवादं समीचीनं प्रश्नम् । भागवतप्रधानो भागवतेषु श्रेष्ठः ॥ १४ ॥ व्यवसिता कृतनिश्चया । यद्यतो बुद्धेः ॥ १५ ॥ १६ ॥ तत्र तावत्प्रथमं भगवदवतारकारणमाह भूमिरित्यादिनवभिः श्लोकैः । दृप्तनृपव्याजा ये दैत्यास्तेषामनीकशतानामयुतैर्यो भूरिभारस्तेनाक्रांता ॥ १७ ॥ विभोरंतिके उपस्थिता सती ॥ १८ ॥ १९ ॥ २० ॥ पौरुषीं पुरुषस्य भगवत इयं पौरुषी तां गां वाचं मे मत्त आशु शृणुत । माचिरमविलंबितं तथैव विधीयतां चेति ॥ २१ ॥ विज्ञापनात्पुरैव पुंसा ईश्वरेण ज्वरस्तापोऽवधृतोऽवधारितः ॥ २२ ॥ २३ ॥ २४ ॥ देवकीगर्भसंकर्षणयशोदा-

मोहनादिकार्यार्थं यशोदायां संभविष्यति ॥ २५ ॥ २६ ॥ भोजेंद्रबंधनागारेऽवताराय प्रस्तावकथामाह । शूरसेन इत्यादि यावदध्यायसमाप्ति । मथुरामावसन्मथुरायां वसन् । विषयान् देशान्
॥ २७ ॥ २८ ॥ सूर्यया नवोढया । प्रयाणे प्रयाणार्थम् ॥ २९ ॥ रश्मीन्प्रग्रहान् ॥ ३० ॥ पारिबर्हमुपस्करम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ आभाष्य रेरे कंसेति संबोध्य । हंता हनिष्यति ॥ ३४ ॥
कुलपांसनः कुलदूषणः । आरब्ध उद्युक्तः । कचे केशबंधे ॥ ३५ ॥ नृशंसं क्रूरम् । महाभाग इति । अयं भावः । स्वजन्मनि हर्षेण देवैरानकदुंदुभिघोषणाद्भाविभगवदवतारेण शक्यप्रतीकारता
संभवतीति सांत्वयन्स्तुत्या कृपाविषयत्वेनोपपत्तिभिश्च साममार्गेण संबोधयन् । किंच सामभेदाभ्यां संबोधयन् । तत्र साम पंचविधम् । भेदो द्विविधः । तदुक्तम् । संबंधलाभोपकृतिर्द्विभेदो गुण-
कीर्तनम् ॥ साम पंचविधं भेदी दृष्टादृष्टभयं वचः ॥ तत्र श्लाघनीयगुण इति गुणकीर्तनम् । भगिनीमिति संबंधकथनम् । पुत्रिकोपमेत्यभेदं वक्ष्यति । हन्यादिति स्त्रीवधनिवृत्त्या यशोलाभं दर्शयति ।

॥ २६ ॥ शूरसेनो यदुपतिर्मथुरामावसन्पुरीम् ॥ माथुरान् शूरसेनांश्च विषयान्बुभुजे पुरा ॥ २७ ॥ राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ॥
मथुरा भगवान्यत्र नित्यं संनिहितो हरिः ॥ २८ ॥ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ॥ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥ रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥ चतुःशतं पारिबर्हं गजानां हेममालिनाम् ॥ अश्वानाम-
युतं सार्धं रथानां च त्रिषट्शतम् ॥३१॥ दासीनां सुकुमारीणां द्वे शते समलंकृते ॥ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥३२॥ शंखतूर्यमृदंगाश्च
नेदुर्दुंदुभयः समम् ॥ प्रयाणप्रक्रमे तावद्वरवध्वोः सुमंगलम् ॥ ३३ ॥ पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमो गर्भो हंता यां वह-
सेऽबुध ॥ ३४ ॥ इत्युक्तः स खलः पापो भोजानां कुलपांसनः ॥ भगिनीं हंतुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥ ३५ ॥ तं जुगुप्सितकर्माणं नृशंसं
निरपत्रपम् ॥ वसुदेवो महाभाग उवाच परिसांत्वयन् ॥ ३६ ॥ वसुदेव उवाच ॥ श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः ॥ स कथं भगिनीं
हन्यात्स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥ मृत्युर्जन्मवतां वीर देहेन सह जायते ॥ अद्य वाऽब्दशतांते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥ देहे पंचत्वमापन्ने
देही कर्मानुगोऽवशः ॥ देहांतरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥ व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः
॥ ४० ॥ स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः ॥ दृष्टश्रुताभ्यां मनसाऽनुचिंतयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥ ४१ ॥ यतो

उद्वाहपर्वणीति संतानवृद्ध्योपकारं दर्शयति ॥ ३६ ॥ ३७ ॥ मरणभयेन हन्मीति चेत्तथापि मरणस्यापरिहरणीयत्वाद्देहांतरस्यावश्यंभावित्वात्तत्रापि च भोगप्रेमास्पदत्वादीनामविशेषात्तद्भयेन
पापाचरणमयुक्तमित्यभिप्रेत्याह । मृत्युर्जन्मवतामित्यादि । देहेन सहेति विधात्रा ललाटे लिखितत्वादिति । तथापि कालविलंबनार्थं हन्मीति चेत्तत्राह । अद्य वेति । अवश्यंभाविनि मरणे विलंब-
मात्राय न पापाचरणं युक्तमिति भावः ॥ ३८ ॥ किंच । अस्मिन्देहे गते यदि देहांतरं न स्यात्तदा युज्येत पापेनापि तत्पालनं न तु तदस्तीत्याह । देहे पंचत्वमापन्न इति । आपन्ने आपन्नप्राये
कर्मवशादयत्नत एव प्रथमं देहान्तरं प्राप्य पश्चात्पूर्वं वपुस्त्यजति ॥ ३९ ॥ अत्र दृष्टांतः । व्रजन्निति । एकेनाग्रतो निहितेन पदा तिष्ठन्भुवमवष्टभ्य देहं बिभ्रत्पश्चादन्येन पूर्वप्रदेशादुत्थाप्य पुरोनिहि-
तेन गच्छति तद्वत् । अत्र च स्वीकारपरित्यागौ नात्यंतभिन्नविषयाविति स्पष्टं दृष्टांतांतरमाह । यथा तृणजलूकेति । सा हि यथा तृणांतरमवष्टभ्य पूर्वं तृणं त्यजति । एवं कर्मपथे वर्तमानोऽन्यो

जीवोऽपि ॥ ४० ॥ देहविषयावेव स्वीकारपरित्यागौ दर्शयितुं दृष्टांतांतरमाह । स्वप्न इति । दृष्टं राजादिदर्शनं श्रुतमिंद्रादिश्रवणं ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिंतयन्नीदृशं जाग्रद्दृष्ट-श्रुतसदृशं देहं राजादिरूपं किमप्यनिरुक्तं पश्यति क्षणांतरे च तदेवाहमिति प्रपद्यते मन्यते । ततश्च जाग्रद्देहादपगतस्मृतिर्भवतिपुरुषो यथेति । जाग्रत्येव दर्शयितुं दृष्टांतांतरमाह । मनोरथेनेति । अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यम् तथा च वक्ष्यति । जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ॥ जन्मत्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसावित्यादि । तद्वदत्रापि कर्मवशाद्देहांतरं प्राप्य प्राक्तनं त्यजतीति ॥ ४१ ॥ ननु विचित्रदेहहेतूनां कर्मणां कृतत्वाद्देहविशेषप्राप्तौ किं कारणमत आह । यतो यत इति । देहस्य पंचत्वसमये पंचसु गुणेषु भूतेषु मायया नानादेहरूपेण रचितेषु दैवेन फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनो यं यं देहं देवतिर्यगादिरूपं प्रतिधावति ध्यावच्च सद्यंयमापाभिनिवेशेन प्राप्तं तत्रतत्रासौ देही जायते । ननु मनसः कर्तृत्वात्तदेव जायतां नत्वकर्तात्मेत्यत आह । प्रपद्यमान इति । तदेवाहमिति मन्यमानस्तेन सह जायत इति ॥ ४२ ॥ ननु सत्यं भविष्यत्येव किमपि देहमात्रं तथाऽप्यस्यातिप्रियस्य राजदेहस्य रक्षणायाकृत्यमपि किमत इति चेत्तत्राह । ज्योतिरिति अदश्चंद्रादिज्योतिः । उदययुक्तेषु पार्थिवेषु घटादिषु । यद्वा उदकेषु

यतो धावति दैवचोदितं मनो विकारात्मकमाप पंचसु ॥ गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥ ४२ ॥ ज्योतिर्यथैवोदकपार्थिवे-ष्वदः समीरवेगानुगतं विभाव्यते ॥ एवं स्वमायारचितेष्वसौ पुमान्गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥ तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः ॥ आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम् ॥ ४४ ॥ एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥ हंतुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥४५॥ श्रीशुक उवाच ॥ एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः ॥ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥ ४६ ॥ निर्बंधं तस्य तं ज्ञात्वा विचिंत्यानक-दुंदुभिः ॥ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥ ४७ ॥ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥ प्रादाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् ॥ सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुर-

पार्थिवेषु तैलघृतादिषु च प्रतिबिंबेन स्थितं समीरस्य वायोर्वेगमनुगतं कंपादियुक्तं प्रतीयते यथा एवं स्वाविद्यारचितेषु गुणेषु देहेष्वसौ रागेणानुगतः प्रविष्टो मुह्यत्यभिनिवेशं प्राप्नोति । अयं भावः आत्मनस्तावद्देहाद्यध्यासाज्जन्मोक्तं सह तेन जायत इति ततश्चान्योन्यधर्माध्यासाद्यथा देहादिधर्माः कार्श्यादय आत्मनि प्रतीयंते एवमात्मधर्माः प्रेमास्पदत्वादयोऽपि देहादिष्विति राजसूकरदेहयो-र्विशेषाभावाद्व्यर्थो मृत्युप्रतीकार इति ॥ ४३ ॥ एवमुक्तं सामोपायमुपसंहरन्भेदमाह । तस्मादिति । परत इति अभिद्रुह्यमाणात्तत्संबंधिनश्च यमादपीहामुत्र च भयमिति भेदो दर्शितः ॥ ४४ ॥ पुनः सामैवाह । एषेति । पुत्रिकोपमा दारुमयी वाऽचेतनप्राया ॥ ४५ ॥ बोध्यमान उपदिश्यमानः । स्वयं दारुणः पुनः पुरुषादान् दैत्याननुव्रतोऽनुसृत इति ॥ ४६ ॥ आनकदुंदुभिरिति पदं महा-भाग इत्यत्रोक्ताभिप्रायम् । प्रतिव्योढुं प्रतिकर्तुं वंचयितुमित्यर्थः । इदं वक्ष्यमाणमपत्यार्पणमन्वपद्यत ज्ञातवान् ॥ ४७ ॥ ननु खलोऽयमेतन्न मन्यते इत्याशंक्याह । स्वयमेव मृत्युरिति ॥ ४८ ॥ तस्मादुपेक्षादोषपरिहारायैवं करिष्यामीत्याह । प्रादायेति । मृत्यवे कंसाय । नन्विदमपि नैव न्याय्यमित्याशंक्याह । सुता इति । अस्यां यदि मे सुता जायेरंस्तदा यद्भावि तद्भवतु जीवितं तु तावद्भवेदेव तदंतरा यद्ययमेव म्रियेत तदा न किंचिदन्याय्यम् ॥ ४९ ॥ यदि च सुता भविष्यंति न चायं म्रियेत तदा मत्पुत्रादेवास्य मरणमिति विपर्ययो वा किं न स्यात् । ननु प्रौढस्य कंसस्य

चाहन्नग्रण्यं दंभिनां बकम् ॥ इति दशमपूर्वार्धटीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु महासर्पवपुर्धरमघासुरम् ॥ वत्सपालगिलं क्रुद्धो गलेऽहन्निति वर्ण्यते ॥ १ ॥ महाबकगलक्रीडा केवलस्य
न कौतुकम् ॥ इतीवाघासुरमुखे ससखः प्राविशद्धरिः ॥ २ ॥ क्वचित्कदाचिद्वनाशाय वने एव प्रथमं भोजनं कर्तुम् ॥ १ ॥ तेनैव शृंगरवेण श्रीकृष्णेन वा सह पृथुकाः बालाः। स्निग्धाः स्नेहयुक्ताः ।
शिक् शिक्यं रस्याः शिग्वेत्रादयो येषां ते । सहस्राधिकसंख्यायुक्तान्वत्सान् ॥ २ ॥ ३ ॥ काचादिभिः पूर्वं मातृभिर्भूषिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः ॥ ४ ॥ मुष्णंतश्चोरयंतः ॥ ५ ॥
यदि दूरं गतः कृष्णो भवति तर्हि ॥ ६ ॥ ध्मांतो वादयंतः । भृंगैः सह ॥ ७ ॥ विच्छायाभिः पक्षिच्छायाभिः । कलापिभिर्मयूरैः ॥ ८ ॥ कीशबालान् वृक्षशाखासु लंबमानानि वानरलांगूलान्या-
कर्षंतो लांगूलममुंचंतस्तैः सह द्रुमानारोहंतः। विकुर्वंतो दंतदर्शनभ्रूविजृंभादिभिस्तैः सह विकारान्कुर्वंतः । पलाशिषु वृक्षेषु प्लवंतः शाखायाः शाखांतरमुद्गच्छंतः ॥ ९ ॥ प्रतिच्छायाः प्रतिबिंबानि

**वयस्यवत्सपान् ॥ प्रबोधयन् शृंगरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥ १ ॥ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः॥ स्वान्स्वान्सहस्रोपरिसंख्ययाऽन्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥ कृष्णवत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान् ॥ चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥ फलप्रवालस्तबकसुमनःपिच्छधातुभिः ॥ काचगुंजामणिस्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥ मुष्णंतोऽन्योन्यशिक्यादीन्ज्ञातानाराच्च चिक्षिपुः ॥ तत्रत्याश्च पुनर्दूराद्धसंतश्च पुनर्ददुः ॥ ५ ॥ यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम् ॥ अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥ ६ ॥ केचिद्वेणून्वादयंतो ध्मांतः शृंगाणि केचन ॥ केचिद्भृंगैः प्रगायंतः कूजंतः कोकिलैः परे ॥ ७ ॥ विच्छायाभिः प्रधावंतो गच्छंतः साधुहंसकैः॥ बकैरुपविशंतश्च नृत्यंतश्च कलापिभिः ॥ ८ ॥ विकर्षंतः कीशबालानारोहंतश्च तैर्द्रुमान् ॥ विकुर्वंतश्च तैः साकं प्लवंतश्च पलाशिषु ॥ ९ ॥ साकं भेकैर्विलंघंतः सरित्प्रस्रवसंप्लुताः ॥ विहसंतः प्रतिच्छायाः शपंतश्च प्रतिस्वनान् ॥ १० ॥ इत्थं सतां ब्रह्मसुखानुभूत्या दास्यंगतानां परदैवतेन ॥ मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुंजाः ॥ ११ ॥ यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः ॥ स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥ १२ ॥ अथाघनामाऽभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ॥ नित्यं यदंतर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥ दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ॥ अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं**

॥ १० ॥ तानतिविस्मितः श्लोकद्वयेनाभिनंदति । इत्थमिति । सतां विदुषां ब्रह्म च तत्सुखं चानुभूतिश्च तया । स्वप्रकाशपरमसुखेनेत्यर्थः । भक्तानां परदैवतेनात्मप्रदेन नाथेन मायाश्रितानां तु नर-
दारकतया प्रतीयमानेन सह विजह्रुः । कृतानां पुण्यानां पुंजा राशयो येषां ते । ब्रह्मविदां तदनुभव एव भक्तानामतिगौरवेणैव भजनं एते तु तेन सह सख्येन विजह्रुः । अहो भाग्यमिति भावः
॥ ११ ॥ बहुजन्मभिः कृच्छ्रेण धृत आत्मा मनो यैस्तैरपि ॥ १२ ॥ सुखक्रीडनवीक्षणे न क्षमा यस्य सः । कथंभूतः । यस्यांतरं छिद्रं पीतामृतैरपि ततो मृत्युभीतैरमरैः प्रतीक्ष्यते कथं मरिष्यति
कदा वेति । यद्वा कथंभूतं सुखक्रीडनम् । यदंतर्हृदये अमरैः प्रतीक्ष्यते विचिंत्यते पीतामृतैरपि पुनर्निजजीवितेप्सुभिः । अयं भावः । नामृतपानमात्रेण जीवनं सफलं भवति किंतु भगवल्लीला-
नुस्मरणेनेति तदेव नित्यमंतश्चिंत्यत इति ॥ १३ ॥ कृष्णप्रमुखानर्भकान् दृष्ट्वा स इति व्यवस्य निश्चित्याजगरं वपुर्धृत्वा तेषां प्रमनाशया पथि व्यशेतेति तृतीयेनान्वयः । कंसेनानुशिष्टः

प्रहितः । बकी पूतना । कथं व्यवस्य तदाह । अयं त्विति सार्धेन । मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं ससैन्यं वत्सतत्पालसहितं हनिष्यामि ॥ १४ ॥ ननु तथापि व्रजस्थास्त्ववशिष्ये- रन्नित्याह । एत इति । तिलापः कृतास्तिलोदकतया कल्पिताः । वर्ष्मसु देहेषु । प्रजा एवासवो येषां ते तथा ॥ १५ ॥ सयोजनायामं योजनप्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिवत्पीवरं च । व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिंस्तत् ॥ १६ ॥ अद्भुतमिति यदुक्तं तद्दर्शयितुं विशिनष्टि । धरायामधरोष्ठो यस्य सः । जलदे पूत्तरोष्ठो यस्य सः । दर्यावेव आनस्यांतौ सृक्किणी यस्य सः । गिरेः शृंगाणीव दंष्ट्रा यस्य सः । ध्वांतवदंतरास्यं यस्य सः । विततावध्ववज्जिह्वा यस्य सः । परुषानिलवच्छ्वासो यस्य सः । दववदीक्षणायोरुष्णः दावत्दृष्टिरित्यर्थः । परुषानिलश्वासश्वासौ दवेक्ष- णोष्णश्च तथा ॥ १७ ॥ वस्तुतोऽजगरमेव व्यात्ततुंडं दृष्ट्वा वृंदावनस्य श्रीः संपदेषेति भ्रांत्या मत्वा विपरीतं व्यात्ताजगरतुंडसादृश्येनोत्प्रेक्षितवंतः ॥ १८ ॥ उत्प्रेक्षामेव प्रश्नोत्तरगम्यामाहुः । अहो इति । सत्त्वकूटं सत्त्वाभासमिदं वा न वा तत्राप्यस्मत्संग्रसनाय व्यात्तं यद्व्यालतुंडं तद्वदाचरति वा न वा ॥ १९ ॥ निश्चितं तथैवेत्याहुः । सत्यमिति । अर्ककरैरारक्तं घनमुत्तरोष्ठवत्पश्यत । तस्य

हनिष्ये ॥ १४ ॥ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ॥ प्राणे गते वर्ष्मसु काऽनुचिंता प्रजासवः प्राणभृतो हि ये ते ॥ १५ ॥ इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम् ॥ धृत्वाऽद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥ धराधरोष्ठो जल- दोत्तरोष्ठो दर्याननांतो गिरिशृंगदंष्ट्रः ॥ ध्वांतांतरास्यो विततावध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥ १७ ॥ दृष्ट्वा तं तादृशं सर्वे मत्वा वृंदावनश्रि- यम् ॥ व्यात्ताजगरतुंडेन ह्युत्प्रेक्षंते स्म लीलया ॥ १८ ॥ अहो मित्राणि गदत सत्त्वकूटं पुरः स्थितम् ॥ अस्मत्संग्रसनव्यात्तव्यालतुंडायते न वा ॥ १९ ॥ सत्यमर्ककरारक्तमुत्तराहनुवद्घनम् ॥ अधराहनुवद्रोधस्तत्प्रतिच्छाययारुणम् ॥ २० ॥ प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे ॥ तुंगशृं- गालयोप्येतास्तद्दंष्ट्राभिश्च पश्यत ॥ २१ ॥ आस्तृतायाममार्गोऽयं रसनां प्रतिगर्जति ॥ एषामंतर्गतं ध्वांतमेतदप्यंतराननम् ॥ २२ ॥ दावोष्णखर- वातोऽयं श्वासवद्भाति पश्यत ॥ तद्दग्धसत्त्वदुर्गंधोऽप्यंतरामिषगंधवत् ॥ २३ ॥ अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनंक्ष्यति ॥ क्षणा- दनेनेति बकार्युशन्मुखं वीक्ष्योद्धसंतः करताडनैर्ययुः ॥ २४ ॥ इत्थं मिथो तथ्यमतज्ज्ञभाषितं श्रुत्वा विचिंत्येत्यमृषा मृषायते ॥ रक्षो विदित्वाऽ- खिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान्मनो दधे ॥ २५ ॥ तावत्प्रविष्टास्त्वसुरोदरांतरं परं न गीर्णाः शिशवः सवत्साः ॥ प्रतीक्षमाणेन बकारि-

घनस्य प्रतिच्छाययारुणं रोधः स्थलमधरोष्ठवत्पश्यत । पश्यतेति सर्वत्रान्वेति ॥ २० ॥ सृक्किभ्यामोष्ठप्रांताभ्यां प्रतिस्पर्द्धेते तुल्यतया वर्तेते । नगोदरे गिरिदर्यौ । एतास्तुङ्गशृंगालयस्तस्य दंष्ट्राभिः स्पर्धमानाः ॥ २१ ॥ आस्तृतायाममार्गो विस्तृतो दैर्घ्यवान्मार्गः । प्रतिगर्जति प्रतिस्पर्धते । एषां शृंगाणामंतर्गतं मध्यगतं ध्वांतमेतदंतराननमाननस्य मध्यं प्रतिगर्जति ॥ २२ ॥ दावेनोष्णः खरो वातोऽयं तेन दावाग्निना दग्धानां सत्त्वानां यो दुर्गंधः । स एवं सर्पांतर्गतामिषगंधवद्भाति ॥ २३ ॥ एवं संतमेवाजगरमन्यथोत्प्रेक्ष्य निर्भया ययुः । किं ग्रसिता ग्रसिष्यति । अनेन श्रीकृष्णेन हंत्रा । बकारेरुशत्कमनीयं मुखम् ॥ २४ ॥ अमृषा वस्तुतः सर्पवपुरसुर एव मृषायते स्वानां सर्पसादृश्यगोचरत्वेन प्रतीयते इति तान्निरोद्धुं वारयितुं यावन्मनो दधे तावत्प्रविष्टा इत्युत्तरेणान्वयः ॥ २५ ॥ तावत्प्रविष्टा एव केवलं न तु तेन गीर्णा गिलिताः । जीर्णा इति पाठेऽपि स एवार्थः । कथंभूतेन हतयोः स्वकयोरंतं स्मरत्यनुध्यायतीति तथा तेन अतएव बकारेः श्रीकृष्णस्य प्रवेशं प्रतीक्षमा-

णेन ॥ २६ ॥ स्वकरादवच्युतान्विनिःसृतान् । विस्मितः सन्कृत्यं किमत्रेत्यादि विचिंत्य तत्रोपायं ज्ञात्वा स्वयमप्यविशदित्यन्वयः ॥ २७ ॥ कथं विचिंत्य । अस्य जीवनममीषां च विहिंसनमिति
द्वयं वै निश्चितं कथं न स्यादिति ॥ २८ ॥ घनच्छदा मेघांतरिताः । कौणपाशिनो राक्षसाः । कोणपो निर्ऋतिस्तदीया इति वा ॥ २९ ॥ चूर्णीकर्तुमिच्छोस्तस्य गले आदावेव तरसा ववृधे अवर्धत
॥ ३० ॥ निरुद्धो मुखादीनां मार्गभूतः कंठो यस्यास्ति तस्योद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्यांतरंगे देहमध्ये पूर्णः परिभूतो मूर्धन् मूर्धनि ब्रह्मरंध्रं निर्भिद्य बहिर्विनिर्गतः ॥ ३१ ॥ प्राणेष्विंद्रियेषु ।
॥ ३२ ॥ अहिदेहे स्थितं शुद्धसत्त्वमयं ज्योतिर्निर्गत्य खेऽवस्थितं तस्मिन्नीशे विवेश ॥ ३३ ॥ स्वकृतः स्वकार्यकृतः श्रीकृष्णस्यार्हणमकृताकुर्वत पूजामकुर्वन् । सुगाः
स्वयाऽमृतवर्षिण्या दृष्ट्यैव ॥ ३२ ॥

वेशनं हतस्वकांतस्मरणेन रक्षसा ॥ २६ ॥ तान्वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान्स्वकरादवच्युतान् ॥ दीनांश्च मृत्योर्जठराग्निघासान्घृणार्दितो दिष्टकृतेन विस्मितः ॥ २७ ॥ कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वयं कथं स्यादिति संविचिंत्य तज्ज्ञात्वाऽविशत्तुंडमशेषदृग्घरिः ॥ २८ ॥ तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः ॥ जहृषुर्ये च कंसाद्याः कौणपास्त्वघबांधवाः ॥ २९ ॥ तच्छ्रुत्वा भगवान्कृष्णस्त्वव्ययः सार्भवत्सकम् ॥ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥ ३० ॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ॥ पूर्णोंऽतरंगे पवनो निरुद्धो मूर्द्धन्विनिष्पाट्य विनिर्गतो बहिः ॥ ३१ ॥ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान्सुहृदः परेतान् ॥ दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुंदो भगवान्विनिर्ययौ ॥ ३२ ॥ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश॥ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन्मिषतां दिवौकसाम् ॥ ३३ ॥ ततोऽतिहृष्टाः स्वकृतो कृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः ॥ गीतैः सुरा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिःस्वनैर्गणाः ॥ ३४ ॥ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमंगलस्वनान् ॥ श्रुत्वा स्वधाम्नोंऽत्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम् ॥ ३५ ॥ राजन्नाजगरं चर्म शुष्कं वृंदावनेऽद्भुतम् ॥ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥ ३६ ॥ एतत्कौमारजं कर्म हरेरात्माहिमोक्षणम् ॥ मृत्योः पौगंडके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७ ॥ नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ॥ अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥ सकृद्यदंगप्रतिमांतराहिता मनोमयी भागवतीं ददौ गतिम् ॥ स

सुष्ठु गायंतीति गंधर्वादयः ॥ ३४ ॥ किंच तेषां यान्यद्भुतस्तोत्रादीनि तेषां नैकोत्सवा ये मंगलस्वनास्तान्स्वधाम्नोंऽति समीपे श्रुत्वाऽजो ब्रह्माऽचिरादागत ईशस्य श्रीकृष्णस्य महि महिमानं दृष्ट्वा
विस्मयं प्रापेति ॥ ३५ ॥ बहुतिथं बहुकालम् । आक्रीडगह्वरं क्रीडार्थं महाबिलम् ॥ ३६ ॥ अन्यच्चातिचित्रं वृत्तमित्याह । एतदिति । कौमारं पंचमाब्दांतं पौगंडं दशमावधि ॥ कैशोरमापंचदशा-
द्यौवनं तु ततः परम् ॥ हरेः कौमारजं पंचमाब्दकृतं कर्म तदेव दृष्ट्वा पौगंडके षष्ठेऽब्दे बाला अद्यैतद्वृत्तमित्यूचुः । किं तत्कर्म । मृत्योः सकाशादात्मनामहेश्च मोक्षणम् । आत्मनां प्रसिद्धान्मृत्योर-
हेस्तु संसारलक्षणात् । अघासुरस्य ज्योतिषः श्रीकृष्णे प्रवेशमपि तदा दृष्टं कथितवंत इत्यर्थः ॥ ३७ ॥ नैतद्विचित्रमिति । किं तदित्यपेक्षायामाह । अघोऽपीति । आत्मसाम्यं स्वसमानरूपताम्
॥ ३८ ॥ यस्यांगं मूर्तिस्तस्य प्रतिमा प्रतिकृतिस्तत्रापि केवलं मनोमयी साऽपि बलादंतराहिता सती भागवतीं गतिं ददौ प्रह्लादादिभ्यः स एव साक्षात्स्वयमंतर्गतः किं पुनः । नित्या चासावात्मसु-

खानुभूतिश्च तयाऽभितो व्युदस्ता माया येन सः ॥ ३९ ॥ येन श्रवणेन निगृहीतं वशीकृतं चेतो यस्य सः ॥ ४० ॥ कालांतरे कौमारे कृतं पौगंडके कथं ज्ञात्वोचुरित्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥
तेन यः स्मारितोऽनंतस्तेन हृतान्यखिलेंद्रियाणि यस्य सः तथाभूतोऽपि कथंचिल्लब्धबहिर्दृष्टिः । हे भागवतोत्तमोत्तम हे शौनक ॥ ४४ ॥ इति दशमपूर्वार्धे टीकायां द्वादशोऽध्यायः ॥ १२ ॥
त्रयोदशेऽहरद्ब्रह्मा वत्सान्पालांश्च मायया ॥ तदा तत्सर्वरूपोऽब्दं कृष्णः पूर्ववदाचरत् ॥ १ ॥ नूतनयसि नव्यवत्करोषि ॥ १ ॥ तथा हि सारभृतां सारग्राहिणामयं निसर्गः स्वभावः । कोऽसौ ।
अच्युतस्य वार्ता प्रतिक्षणं साधु नव्यवद्भवतीति यत्सः । विटानां स्त्रैणानां स्त्रियाः कामिन्या वार्तेव । कथंभूतानामपि सताम् । या अच्युतवार्तैवार्थो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूता-

एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोंऽतर्गतो हि किं पुनः ॥ ३९ ॥ सूत उवाच ॥ इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरानुचरितं विचित्रम् ॥ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥ ४० ॥ राजोवाच ॥ ब्रह्मन्कालांतरकृतं तत्कालीनं कथं भवेत् ॥ यत्कौमारे हरिकृतं जगुः पौगंडकेऽर्भकाः ॥ ४१ ॥ तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो ॥ नूनमेतद्धरेरेव माया भवति नान्यथा ॥ ४२ ॥ वयं धन्यतमा लोके गुरोऽपि क्षत्रबंधवः ॥ यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥ ४३ ॥ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानंतहृताखिलेंद्रियः ॥ कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धेऽघासुरवधो नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम ॥ यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥ सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि ॥ प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधु वार्ता ॥ २ ॥ शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ३ ॥ तथाऽघवदनान्मृत्यो रक्षित्वा वत्सपालकान् ॥ सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ ४ ॥ अहो-ऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छवालुकम् ॥ स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥ ५ ॥ अत्र भोक्तव्यमस्माभि-र्दिवारूढं क्षुधार्दिताः ॥ वत्साः समीपेऽपः पीत्वा चरंतु शनकैस्तृणम् ॥ ६ ॥ तथेति पाययित्वाऽर्भा वत्सानारुध्य शाद्वले ॥ मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ ७ ॥ कृष्णस्य विष्वक्पुरुराजिमंडलैरभ्याननाः फुल्लदृशो व्रजार्भकाः ॥ सहोपविष्टा विपिने विरेजुश्छदा यथांभोरुहकर्णिकायाः ॥ ८ ॥ केचित्पुष्पैर्दलैः केचित्पल्लवैरंकुरैः फलैः ॥ शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ ९ ॥ सर्वे मिथो दर्शयंतः स्वस्वभोज्यरुचिं

नामपि ॥ २ ॥ ३ ॥ ४ ॥ भोजनविधानाय पुलिनं स्तौति । अहो इति । स्वीयानां केलीनां संपदो विद्यंते यस्मिंस्तत् । मृदुला अच्छा वालुका यस्मिंस्तत् । किंच स्फुटद्भिकसत्सरः सरोज-
बाहुल्येनोपचारतः सर एव विकसदित्युक्तम् । तस्य गंधस्तेन हृता आकृष्टा अलयः पत्रिणश्च ये तेषां के उदके ध्वनयस्तेषां प्रतिध्वानास्तैर्लसंतो द्रुमास्तैराकुलं व्याप्तम् ॥ ५ ॥ दिवारूढं वेलाती-
तेत्यर्थः ॥ ६ ॥ आरुद्ध्य संरुद्ध्य । शाद्वले हरिततृणे देशे ॥ ७ ॥ तदा ते विरेजुः । कृष्णस्य विष्वक् परितः पुरुराजिमंडलैर्बहुभिः पंक्तिमंडलैः सह नैरंतर्येणोपविष्टाः । श्रीकृष्णाभिमुखान्यान-
नानि येषां ते । फुल्लदृशो विकसितनयनाः । कमलकर्णिकायाः परितः पत्राणि यथेति ॥ ८ ॥ पुष्पैस्तद्दलैः अन्यैश्च पत्रैः कृतानि भाजनानि यैस्ते ॥ ९ ॥ रुचिं स्वादविशेषम् । अभ्यवजहुर्बुभु-

जिरे । सहेश्वराः श्रीकृष्णसहिताः ॥ १० ॥ यज्ञभुगपि तेषु बुभुजे । बालानामिव केलिर्यस्य सः । तदाह । उदरवस्त्रयोर्मध्ये वेणुं बिभ्रद्धदिति सर्वत्र संबध्यते । वाम इति कक्षपाण्योर्विशेषणम् । मसृणं स्निग्धं दध्योदनकवलम् । तदुचितानि बिल्वादिफलान्यंगुलिसंधिषु । कर्णिकेव सर्वाभिमुखो मध्ये तिष्ठन् स्वस्य परित उपविष्टान् सुहृदः स्वैर्नर्मभिः परिहासवाक्यैः । स्वर्गे स्वर्गवासिनि जने मिषत्याश्चर्येण पश्यति सति लोके जनानां मध्ये बुभुजे ॥ ११ ॥ १२ ॥ भीभयं भयहेतुभ्यो भयमस्यापास्य । यद्वा अस्य विश्वस्य भियोऽपि भयं यः श्रीकृष्णः । आशाद्भोजनात् । अस्मिन्पादे अक्षराधिक्यमार्षम् ॥ १३ ॥ अद्रिषु तद्दरीषु । कुंजेषु लतादिपिहितोदरविवरेषु । गह्वरेषु । संकटस्थानेषु ॥ १४ ॥ अंभोजन्मनः पद्माजनिर्यस्य स ब्रह्मा तदंतरे तस्मिन्नवसरे गत आगतस्तच्छिद्रं प्राप्तो वा मंजु मनोहरमन्यदपि महित्वं महिमानं द्रष्टुं तस्य वत्सानितःस्थानाद्वत्सपांश्चान्यत्र नीत्वा स्वयं तिरो बभूव । प्रभवतः श्रीकृष्णस्य ॥ १५ ॥ उभावपि वत्सान्वत्सपांश्च विचिकायान्वीक्ष्य

बिभ्रद्वेणुं जठरपटयोः शृंगवेत्रे च कक्षे वामे पाणौ मसृणकवलं तत्फलान्यंगुलीषु ॥ तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः ॥ ११ ॥ भारतैवं वत्सपेषु भुंजानेष्वच्युतात्मसु ॥ वत्सास्त्वंतर्वने दूरं विविशुस्तृणलोभिताः ॥ १२ ॥ तान्दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् ॥ मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् ॥ १३ ॥ इत्युक्त्वाऽद्रिदरीकुंजगह्वरेष्वात्मवत्सकान् ॥ विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ ॥ १४ ॥ अंभोजन्मजनिस्तदंतरगतो मायार्भकस्येशितुर्द्रष्टुं मंजु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ॥ नीत्वाऽन्यत्र कुरूद्वहांतरदधात्खेऽवस्थितो यः पुरा दृष्ट्वाऽघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥ १५ ॥ ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ॥ उभावपि वने कृष्णो विचिकाय समंततः ॥ १६ ॥ क्वाप्यदृष्ट्वांतर्विपिने वत्सान्पालांश्च विश्ववित् ॥ सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह ॥ १७ ॥ ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ॥ उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ १८ ॥ यावद्वत्सपवत्सकाल्पकवपुर्यावत्करांघ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरम् ॥ यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोंऽगवदजः सर्वस्वरूपो बभौ ॥ १९ ॥ स्वयमात्माऽऽत्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ॥ क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद्व्रजम् ॥ २० ॥ तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः ॥ तत्तदात्माऽभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥ २१ ॥ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य

तवान् ॥ १६ ॥ विधिकृतं ब्रह्मणा कृतम् ॥ १७ ॥ उभयायितं वत्सतत्पालरूपेण वर्तमानमित्यर्थः । अयं भावः । यदि तूष्णीमासे तर्हि तन्मातॄणां विषादः स्याद्यदि च तानेवानयिष्यामि तर्हि ब्रह्मणो मोहो न स्यादिति तदुभयप्रीतये तथा चक्रे इति ॥ १८ ॥ तदेव दर्शयति । यावदिति । वत्सपानां वत्सकानां चाल्पकं वपुःप्रमाणमनतिक्रम्य । एवमुपर्यपि योज्यम् । यद्वा यावद्वत्सपादिवपुस्तावत्सर्वस्वरूपोऽजः कृष्णो बभावित्यर्थः । उत्तरत्राप्येवम् । सर्वं विष्णुमयं जगदिति प्रसिद्धा या गीस्तस्या अंगवत्सा गीरेवार्थस्वरूपेण प्रत्यक्षा यथा तथा बभूवेत्यर्थः ॥ १९ ॥ एवं सर्वात्मा सन्व्रजं प्राविशत् । कथं स्वयमात्मैव प्रयोजकः । आत्मरूपान् गोवत्सानिति कर्मापि स्वयमेवेत्युक्तम् । आत्मरूपैर्वत्सपैः प्रतिवार्य प्रयोज्यकर्ताऽपि स्वयमेव आत्मविहारैः क्रीडन्निति क्रियाऽपि कारकाण्यपि स्वयमेवेत्यर्थः ॥ २० ॥ तत्तदात्मा तत्तद्गोपबालरूपोऽभवत् । ततस्तत्तत्सद्मप्रविष्टः ॥ २१ ॥ गोपिकामोहमाह । तन्मातर इति । तन्मातरो वेणुरवेण त्वरयोत्थिताः सत्यः सुतान्मत्वा परं ब्रह्मैव

दोर्भिरुत्थाप्योदुह्य पयःसुधासवं पय एव सुधावत्स्वादु आसववन्मादकं पाययामासुरित्यर्थः ॥ २२ ॥ एवं यामयमेन तत्तत्कालक्रीडानियमेन सायं गतः प्राप्तः स्वाचरितैः स्वस्याचरितैः शोभनैराच-रितैर्वा मातृः प्रहर्षयंस्ततस्ताभिरुन्मर्दनादिभिरुपलालित इति ॥ २३ ॥ गवां मोहनमाह । गाव इति । परिहूता आहूताश्च ते संगताश्च तान् ॥ २४ ॥ एतावत्तु वैषम्यं कृष्णस्यापि दुर्निवारमासी-दित्याह । गोगोपिनामिति । गवां गोपीनां चास्मिन्कृष्णे मातृता उपलालनादिरूपा पुरोवदेवासीत्किंतु स्नेहर्द्धिकां विना । स्नेहाधिक्यं त्विदानीं विशेष इत्यर्थः । आसु गोगोपीषु हरेस्तोकता च बालभावनादि पूर्ववदेवासीत्किंतु मायया विना । ममेयं माताऽहमस्याः पुत्र इति मोहं विनेत्यर्थः ॥ २५ ॥ स्नेहर्धिमेव दर्शयति । व्रजौकसामिति । यथा कृष्णे यशोदानंदने स्वपुत्रेभ्योऽपि स्नेहा-धिक्यं पूर्वमासीत् । इदानीं स्वतोकेष्वपि तथैवावर्धतेत्यर्थः । आ अब्दं यावत्संवत्सरम् । निःसीम यथा भवति ॥ २६ ॥ एवमात्मा श्रीकृष्णो वत्सपो भूत्वा तत्रापि वत्सानां पालानां च मिषेणा-त्मानमात्मनाऽपालयत् क्रीडितवानित्यर्थः ॥ २७ ॥ एतावत्पर्यंतं रामस्यापि मोह एवासीत्संवत्सरांते तु कथंचिज्ज्ञातवानिति दर्शयन्नाह । एकदेति । पंचषासु पंचसु वा षट्सु वा रात्रिषु हायनस्या-

दोर्भिः परिरभ्य निर्भरम् ॥ स्नेहस्नुतस्तन्यपयः सुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥ ततो नृपोन्मर्दनमज्जलेपनालंकाररक्षातिलकाशना-दिभिः ॥ संलालितः स्वाचरितैः प्रहर्षयन्सायंगतो यामयमेन माधवः ॥ २३ ॥ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् ॥ स्वका-न्स्वकान्वत्सतरानपाययन्मुहुर्लिहंत्यः स्रवदौधसं पयः ॥ २४ ॥ गोगोपीनां मातृताऽस्मिन्सर्वा स्नेहर्धिकां विना ॥ पुरोवदास्वपि हरेस्तोकता मायया विना ॥२५॥ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ॥ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥२६॥ इत्थमात्मात्मनाऽऽत्मानं वत्सपालमिषेण सः ॥ पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥२७॥ एकदा चारयन्वत्सान्सरामो वनमाविशत् ॥ पंचषासु त्रियामासु हायनापूरणीष्वजः ॥२८॥ ततो विदूराच्चरतो गावो वत्सानुपव्रजम् ॥ गोवर्धनाद्रिशिरसि चरंत्यो ददृशुस्तृणम् ॥२९॥ दृष्ट्वाऽथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः ॥ द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुंकृतैरास्नुपया जवेन ॥ ३० ॥ समेत्य गावोऽधो वत्सान्वत्सवत्योऽप्यपाययन् ॥ गिलंत्य इव चांगानि लिहंत्यः स्वौधसं पयः ॥ ३१ ॥ गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना ॥ दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ॥ ३२ ॥ तदीक्षणोत्प्रेमरसाप्लुता-

पूरणीषु पूरकतयाऽवशिष्टास्वित्यर्थः ॥ २८ ॥ ततो दूरत एव गोवर्धनशिखरे चरंत्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः ॥ २९ ॥ तदैव स गोव्रजो गवां कलापस्तत्स्नेहवशस्तेषां वत्सानां स्नेहे-नाकृष्टोऽतएव न स्मृत आत्मा येन स जवेनोपव्रजमगात् । कथंभूतः । अत्यात्मपदुर्गमार्गः अतिक्रांत आत्मपान् गोपालान्यः सोऽत्यात्मपः तथा दुर्गो दुर्गमो मार्गो यस्य सः स च । तथा युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः । ककुद्याकुंचिता ग्रीवा यस्य सः । उदास्यपुच्छः उन्नमितान्यास्यानि पुच्छानि च येन सः । आस्नुपयाः सर्वतः स्रवंति पयांसि यस्य सः । आस्नु-पया इत्यपि पाठे स एवार्थः । गोव्रज इत्यनेन वृषभादयोऽप्यगुरित्युक्तम् ॥ ३० ॥ तत्र विशेषतो धेनूनां चेष्टितमाह । समेत्येति । गोवर्धनस्याधः । वत्सवत्यः पुनःप्रसूता अपि ॥ ३१ ॥ रामेण दृष्टं वत्सेषु गवां स्नेहातिशयमुक्त्वा गोपानामपि दर्शयितुमाह । गोपा इति । तासां गवां रोधने य आयासस्तस्य मौघ्येन मोघत्वेन लज्जया सहोरुमन्युना दुर्गमार्गजनितक्लेशेन चाभ्येत्य गोवत्सैः सह सुतान् ददृशुः ॥ ३२ ॥ ततश्च तेषामीक्षणेनोद्गतो यः प्रेमरसस्तस्मिन्नाप्लुता निमग्ना आशया येषां ते । लज्जामन्युकृच्छ्रैस्तानपि ताडयितुमागताः संतोऽपि गतमन्यवः प्रत्युत जातोऽनुरागो येषां

ते मूर्धनि घ्राणैरवघ्राणैः परमां मुदमवापुः ॥ ३३ ॥ कृच्छ्रात्ततोऽपगता निवृत्ताः । तेषां सुतानामनुस्मृत्योद्गच्छंत्यश्रूणि येषां ते ॥ ३४ ॥ प्रेमधैर्यौत्कंठ्यमतिशयम् । मुक्तस्तनेष्वपत्येषु वीक्ष्य हेतुम-
जानन्नचिंतयत् ॥ ३५ ॥ चिंतामेवाह । किमेतदिति द्वाभ्याम् । वासुदेवे यथा पुरा प्रेम तथा स्वतोकेष्वपि व्रजस्य प्रेम वर्धते किमेतदद्भुतमिति । किंच सात्मनो मत्सहितस्य व्रजस्य मम तेषु प्रेम-
कारणं किमिति भावः ॥ ३६ ॥ केयं माया देवानां वा नराणां वा असुराणां वा कुतो वा कस्मात्प्रयुक्ता तत्रान्यमाया न संभवति । यतो ममापि मोहो वर्ततेऽतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव
मायेयमस्त्विति संभावयति ॥ ३७ ॥ सवयसान्सखीनपि वयुनेन ज्ञानमयने चक्षुषा वैकुंठं श्रीकृष्णमेवापश्यत् ॥ ३८ ॥ एवं कृष्णरूपान्सामान्यतो ज्ञात्वा कृष्णं पृष्ट्वा कृष्णोपदेशेन विशेषतो ज्ञात-
वानित्याह । नैत इति । अयमर्थः । पाल्यमानास्तावद्वत्सा ऋषीणामंशाः पालाश्च देवानामंशा इति तावदहं वेद्मि । इदानीं तु न तथा किं त्वस्मिन् भिदाश्रयेऽपि त्वमेव भासि अतस्त्वं सर्वं पृथक्

शया जातानुरागा गतमन्यवोऽर्भकान्॥ उदुह्य दोर्भिः परिरभ्य मूर्धनि घ्राणैरवापुः परमां मुदं ते॥३३॥ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः ॥
कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥ ३४ ॥ व्रजस्य रामः प्रेमर्धेर्वीक्ष्यौत्कंठ्यमनुक्षणम् ॥ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिंतयत् ॥ ३५ ॥
किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि ॥ व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते ॥ ३६ ॥ केयं वा कुत आयाता दैवी वा नार्युतासुरी ॥ प्रायो
मायास्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ॥ ३७ ॥ इति संचिंत्य दाशार्हो वत्सान्सवयसानपि ॥ सर्वानाचष्ट वैकुंठं चक्षुषा वयुनेन सः ॥ ३८ ॥ नैते
सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि ॥ सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ॥ ३९ ॥ तावदेत्यात्मभूरात्म-
मानेन त्र्युट्यनेहसा ॥ पुरोवदब्दं क्रीडंतं ददृशे सकलं हरिम् ॥ ४० ॥ यावंतो गोकुले बालाः सवत्साः सर्व एव हि ॥ मायाशये शयाना मे ना-
द्यापि पुनरुत्थिताः ॥ ४१ ॥ इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे ॥ तावंत एव तत्राब्दं क्रीडंतो विष्णुना समम् ॥ ४२ ॥ एवमेतेषु भेदेषु चिरं
ध्यात्वा स आत्मभूः ॥ सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ॥ ४३ ॥ एवं संमोहयन्विष्णुं विमोहं विश्वमोहनम् ॥ स्वयैव माययाऽजोऽपि
स्वयमेव विमोहितः ॥ ४४ ॥ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि ॥ महतीतरमायैश्यं निहंत्यात्मनि युंजतः ॥ ४५ ॥ तावत्सर्वे वत्सपालाः

विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा वक्त्रा निर्गमात्संक्षेपत एवोक्तं वृत्तं बलोऽवैद्बोदितवानित्यर्थः ॥ ३९ ॥ ततः किं वृत्तमित्यपेक्षायामाह । तावदिति । वर्षे जाते आत्मनो मानेन त्रुट्यनेहसा
त्रुटिमात्रेण कालेन । सकलं सानुचरं हरिं ददर्श ॥ ४० ॥ दृष्ट्वा च व्यतर्कयदित्याह । यावंत इति द्वाभ्याम् । मे मायाशये मायातल्पे ॥ ४१ ॥ मन्मायामोहितेभ्य इतरे कुत्रत्याः ॥ ४२ ॥ इति
वितर्कयन्न मुह्यदित्याह । एवमिति द्वाभ्याम् । एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूरिति पाठः ॥ ४३ ॥ ४४ ॥ ननु मायाश्रयस्य तस्य कुतो मोह इत्यत आह । तम्यामिति । महामाया-
विनि भगवत्यन्यमायाया आवरणविक्षेपकत्वाभावे दृष्टांतद्वयम् । तम्यां तमिस्रायां रात्र्यां नैहारं हिमकणप्रभवं तम इव । तद्धितार्थोपसर्जनस्यापि तमसो नैहारमिति विशेषणं छांदसम् । तत्तमो यथा
पृथगावरणं न करोति किंतु तत्रैव लीयते यथा च खद्योतार्चिरहनि पृथक् प्रकाशं न करोति । एवं महति पुरुषे युंजतः पुंस इतरा नीचा माया तत्र न किंचित्करोति किंत्वात्मनि स्वस्मिन्नेव ऐश्वर्यं

सामर्थ्यं निहंतीति ॥ ४५ ॥ अन्यदप्याश्चर्यमाह । तावदिति । वत्सपालाः वत्साः पालाश्च सर्वे यष्टिविषाणादयश्च ॥ ४६ ॥ ४७ ॥ श्रीवत्सप्रभायुक्तान्यंगदानि दोष्षु येषां रत्नमयानि कंबुवत्त्रिधा-राणि कंकणानि पाणिषु येषां ते च ते च ॥ ४८ ॥ तथा भूरि बहुजन्मार्जितं पुण्यं तद्युक्तैर्जनैरर्पितैः ॥ ४९ ॥ चंद्रिकाविशदस्मितयुक्तैः । सहारुणगुणेन च वर्तमाना येऽपांगास्तैर्वीक्षितैः । स्वका-र्थानां स्वभक्तमनोरथानां रजःसत्त्वाभ्यां स्रष्टृपालका इव व्यदृश्यंत । सत्त्ववद्विशदस्मितेन पालका इव । रजोवदरुणगुणेन च स्रष्टार इव । तादृक्कटाक्षैर्यतमाना इत्यर्थः ॥ ५० ॥ आत्मा ब्रह्मा तदा-दिस्तंबपर्यंतैः । अनेकार्हैरनेकार्हणैः ॥ ५१ ॥ अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिः । महदादिभिरिति । महत्सूत्रयोः पृथक्त्वाविवक्षया चतुर्विंशतितत्त्वैर्जगत्कारणैः ॥ ५२ ॥ कालादिभिश्च तत्स-हकारिभिः । तत्र कालः क्षोभकः । स्वभावः परिणामहेतुः । संस्कारो वासनाया उद्बोधकः । स्वमहिध्वस्तमहिभिर्भगवन्महिम्ना तिरस्कृतस्वातंत्र्यैरुक्तैः सर्वैरणिमाद्यैः ॥ ५३ ॥ सर्वेषां मूर्तिमत्त्वेऽपि विशेषमाह । सत्यज्ञानेति । सत्याश्च ज्ञानरूपाश्चानंदरूपाश्च तत्रापि तदेकमात्रा विजातीयसंभेदरहितास्तत्रापि चैकरसाः सदैकरूपा मूर्तयो येषां ते । यद्वा सत्यज्ञानादिमात्रैकरसं यद्ब्रह्म तदेव मूर्तयो

पश्यतोऽजस्य तत्क्षणात् ॥ व्यदृश्यंत घनश्यामाः पीतकौशेयवाससः ॥ ४६ ॥ चतुर्भुजाः शंखचक्रगदाराजीवपाणयः ॥ किरीटिनः कुंडलिनो हारिणो वनमालिनः ॥ ४७ ॥ श्रीवत्सांगददोरत्नकंबुकंकणपाणयः ॥ नूपुरैः कटकैर्भाताः कटिसूत्रांगुलीयकैः ॥ ४८ ॥ आंघ्रिमस्तकमापूर्णास्तुलसी-नवदामभिः ॥ कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥४९॥ चंद्रिकाविशदस्मेरैः सारुणापांगवीक्षितैः॥ स्वकार्थानामिव रजःसत्त्वाभ्यां स्रष्टृपालकाः ॥ ५० ॥ आत्मादिस्तंबपर्यंतैर्मूर्तिमद्भिश्चराचरैः ॥ नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ॥ ५१ ॥ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः ॥ चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः ॥ ५२ ॥ कालस्वभावसंस्कारकामकर्मगुणादिभिः ॥ स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ॥ ५३ ॥ सत्यज्ञानानंतानंदमात्रैकरसमूर्तयः ॥ अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥ ५४ ॥ एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् ॥ यस्य भासा सर्वमिदं विभाति सचराचरम् ॥ ५५ ॥ ततोऽतिकुतुकोद्वृत्य स्तिमितैकादशेंद्रियः ॥ तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यंतीव पुत्रिका ॥ ५६ ॥ इतीरेशेऽ-तर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि

येषामिति । अतएवोपनिषदात्मज्ञानं सैव दृक् चक्षुर्येषां तेषामपि हि निश्चितमस्पृष्टभूरिमाहात्म्या नस्पृष्टं स्पर्शयोग्यं भूरि माहात्म्यं येषां ते तथाभूताः संतो व्यदृश्यंतेति ॥ ५४ ॥ एवं सकृदेकदैव ददर्श । परब्रह्मणो विशेषणं यस्येति ॥ ५५ ॥ अतिकुतुकेनाश्चर्येणोद्वृत्य दृष्टीः परावृत्य हंसपृष्ठे निपत्येति वा । कुतुकशब्दे तृतीयायाच्छांदसो लुक् । यद्वा उद्वृत्यः इति च्छेदः । अतिकुतुकेन उद्वृत्यो विलोड्यो विपर्यस्तः स्वस्मिन्निति यावत् । पाठांतरे त्वतिकुतुकेनोद्वृत्तः क्षुभितः तेषां धाम्ना तेजसा स्तब्धसर्वेंद्रियो ब्रह्मा तूष्णीं निश्चलोऽभूत् । अत्र दृष्टांतः । पूर्देवी व्रजाधिष्ठात्री काचिद्दे-वता तस्या अंति समीपे पुत्रिका चतुर्मुखीकृतकप्रतिमेव ॥ ५६ ॥ एवं मोहमग्नमजमुज्जहारेत्याह । इतीति । इरेशे इरा सरस्वती तस्या ईशे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात्तद्द्रष्टुमप्यनीशे सति परमोऽजः श्रीकृष्णः सपद्यजाजवनिकां मायारूपां तिरस्करिणीं ययाऽद्भुतं दर्शितं तां चच्छाद तिरोधत्त । अपसारितवानित्यर्थः । अथवा अयं लोकाभिमानी ममैश्वर्यं द्रष्टुमयोग्य इति तस्योपरि मायां प्रसारितवानिति । क्व मुह्यति सति । अतर्क्ये तर्कागोचरे निजोऽसाधारणो महिमा यस्य तस्मिन्निति मोहे हेतुरुक्तः । दर्शनायोग्यत्वाय त्रीणि विशेषणानि । स्वप्रमितिके स्वप्रमिति स्वः

॥ ५७ ॥ अर्वाक् बहिः प्रतिलब्धान्यक्षीणि येन सः । प्रकाशं च तत्कं सुखं च यस्मिन् अतएवाजातः प्रकृतेः परत्र परस्मिन् । अतन्निरसनमुखेन ब्रह्म कैः श्रुतिशिरोभिर्मितिर्ज्ञानं यस्मिंस्तस्मिन्स्वरूपे परेतवन्मृतो यदि कथंचित्पुनरुत्तिष्ठति तथा दृष्टीर्नेत्राणि ॥ ५८ ॥ जनानामाजीव्यैर्द्रुमैराकीर्णम् । समाप्रियं संततान्यासमंतात्प्रियाणि यस्मिंस्तत् ॥ ५९ ॥ तदाह । यत्रेति । नैसर्गदुर्वैराः स्वाभाविकाः प्रतिकार्यवैरवंतोऽपि नराः सिंहादयश्च मित्राणीव यत्र सहैवासन् । अजितस्यावासेन द्रुताः पलायिता रुट्तर्पादयः क्रोधलोभादयो यस्मात्तथाभूतं वृंदावनमपश्यदिति ॥ ६० ॥ तत्र च परमेष्ठी ब्रह्मा इव पुरा पूर्ववदेव ब्रह्म अचष्टापश्यत् । कथंभूतम् । पशुपवंशशिशुत्वं नाट्यमुद्वहत् । नाट्यमित्यत्र हेतुः । अद्वयमित्यादि । अद्वयं च वत्सान्विचिन्वत् एकं च सखीन् । अगाधबोधं च विचिन्वत् । अनंतं च परितो विचिन्वत् परं च शिशुत्वमुद्वहत् । ब्रह्म च सपाणिकवलमिति नाट्यमेवोद्वहदित्यर्थः ॥ ६१ ॥ निजधोरणतः स्ववाहनात्त्वरेण वेगेनावतीर्य दंडवन्नत्वा चतुर्णां मुकुटानामग्रैरंघ्रियुग्मं स्पृष्ट्वा मुदश्रुसुजलैरानंदाश्रुरूपैः सुजलैरभिषेकमकरोदिति ॥ ६२ ॥ चिरस्य चिरं पादयोः पतन्नास्ते ॥ ६३ ॥ सवेपथुः सकंपः अतएव गद्गदया । अनुकरणमेतत् । इलया वाचा

**ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः ॥ कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥ ५८ ॥ सपद्येवाभितः पश्यन्दिशोऽपश्यत्पुरःस्थितम् ॥ वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥ ५९ ॥ यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः ॥ मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥ ६० ॥ तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनंतमगाधबोधम् ॥ वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥ ६१ ॥ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदंडमिवाभिपात्य ॥ स्पृष्ट्वा चतुर्मुकुटकोटिभिरंघ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥ ६२ ॥ उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ॥ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ६३ ॥ शनैरथोत्थाय विमृज्य लोचने मुकुंदमुद्वीक्ष्य विनम्रकंधरः ॥ कृतांजलिः प्रश्रयवान्समाहितः सवेपथुर्गद्गदयैलतेलया ॥ ६४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे त्रयोदशोऽध्यायः ॥ १३ ॥ ब्रह्मोवाच ॥ नौमीड्य तेऽभ्रवपुषे तडिदंबराय गुंजावतंसपरिपिच्छलसन्मुखाय ॥ वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपांगजाय ॥ १ ॥ अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ॥ नेशे महित्ववसितुं मनसांतरेण साक्षात्तवैव**

परमोऽजाजवनिकाम् ॥ ५७ ॥

चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागंतुकनिश्चयम् ॥ अनीशः कर्तुमस्तौषीत्कृष्णं ब्रह्मा विमोहितः ॥ १ ॥ स्वकृतापराधेन भिया ऐलताऽस्तौत् ॥ ६४ ॥ इति दशमपूर्वार्धे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ अथवा नौमीत्युक्त्वा प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते सकंपतया भगवन्महिमानमनवगाहमानो यथादृष्टस्वरूपमेव कीर्तयन्नाह । नौमीति । हे ईड्य स्तुत्य ते तुभ्यं नौमि । द्वितीयार्थे चतुर्थ्यः । प्रयोजनापेक्षायामेवंभूतो भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी । यद्वा तुभ्यं त्वामेव प्रसादयितुं त्वामेव स्तौमीत्यर्थः । अभ्रवद्वपुर्यस्य तस्मै । तडिद्वदंबरं यस्य तस्मै । गुंजाभिरवतंसो कर्णभूषणं परिपिच्छं च बर्हापीडं तैर्लसन्मुखं यस्य तस्मै । वन्याः स्रजो यस्य तस्मै । कवलादिभिर्लक्ष्मभिः श्रीः शोभा यस्य तस्मै । मृदू पादौ यस्य तस्मै पशुपस्यांगजाय ॥ १ ॥ ननु नौमीति प्रतिज्ञाय किं स्वरूपानुवादमात्रं क्रियते अत आह । अस्यापीति । भो देव अस्यापि सुलभत्वेन प्रकाशितस्यापि तव वपुषोऽवतारस्य महि महिमानमवसितुं कोऽपि को ब्रह्मा अहमपि नेशे न शक्नोमि । यद्वा कश्चिदपि नेशे न समर्थ आसीत् । सुलभत्वाय विशेषणद्वयम् । मदनुग्रहस्य ममानुग्रहो यस्मात्तन्मदनुग्रहं तस्य । किंच स्वेच्छामयस्य स्वीयानां भक्तानां यथायथेच्छा तथा तथा भवतः । तर्हि

किमिति ज्ञातुं न शक्यतेऽत आह । ननु भूतमयस्याचिंत्यशुद्धसत्त्वात्मकस्य । यदाऽस्यैवं तदा कथं पुनः साक्षात्तव केवलस्यात्मसुखानुभूतेरेव स्वसुखानुभवमात्रस्यावतारिणो गुणातीतस्य महिमान-
मंतरेण निरुद्धेनापि मनसा को वा ज्ञातुं समर्थो भवेत् । अथवा भूतमयस्यापि तु विराड्रूपस्य तव त्वन्नियम्यस्य वपुषो महिमानमेवावसितुं कोऽपि नेशे तदा साक्षात्तवैवामाधारणस्य नियम्यनियंतृ-
भेदरहितस्योक्तलक्षणस्यास्य महिमानमवसितुं कोऽपि नेश इति किमु वक्तव्यमित्यर्थः ॥ २ ॥ तर्ह्यज्ञाः कथं संसारं तरेयुरत आह । ज्ञान इति । उदपास्य ईषदप्यकृत्वा सद्भिर्मुखरितां स्वत एव
नित्यं प्रकटितां भवदीयवार्तां स्वस्वस्थान एव स्थितास्तत्सन्निधिमात्रेण स्वत एव श्रुतिगतां श्रवणं प्राप्तां तनुवाङ्मनोभिर्नमंतः सत्कुर्वंतो ये जीवंति केवलं यद्यपि नान्यत्कुर्वंति तैः प्रायशस्त्रिलोक्याम-
न्यैरजितोऽपि त्वं जितः प्राप्तोऽसीति किं ज्ञानश्रमेणेत्यर्थः ॥ ३ ॥ भक्तिं विना ज्ञानं तु नैव सिद्ध्येदित्याह । श्रेयःस्रुतिमिति । श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः स्रवणं यस्याः सरस इव
निर्झराणां तां ते तव भक्तिमुदस्य त्यक्त्वा । श्रेयसां मार्गभूतामिति वा । तेषां क्लेशलः क्लेश एवावशिष्यते । अयं भावः । यथा अल्पप्रमाणं धान्यं परित्यज्यांतःकणहीनान्स्थूलधान्याभासांस्तुषानेवा-
वघ्नंति तेषां न किंचित्फलमेवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतंते तेषामपीति ॥ ४ ॥ भक्त्यैव ज्ञानं नान्यथेत्यत्र सदाचारं प्रमाणयति । पुरेति । हे भूमन्नपरिच्छिन्न ! इह लोके पूर्वं योगि-
नोऽपि संतो योगैर्ज्ञानमप्राप्य पश्चात्त्वदर्पितेहास्त्वय्यर्पिता लौकिक्यपीहा चेष्टा यैस्ते निजकर्मलब्धया त्वदर्पितैर्निजैः कर्मभिर्लब्धया । त्वय्यर्पिता ईहा निजानि कर्माणि च तैर्लब्धयेत्येकं पदं वा ।

किमुतात्मसुखानुभूतेः ॥ २ ॥ ज्ञाने प्रयासमुदपास्य नमंत एव जीवंति सन्मुखरितां भवदीयवार्ताम् ॥ स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये
प्रायशोऽजितजितोऽप्यसि तैस्त्रिलोक्याम् ॥ ३ ॥ श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम् ॥ ४ ॥ पुरेह भूमन्बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ॥ विबुद्ध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽ-
च्युत ते गतिं पराम् ॥ ५ ॥ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलांतरात्मभिः ॥ अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न
चान्यथा ॥ ६ ॥ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ॥ कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः

कथोपनीतया कथया त्वत्समीपं प्रापितया भक्त्यैव विबुध्यात्मानं ज्ञात्वा अंजः सुखेनैव ते परां गतिं प्राप्ताः ॥ ५ ॥ एवं तावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत्कथाश्रवणादिनैव त्वत्प्रा-
प्तिर्नान्यथेत्युक्तम् । इदानीं यद्यप्युभयोरविशेषेण दुर्ज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथंचिद्भवेन्न तु सगुणस्य तवाचिंत्यानंतगुणत्वादिति श्लोकद्वयेन स्तौति । तथाऽपीति । हे भूमन्नपरिच्छिन्न-
गुणस्य ते महिमा अमलैरंतरात्मभिः प्रत्याहृतेंद्रियैर्विबोद्धुं बोधगोचरीभवितुमर्हति योग्यो भवति । अथवा विबोद्धुं ज्ञातुमर्हति । अर्ह्यते शक्यत इत्यर्थः । यद्वा । महिमेति महिमानं कश्चिद्बोद्धुमर्ह-
तीत्यर्थः । कथम् । स्वानुभवादात्माकारांतःकरणसाक्षात्कारात् । नन्वंतःकरणमपि सविकारमेव विषयीकरोतीति कथमात्माकारता तस्येत्यत आह । अविक्रियादिति । विक्रियाविशेषाकारस्तद्रहि-
तात् । विशेषपरित्याग एवात्माकारतेत्यर्थः । नन्वंतःकरणसाक्षात्कारविषयत्वेनात्मत्वप्रसंगः स्यादत आह । अरूपत इति । रूपं विषयः अविषयात् । वृत्तिविषयत्वमेवात्मनो न फलविषयत्वमतो नायं
दोष इति भावः । कथं तर्हि स्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव न त्वन्यथा । इदं तदिति विषयत्वेनेत्यर्थः । अथवा मा सर्वतोऽतरंगा लक्ष्मीरप्यगुणस्य ते महि महिमानममलैरंतर्वृत्तिभि-
रिंद्रियैरपि तथा यादृग्वस्तुतस्तेन रूपेण विबोद्धुं किमर्हति नार्हत्येवेत्यर्थः । कथं तर्ह्यर्हति तदाह । स्वानुभवादित्यादिना । उक्तार्थमेवैतत् ॥ ६ ॥ गुणात्मनो गुणानामात्मनो गुणाधिष्ठातुस्ते तव

पुनर्गुणान्विमातुमेतावंत इति गणयितुमपि के ईशिरे समर्था बभूवुर्दूरतस्तद्विशेषवार्ता । कथंभूतस्य तव । अस्य विश्वस्य हिताय पालनाय बहुगुणाविष्कारेणावतीर्णस्य । ननु कालेन निपुणैः किम-
शक्यमत आह । कालेनेति वा शब्दो वितर्के । सुकल्पैरतिनिपुणैर्बहुजन्मना कालेन भूपरमाणवो विमिता विशेषेण गणिता भवेयुः । तथा स्वे मिहिका हिमकणा अपि तथा द्युभासो दिवि नक्ष-
त्रादिकिरणपरमाणवोऽपि ॥ ७ ॥ तस्माद्भक्तिरेव संगच्छत इत्याह । तत्तेऽनुकंपामिति । सुसमीक्षमाणस्तव कृपा कदा भविष्यतीति बहुमन्यमानः स्वार्चितं च कर्मफलमनासक्तः सन् भुंजान एव
नातीव तपआदिना क्लिश्यन्नेवं यो जीवेत स मुक्तौ दायभाग्भवति । भक्तस्य जीवनव्यतिरेकेण दायप्राप्ताविव मुक्तौ नान्योपयुज्यत इति भावः ॥ ८ ॥ तदेवं स्तुत्वा भगवंतं क्षमापयितुं स्वापराधं
निवेदयति । पश्येति । हे ईश मेऽनार्यं दौर्जन्यं पश्य । यदहं मायिनामपि मायिनि विमोहके त्वय्यपि स्वमायां प्रसार्यात्मैश्वर्यमीक्षितुमैच्छमभिलषितवान् । अहो एवं कर्तुं त्वय्यहं कियान्न किंचित् ।
यथाग्नेरुद्भूता ज्वाला अग्नौ न किंचित्तद्वदिति ॥ ९ ॥ रजोभुवो रजसो जातस्यातोऽतएवाजावलेपांधतमोंऽधचक्षुषः अजो जगत्कर्ताऽहमिति मदेन गाढतमोरूपेणांधीभूते नेत्रे यस्यातस्त्वत्तः पृथगी-
शमानिनः । अन्यत्र प्रभुत्वेन वर्तमानोऽपि मयि नाथे सति नाथवान्मद्भृत्य एवात एषोऽनुकंप्य इति मत्वा क्षमस्वेत्यर्थः ॥ १० ॥ ननु ब्रह्मांडविग्रहस्त्वमपीश्वर एवेति चेत्तत्राह । काहमिति । तमः

॥ ७ ॥ तत्तेऽनुकंपां सुसमीक्षमाणो भुंजान एवात्मकृतं विपाकम् ॥ हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥
पश्येश मेऽनार्यमनंत आद्ये परात्मनि त्वय्यपि मायिमायिनि ॥ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ ॥ ९ ॥ अतः
क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः ॥ अजावलेपांधतमोंऽधचक्षुष एषोऽनुकंप्यो मयि नाथवानिति ॥ १० ॥ क्वाहं तमो-
महदहंखचराग्निवार्भूसंवेष्टितांडघटसप्तवितस्तिकायः ॥ क्वेदृग्विधाविगणितांडपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥ ११ ॥ उत्क्षेपणं
गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे ॥ किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनंतः ॥ १२ ॥ जगत्त्रयांतोद-
धिसंप्लवोदे नारायणस्योदरनाभिनालात् ॥ विनिर्गतोऽजस्त्वितिवाङ्न वै मृषा किंत्वीश्वर त्वन्न विनिर्गतोऽस्मि ॥ १३ ॥ नारायणस्त्वं न हि सर्व-

प्रकृतिर्महान् महत्तत्त्वं अहमहंकारः खमाकाशः । चरो वायुः अग्निर्वार्जलं भूश्च प्रकृत्यादिपृथिव्यंतैरेतैः संवेष्टितो योऽडघटः स एव तस्मिन्वा स्वमानेन सप्तवितस्तिः कायो यस्य सोऽहं क्व क्व च ते
महित्वम् । कथंभूतस्य । ईदृग्विधानि यान्यविगणितान्यंडानि त एव परमाणवस्तेषां चर्या परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव । अतोऽतितुच्छत्वात्त्वयाऽनुकंप्योऽ-
हमिति ॥ ११ ॥ अपि च । गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति लोके । अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषितमभिहितम् ।
एतेषां शब्दानां भुवि विषये उषितं स्थितमिति वा । सर्वं वस्त्वित्यर्थः । हे अधोक्षज ! तव कुक्षेरनंतर्बहिः कियदपि किंचिन्मात्रमपि किमस्ति न किंचिदस्तीत्यर्थः । अतः सर्वस्य तव कुक्षिगतत्वेन
ममापि तथात्वान्मातृवदपराधः सोढव्य इति भावः ॥ १२ ॥ किंच विशेषतोऽपि त्वत्तो मम जन्म प्रसिद्धमित्याह । जगत्त्रयेत्यादि । जगत्त्रयस्यांते प्रलये य उदधीनां संप्लवः संश्लेषस्तस्मिन्नुदे
उदके नारायणस्योदरे नाभिस्तस्य नालादजो विनिर्गत इति या वाक्सा तावन्मृषा न भवति । वै निश्चितम् । तथापि तु हे ईश्वर ! त्वत्तोऽहं किं न विनिर्गतो नोत्पन्नोऽस्मि । अपितु त्वत्त एवोत्पन्न
इत्यर्थः ॥ १३ ॥ तर्हि नारायणस्य पुत्रः स्यास्त्वं मम किमायातं तत्राह । नारायणस्त्वमिति । नहीति काका त्वमेव नारायण इत्यापादयति । कुतोऽहं नारायण इति चेदत आह । सर्वदेहिना-

मात्माऽसीति । एवमपि किं नारायणो न भवसि नारं जीवसमूहोऽयनमाश्रयो यस्य स तथेति त्वमेव सर्वदेहिनामात्मत्वान्नारायण इति भावः । हे अधीश ! त्वं नारायणो नहीति पुनः काकुः । अधीशः प्रवर्तकः । ततश्च नारस्यायनं प्रवृत्तिर्यस्मात्स तथेति पुनस्त्वमेवासाविति । किंच त्वमखिललोकसाक्षी अखिलं लोकं साक्षात्पश्यसि अतो नारमयसे जानासीति त्वमेव नारायण इत्यर्थः । नन्वेवं नारायणपदव्युत्पत्तौ भवेदेवं तत्त्वन्यथा प्रसिद्धमित्याशंक्याह । नारायणोंऽगमिति । नराद्दुद्भूता येऽर्थास्तथा नराज्जातं यज्जलं तदयनाद्यो नारायणः प्रसिद्धः सोऽपि तवैवांगं मूर्तिः । तथा च स्मर्यते । नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ॥ तस्य तान्ययनं पूर्वं तेन नारायणः स्मृत इति । तथा । आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः इति च । ननु मन्मूर्तेरपच्छिन्नायाः कथं जलाश्रयत्वमत आह । तच्चापि सत्यं नेति ॥ १४ ॥ अपरिच्छेदमेवोपपादयति । तच्चेदिति । जगदाश्रयभूतं तव तद्वपुर्जलस्थमित्येवं यदि सत्यमत्यं स्यात्तर्हि तदैव कमलनालमार्गेणांतः प्रविश्य संवत्सरशतं विचिन्वताऽपि मया हे भगवन्नचिंत्यैश्वर्य ! तत्र किमिति न दृष्टम् । हृद्यपि किमिति नो व्यदर्शि न दृष्टम् । तदैव तपःकरणानंतरं सपद्येव सुदृष्टमतो मायैव । अतस्त्वन्मूर्तेर्देशविशेषपरिच्छेदः सत्यो न भवतीत्यर्थः ॥ १५ ॥ अपि च यदि जलादिप्रपंचः सत्यः स्यात्तर्हि तेन तव परिच्छेदो भवेत् स तु मायाविलसित इति त्वयैव दर्शितमित्याह

देहिनामात्माऽस्यधीशाखिललोकसाक्षी ॥ नारायणोंऽगं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ॥ १४ ॥ तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव ॥ किं वा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि ॥१५॥ अत्रैव मायाधमनावतारे ह्यस्य प्रपंचस्य बहिःस्फुटस्य ॥ कृत्स्नस्य चांतर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥ १६ ॥ यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ॥ तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ॥ १७॥ अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ॥ तावंतोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्तावंत्येव जगंत्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥ १८ ॥ अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायाम् ॥ सृष्टाविवाहं जगतो विधान इव त्वमेषोंत इव त्रिनेत्रः ॥ १९ ॥ सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादःस्वपि तेऽजनस्य ॥ जन्मासतां दुर्मद-

लोकत्रयेण । हे मायाधमन मायोपशमन ! अत्रैवावतारे बहिः स्फुटस्यापि स्वजठरमध्ये जनन्याः प्रदर्शनेन ॥१६॥ ननु बहिः सत एवांतर्जठरे प्रतिबिंबोऽस्तु कुतः सर्वथा मायात्वं तत्राह । यस्येति । यस्य तव कुक्षौ सर्वमिदं यथा भाति तत्सर्वमिहापि बहिरपि तथैव भाति । किंच सात्मं त्वत्सहितं तदिदं सर्वं त्वयि मायया विना किं घटते । अयं भावः । त्वयि प्रतिबिंबश्चेद्बाह्याद्विलोमतया प्रतीयेत नतु तदस्ति । तव चादर्शस्थानीयस्य त्वयि प्रतीतिर्न स्यात् अतः सर्वथामिथ्यात्वमेवेति ॥ १७ ॥ अपिच न केवलं जनन्या ममापि तथैव दर्शितमित्याह । अद्यैवेति । त्वदृते त्वां विना अस्य विश्वस्य मायात्वं त्वया ममैव च तदप्यद्यैव किं न दर्शितं किंतु दर्शितमेव । तथाहि एकोऽसीत्यादि तत्ततो मया सहाखिलैस्तत्त्वादिभिरुपासितास्तावंतश्चतुर्भुजा असि । जगंति ब्रह्मांडानीति प्रागनुक्तमपि दृष्टमिति ज्ञातव्यम् ॥ १८ ॥ ननु ब्रह्मंस्तव मया दर्शितं शुद्धमेव चैतन्यं कथं प्रपंचवन्मायेत्युच्यते । सत्यम् । किंत्वद्वितीये त्वयि नानात्वं गुणावतारमत्स्याद्यवतारेष्विव कार्यवशेन स्वतंत्रमायानिबंधनमित्याह श्लोकद्वयेन । अजानतामिति । त्वत्पदवीं तव स्वरूपमजानतामनात्मनि प्रकृतौ स्थित आत्मैव त्वमात्मनैव स्वातंत्र्येण मायां वितत्य भासि । कथम् । जगतः सृष्टावहमिव

ब्रह्मेव । विधाने पालने च एष त्वमिव । अंते त्रिनेत्र इवेति ॥१९॥ सुरेषु उपेंद्रः । ऋषिषु परशुरामः । नृष्वपि रामः॥२०॥ ननु च स्वातंत्र्ये कथं कुत्सितेषु मत्स्यादिषु जन्म कथं वा वामनाद्यव-
तारयाच्ञादिकार्पण्यं कथं वाऽस्मिन्नेव कदाचिद्भयपलायनादि अत आह । को वेत्तीति । अन्वर्थैः संबोधनैर्दुर्ज्ञेयत्वमेवाह । भूमन्नित्यादिभिः । भवतः ऊतीर्लीलास्त्रिलोक्यां को वेत्ति क्व वा कथं वा
कदा वा कति वेति अचिंत्यं तव योगमायावैभवमिति भावः ॥ २१ ॥ ननु भवत्ववताराणामचिंत्यो महिमा प्रपंचस्य ह्यसत्त्वे कथं सत्त्वप्रतीतिरितीमामाशंकां सपरिकरमुपसंहरन्परिहरति । तस्मा-
दिति । अस्तधिषणं निरस्तप्रतिभासं त्वय्येवोद्यदुद्भवदपि यन्नश्यत् सदिवेत्युपलक्षणमेतत् । नित्यमिव सुखमिव चेतनमिव चाधिष्ठानभूतस्य तव गुणैस्तथा तथा भातीत्यर्थः ॥ २२ ॥ त्वमेव तु सत्य
इत्याह । एकस्त्वं सत्यः । कुतः आत्मा । दृश्यमसत्यं दृष्टं न चात्मा दृश्योऽतः सत्यः । किंच यद्विकारवत्तदसत्यं न च त्वयि जन्मादयो विकाराः संतीत्याह । आद्यः कारणं अतो न जन्म । आद्य-
त्वे हेतुः । पुराणः पुरापि नवः कार्यात्पूर्वमपि वर्तमान इत्यर्थः । अत्र हेतुः पुरुष इति । तथाच श्रुतिः । पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमिति । जन्मानंतरास्तित्वलक्षणं विकारं वारयति ।
नित्य इति । सनातन इत्यर्थः । पूर्णोऽजस्रसुखोऽक्षरोऽमृत इति चतुर्भिः पदैः क्रमेण वृद्धिविपरिणामापक्षयविनाशान्वारयति । पूर्णत्वे हेतुः । अनंतोऽद्वय इति च । देशकालपरिच्छेदरहितो वस्तुपरि-
च्छेदरहितोऽपि । अमृतत्वोपपादनाय चतुर्विधं क्रियाफलत्वं वारयति । स्वयंज्योतिर्निरंजन उपाधितो मुक्त इति पदत्रयेण। अयं भावः। तत्रोत्पत्तिराद्य इत्यनेनैव निराकृता । प्राप्तिरपि क्रियया ज्ञानेन

निग्रहाय प्रभो विधातः सदनुग्रहाय च ॥ २० ॥ को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम् ॥ क्व वा कथं वा कति वा कदेति
विस्तारयन्क्रीडसि योगमायाम् ॥२१॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ॥ त्वय्येव नित्यसुखबोधतनावनंते मा-
यात उद्यदपि यत्सदिवावभाति ॥ २२ ॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनंत आद्यः ॥ नित्योऽक्षरोऽजस्रसुखो निरंजनः पूर्णोऽद्वयो
मुक्त उपाधितोऽमृतः ॥ २३ ॥ एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ॥ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरंतीव भवानृतां-
बुधिम् ॥२४॥ आत्मानमेवात्मतया विजानतां तेनैव जातं निखिलं प्रपंचितम् ॥ ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥२५॥
अज्ञानसंज्ञौ भवबंधमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ॥ अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥ २६ ॥ त्वामात्मानं

वा भवेत् क्रियया प्राप्तिरात्मपदेनैव निराकृता । ज्ञानतः प्राप्तिं वारयति । स्वयंज्योतिरिति । विकृतिरपि तुषापाकरणेनावघातेन व्रीहीणामिवोपाध्यपाकरणेन भवेत्तत्त्वसंगत्वान्न संभवतीत्याह । मुक्त
उपाधित इति । संस्कारोऽपि किमप्यतिशयाधानेन मलापाकरणेन वा तत्रातिशयाधानं पूर्णत्वेनैव निराकृतम् । मलापाकरणं निवारयति । निरंजन इति निर्मल इत्यर्थः ॥ २३ ॥ तस्मादेवंभूतज्ञाना-
न्नान्मुच्यंत इत्याह । एवंविधमिति । त्वां ये विचक्षते सम्यक् पश्यंति । कथम् । आत्मात्मतया आत्मा प्रत्यक् तस्य स्वमपेण नचैतत्पुत्रादिष्विव गौणमित्याह । सकलात्मनामपि स्वात्मानम् ।
केन । गुरुरेवार्कस्तस्माल्लब्धा उपनिषज्ज्ञानं तदेव सुचक्षुस्तेन भव एवानृतांबुधिस्तं ते तरंतीव ॥ २४ ॥ तत्र च ज्ञानेन तरंतीति तच्च तरंतीवेति तच्चात्मात्मतया ज्ञानेनेत्यर्थत्रयं प्रतिज्ञातं क्रमेणोप-
पाद्यते तत्रात्मानमेवात्मतयेत्यनेन श्लोकेन ज्ञानेन तरंतीत्युपपाद्यते । अज्ञानसंज्ञावित्यनेन तरंतीवेत्येतत् त्वामित्यादिश्लोकद्वयेन त्वात्मात्मतयेत्येतदुपपाद्यते । ननु ज्ञानेन कथं भवं तरंतीति तस्या-
ज्ञानमूलत्वादित्याह । आत्मानमेवेति । तेनैवाज्ञानेनैव । प्रपंचितं प्रपंचः । रज्ज्वामहेर्भोगभवाभवौ सर्पशरीरस्याध्यासापवादौ यथेति ॥ २५ ॥ ननु ज्ञानेन तरंत्येव किमिदमुच्यते तरंतीवेति तत्राह ।

अज्ञानसंज्ञाविति । अज्ञानेन संज्ञा ययोस्तौ भवबंधमोक्षौ भवेन बंधस्तन्मोक्षश्च तौ द्वौ नाम प्रसिद्धौ । ऋतज्ञभावात् ऋतश्चासौ ज्ञश्च यो भावस्तस्मादन्यौ न स्तः । ननु कथं महानपलापः क्रियते परमार्थविचारादित्याह । अजस्रेति । अखंडानुभवरूपे परे शुद्धे आत्मन्यज्ञानं न च बंधः । अतएव न ज्ञानं न च मोक्षः तरणौ सूर्ये रात्र्यहनी इवेति ॥ २६ ॥ ननु परमार्थज्ञानादज्ञानकृतो बंधो निवर्ततामात्मात्मतयैव ज्ञानादिति कोऽयमाग्रह इत्याशंक्य यदध्यासादात्मनः पररूपास्फूर्तिस्तदपवादेन तत्रैव ज्ञानं युक्तमितीममर्थं विस्मयेनाक्रोशन्निवाह । त्वामिति । त्वामात्मानं परं देहादिं मत्वा आत्मनि देहादिमध्यस्य तथा परं देहादिमात्मानं मत्वा देहादावात्मानमध्यस्यात्र नष्ट आत्मा बहिर्मृग्य इति चित्रम् । न हि गृहे नष्टं वने मृग्यत इत्यर्थः ॥ २७ ॥ विवेकिनस्तु प्रत्यक्स्वरूपे एव परमात्मानं विचिन्वंतीत्याह । अंतर्भव इति । भवतीति भवश्चिज्जडात्मकं शरीरं तन्मध्य एव त्वां मृगयंति । अतज्जडं त्यजंतोऽपवदंतः ननु सतो ज्ञानेनालं किमसतोऽपवादेनेत्याशंक्याधस्तापवादं विनाऽधिष्ठानतत्त्वं न ज्ञायत इति सतां व्यवहारेणाह । असंतमिति । अंति समीपे असंतमप्यहिमंतरेण तन्निषेधं विनेत्यर्थः । संतं गुणं रज्जुं संतः किमुयंति जानंति । अंति संतमपि गुणमिति वा न जानंतीत्यर्थः । तस्मादात्मात्मतयैव ज्ञानान्मुक्तिरिति भावः ॥२८॥ नन्वेवं ज्ञानैकसाध्ये मोक्षे किमिति भक्तिरुद्बोधिताऽत आह । अथापीति । यद्यपि हस्तप्राप्यमिव ज्ञानमुक्तं तथापि हे देव ! तव

परं मत्वा परमात्मानमेव च ॥ आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥ २७ ॥ अंतर्भवेऽनंत भवंतमेव ह्यतत्त्यजंतो मृगयंति संतः ॥ असंतमप्यंत्यहिमंतरेण संतं गुणं तं किमु यंति संतः ॥२८॥ अथापि ते देव पदांबुजद्वयप्रसादलेशानुगृहीत एव हि ॥ जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥ २९ ॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ॥ येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥ ३० ॥ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ॥ यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥ ३१ ॥ अहो भाग्यमहो भाग्यं नंदगोपव्रजौकसाम् ॥ यन्मित्रं परमानंदं पूर्णब्रह्मसनातनम् ॥ ३२ ॥ एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः ॥ एतद्धृषीकचषकैरसकृत्पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥ ३३ ॥ तद्भूरिभाग्यमिह

पादांबुजद्वयमध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेनानुग्रहीत एव भगवतस्तव महिम्नस्तत्त्वं जानाति । हे भगवंस्ते महिम्नस्तत्त्वमिति वा । एकोऽपि कश्चिदपि चिरमपि विचिन्वन्नप्यतदंशापवादेन विचारयन्नपीत्यर्थः ॥ २९ ॥ तत्तस्मात् भूरिभागो महद्भाग्यम् । अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन्वा येन भाग्येन भवदीयानां जनानामेकोऽपि यः कश्चिदपि भूत्वा निषेवेऽत्यर्थं सेवेय इति ॥ ३० ॥ देवादिजन्मनोऽपि यत्र कुत्रचित्त्वद्भक्तिमज्जन्मैव श्रेष्ठमित्यौत्सुक्येन सप्तभिः श्लोकैरभिनंदति अहोऽतिधन्या इत्यादिभिः । व्रजगोरमण्यः व्रजस्था गावो रमण्यो गोप्यश्च । ते त्वया वत्सतरात्मजात्मना वत्सानामात्मजानां च रूपेण यस्य तव तृप्तये सर्वेऽपि यज्ञा अद्यापि न शक्तास्तेन त्वया प्रतिक्षणं तृप्ततया यासां स्तन्यममृतरूपं पीतमिति ॥ ३१ ॥ अहो इति पुनरुक्त्या भाग्यस्य सर्वथापरिच्छिन्नत्वमुक्तम् ॥ ३२ ॥ किंच । एषां भाग्यस्य तावन्महिमा आस्तां कस्तं वक्तुं शक्नोति । शर्वादयः शर्वोऽहंकाराधिष्ठाता आदिर्येषां चंद्रादीनामेकादशानां ते तथा वयं च । वयमित्यात्मानमेव बहुमन्यमान आह । एवं मनोबुद्ध्यहंकारचक्षुराद्यधिष्ठातारस्त्रयोदश देवा एव तावद्धताहो भूरिभागाः यस्मादेतेषां हृषीकाणींद्रियाण्येव चषकाणि पानपात्राणि तैस्ते चतुर्दशस्य चित्ताधिष्ठातुरंघ्री एव उदजे वारिजे तयोर्मधु मकरंदस्तदेवामृतं स्वाद्वासवं मादकं पिबामः । एतदुक्तं भवति । यदा प्रत्येकमिंद्रियाभिमानिनो वयं कीर्तिसौंदर्यसौगंध्याद्येकदेशसे-

विनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेविनामेतेषां किं वर्ण्यते भाग्यमिति ॥ ३३ ॥ अतो मया प्रार्थितं तदस्तु मे नाथ स भूरिभाग इति यत्तदेतदेवेत्याह । तद्भूरिभाग्यमिति । किं तत् । इह मनुष्यलोके यत्किमपि जन्म तत्राप्यटव्यां यत्तत्रापि गोकुले यत् । अहो सत्यलोकं विहायात्र जन्मनि जाते को लाभोऽत आह । अपि कतमांघ्रिरजोऽभिषेकमिति । गोकुलवासिनां मध्येऽपि कतमस्य यस्य कस्याप्यंघ्रिरजसाऽभिषेको यस्मिंस्तत् । ननु कुतो गोकुलवासिन एव धन्यास्तत्राह । यदिति । येषां जीवितं निखिलं भगवान्मुकुंदः । मुकुंदपरमेव जीवनमित्यर्थः । दुर्लभतामाह । अद्यापीति । उत श्रुतिमृग्यं वेदैरपि मृग्यत एव न तु दृश्यत इत्यर्थः ॥ ३४ ॥ अपिच किं वर्ण्यते कृतार्थत्वमेतेषां येषां भक्त्या भवानपि ऋणीवास्ते । ननु किं दातुमसमर्थोऽहं येन ऋणी स्यामत आह । उत अपि भवानपि एषां कुत्रापि किं विश्वफलात्सर्वफलात्मकात्त्वत्तः परं फलं राता दास्यतीति नश्चेतः अयत्सर्वत्र गच्छद्विचारयत् मुह्यति । ननु मामेव दत्त्वाऽनृणः स्यामिति चेन्नहि नहि । सद्वेषादिव सतां भक्तानां यो वेषस्तदनुकरणमात्रेण पापिष्ठा पूतनाऽपि त्वामेवापिता प्रापिता । तर्हि तत्संबंधिनामपि दास्यामीति चेत्तत्राह । सकुलेति । बकाघासुरसहिता एषामपि तावदेव चेदपर्याप्तमित्याह । यदिति । येषां धामादयस्त्वत्कृते त्वदर्थमेवेत्यर्थः ॥ ३५ ॥ ननु वीतरागादिदोषाणां संन्यासिनामपि न मत्तः परं किंचिदस्ति कथमेषामपर्याप्तमित्यत आह । तावदिति । हे कृष्ण रागाद-

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमांघ्रिरजोऽभिषेकम् ॥ यज्जीवितं तु निखिलं भगवान्मुकुंदस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ ३४ ॥ एषां घोषनिवासिनामुत भवान्किं देव रातेति नश्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ॥ सद्वेषादिव पूतनाऽपि सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥ ३५ ॥ तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥ तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः ॥ ३६ ॥ प्रपंचं निष्प्रपंचोऽपि विडंबयसि भूतले ॥ प्रपन्नजनतानंदसंदोहं प्रथितुं प्रभो ॥३७॥ जानंत एव जानंतु किं बहूक्त्या न मे प्रभो ॥ मनसो वपुषो वाचो वैभवं तव गोचरः ॥ ३८ ॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् ॥ त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥ ३९ ॥ श्रीकृष्ण वृष्णिकुलपुष्कर जोषदायिन्क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ॥ उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ॥ ४० ॥ श्रीशुक

यस्तावदेव स्तेनाश्चोरा भवंति । तथा तावद्गृहमपि कारागृहं बंधनागारम् । मोहोऽपि तावदेवांघ्रिनिगडः पादशृंखला । यावत्ते त्वदीया जना न भवंति । त्वदीयानां तु रागादयोऽपि त्वन्निष्ठासो चका एवेति न यतिभ्यो विशेषो भजनं त्वधिकमिति भावः ॥ ३६ ॥ नन्वत एवाहमेषां पुत्रादिरूपेण वर्ते इति चेत्तत्राह । प्रपंचमिति । प्रपन्ना या जनता जनसमूहस्तस्या आनंदानां संदोहं समूहं प्रथयितुमिति । न हि कपटपुत्रत्वादिना तादृग्भक्तैरानृण्यं संपद्यत इत्यर्थः ॥ ३७ ॥ तदेवमादित आरभ्याचिंत्यानंतगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्तं केचित्तु जानीम इति स्थितास्तानुपहसन्निवाह । जानंत इति । न तु मे मनआदीनां तव वैभवं विषय इति ॥ ३८ ॥ जगदीशत्वाद्यभिमानं परित्यज्याह । अनुजानीहीति स्वमहिमानमस्मदादीनां न ज्ञानबलादि सर्वं त्वमेव वेत्सि यतः सर्वदृक् जगतां नाथस्तु त्वमेवेत्येतावज्ज्ञातमतो ममतास्पदं जगदेतच्छरीरं च तवार्पितम् ॥ ३९ ॥ तदेवं किंकरं प्रस्थापयेत्यत्यादरेण नमस्करोति । श्रीकृष्णेति । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन हे सूर्योपम ! क्ष्मा चावनिर्निर्जरा देवाश्च द्विजाश्च पशवश्च त एवोदधयस्तेषां वृद्धिकारित्वेन हे चंद्रोपम ! उद्धर्मः पाखंडधर्मस्तदेव शार्वरं तमस्तद्धरतीति तथा अनेन वह्न्युपम हे क्षितिराक्षसध्रुक् ! क्षितौ राक्षसाः कंसादयः उद्यन्नेव तेभ्यो द्रुह्यतीति पुनः सूर्योपम । सूर्याद्युपमाऽपि न्यूनेति मन्वाह । आर्कमर्कमभिव्याप्य सर्वेषामर्हन् पूज्य भगवन्नाकल्पं कल्पपर्यंतं ते तुभ्यं नम इति ॥ ४० ॥ सर्वस्वित्वत्मकमो-

क्षणकौतुकद्रुतविलंबितपुत्रमुदेऽद्भुतम् ॥ निखिलरूपमतो दधदच्युतोऽवतु स वः कलयन् व्रजमंगलम् ॥ १ ॥ पादयोर्नत्वा । अभीष्टं सर्वतः पूजितमभिप्रेतं वा ॥ ४१ ॥ अनुज्ञाप्यानुज्ञां प्रदाप्य । पृष्ट्वेत्यर्थः । स्वभुवं ब्रह्माणम् । यथा पूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनम् ॥ ४२ ॥ नन्वेतावंतं कालं कथं तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमत आह । एकस्मिन्निति श्लोकद्वयेन । अब्देऽपि याते प्राणेशं कृष्णमंतरा च विनापि प्रियविरहे क्षणोऽपि वर्षाधिको भवति तथापि मायाहताः क्षणार्धं मेनिरे ॥ ४३॥ यद्यया मायया मोहितं जगदभीक्ष्णं पुनः पुनर्विस्मृतात्मकं विस्मृत आत्मैव येन तत्तथा ॥ ४४ ॥ अतएवमूचुश्च ते त्वयाऽतिवेगेन स्वागतं सम्यगागतम् । एकोपि ग्रासस्त्वां विनाऽस्माभिर्नाभोजि न भुक्तः । इत एहि साधु अविक्षेपेण भुज्यतामिति ॥ ४५ ॥ अभ्यवहृत्य भुक्त्वा ॥ ४६ ॥ प्रोद्दामो वेणवादिस्तस्य रवैरुत्सवस्तेनाढ्यः संपन्नः । गृणन्नुपलालनैराह्वयन् । गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ॥ ४७ ॥ यशोदानंदसूनुनेति बहूनामुक्तिः सहैव दर्शिता ।

उवाच ॥ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः ॥ नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥ ४१ ॥ ततोऽनुज्ञाप्य भगवान्स्वभुवं प्रागवस्थितान् ॥ वत्सान्पुलिनमानिन्ये यथा पूर्वसखं स्वकम् ॥ ४२ ॥ एकस्मिन्नपि यातेऽब्दे प्राणेशं चांतरात्मनः ॥ कृष्णमायाहता राजन्क्षणार्धं मेनिरेऽर्भकाः ॥ ४३ ॥ किं किं न विस्मरंतीह मायामोहितचेतसः ॥ यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥ ४४ ॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा ॥ नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥ ४५ ॥ ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥ दर्शयंश्चर्माजगरं न्यवर्तत वनाद्व्रजम् ॥४६॥ बर्हप्रसूनवनधातुविचित्रितांगः प्रोद्दामवेणुदलशृंगरवोत्सवाढ्यः ॥ वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥ ४७॥ अद्यानेन महाव्यालो यशोदानंदसूनुना ॥ हतोऽविता वयं चास्मादिति बाला व्रजे जगुः ॥ ४८ ॥ राजोवाच ॥ ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् ॥ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥ ४९ ॥ श्रीशुक उवाच ॥ सर्वेषामपि भूतानां नृप स्वात्मैकवल्लभः ॥ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ ५० ॥ तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् ॥ न तथा ममतालंबिपुत्रवित्तगृहादिषु ॥५१ ॥ देहात्मवादिनां पुंसामपि राजन्यसत्तम ॥ यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥ ५२ ॥ देहेऽपि ममताभाक्चेत्तर्ह्यसौ नात्मवत्प्रियः ॥ यज्जीर्यत्यपि देहेऽस्मिन् जीवि-

केचिदाहुर्यशोदासूनुना अपरे नंदसूनुनेति । यद्वा यशोदां नंदयतीति यशोदानंदः स चासौ सूनुश्चेति तथा तेन । अस्मान्महाव्यालाद्वयं चाविता रक्षिताः ॥ ४८ ॥ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ॥ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववदित्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं तत्र पृच्छति । ब्रह्मन्निति ॥ ४९ ॥ श्रीकृष्णस्य साक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमं तावदात्मनः स्वतः प्रेष्ठत्वमन्येषां तु तदुपाधिकमिति दर्शयति पंचभिः । सर्वेषामपीति ॥ ५० ॥ कुतः तथा दर्शनादित्याह । तदिति । तस्मादेव कारणात्स्वकात्मन्यवंकारास्पदे देहे ॥ ५१ ॥ आत्माध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानं तन्निबंधनमेवेति दर्शयितुं मूढा मूढभेदेन विशेषमाह । देहात्मवादिनामिति द्वाभ्याम् । तं देहमनुभवंति ये पुत्रादयस्ते तु न तथा प्रियतमा इत्यर्थः ॥ ५२ ॥ यद्यस्माज्जीर्यत्यप्यासन्नमरणेऽपि जीविताशा भवति । अयं भावः । न जीविष्यतीति निश्चितेऽपि देहे यत्प्रेमास्पदत्वं तदात्मगतमेव संगच्छत इति । अथवा

यद्यस्मिन्देहे जीर्यत्यपि जीविताशा अविवेकदशायामासीत्साऽपि विवेकिनो यदा ममताभाग्भवति तदात्मवत्प्रियो न भवत्यतस्तत्र नातीवास्थेति ॥ ५३ ॥ तदर्थमेव सकलं प्रियमित्यर्थः ॥ ५४ ॥ प्रस्तुतमाह । कृष्णमेनमिति ॥ ५५ ॥ न केवलमात्मनामात्माऽपि तु जडानामपीत्याह । वस्तुत इति । सर्वजगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जंगमं च सर्वं भगवद्रूपं भगवानेव स्वरूपं यस्य तन्नान्यत् ॥ ५६ ॥ कुत इति तदाह । सर्वेषामिति । भावार्थः परमार्थः । भवतीति भवत्परिणामं प्राप्नुवत्कारणं तस्मिन् तस्यापि भवतः कारणस्यापि भगवान्कृष्णो भवत्कारणम् । अतः किम-तत् श्रीकृष्णव्यतिरिक्तं वस्तु रूप्यताम् ॥ ५७ ॥ यस्माच्छ्रीकृष्णस्यैव परमार्थत्वात्तदेकशरणानामयत्नसिद्धो मोक्ष इति प्रकरणार्थमुपसंहरति । समाश्रिता इति । पुण्यं यशो यस्य स पुण्ययशाः स चासौ मुरारिश्च तस्य पदपल्लव एव प्लवस्तं ये सम्यगाश्रिताः । महत्पदं महतां पदमाश्रयम् । यद्वा । महच्च तत्पदं चेति तथा । तेषां भवांबुधिर्वत्सपदमात्रं भवति किंच परं पदं श्रीवैकुंठाख्यं पदं स्थानं भवति । विपदां यत्पदं विषयस्तत्पुनः कदाचिदपि तेषां न भवति । न ततः पुनरावर्तंत इत्यर्थः ॥ ५८ ॥ ५९ ॥ सुहृद्भिश्चरितं मुष्णंतोऽन्योन्यशिक्यादीनित्यादिनोक्तम् । अघार्दनं च शाद्वले

ताशा बलीयसी ॥ ५३ ॥ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ॥ तदर्थमेव सकलं जगदेतच्चराचरम् ॥ ५४ ॥ कृष्णमेनमवेहि त्वमात्मान-मखिलात्मनाम् ॥ जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥५५॥ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ॥ भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ॥ ५६ ॥ सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ॥ तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ॥ ५७ ॥ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः ॥ भवांबुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम् ॥ ५८ ॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ यत्कौमारे हरिकृतं पौगंडे परिकीर्तितम् ॥ ५९ ॥ एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च ॥ व्यक्तेतरद्रूपमजार्वभिष्टवं शृण्वन्गृणन्नेति नरोऽखिलार्थान् ॥ ६० ॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः ॥ ६१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ ततश्च पौगंडवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसंमतौ ॥ गाश्चारयंतौ सखिभिः समं पदैर्वृंदावनं पुण्यमतीव चक्रतुः ॥ १ ॥ तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ॥ पशून्पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥ तन्मंजुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयःसरस्वता ॥ वातेन जुष्टं शतपत्रगंधिना निरीक्ष्य रंतुं भगवान्मनो दधे ॥ ३ ॥

जेमनं भोजनं च व्यक्तेतरत् व्यक्ताज्जडप्रपंचादितरच्छुद्धसत्त्वात्मकं वत्सवत्सपालरूपम् । यद्वा व्यक्तेतरच्चिद्विलासस्तद्रूप्यत इति रूपम् । अजस्य उरुर्महानभिष्टवः स्तवस्तं ब्रह्मकृतां स्तुतिम् । एतच्छृ-ण्वन्गृणन्गायन्नरः सर्वपुरुषार्थान्प्राप्नोति ॥ ६० ॥ ६१ ॥ इति श्रीपरमानंदनृसिंहपदषट्पदः । व्याकरोच्छ्रीधरस्वामी यथामति विधिस्तुतिम् ॥ इति दशमपूर्वार्धटीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पंचदशे धेनुपालनं धेनुकार्दनम् ॥ कालियक्ष्वेडतो गोपरक्षणं च निरूप्यते ॥ १ ॥ अहिवक्त्रप्रवेशेन वृथाखिन्नान्सखीनतः ॥ कृष्णः प्रावेशयत्पक्वफलं तालालिकाननम् ॥ २ ॥ पशुपालसंमतौ पशुपालने संमतौ पशुपालानां वा संमतौ । ईषद्वयोबलातिरेकमनुकृतवंतावित्यर्थः । अतीव चक्रतुः सर्वतः प्रसर्पणेन ॥ १ ॥ स्वयशो गृणद्भिर्गोपैर्वृतस्तद्वनं प्राविशत ॥ २ ॥ तद्वनं निरीक्ष्य रंतुं मनो दधे । कथंभूतम् । मंजुघोषा येऽलिमृगद्विजा भ्रमरमृगपक्षिणस्तैराकुलं व्याप्तम् । महन्मनःप्रख्यपयःसरस्वता महतां मनसा प्रख्यं तुल्यं स्वच्छं पयो यस्मिंस्तत्सर आश्रयत्वेनास्ति यस्य तेन वा

तैमैति शैत्यमुक्तम् । शतपत्रगंधिनेति परिमलवत्त्वं जुष्टं वनमिति मांद्यं सूचितम् ॥ ३ ॥ अरुणपल्लवश्रिया सह । स्पृशंत्यः शिखाः शाखाग्राणि येषां तान् ॥ ४ ॥ तरुजन्म येन तमसा कृतं तस्य तमसः पापस्यापहत्यै नाशाय । अथवा येन त्वयेश्वरेण सर्वोपकारकं तरुजन्म कृतं तं त्वां नमंति । एवं श्लाघ्येऽपि जन्मनि यदज्ञानरूपं तमोऽस्ति तस्यापहत्यै ॥ ५ ॥ हेऽनघ वने गूढमपि त्वां न त्यजंति । त्वयि मनुष्यवेषेण निगूढे सति मुनयोऽप्यलिवेषेण निगूढास्त्वां भजंतीत्यर्थः ॥ ६ ॥ इयान् हि सतां निसर्ग इति । यदस्ति स्वस्मिंस्तद्गृहमागताय महते महापुरुषाय समर्पयंतीति ॥७॥ तृणवीरुधश्च तव पादौ स्पृशंतीति तथा करजाभिमृष्टा नखैः स्पृष्टाः । सदयैरवलोकनैः श्रीरपि यस्मै स्पृहयति केवलं तेन भुजयोरंतरेण वक्षसा गोप्यो धन्या इति ॥ ८ ॥ एवं श्रीमद्वृंदावनं प्रति

स तत्रतत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ॥ स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥ ४ ॥ श्रीभगवानुवाच ॥ अहो अमी देववरामरार्चितं पादांबुजं ते सुमनःफलार्हणम् ॥ नमंत्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥ एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायंत आदिपुरुषानुपदं भजंते ॥ प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६ ॥ नृत्यंत्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वंति गोप्य इव ते प्रियमीक्षणेन ॥ सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान्हि सतां निसर्गः ॥ ७ ॥ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ॥ नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योंऽतरेण भुजयोरपि यत्स्पृहा श्रीः ॥८॥ श्रीशुक उवाच ॥ एवं वृंदावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥ रेमे संचारयन्नद्रेः सरिद्रोधःसु सानुगः ॥ ९ ॥ क्वचिद्गायति गायत्सु मदांधालिष्वनुव्रतैः ॥ उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥१०॥ क्वचिच्च कलहंसानामनुकूजति कूजितम् ॥ अभिनृत्यति नृत्यंतं बर्हिणं हासयन्क्वचित् ॥११॥ मेघगंभीरया वाचा नामभिर्दूरगान्पशून् ॥ क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ १२ ॥ चकोरक्रौंचचक्राह्वभारद्वाजाँश्च बर्हिणः ॥ अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः ॥ १३ ॥ क्वचित्क्रीडापरिश्रांतं गोपोत्संगोपबर्हणम् ॥ स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥ १४ ॥ नृत्यतो गायतः क्वापि वल्गतो युद्ध्यतो मिथः ॥ गृहीतहस्तौ गोपालान्हसंतौ प्रशशंसतुः ॥ १५ ॥ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयः शेते गोपोत्संगोपबर्हणः ॥ १६ ॥ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः ॥ अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १७ ॥ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ॥ गायंति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥ १८ ॥ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडंबयन् ॥ रेमे

प्रीतः सन्नद्रेः समीवर्तिसरित्तटेषु पशून्संचारयन्सानुगो गोपैः सह वर्तमानः प्रीतमना रेमे ॥ ९ ॥ तामेव रतिमाह क्वचिदित्यादिदशभिः ॥ १० ॥ बर्हिणं नृत्यंतमनु अभिनृत्यति बर्हिणमभिमुखो नृत्यतीति वा । सखीन्हासयन् ॥ ११ ॥ १२ ॥ चकोरादीननुकृत्य रौति । कदाचिच्च सत्त्वानां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति । सत्त्वेषु पलायमानेषु पलायत इत्यर्थः । तयोः सत्त्वानां बलोद्रेकाणां भीतवद्भवतीति ॥ १३ ॥ आर्यमग्रजं विश्रमयति वा विगतश्रमं करोति ॥ १४ ॥ मिथो नृत्यादीन्कुर्वतो गोपान्प्रशशंसतुः ॥ १५ ॥ १६ ॥ व्यजनैः पल्लवादिनिर्मितैः ॥ १७ ॥ १८ ॥

ईशचेष्टित इति । विगूढस्वभावत्वेऽप्यंतरांतरा ईशस्यैव चेष्टितानि दृश्यंतेऽस्मिन्सः ॥ १९ ॥ ईशचेष्टितत्वमेव दर्शयितुमाह । श्रीदामेति । स्तोककृष्णः कश्चित् ॥ २० ॥ तालालिसंकुलं तालपंक्ति-
ईशचेष्टित इति । विगूढस्वभावत्वेऽप्यंतरांतरा ईशस्यैव चेष्टितानि दृश्यंतेऽस्मिन्सः ॥ १९ ॥ ईशचेष्टितत्वमेव दर्शयितुमाह । श्रीदामेति । स्तोककृष्णः कश्चित् ॥ २० ॥ तालालिसंकुलं तालपंक्ति-
भिर्व्याप्तम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ विषुचीनः सर्वतः प्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सनगं सवृक्षम् ॥ २९ ॥ प्रत्यग्भ्याम्यां पश्चिमाभ्याम् । काशब्दमिति गर्दभजातिशब्दानुक-

रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥ १९ ॥ श्रीदामा नाम गोपालो रामकेशवयोः सखा ॥ सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदम-
ब्रुवन् ॥ २० ॥ राम राम महाबाहो कृष्ण दुष्टनिबर्हण ॥ इतो विदूरे सुमहद्वनं तालालिसंकुलम् ॥ २१ ॥ फलानि तत्र भूरीणि पतितानि पतंति
च ॥ संति किंत्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥ सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् ॥ आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥
तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ॥ न सेव्यते पशुगणैः पक्षिसंघैर्विवर्जितम् ॥ २४ ॥ विद्यंतेऽभुक्तपूर्वाणि फलानि सुरभीणि च ॥ एष वै सुरभि-
र्गंधो विषूचीनोऽवगृह्यते ॥ २५ ॥ प्रयच्छ तानि नः कृष्ण गंधलोभितचेतसाम् ॥ वांछाऽस्ति महती राम गम्यतां यदि रोचते ॥ २६ ॥ एवं सुहृ-
द्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ॥ प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥ बलः प्रविश्य बाहुभ्यां तालान्संपरिकंपयन् ॥ फलानि पातयामास
मतंगज इवौजसा ॥ २८ ॥ फलानां पततां शब्दं निशम्यासुररासभः ॥ अभ्यधावत्क्षितितलं सनगं परिकंपयन् ॥ २९ ॥ समेत्य तरसा प्रत्यग्द्वाभ्यां
पद्भ्यां बलं बली ॥ निहत्योरसि काशब्दं मुंचन्पर्यसरत्खलः ॥ ३० ॥ पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ॥ चरणावपरौ राजन्बलाय प्राक्षि-
पद्रुषा ॥ ३१ ॥ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ॥ चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥ तेनाहतो महातालो वेपमानो महा-
शिराः ॥ पार्श्वस्थं कंपयन्भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥ बलस्य लीलयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकंपिरे सर्वे महावातेरिता इव
॥ ३४ ॥ नैतच्चित्रं भगवति ह्यनंते जगदीश्वरे ॥ ओतप्रोतमिदं यस्मिंस्तंतुष्वंग यथा पटः ॥ ३५ ॥ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ॥
क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबांधवाः ॥ ३६ ॥ तांस्तानापततः कृष्णो रामश्च नृप लीलया ॥ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ॥ ३७ ॥ फलप्रक-
रसंकीर्णं दैत्यदेहैर्गतासुभिः ॥ रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥ तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ॥ मुमुचुः पुष्पवर्षाणि
चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥ अथ तालफलान्यादन्मनुष्या गतसाध्वसाः ॥ तृणं च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥ कृष्णः कमलपत्राक्षः पुण्य-
श्रवणकीर्तनः ॥ स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥ तं गोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ॥ वेणुं क्वणंतम-

रणम् । पर्यसरत्परितो धावदित्यर्थः ॥ ३० ॥ उपक्रोष्टा गर्दभः । पराक् प्रतिमुखः । अपरौ पश्चिमौ । बलाय बलं हंतुम् ॥ ३१ ॥ तृणराजस्तालः ॥ ३२ ॥ ३३ ॥ उत्सृष्टेन खरदेहेन हतैराहताः
चकंपिरे अकंपंत ॥ ३४ ॥ यस्मिन्निदं विश्वमोतमूर्ध्वतंतुषु पट इव ग्रथितं प्रोतं तिर्यक्तंतुषु पटवदेव संग्रथितम् । सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ घनैर्नभ इव भुवस्तलं रराज ।

तत्र फलप्रकरसंकीर्णमिति दैत्यदेहैश्च सतालाग्रैः संकीर्णमित्यरुणश्वेतनीलघनसादृश्यसंपादनम् ॥ ३८ ॥ ३९ ॥ आदन्नभक्षयन् ॥ ४० ॥ ४१ ॥ गोरजोभिश्छुरितेषु कुंतलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च । दिदृक्षितदृशो दिदृक्षिता दर्शनोत्कंठायुक्ता दृशो यासां ताः ॥ ४२ ॥ मुकुंदस्य मुखपद्मगतं सारघं मधु । अह्नि यो विरहस्तस्माज्जातं तापम् । स च तासां सत्कृतिं पूजाम् । कां सत्कृतिं कथं वा कृतां तामाह । सव्रीडेति । सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यदेतत् । किं तत् । अपांगमोक्षं कटाक्षदर्शनम् । तथा तां सत्कृतिं प्राप्येति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ संप्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते संप्रतीतस्मृतयः । यद्वा सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथेति

नुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः ॥ ४२ ॥ पीत्वा मुकुंदमुखसारघमक्षिभृंगैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ॥ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपांगमोक्षम् ॥ ४३ ॥ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ॥ यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥ ४४ ॥ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ॥ नीवीं वसित्वा रुचिरां दिव्यस्रग्गंधमंडितौ ॥ ४५ ॥ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ॥ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥ एवं स भगवान्कृष्णो वृंदावनचरः क्वचित् ॥ ययौ राममृते राजन्कालिंदीं सखिभिर्वृतः ॥ ४७ ॥ अथ गावश्च गोपाश्च निदाघातपपीडिताः ॥ दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥ विषांभस्तदुपस्पृश्य दैवोपहतचेतसः ॥ निपेतुर्व्यसवः सर्वे सलिलांते कुरूद्वह ॥ ४९ ॥ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः ॥ ईक्षयाऽमृतवर्षिण्या स्वनाथान्समजीवयत् ॥ ५० ॥ ते संप्रतीतस्मृतयः समुत्थाय जलांतिकात् ॥ आसन्सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥ ५१ ॥ अन्वमंसत तद्राजन्गोविंदानुग्रहेक्षितम् ॥ पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे धेनुकवधो नाम पंचदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ॥ तस्या विशुद्धिमन्विच्छन्सर्पं तमुदवासयत् ॥१॥ राजोवाच ॥ कथमंतर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ॥ स वै बहुयुगावासं यथाऽऽसीद्विप्र कथ्यताम् ॥ २ ॥ ब्रह्मन्भगवतस्तस्य भूम्नः स्वच्छंदवर्तिनः ॥ गोपालोदारचरितं कस्तृप्येताऽमृतं जुषन् ॥ ३ ॥ श्रीशुक उवाच ॥ कालिंद्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ॥ श्रप्यमाणपया यस्मिन्पतंत्युपरिगाः खगाः ॥ ४ ॥ विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ॥ म्रियंते तीरगा यस्य प्राणिनः स्थिरजंगमाः ॥५॥ तं चंडवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ॥

॥ ५१ ॥ ५२ ॥ इति दशमे पूर्वार्धटीकायां पंचदशोऽध्यायः ॥ १५ ॥ षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे । तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥ १ ॥ हत्वा रामभदैतेयान् जग्ध्वा तालफलान्यलम् ॥ प्रीतोऽनृत्यत्फणारंगे कालियस्य कलानिधिः ॥२॥ उद्वासयन्निःसारितवान् ॥ १ ॥ बहूनि युगान्यावासो यस्य तमहिम् । स वै अहिरजलचरोऽपि यस्मिन्नंतर्जले यथा येन प्रकारेणासीत् अथवा बहूनि युगान्यावासो यथा भवति तथा येन प्रकारेण स वै तत्रासीदिति कथ्यतामिति ॥ २ ॥ गोपालेन यदुदारं चरितमाचरितं तदेवामृतं अतः कथ्यतामिति ॥ ३ ॥ श्रप्यमाणं पच्यमानं पयो यस्य सः । अत उपरि गच्छंतः खगा यस्मिन्पतंति ॥ ४ ॥ किंच । विप्रुष्मता अंबुकणयुक्तेन विषोदतरंगस्पर्शिमारुतेन स्पृष्टा यस्य तीरगा म्रियंते स ह्रद आसीदिति ॥ ५ ॥ तं

कालियम् । चंडो वेगो यस्य तद्विषमेव वीर्यं यस्य तम् । कदंबमिति भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकस्तत्तीरे न शुष्कः अमृतमाहरता गरुत्मताऽऽक्रांतत्वादिति च पुराणांतरम् । आस्फोट्य
बाहुं करतलेनाहत्य गाढा दृढं बद्धा रशना कटिबंधनवस्त्रं येन सः ॥ ६ ॥ तदा सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभारेण संक्षोभितानामुरगाणां विषैरुच्छ्वसितोऽम्बुराशिर्यस्य सः । विषेण कषायीकृता भयंकरा
ऊर्मयो यस्य सः पर्यक् परितो धावन् धनुःशतं प्लुतः प्रसृतः । नैतच्चित्रमित्याह । अनंतबलस्येति ॥ ७ ॥ ह्रदे विहरतो भुजदंडाहतोदकघोषं श्रुत्वा ततः स्वसदनाभिभवं निरीक्ष्य तदसहमानः सर्पः
समसरत् समाजगाम ॥ ८ ॥ प्रेक्षणीयश्च सुकुमारश्च घनवदुज्ज्वलश्च तं श्रीवत्सपीतवसनं ह्रदे विहरतः श्रीवत्सेन संयुक्तमुज्ज्वलत्पीतं वस्त्रं यस्य तं भुजया भोगेन चच्छादावेष्टयत् ॥ ९ ॥ स प्रियो येषां

कृष्णः कदंबमधिरुह्य ततोऽतितुंगमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥ ६ ॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः ॥
पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन्धनुःशतमनंतबलस्य किं तत् ॥७॥ तस्य ह्रदे विहरतो भुजदंडघूर्णवार्घोषमंग वरवारणविक्रमस्य ॥ आश्रुत्य
तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥ ८ ॥ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुंदरास्यम् ॥ क्रीडंतम-
प्रतिभयं कमलोदरांघ्रिं संदश्य मर्मसु रुषा भुजया चच्छाद ॥ ९ ॥ तन्नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ॥ कृष्णेऽर्पि-
तात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥ १० ॥ गावो वृषा वत्सतर्यः क्रंदमानाः सुदुःखिताः ॥ कृष्णे न्यस्तेक्षणा भीता रुदंत्य
इव तस्थिरे ॥ ११ ॥ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः ॥ उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥ १२ ॥ तानालक्ष्य भयोद्विग्ना
गोपा नंदपुरोगमाः ॥ विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ १३ ॥ तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्ते
दुःखशोकभयातुराः ॥ १४ ॥ आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥ १५ ॥ तांस्तथा कातरान्वीक्ष्य
भगवान्माधवो बलः ॥ प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ १६ ॥ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ॥ भगवल्लक्षणैर्जग्मुः पदव्या
यमुनातटम् ॥ १७ ॥ ते तत्र तत्राब्जयवांकुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ॥ मार्गे गवामन्यपदांतरांतरे निरीक्षमाणा ययुरंग सत्वराः
॥ १८ ॥ अंतर्ह्रदे भुजगभोगपरीतमारात्कृष्णं निरीहमुपलभ्य जलाशयांते ॥ गोपांश्च मूढधिषणान्परितः पशूंश्च संक्रंदतः परमकश्मलमापुरार्ताः

ते तत्प्रियास्ते च ते सखायश्चेति तथा ॥ १० ॥ ११ ॥ भुवि भूकंपादयः । दिवि उल्कापातादयः । आत्मनि वामनेत्रस्फुरणादयः । आसन्नं भयं शंसितुं शीलं येषां ते ॥ १२ ॥ तानालक्ष्य गोकु-
लान्निर्जग्मुरिति तृतीयेनान्वयः । भयोद्विग्ना भयहेतुभ्यो भीताः । भयेन कंपमाना इति वा ॥ १३ ॥ न तं विदंतीत्यतद्विदः ॥ १४ ॥ पशुवृत्तयोऽतिवत्सलाः ॥ १५ ॥ कातरान् भीतान् ॥ १६ ॥
भगवंतं लक्षयंति । यानि पदानि तैः पदैः सूचितया पदव्या मार्गेण ॥ १७ ॥ पदैर्मार्गज्ञानप्रकारमाह । त इति । विश्पतेः श्रीकृष्णस्यान्येषां पदानामंतरांतरे मध्ये मध्ये तत्तदर्शनेन गवां श्रुतीनां
मार्गे सत्वरा अप्रमत्ता योगिनस्तत्तदुपाध्यपवादेन यथा परं तत्त्वं मृगयंते तद्वदिति भावः ॥ १८ ॥ ततश्च सर्पशरीरवेष्टितं कृष्णं दूरान्निरीक्ष्य गोपांश्च पशूंश्च तथा निरीक्ष्यार्ताः परमकश्मलं परं

मोहं प्रापुः ॥ १९ ॥ प्रियेण श्रीकृष्णेन व्यतिहृतं विरहितं त्रैलोक्यं शून्यं ददृशुः ॥ २० ॥ २१ ॥ २२ ॥ अनन्यगतिमात्मानमित्थं निरीक्ष्यातएवात्महेतोः स्वगोकुलमतिदुःखितमाज्ञायोरगबंधादु-
दतिष्ठदित्यन्वयः ॥ २३ ॥ तस्य प्रथ्यमानेन वपुषा व्यथितात्मशरीरो भुजंगः कुंडलीमुन्मुच्य तं त्यक्त्वा कुपितः स्वफणानुन्नमय्य श्वसन्केवलमीक्षमाणस्तस्थौ । कथंभूतः । श्वसनरंध्रेषु नासाविवरेषु
विषं यस्य स तथा अंबरीषो मंडकपाकभाजनं तद्वत्संतप्तानि स्तब्धानीक्षणानि यस्य स तथा उल्मुकानि मुखेषु यस्य स च स च स च ॥ २४ ॥ हरिश्च क्रीडंस्तममुं सर्पं परिससार परितो बभ्राम ।
अतिकरालविषाग्नियुक्ता दृष्टिर्यस्य तम् । जिह्वया द्विशिखयेति प्रतिमुखम् ॥ २५ ॥ एवं परिभ्रमेणैव हतमोजो यस्य तम् । उन्नतावंसौ यस्य तम् । तस्य मूर्धसु ये रत्ननिकरास्तेषां स्पर्शेनातिअरुणं

॥ १९ ॥ गोप्योऽनुरक्तमनसो भगवत्यनंते तत्सौहृदस्मितविलोकगिरः स्मरंत्यः ॥ ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रि-
लोकम् ॥ २० ॥ ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवंत्यः ॥ तास्ता व्रजप्रियकथाः कथयंत्य आसन्कृष्णाननेऽर्पितदृशो
मृतकप्रतीकाः ॥ २१ ॥ कृष्णप्राणान्निर्विशतो नंदादीन्वीक्ष्य तं ह्रदम् ॥ प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् ॥ २२ ॥ इत्थं स्वगोकुलमन-
न्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरंगबंधात् ॥ २३ ॥ तत्प्रथ्यमानवपुषा
व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान्भुजंगः ॥ तस्थौ श्वसन् श्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥ २४ ॥ तं जि-
ह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुं परिससार यथा खगेंद्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥ २५ ॥
एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वधिरूढ आद्यः ॥ तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽखिलकलादिगुरुर्ननर्त ॥ २६ ॥ तं नर्तु-
मुद्यतमवेक्ष्य तदा तदीयगंधर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्या मृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥ २७ ॥ यद्यच्छिरो न
नमतेऽग शतैकशीर्ष्णस्तत्तन्ममर्द खरदंडधरोऽङ्घ्रिपातैः ॥ क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो वमन्परमकश्मलमाप नागः ॥ २८ ॥ तस्या-
क्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः ॥ नृत्यन्पदानुनमयन्दमयांबभूव पुष्पैः प्रपूजित इवेह पुमान्पुराणः ॥ २९ ॥ तच्चि-
त्रतांडवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन्नृप भग्नगात्रः ॥ स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥ ३० ॥ कृष्णस्य

पादांबुजं यस्य सः । ननु कथं चंचलेषु शिरःसु ननर्त तत्राह । अखिलकलानामादिगुरुः ॥ २६ ॥ उपसेदुः प्राप्ताः ॥ २७ ॥ शतैकशीर्ष्णः शतमेकानि मुख्यानि शीर्षाणि यस्य तस्य क्षीणायुषोऽपि
पुनर्भ्रमतो यद्यच्छिरो न नमते स्तब्धतां न जहाति । नृत्यच्छलेनांघ्रिपातैस्तत्तन्ममर्द । तदा चास्यतो मुखेभ्यो नस्तो नासाविवरेभ्यश्चासृग्वमन् ॥ २८ ॥ पुनरपि रुषा उच्चैर्निःश्वसतो यद्यत्समुन्नमति
तत्तत्पदाघातेनानुनमयन्निहास्मिन्नवसरे हृष्टैर्गंधर्वादिभिः शेषासनः पुराणः पुरुष इव यशोदानंदनः पुष्पैः प्रपूजितः । यद्वा तदा गंधर्वादिभिः पुष्पैः प्रपूजितो गोपैः पुराणः पुमानिव दृष्ट इति । यद्वा
पुष्पैः प्रपूजित इव प्रसन्नः सन्दमयांबभूव । हितं कृतवानित्यर्थः ॥ २९ ॥ अरणं शरणम् ॥ ३० ॥ गर्भे जगंति यस्य तस्यातिभारेणावसन्नमाक्रांतम् । पार्ष्णिः पादपृष्ठम् । आद्यं श्रीकृष्णम् ।

श्लथंतो विस्रंसमाना वसनादयो यासां ताः ॥ ३१ ॥ ताः शरणं प्रपन्नाः सत्यस्तं प्रणेमुः । सुविग्नमनसोऽतिविह्वलचित्ताः । भुवीति तस्मिन्स्थाने जलाधस्ताद्वा तीरे वा । शमलस्य पापात्मनोऽपि
भर्तुर्मोक्षेप्सवः भर्तुर्यच्छमलं तस्य वा । भूतपतिं प्राणिमात्रस्य पतिम् । शरणदमाश्रयप्रदम् ॥ ३२ ॥ प्रथमं तावत्कुपितं भगवंतं दंडानुमोदनेनोपशमयंत्यः स्तुवंति । न्याय्यो हीति । तत्र । दंडानु-
मोदनं षड्भिर्दशभिश्च हरेर्नुतिः ॥ प्रार्थनं पंचभिः श्लोकैस्ततः पन्नगयोषिताम् ॥ न च निग्रहानुग्रहलक्षणं वैषम्यं तवास्तीत्याहुः । धत्से दममिति । अनुशंसन्नालोचयन् ॥ ३३ ॥ निग्रहोऽप्यनुग्र-
हार्थेत्युक्तमिदानीमनुग्रह एवायं न निग्रह इत्याहुः । अनुग्रह इति । नोऽस्माकं यस्मादमुष्य सर्पत्वं दृश्यतेऽतस्तन्मूलपापनिवर्तको दंडोऽनुग्रह एव क्रोधत्वेन प्रतीयमानोऽपीत्यर्थः ॥ ३४ ॥ महां-
श्वासमनुग्रह इति । तस्य पूर्वपुण्यमभिनंदंति । तप इति । स्वयं मानरहितेनान्येभ्यो मानदेन च । सर्वं जीवयतीति सर्वजीवः ॥ ३५ ॥ न तपआदिनिमित्त एष भाग्योदयः किंत्वचिंत्यं तव कृपा-
वैभवमित्याह श्लोकत्रयेण । कस्यानुभाव इति । तपआदिना ब्रह्मादयोऽपि यस्याः श्रियः प्रसादमिच्छंति सा श्रीर्ललना उत्तमा स्त्री यस्य त्वदंघ्रिस्पर्शाधिकारस्य वांछया तप आचरत् । अस्य

गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥ दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबंधाः ॥ ३१ ॥ तास्तं
सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः ॥ साध्व्यः कृतांजलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥ ३२ ॥
नागपत्न्य ऊचुः ॥ न्याय्यो हि दंडः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ॥ रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥ ३३ ॥
अनुग्रहोऽयं भवता कृतो हि नो दंडोऽसतां ते खलु कल्मषापहः ॥ यद्दंदशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ॥ ३४ ॥ तपः सुतप्तं
किमनेन पूर्वं निरस्तमानेन च मानदेन ॥ धर्मोऽथवा सर्वजनानुकंपया यतो भवांस्तुष्यति सर्वजीवः ॥ ३५ ॥ कस्यानुभावोऽस्य न देव विद्महे
तवांघ्रिरेणुस्पर्शाधिकारः ॥ यद्वांछया श्रीर्ललनाऽचरत्तपो विहाय कामान्सुचिरं धृतव्रता ॥ ३६ ॥ न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न
रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा वांछंति यत्पादरजःप्रपन्नाः ॥ ३७ ॥ तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः ॥ संसार-
चक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः ॥ ३८ ॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ भूतावासाय भूताय पराय परमात्मने ॥ ३९ ॥
ज्ञानविज्ञाननिधये ब्रह्मणेऽनंतशक्तये ॥ अगुणायाविकाराय नमस्ते प्राकृताय च ॥ ४० ॥ कालाय कालनाभाय कालावयवसाक्षिणे ॥ विश्वाय तदु-

सर्पस्य । स किं कृतवानिति को वेत्तीत्यर्थः ॥ ३६ ॥ यत्तव पादरजःप्रपन्नाः प्राप्ताः पारमेष्ठ्याद्यपि तुच्छं मन्यंते ॥ ३७ ॥ अहो तदेषः अयत्नत एव प्राप । अन्यैः श्र्यादिभिरपि । कथंभूतं पाद-
रजः । यदिच्छतः सेव्यं मे भवत्विति प्रार्थयमानस्यैव समक्षः प्रत्यक्ष एव विभवोऽपेक्षिता संपद्भवति ॥ ३८ ॥ नमस्तुभ्यं भगवतेऽचिंत्यैश्वर्यादिगुणाय । तदुपपादनाय दशभिः श्लोकैर्विशेषणानि ।
पुरुषाय पूर्ष्वंतर्यामिरूपेण वर्तमानाय । महात्मने एवमपि नातिपरिच्छिन्नाय । कुतः । भूतावासाय आकाशाश्रयाय । एतदपि कुतः । भूताय पूर्वमपि सते । कुतः । पराय कारणाय । किंच पर-
मात्मने कारणातीताय ॥ ३९ ॥ कारणत्वं कारणातीतत्वं च समर्थयितुमाहुः । ज्ञानविज्ञाननिधये ज्ञानं ज्ञप्तिः विज्ञानं चिच्छक्तिः उभयोर्निधये ताभ्यां पूर्णाय । कथं तथा त्वमत उक्तं ब्रह्मणोऽनंत-
शक्तये । कथंभूताय ब्रह्मणे । अगुणायाविकाराय । कथंभूतायानंतशक्तये । प्राकृताय प्रकृतिप्रवर्तकाय । अप्राकृतायेति वा अप्राकृतानंतशक्तियुक्ताय । अयमर्थः । अगुणत्वादविकारं ब्रह्म ज्ञप्तिमा-

त्रत्वात्कारणातीतं प्रकृतिप्रवर्तकोऽनंतशक्तिर्विज्ञाननिधित्वादीश्वरः कारणं तदुभयात्मने नम इति ॥ ४० ॥ अनंतशक्तित्वात्कालशक्त्या विश्वस्रष्टृत्वादिरूपेण नमस्यंति । कालाय कालस्वरूपाय । कालनाभाय कालशक्त्याश्रयाय । कालावयवानां सृष्ट्यादिसमयानां साक्षिणे । ततश्च विश्वाय विश्वरूपाय । तर्हि किं जडोऽहं नहि तदुपद्रष्ट्रे । न च द्रष्टृमात्राय । किंतु तत्कर्त्रे नच कर्तृमात्राय । विश्वहेतवे सर्वकारकरूपाय ॥ ४१ ॥ तदेवाहुः । भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने आशयश्चित्तं भूतादिरूपाय । अतः सर्वकारकरूपायेति । अहंकारात्मतया नमस्यंति । त्रिगुणेनेति । एवं सृष्टे कार्ये यस्त्रिगुणोऽभिमानस्तेन गूढा स्वांशभूतानामात्मनां जीवानामनुभूतिर्येन तस्मै ॥ ४२ ॥ त्वं त्वहंकारानावृत इति स्तुवंति । नमोऽनंताया हंकारापरिच्छेदात् । अतः सूक्ष्मायादृश्यत्वात् । अतएव कूटस्थायोपाधिकृतविकाराभावात् । अतएव विपश्चिते सर्वज्ञाय । एवं वस्तुतः स्तुत्वाऽचिंत्यमायात्वेन स्तुवंति । नानावादानुरोधाय अस्ति नास्ति सर्वज्ञः किंचिज्ज्ञो बद्धो मुक्त एकोऽनेक इत्यादिनानावादाननुरुणद्धि माययाऽनुवर्तते यस्तस्मै । किंच । वाच्यवाचकशक्तये । अभिधानाभिधेयशक्तिभेदादपि नानात्वेन प्रतीयमानायेत्यर्थः ॥ ४३ ॥ अनावृतमेव हेत्वंतरेणापि सूचयंत्यः स्तुवंति । नमः प्रमाणमूलाय चक्षुरादीनां चक्षुरादिरूपाय । अतएव कवये स्वयं तन्निरपेक्षज्ञानाय । कुतः । शास्त्रयोनये वेदात्मकनिःश्वासाय । किंच प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥ किंच अनावृतैश्वर्यत्वादेव चतुर्मूर्तिरूपेण सर्वोपास्यत्वेन नमंति नमःकृष्णायेति श्लोकेन । रामाय संकर्षणाय वसुदेवसुताय च वसुदेवशब्दितं शुद्धं सत्त्वं तत्र प्रकाशमानाय वासुदेवायेत्यर्थः । सात्वता-

पद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥ भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने ॥ त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥ ४२ ॥ नमोऽनंताय सूक्ष्माय कूटस्थाय विपश्चिते ॥ नानावादानुरोधाय वाच्यवाचकशक्तये ॥ ४३ ॥ नमः प्रमाणमूलाय कवये शास्त्रयोनये ॥ प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥ नमः कृष्णाय रामाय वसुदेवसुताय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतांपतये नमः ॥ ४५ ॥ नमो गुणप्रदीपाय गुणात्मच्छादनाय च ॥ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥ ४६ ॥ अव्याकृतविहाराय सर्वव्याकृतसिद्धये ॥ हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥ ४७ ॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ॥ अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥ ४८ ॥ त्वं ह्यस्य जन्मस्थितिसंयमान्प्रभो गुणैरनीहो कृतका-

मुपासकानां पतये सालोक्यादिना पालकाय । एवं चतुर्मूर्तये कृष्णाय तुभ्यं नम इति ॥ ४५ ॥ कथं चतुर्मूर्तितेति तदाहुः । नमो गुणप्रदीपायेति । गुणा अंतःकरणानि तानि प्रदीपयति प्रकाशयतीति तथा तस्मै । चित्ताद्यधिष्ठातृत्वेन चतुर्मूर्त्तितेत्यर्थः । ननु तथाऽप्येकस्यैव कथं चतुष्ट्वमत आहुः । गुणात्मच्छादनाय तैरेव गुणैरुपासकानां फलवैचित्र्यायात्मानमाच्छाद्य नानात्वेन प्रकाशमानायेत्यर्थः । ननु तर्हि कथं प्रतीतिरत उक्तं गुणवृत्त्युपलक्ष्याय चित्तादीनां चेतनाद्यध्यवसायादिवृत्तिभिरुपलक्ष्याय । उपलक्षणमेवाहुः । गुणद्रष्ट्रे तत्साक्षिणे कथंचिदुपलक्ष्य एव न ज्ञेय इत्याहुः । स्वसंविदे । अगोचरायेत्यर्थः ॥ ४६ ॥ अगोचरत्वमुपलक्ष्यत्वं च दर्शयंत्यो नमंति । अव्याकृतविहाराय अतर्क्यमहिम्न इत्यर्थः । सर्वव्याकृतसिद्धये सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः । उपलक्षणांतरमाहुः । हे हृषीकेश करणप्रवर्तक ! किं विषयलिप्सया न मुनये आत्मारामाय । किं साधनवशेन वा नहि मौनमात्मारामता तत्स्वभावाय ॥ ४७ ॥ कुतः । परावरगतिज्ञाय स्थूलसूक्ष्माणां गतिज्ञत्वेन न क्वापि सज्जमानायेत्यर्थः । अपि च सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे कुत एतत् । अविश्वाय न विश्वं यस्मिंस्तन्निषेधावधये । विश्वाय च तद्विवर्ताधिष्ठानायेत्यर्थः । किंच तद्द्रष्ट्रे अध्यासापवादसाक्षिणे । अपिच अस्य विश्वाध्यासस्य तदपवादस्य चाविद्याविद्याभ्यां हेतवे । यद्वा अविश्वाय विश्वतैजसाद्यवस्थारहिताय विश्वाय च मायया स्वांशैस्तत्तदवस्थाय । तद्द्रष्ट्रे तासामव-

स्थानां भावाभावसाक्षिणे । अन्यत्समानम् । तस्मात्सर्वगतिज्ञत्वसर्वाधिष्ठातृत्वात्मा रामत्वादिभिर्निरतिशयैश्वर्याय तुभ्यं नम इति । विशेषणैरसंकीर्णः पंचपंचाशतानतः ॥ अहिस्त्रीभिः प्रसन्नो वक्ता-
सामिव भवेद्धरिः ॥ ४८ ॥ एवं तावद्दंडानुमोदनेन नमस्कारैश्च भगवंतं प्रसाद्येदानीं त्वदधीनानां प्राणिनां कोऽपराध इत्याशयवत्यः प्रार्थयंते । त्वं हीति । अस्य लोकस्य जन्मादिन्त्वमेव अकृत
अकरोः ततश्च तांस्तान्संस्काररूपेण सतः स्वभावान्घोरत्वादीन्प्रतिबोधयन्नीहसे क्रीडसि । यद्वा अस्य जन्मादींस्त्वमीहस इत्यन्वयः । कथंभूतः । अकृतानादिर्या कालशक्तिस्तां धारयतीति तथा ।
अन्यत्समानम् ॥ ४९ ॥ अतस्तस्य तवैवामूस्तनवस्तन्यंत इति क्रीडोपस्कारः तथापि तवाधुना शांताः प्रियाः । कुतः । सतां धर्मपरिपालनेच्छया ईहतः प्रवर्तमानस्यातस्तानवितुं स्थातुः स्थितस्य

लशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयामोघविहार ईहसे ॥ ४९ ॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शांता अशांता उत मूढयोनयः ॥
शांताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥ ५० ॥ अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः ॥ क्षंतुमर्हसि शांतात्मन्मूढस्य
त्वामजानतः ॥ ५१ ॥ अनुगृह्णीष्व भगवन्प्राणांस्त्यजति पन्नगः ॥ स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥ ५२ ॥ विधेहि ते किंकरी-
णामनुष्ठेयं तवाज्ञया ॥ यच्छ्रद्धयाऽनुतिष्ठन्वै मुच्यते सर्वतो भयात् ॥ ५३ ॥ श्रीशुक उवाच ॥ इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः ॥ मूर्च्छितं भग्न-
शिरसं विससर्जांघ्रिकुट्टनैः ॥ ५४ ॥ प्रतिलब्धेंद्रियप्राणः कालियः शनकैर्हरिम् ॥ कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णं प्राह कृतांजलिः ॥ ५५ ॥ वयं खलाः
सहोत्पत्त्या तामसा दीर्घमन्यवः ॥ स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥ ५६ ॥ त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् ॥ नानास्व-
भाववीर्यौजोयोनिबीजाशयाकृति ॥ ५७ ॥ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः ॥ कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥ ५८ ॥
भवान्हि कारणं तत्र सर्वज्ञो जगदीश्वरः ॥ अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥ ५९ ॥ श्रीशुक उवाच ॥ इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः ॥
नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ॥ स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यते नदी ॥ ६० ॥ य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ॥ कीर्त-
यन्नुभयोः संध्योर्न युष्मद्भयमाप्नुयात् ॥ ६१ ॥ योऽस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥ ६२ ॥
द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ॥ यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलांछितम् ॥ ६३ ॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता कृष्णेनाद्भुत-

॥ ५० ॥ एवं तवाप्रियाचरणाद्यपराधस्तर्हि सोढव्य इति ॥ ५१ ॥ ५२ ॥ युष्मदनुग्रहेऽन्येषां मृत्युरेवेति चेत्तन्नेत्याहुः । विधेहीति । त्वदाज्ञया प्राणिनो नाद्यामेति भावः ॥ ५३ ॥ ५४ ॥ ५५ ॥
यदसद्ग्रह इति । यतः स्वभावोऽसद्रूपः । यद्वा यतः स्वभावादसति देहादौ ग्रहः स दुस्त्यज इति ॥ ५६ ॥ गुणैर्विविधतया सृज्यत इति गुणविसर्जनम् । तत्रापि नानास्वभावादयो यस्य तत् ॥ ५७ ॥
जात्या जन्मनैवोरुर्मन्युर्येषां ते वयं स्वयं कथं त्यजामः ॥ ५८ ॥ हि यस्मात्तत्र त्वन्मायात्यागे भवानेव कारणमित्यनुग्रहं विधेहि ममाज्ञया खादंतीति ईश्वरत्वान्निग्रहं वा विधेहीति ॥ ५९ ॥ यतो
गोभिर्नृभिश्च नदी भुज्यत इति ॥ ६० ॥ न युष्मत्तो भयमाप्नुयात् तस्य युष्माभिर्भयं नोत्पादनीयमित्याज्ञा ॥ ६१ ॥ इतोऽपि त्वया निर्गंतव्यमित्याह । योऽस्मिन्निति । त्वयि स्थितं तत्र संभव-

तीति भावः ॥ ६२ ॥ नच तव गरुडभयं भवेदित्याह । द्वीपमिति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ इति दशमस्कंधे पूर्वार्धटीकायां षोडशोऽध्यायः ॥ १६ ॥ नागं मम्रदशे नागालयं तं निरयापयत् ॥ बंधून्स्वदुःखतः श्रांतान्सुप्तांस्तत्र दवादपात् ॥ १ ॥ असमंजसमप्रियम् ॥ १ ॥ उपहार्यैर्भक्ष्यैः सर्पजनैः सर्पायत्तैर्जनैः । वानस्पत्यो वनस्पतेर्मूले देयो नागानां तद्बाधापरिहाराय यो बलिर्निरूपित उपकल्पितः ॥ २ ॥ ते च नागाः स्वं स्वं भागं जनैर्दत्तं सुपर्णाय प्रयच्छंति ततो भीताः गोपीथाय रक्षणाय ॥ ३ ॥ विषवीर्याभ्यां यो मदस्तेनाविष्टः काद्रवेयः कद्रूपुत्रः गरुडं कदर्थीकृत्याविगणय्य । यद्वा उपहार्यैः सुपर्णभक्ष्यैः सर्पा एव जनास्तैर्नागानां संबंधी यस्मिन्नेकैको नागो दीयते तथाभूतो यो बलिः सुपर्णाय निरूपितस्तत्र स्वं स्वं भागं सर्वे नागाः प्रयच्छंति कालियस्तु

कर्मणा ॥ तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ६४ ॥ दिव्यांबरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥ दिव्यगंधानुलेपैश्च महत्योत्पलमालया ॥ ६५ ॥ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवंद्य तम् ॥ ६६ ॥ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव साऽमृतजला यमुना निर्विषाऽभवत् ॥ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥ ६७ ॥ इति श्रीमद्भागवते महापुराणे दशमपूर्वार्धे कालियनिर्यापणं नाम षोडशोऽध्यायः ॥ १६ ॥ राजोवाच ॥ नागालयं रमणकं कस्मात्तत्याज कालियः ॥ कृतं किं वा सुपर्णस्य तेनैकेनासमंजसम् ॥ १ ॥ श्रीशुक उवाच ॥ उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः ॥ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः ॥ २ ॥ स्वं स्वं भागं प्रयच्छंति नागाः पर्वणि पर्वणि ॥ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥ विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ॥ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥४॥ तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः ॥ विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥५॥ तमापतंतं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः ॥ दद्भिः सुपर्णं व्यदशत्तदायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ॥ ६ ॥ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्प्रचंडवेगो मधुसूदनासनः ॥ पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ॥ ७ ॥ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ॥ ह्रदं विवेश कालिंद्यास्तदगम्यं दुरासदम् ॥ ८ ॥ तदैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ॥ निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥ ९ ॥ मीनान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते ॥ कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ॥ १० ॥ अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति ॥ सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम् ॥ ११ ॥ तं कालियः परं वेद नान्यः कश्चन लेलिहः ॥ अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥ १२ ॥ कृष्णं ह्रदाद्विनिष्क्रांतं दिव्यस्रग्गंधवाससम् ॥ महामणिगणाकीर्णं जांबूनदपरिष्कृतम् ॥ १३॥ उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः ॥ प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽ-

न प्रयच्छति किं त्वन्यैर्दत्तमपि तं बलिं स्वयमेव बुभुजे ॥ ४ ॥ ५ ॥ विषमेवायुधं यस्य सः प्रत्यभ्ययाद्योद्धुं प्रतिजगाम । उच्छ्रितनैकमस्तकः उन्नमितानेकफणः ददायुधो दंतायुधः करालजिह्वश्चासावुच्छ्वसितोग्रलोचनश्च उच्छ्वसितान्युज्जृंभितान्युग्राणि लोचनानि यस्य सः ॥ ६ ॥ तार्क्ष्यपुत्रो गरुडः मधुसूदनस्यासनं यस्मिन्सः ॥ ७ ॥ तस्य गरुडस्यागम्यमगाधतया च दुरासदम् ॥ ८ ॥ तदगम्यत्वे कारणमाह । तत्रेति । निवारितोऽपि ॥ ९ ॥ १० ॥ ११ ॥ लेलिहः सर्पः अतस्तत्रावात्सीत् ॥ १२ ॥ जांबूनदं सुवर्णं तेनालंकृतम् ॥ १३ ॥ असव इंद्रियाणि । प्रमोदनिभृतात्मान

नष्टलब्धप्रजा नष्टप्राया पुनर्लब्धा
आनंदपूर्णमनसः ॥ १४ ॥ लब्धेहा लब्धचेष्टाः ॥ १५ ॥ नगा वृक्षा अपि पूर्वं शुष्काः संतः सद्य एव विरूढा इत्यर्थः ॥ १६ ॥ ते विप्रा ऊचुः ॥ १७ ॥ १८ ॥ न शक्नुम इति ॥२४॥
प्रजा यया सा ॥ १९ ॥ श्रमेण च कर्षिताः । उपकूलतः कूलप्रांते ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ कालाग्नेर्मृत्युरूपादग्नेः । न मृत्योर्बिभीमः किंतु त्वच्चरणावियोगादित्याहुः । अष्टादशे ततो
॥ २५ ॥ विमोहानहिदंडेन ततः स्वं शरणागतान् ॥ गोपानपादनंतोऽसावनंतवनवह्नितः ॥ १ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ गोपालछद्ममायया गोपा-
ग्रीष्मे वसंतगुणलक्षिते ॥ अघातयद्बलेनालं प्रलंबं लीलया हरिः ॥ १ ॥ कृत्वा नृत्यं फणाग्रेषु कालियस्य स कौतुकम् ॥ बलं प्रलंबतुंगांससमारोहयदग्रतिहा ॥ २ ॥ १ ॥

कृष्णं समेत्य लब्धेहा आसँल्लब्धमनोरथाः ॥ १५ ॥ रामश्चाच्युतमालिंग्य जहा-
भिरेभिरे ॥ १४ ॥ यशोदा रोहिणी नंदो गोप्यो गोपाश्च कौरव ॥ ऊचुस्ते कालियग्रस्तो दिष्ट्या
सास्यानुभाववित् ॥ नगा गवो वृषा वत्सा लेभिरे परमां मुदम् ॥ १६ ॥ नंदं विप्राः समागत्य गुरवः सकलत्रकाः ॥ यशोदाऽपि महाभागा
मुक्तस्तवात्मजः ॥ १७ ॥ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ॥ नंदः प्रीतमना राजन्गाः सुवर्णं तदाऽदिशत् ॥ १८ ॥ ऊषुर्व्रजौकसो गावः कालिंद्या
नष्टलब्धप्रजा सती ॥ परिष्वज्यांकमारोप्य मुमोचाश्रुकलां मुहुः ॥१९॥ तां रात्रिं तत्र राजेंद्र क्षुत्तृड्भ्यां श्रमकर्षिताः ॥ तत उत्थाय संभ्रांता दह्यमाना
उपकूलतः ॥ २० ॥ तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम् ॥ सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥ २१ ॥ एष घोरतमो वह्निस्तावकान्ग्रसते हि
व्रजौकसः ॥ कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ २२ ॥ कृष्ण कृष्ण महाभाग हे रामामितविक्रम ॥ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जग-
नः ॥ २३ ॥ सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो ॥ न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् ॥ २४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे दावाग्निमोचनं नाम सप्तदशोऽध्यायः॥१७॥
दीश्वरः ॥ तमग्निमपिबत्तीव्रमनंतोऽनंतशक्तिधृक् ॥२५॥ स च वृंदावनगुणैर्वसंत इव लक्षितः ॥ यत्रास्ते
व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया ॥ ग्रीष्मो नामर्तुरभवन्नातिप्रेयान् शरीरिणाम् ॥ २ ॥ सरित्सरःप्रस्रवणोर्मि-
भगवान्साक्षाद्रामेण सह केशवः ॥ ३ ॥ यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जीषद्रुममंडलमंडितम् ॥ ४ ॥ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः
वायुना कह्लारकंजोत्पलरेणुहारिणा ॥ न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥ ५ ॥ वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् ॥ गायन्मयूरभ्रमरं
पुलिनैः समंततः ॥ न यत्र चंडांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥ ६ ॥

यत्र ग्रीष्मेऽपि निर्झराणां निर्ह्रादेन घोषेण निवृत्तस्वनाश्छन्नध्वनयो झिल्लिकाः कठोरध्वनिसूक्ष्मकीटा यस्मिंस्तथाभूतं वृंदावनं
लनमेव छद्म यस्यां तया मायया ॥ २ ॥ वसंतसाम्यमाह चतुर्भिः । निदाघो ग्रीष्मस्तेन तत्कालीनवह्न्यर्काभ्यां च भवति यो दवस्तापः ।
भवति । किंच शश्वत्तेषां निर्झराणां शीकरैरंबुकणैर्ऋजीषाः स्निग्धा ये द्रुमास्तेषां मंडलैर्मंडितम् ॥ ३ ॥ ४ ॥ यत्र ग्रीष्मे वने वा । अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिभिरूर्मिभिः पुलिनैः
अतिशाद्वलेऽतिहरिततृणाकीर्णे । यद्वा अतिक्रांतशाद्वलेऽपि स्थाने ॥ ५ ॥ ननु शाद्वलमेव कुतस्त्यं तत्राह । अगाधेति । नदंतश्चित्रा मृगा द्विजाश्च यस्मिन् ।
सह द्रवत्पुरीषं पंको यस्यास्तस्या भुवः रसं शाद्वलितं शाद्वलरूपतां च विषवदुल्बणा अपि सूर्यरश्मयो न गृह्णंते न हरंति ॥ ६ ॥ तद्वनमविशदित्युत्तरेणान्वयः ।

गायंतो मयूरा भ्रमराश्च यस्मिन्। कूजंतः कोकिलाः सारसाश्च यस्मिंस्तदविशत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ काकपक्षाश्चूडाकरणात्प्राक्तनकेशाः। भ्रामणादिप्रकारैर्नियुद्धेन बाहुयुद्धेन चिक्रीडतुः ॥ १२ ॥ १३ ॥ कुंभैः कुंभवृक्षफलैः। अस्पृश्यत्वं नेत्रबंधश्च तदाद्यैः। मृगाणां खगानां च चेष्टया ॥ १४ ॥ दर्दुरप्लावैर्मंडूकप्लुतिभिः। स्पंदोलिकया दोलालंबनेन। नृपाणामिव लीलया ॥ १५ ॥ नद्योऽद्रिद्रोण्यः कुंजानि च एतेषु ॥ १६ ॥ चारयतोः सतोः। तद्वने तस्मिन्वने। तयोर्जिहीर्षया ॥ १७ ॥ १८ ॥ यथायथं वयोबलाद्यनुरूपं द्वंद्वीभूय ॥ १९ ॥ परिवृढौ नायकौ। तत्र

कूजत्कोकिलसारसम् ॥ ७ ॥ क्रीडिष्यमाणस्तत्कृष्णो भगवान्बलसंयुतः ॥ वेणुं विरणयन्गोपैर्गोधनैः संवृतोऽविशत् ॥ ८ ॥ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः ॥ रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥ ९ ॥ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् ॥ वेणुपाणितलैः शृंगैः प्रशशंसुरथापरे ॥ १० ॥ गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः ॥ ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥ ११ ॥ भ्रामणैर्लंघनैः क्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् ॥ १२ ॥ क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ॥ शशंसतुर्महाराज साधुसाध्विति वादिनौ ॥ १३ ॥ क्वचिद्बिल्वैः क्वचित्कुंभैः क्व चामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबंधाद्यैः क्वचिन्मृगखगेहया ॥ १४ ॥ क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः ॥ कदाचित्स्पंदोलिकया कर्हिचिन्नृपचेष्टया ॥ १५ ॥ एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुंजेषु काननेषु सरःसु च ॥ १६ ॥ पशूँश्चारयतो गोपैस्तद्वने रामकृष्णयोः ॥ गोपरूपी प्रलंबोऽगादसुरस्तज्जिहीर्षया ॥ १७ ॥ तं विद्वानपि दाशार्हो भगवान्सर्वदर्शनः ॥ अन्वमोदत तत्सख्यं वधं तस्य विचिंतयन् ॥ १८ ॥ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित् ॥ हे गोपा विहरिष्यामो द्वंद्वीभूय यथायथम् ॥ १९ ॥ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ ॥ कृष्णसंघट्टिनः केचिदासन्रामस्य चापरे ॥ २० ॥ आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः ॥ यत्रारोहंति जेतारो वहंति च पराजिताः ॥ २१ ॥ वहंतो वाह्यमानाश्च चारयंतश्च गोधनम् ॥ भांडीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ २२ ॥ रामसंघट्टिनो यर्हि श्रीदामवृषभादयः ॥ क्रीडायां जयिनस्ताँस्तानूहुः कृष्णादयो नृप ॥ २३ ॥ उवाह कृष्णो भगवान् श्रीदामानं पराजितः ॥ वृषभं भद्रसेनस्तु प्रलंबो रोहिणीसुतम् ॥ २४ ॥ अविषह्यं मन्यमानः कृष्णं दानवपुंगवः ॥ वहन्द्रुततरं प्रागादवरोहणतः परम् ॥ २५ ॥ तमुद्वहन्धरणिधरेंद्रगौरवं महासुरो विगतरयो निजं वपुः ॥ स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवांबुदः ॥ २६ ॥ निरीक्ष्य तद्वपुरलमंबरे चरत्प्रदीप्तदृग्भ्रु-

केचन कृष्णसंघट्टिनः कृष्णपक्षीयाः ॥ २० ॥ २१ ॥ वाह्यमानाः पृष्ठेनोह्यमानाः ॥ २२ ॥ २३ ॥ २४ ॥ कृष्णदृष्टिवंचनाय अवरुह्यतेऽस्मिन्नित्यवरोहणं मर्यादा ततःपरं दूरमगात् ॥ २५ ॥ धरणिधरेंद्रवद्गौरवं यस्य तन्निजमासुरं वपुरास्थितः। पुरटपरिच्छदः सुवर्णालंकारः। तडिद्द्युमान्विद्युद्दीप्तिमानित्यलंकारोपमा। उडुपतिवाडिति रामोपमा। उडुपतिं वहतीत्युडुपतिवाट्। यदि यथोचितस्थानेषु स्थिता विद्युतो भवंत्युपरि चोडुपतिस्तदा सोऽंबुदो यथा भाति तद्वद्बभावित्यर्थः ॥ २६ ॥ अलमतिवेगेन। प्रदीप्ते दृशौ यस्मिन्वपुषि तत्। भ्रुकुटितटमँल्लया उग्रा दंष्ट्रा यस्मिंस्तत्।

प्रदीप्तदृक् भ्रुकुटितटं यस्मिन् उग्रा दंष्ट्रा यस्मिंस्तच्च तच्चेति वा । ज्वलंत्यः शिखाः केशा यस्मिंस्तत् ॥ २७ ॥ आगतस्मृतिरभय इवात्मनः सार्थं गोपसमूहं विहाय हरंतं रिपुमहनत् । यद्वा विहाय-
साऽऽकाशमार्गेणात्मनः प्राप्तमर्थमिव हरंतमिति । वज्ररंहसा वज्रवेगेन मुष्टिना ॥ २८ ॥ अपस्मृतो गतस्मृतिः । महारवं समीरयन् ॥ २९ ॥ ३० ॥ तदर्हणं प्रशंसार्हम् ॥ ३१ ॥ ३२ ॥ इति
दशमपूर्वार्धे टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ॥ मुंजारण्यमरण्याग्रे ररक्ष तन्निपानतः ॥ १ ॥ दूरचारिणीर्दूरचारिण्यः ॥ १ ॥ वनाद्वनांतरं निर्विशंत्यो

कुटितटोग्रदंष्ट्रकम् ॥ ज्वलच्छिखं कटककिरीटकुंडलत्विषाऽद्भुतं हलधर ईषदत्रसत् ॥ २७ ॥ अथागतस्मृतिरभयो रिपुं बलो विहाय सार्थमिव हरंत-
मात्मनः ॥ रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥ २८ ॥ स आहतः सपदि विशीर्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽ-
सुरः ॥ महारवं व्यसुरपतत्समीरयन्गिरिर्यथा मघवत आयुधाहतः ॥ २९ ॥ दृष्ट्वा प्रलंबं निहतं बलेन बलशालिना ॥ गोपाः सुविस्मिता आसन्सा-
धुसाध्विति वादिनः ॥ ३० ॥ आशिषोऽभिगृणंतस्तं प्रशशंसुस्तदर्हणम् ॥ प्रेत्यागतमिवालिंग्य प्रेमविह्वलचेतसः ॥ ३१ ॥ पापे प्रलंबे निहते देवाः
परमनिर्वृताः ॥ अभ्यवर्षन्बलं माल्यैः शशंसुः साधुसाध्विति ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे प्रलंबवधो नामाष्टादशोऽ-
ध्यायः ॥ १८ ॥ श्रीशुक उवाच ॥ क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः ॥ स्वैरं चरंत्यो विविशुस्तृणलोभेन गह्वरम् ॥ १ ॥ अजा गावो महि-
ष्यश्च निर्विशंत्यो वनाद्वनम् ॥ इषीकाटवीं निर्विविशुः क्रंदंत्यो दावतर्षिताः ॥ २ ॥ तेऽपश्यंतः पशून्गोपाः कृष्णरामादयस्तदा ॥ जातानुतापा
न विदुर्विचिन्वंतो गवां गतिम् ॥ ३ ॥ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवाम् ॥ मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः ॥ ४ ॥ मुंजाटव्यां भ्रष्ट-
मार्गं क्रंदमानं स्वगोधनम् ॥ संप्राप्य तृषिताः श्रांतास्ततस्ते संन्यवर्तयन् ॥ ५ ॥ ता आहूता भगवता मेघगंभीरया गिरा ॥ स्वनाम्नां निनदं श्रुत्वा
प्रतिनेदुः प्रहर्षिताः ॥ ६ ॥ ततः समंताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम् ॥ समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजंगमान्महान्
॥ ७ ॥ तमापतंतं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः ॥ ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ॥ ८ ॥ कृष्ण
कृष्ण महावीर हे रामामितविक्रम ॥ दवाग्निना दह्यमानान्प्रपन्नाँस्त्रातुमर्हथः ॥ ९ ॥ नूनं त्वद्बांधवाः कृष्ण न चार्हंत्यवसीदितुम् ॥ वयं हि सर्व-
धर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥ १० ॥ श्रीशुक उवाच ॥ वचो निशम्य कृपणं बंधूनां भगवान्हरिः ॥ निमीलयत माभैष्ट लोचनानीत्यभाषत ॥ ११ ॥
तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् ॥ पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत् ॥ १२ ॥ ततश्च तेऽक्षीण्युन्मील्य पुनर्भांडीरमापिताः ॥

दावेन तर्षितास्तृषिताः क्रंदंत्य इषीकाटवीमत्युच्छ्रितघनतृणविशेषारण्यं निर्विविशुः ॥ २ ॥ कृष्णरामावादी येषां ते न तु तौ ॥ ३ ॥ तासां गवां खुरैर्दद्भिश्च छिन्नैस्तृणैर्गोष्पदैरंकितैश्च भूप्रदेशैस्तृणैर्वा
गवां मार्गमन्वगमन् । नष्टाजीव्या गतजीविकासाधनाः ॥ ४ ॥ मुंजाटव्यपि सैव इषीकाटवी ॥ ५ ॥ ६ ॥ गोगोपानां नाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत् । सारथिना वायुना ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ कृच्छ्राद्गह्वरप्रवेशात्क्षुत्तृट्श्रमादिजनितात् ॥ १२ ॥ क्षणेनैव भांडीरं प्रापिताः ततोऽक्षीण्युन्मील्य विस्मिताः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ श्रीदामादिस्वगोपानां स्वांगमात्मा
हृष्यताम् ॥ स्वैश्वर्यमाविरकरोद्वनवह्निनिपानतः ॥ इति दशमस्कंधे पूर्वार्धे टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे प्रावृट्शरच्छोभावर्णनेन वर्णोचिताः ॥ प्रावृट्क्रीडा निरूप्यंते गोपगामगृजां हरेः
॥ १ ॥ हेयादेयोपमानेन प्रावृट्शरदृतुश्रियोः ॥ वर्णनं त्वद्भुतैश्वर्यकृष्णलीलाविवक्षया ॥ २ ॥ १ ॥ २ ॥ तत्र प्रावृड्वर्णनं तत इत्यादिद्वाविंशत्या । सर्वेषां प्राणिनां समुद्भव उत्पत्तिर्जीवनं च
यस्यां सा प्रावृट् । विद्योतमानाः परिधयः परिवेषा दिशो वा यस्यां सा । विस्फूर्जितं संक्षुभितं नभस्तलं यस्यां सा ॥ ३ ॥ सांद्रैर्निबिडैर्नीलांबुदैर्विद्युद्गर्जितसहितैराच्छन्नम् । सगुणं गुणगणच्छन्नं
जीवाख्यम् । विद्युद्गर्जितांबुदानां सत्त्वरजस्तमोभिरुपमा ॥ ४ ॥ पर्जन्यः सूर्यः । स्वगोभिर्निजरश्मिभिः । काले यथोचितसमये । अत्र राजोपमाकरादानतः समये पुनर्दानतश्च सूचिता ॥ ५ ॥

निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥ १३ ॥ कृष्णस्य योगवीर्यं तद्योगमायानुभावितम् ॥ दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥ १४ ॥ गाः सन्निवर्त्य सायाह्ने सहरामो जनार्दनः ॥ वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः ॥ १५ ॥ गोपीनां परमानंद आसीद्गोविंदद-र्शने ॥ क्षणं युगशतमिव यासां येन विनाऽभवत् ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे दावाग्निपानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

श्रीशुक उवाच ॥ तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः ॥ गोपाः स्त्रीभ्यः समाचख्युः प्रलंबवधमेव च ॥ १ ॥ गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ॥ मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥ २ ॥ ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥ ३ ॥ सांद्रनीलांबुदैर्व्योम सविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ ४ ॥ अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु ॥ स्वगो-भिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥ ५ ॥ तडित्वंतो महामेघाश्चंडश्वसनवेपिताः ॥ प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥ ६ ॥ तपःकृशा देवमीढा आसीद्वर्षीयसी मही ॥ यथैव काम्यतपसस्तनुः संप्राप्य तत्फलम् ॥ ७ ॥ निशामुखेषु खद्योतास्तमसा भांति न ग्रहाः ॥ यथा पापेन पाखंडा न हि वेदाः कलौ युगे ॥ ८ ॥ श्रुत्वा पर्जन्यनिनदं मंडूका व्यसृजन्गिरः ॥ तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ॥ ९ ॥ आसन्नु-त्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ॥ पुंसो यथाऽस्वतंत्रस्य देहद्रविणसंपदः ॥ १० ॥ हरिता हरिभिः शष्पैरिंद्रगोपैश्च लोहिता ॥ उच्छिलींध्रकृत-च्छाया नृणां श्रीरिव भूरभूत् ॥ ११ ॥ क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः ॥ धनिनामुपतापं च दैवाधीनमजानताम् ॥ १२ ॥ जलस्थलौकसः

तडिन्नेत्रैर्विश्वं तप्तं निरीक्ष्य वायुभिर्वे-अस्य विश्वस्य प्रीणनमाप्यायनकरं जीवनमुदकं मुमुचुः । कृपालवो यथा तप्तं जनं निरीक्ष्यानुकंपमानास्तदाप्यायनाय स्वजीवनमपि त्यजंति तद्वन्महांतो मेघास्तडिन्नेत्रैर्विश्वं तप्तं निरीक्ष्य वायुभिर्वे-पिता जीवनं मुमुचुरिति ॥ ६ ॥ तपसा ग्रीष्मेण कृशा । देवमीढा पर्जन्यसिक्ता । वर्षीयसी उच्छूनापुष्टा । काम्यं तपो यस्य तस्य तनुः कामान्संप्राप्य यथेति ॥ ७ ॥ ८ ॥ नित्यकर्मावसाने आचा-र्यनिनदं श्रुत्वा तच्छिष्या यथाऽधीयते तद्वदिति ॥ ९ ॥ अनुशुष्यतीरनुशुष्यंत्यः । अस्वतंत्रस्येंद्रियपरतंत्रस्य । निरंकुशस्येति वा ॥ १० ॥ हरिभिर्नीलैः शष्पैर्बालतृणैर्नीलवर्णा क्वचिदिंद्रगोपैः कीट-विशेषैर्लोहिता तत्रतत्रोच्छिलींध्रैश्छत्राकारैरुद्भिदैः कृतच्छाया नृणां राज्ञां श्रीः सेनासंपदिव ॥ ११ ॥ क्षेत्राणीति । तदा हि वृष्टेरविच्छेदे लसंतः प्रियंग्वादयो मुदं ददति विच्छेदे शुष्यंतोऽनुतापं चेति

॥ १२ ॥ अबिभ्रदबिभरुः । यथा हरिनिषेवयेति । हरिसेवायां प्रवृत्ता हि सद्य एव सर्वे रुचिरा भवंति तस्याः परमधर्मत्वात्परमसुखत्वाच्च तद्वदिति ॥ १३ ॥ कामाक्तं कामवागनायुक्तमिति श्वसनो-
र्मिसाम्यम् । गुणैर्विपर्ययैर्युज्यत इति सरित्संगतिसाम्यम् ॥ १४ ॥ अधोक्षज एव चेतो येषां ते ॥१५॥ असंस्कृता अनुगुणा नाभ्यस्तमाना इत्यसंस्कृतसाम्यम् । कालेन चाहता इति तृणाच्छादनसा-
म्यम् ॥ १६ ॥ यथा कामिन्यः पुंश्चल्यः ॥ १७ ॥ निर्गुणं ज्यारहितमपि गुणिनि गर्जितशब्दवति अभादशोभत । गुणव्यतिकरात्मके व्यक्ते प्रपंचेऽगुणवान्निर्गुणः पुरुषो यथेति ॥ १८ ॥ स्वभासा

सर्वे नवनारिनिषेवया ॥ अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया ॥ १३ ॥ सरिद्भिः संगतः सिंधुश्चुक्षुभे श्वसनोर्मिमान् ॥ अपक्वयोगिनश्चित्तं कामाक्तं
गुणयुग्यथा ॥ १४ ॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः ॥ अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥ १५ ॥ मार्गा बभूवुः संदिग्धास्तृ-
णैश्छन्ना ह्यसंस्कृताः ॥ नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥ १६ ॥ लोकबंधुषु मेघेषु विद्युतश्चलसौहृदाः ॥ स्थैर्यं न चक्रुः कामिन्यः पुरु-
षेषु गुणिष्विव ॥ १७ ॥ धनुर्वियति माहेंद्रं निर्गुणं च गुणिन्यभात् ॥ व्यक्ते गुणव्यतिकरेऽगुणवान्पुरुषो यथा ॥ १८ ॥ नरराजोडुपश्छन्नः स्व-
ज्योत्स्नाराजितैर्घनैः ॥ अहंमत्या भासितया स्वभासा पुरुषो यथा ॥ १९ ॥ मेघागमोत्सवा हृष्टाः प्रत्यनंदन् शिखंडिनः ॥ गृहेषु तप्ता निर्विण्णा
यथाऽच्युतजनागमे ॥ २० ॥ पीत्वाऽपः पादपाः पद्भिरासन्नानात्ममूर्तयः ॥ प्राक् क्षामास्तपसा श्रांता यथा कामानुसेवया ॥ २१ ॥ सरःस्वशांतरोधःसु
न्यूषुरंगापि सारसाः ॥ गृहेष्वशांतकृत्येषु ग्राम्या इव दुराशयाः ॥ २२ ॥ जलौघैर्निरभिद्यंत सेतवो वर्षतीश्वरे ॥ पाखंडिनामसद्वादैर्वेदमार्गाः कलौ
यथा ॥ २३ ॥ न्यमुंचन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनः ॥ यथाऽऽशिषो विश्पतयः काले काले द्विजेरिताः ॥ २४ ॥ एवं वनं तद्वर्षिष्ठं पक्वखर्जू-
रजंबुमत् ॥ गोगोपालैर्वृतो रंतुं सबलः प्राविशद्धरिः ॥ २५ ॥ धेनवो मंदगामिन्य ऊधोभारेण भूयसा ॥ ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनीः
॥ २६ ॥ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ॥ जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥ २७ ॥ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ॥
निर्विश्य भगवान्रेमे कंदमूलफलाशनः ॥ २८ ॥ दध्योदनं समानीतं शिलायां सलिलांतिके ॥ संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥ २९ ॥

भासितयाऽहंमत्येति स्वचैतन्येनैव प्रकाशितेनाहंकारेण छन्नो जीवो यथा । यद्वा अहं विद्वान् दाता वेत्ता शूर इति स्वप्रतीत्यैवारोपितया इति ॥ १९ ॥ मेघागमेनोत्सवो येषामतो हृष्टाः ॥ २० ॥
नानात्ममूर्तयः अनेकरूपदेहाः ॥ २१ ॥ अशांतानि पंककंटकादियुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूषुर्नितरामवसन् । सारसाश्चक्रवाकाः । अशांतानि घोराण्यनुपरतानि वा कृत्यानि येषु तेष्व-
पि गृहेषु ॥ २२ ॥ ईश्वरे इंद्रे ॥ २३ ॥ नुन्नाः प्रेरिताः । आशिषः कामान् । विश्पतयो राजानः वणिजां पतयो वा । द्विजेरिताः पुरोहितैरुक्ताः ॥ २४ ॥ प्रावृषि कृतां क्रीडां वर्णयति एवं वन-
मिति सप्तभिः । वर्षिष्ठं समृद्धम् ॥ २५ ॥ २६ ॥ वनौकसः पुलिंदीः प्रमुदिता भगवान् ददृशे । तथा वनराजीर्मधुच्युतो मधुस्रवा ददृशे । गिरेः सकाशाज्जलधाराश्च तासां नादानामसन्ना निकटवर्तिनी-
र्गुहाश्च । यद्वा वनौकसः प्रमुदिता आसन् तथा वनराजीर्वनराजयो वनपरंपरा मधुच्युत आसन् गिरेर्जलधारा आसन् तानेवंभूतानाददृशे सर्वतो ददर्श भगवान् । तथा धाराणां नादान्गुहाश्चेति ॥२७॥

॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ शरदं वर्णयति एवं निवसतोरित्यष्टादशभिः । विगतान्यभ्राणि यस्यां सा । स्वच्छान्यंबूनि यस्यां सा अपरुषः शांतोऽनिलो यस्यां सा च सा च ॥ ३२ ॥ नीरजानामुत्पत्तिर्यया तया शरदा कृत्वा । नीरजानामुत्पत्त्या वा ॥ ३३ ॥ व्योम्नोऽब्दमिति । व्योमादीनां चतुरो मलान् शरदहरत् । आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभममुख्यं हरति । तथा हि । ब्रह्मचारिणो गुर्वर्थोदकाहरणादिकष्टं यथा भक्तिर्हरति तथा पूर्णस्य तेनानुपयोगात् गुरुभिरपि कृतार्थस्य तस्यानियोगात् एवं व्योम्नोऽब्दं शरज्जहार । यथा च गृहिणोपत्न्यादिसांकर्यं भक्तिर्हरति निविकवासरुच्युत्पत्तेः । तथाभूतानां शाबल्यं सांकर्यं शरत् । वर्षासु वृष्टिभिया संकुलानि वसंति यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पंकं शरत् यथा च यतीनां कामादिवासनामलं श्रीकृष्णभक्तिर्हरति एवमपां मलं शरदिति ॥ ३४ ॥ त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणा यैस्ते ॥ ३५ ॥ गिरय इति । अयं भावः । न ह्युपाध्यायाः कर्मविद्यामिव ज्ञानामृतं सर्वतो वितरंत्यपि

शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् ॥ तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ॥ ३० ॥ प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् ॥ भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥ एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे ॥ शरत्समभवद्व्यभ्रा स्वच्छांब्वपरुषानिला ॥ ३२ ॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ॥ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥ व्योम्नोऽब्दं भूतशाबल्यं भुवः पंकमपां मलम् ॥ शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ॥ ३४ ॥ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः ॥ यथा त्यक्तैषणाः शांता मुनयो मुक्तकिल्बिषाः ॥ ३५॥ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् ॥ यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥ ३६ ॥ नैवाविदन् क्षीयमाणं जलं गाधजलेचराः ॥ यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुंबिनः ॥ ३७ ॥ गाधवारिचरास्तापमविंदन् शरदर्कजम् ॥ यथा दरिद्रः कृपणः कुटुंब्यविजितेंद्रियः ॥ ३८ ॥ शनैः शनैर्जहुः पंकं स्थलान्यामं च वीरुधः ॥ यथाहंममतां धीराः शरीरादिष्वनात्मसु ॥ ३९ ॥ निश्चलांबुरभूत्तूष्णीं समुद्रः शरदागमे ॥ आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ॥ ४० ॥ केदारेभ्यस्त्वपो गृह्णन्कर्षका दृढसेतुभिः ॥ यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ॥ ४१ ॥ शरदर्कांशुजाँस्तापान्भूतानामुडुपोऽहरत् ॥ देहाभिमानजं बोधो मुकुंदो व्रजयोषिताम् ॥ ४२ ॥ खमशोभत निर्मेघं शरद्विमलतारकम् ॥ सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥ ४३ ॥ अखंडमंडलो व्योम्नि रराजोडुगणैः शशी ॥ यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥ ४४ ॥ आश्लिष्य समशीतो-

तु कृपया क्वचिदेव । एवं गिरयः शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न । न पुनः प्रावृषीव सर्वत इति ॥ ३६ ॥ गाधे क्षुद्रे जले चरंतीति तथा ते मीनादयः ॥ ३७ ॥ अविंदन् लेभिरे ॥ ३८॥ शनैः शनैरिति । तत्र ममतामिव पंकमहंतामिव आमतामपक्वतां जहुरिति ॥ ३९ ॥ आत्मन्युपरते त्यक्तक्रियो मुनिरिव निश्चलांबुः स एव व्युपरतागमो निवृत्तवेदघोष इव तूष्णीमभूदिति ॥ ४० ॥ केदारेभ्यो बद्धसेतुशालिक्षेत्रेभ्यो दृढैः सेतुभिरपोऽगृह्णन् ततः परं वृष्ट्यभावात्। प्राणैरिंद्रियैः । तन्निरोधेनेन्द्रियप्रत्याहारेण ॥४१॥ देहाभिमानजं बोध इव व्रजयोषितां मुकुन्द इव चेत्यर्थः ॥४२॥ शरदा विमलास्तारका यस्मिंस्तत् । शब्दब्रह्मणो वेदस्यार्थान्पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीति तथा तद्वत् ॥४३॥४४॥ समोऽन्यूनाधिकः शीतश्चोष्णश्च तम् । नतु गोप्यः । कृष्णापहृतचेतस्त्वेन तासां संतापो

अन्वीयमानाः स्ववृषैः स्वपतिभिरनिच्छंत्योऽपि बलादनुगम्यमानाः ।
दुःसह इति । यद्वा नकार उपमार्थः । तदा कृष्णहृतचेतस इति चेतसा कृष्णमाश्लिष्य यथेत्यर्थः ॥ ४५ ॥ पुष्पिण्यो गर्भिण्यः । आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैरैंद्रियैरिंद्रियार्थैर्लौकिकैश्च महो-
ईश्वराराधनार्थाः क्रियाबलात्फलैरनुगम्यमानाः समस्तभोगगर्भा यथेति ॥ ४६ ॥ कुमुत्कुमुदम् । कुत्सिता मुद्यस्येति दस्युसाम्यम् ॥ ४७ ॥ निर्गम्यार्थान्वाणिज्यस्वाच्छंद्यदिग्विजयविद्यादीन्प्रपेदिरे प्रपद्यंत । यथा
त्सवैः । कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्याम् ॥४७॥ वणिजो यतयो नृपाः स्नातकाश्च दृष्टादृष्टाभ्यां वर्षरुद्धाः संतो एकविंशे शरद्रम्यवृंदावन-
मंत्रयोगादिसिद्धाः आयुषा रुद्धाः काले आगते स्वपिंडान्योगादिप्राप्यान्देवादिदेहानिति ॥ ४९ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां विंशतितमोऽध्यायः ॥ २० ॥ ततश्च कुसुमित-
गते हरौ ॥ तद्वेणुस्वनमाकर्ण्य गोपीभिर्गीतमीर्यते ॥ १ ॥ इत्थमेवंभूतं वनम् । तदेवाह । शरदा स्वच्छानि जलानि यस्मिंस्तत् । वायुना वातमनुगतं तदेकव्याप्तमित्यर्थः ॥ १ ॥ तत्कृष्णवेणुगीतं स्मरस्योदयो यस्मात्तदा-
वनराजिषु शुष्मिणो मत्ता भृंगा द्विजाः खगाश्च तेषां कुलानि तैर्घुष्टाः सरांसि सरितो महीध्राश्च यस्मिंस्तद्वनं कृष्णोऽवगाह्य प्रविश्य वेणुमवादयत् ॥ २ ॥

गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाभवन् ॥ अन्वीयमानाः स्व-
ष्णां प्रसूनवनमारुतम् ॥ जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥ ४५ ॥ पुरग्रामे-
वृषैः फलैरीशक्रिया इव ॥ ४६ ॥ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना ॥ राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप ॥ ४७ ॥ वर्षरुद्धा यथा
ष्वाग्रयणैरैंद्रियैश्च महोत्सवैः ॥ बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ॥ ४८ ॥ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे ॥ श्रीशुक
सिद्धाः स्वपिंडान्काल आगते ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे शरद्वर्णनं नाम विंशतितमोऽध्यायः ॥ २० ॥ कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टसरः-
उवाच ॥ इत्थं शरत्स्वच्छजलं पद्माकरसुगंधिना ॥ न्यविशद्वायुना वातं सगोगोपालकोऽच्युतः ॥ १ ॥ काश्चित्परोक्षं कृष्णस्य
सरिन्महीध्रम् ॥ मधुपतिरवगाह्य चारयन्गाः सहपशुपालबलश्चुकूज वेणुम् ॥ २ ॥ तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ॥ बर्हापीडं नटवरवपुः
स्वसखीभ्योऽन्ववर्णयन् ॥ ३ ॥ तद्वर्णयितुमारब्धाः स्मरंत्यः कृष्णचेष्टितम् ॥ नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप ॥ ४ ॥
कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयंतीं च मालाम् ॥ रंध्रान्वेणोरधरसुधया पूरयन्गोपवृंदैर्वृंदारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः ॥ ५ ॥
इति वेणुरवं राजन्सर्वभूतमनोहरम् ॥ श्रुत्वा व्रजस्त्रियः सर्वा वर्णयंत्योऽभिरेभिरे ॥ ६ ॥ गोप्य ऊचुः ॥ अक्षण्वतां फलमिदं न परं विदामः सख्यः

यादृशं कृष्णस्मरणं तासां मनसः क्षोभकं जातं तदाह । बर्हापीडमिति । नटवद्वरं वपुर्बिभ्रद्वृंदावनं
श्रुत्य श्रुत्वा परोक्षं यथा भवति तथा व्रजे स्थितत्वात् ॥ ३ ॥ विक्षिप्तमनसो व्याकुलचित्ताः ॥४॥ वर्हमापीडो यस्मिन्निति वपुषो विशेषणं वा । वेणुवादनमुत्प्रेक्षते । रंध्रान्वेणो-
प्राविशत् । कथंभूतं वनम् । स्वपदैरंकितैः रमणं रतिजनकम् । गोपवृंदैर्गीतकीर्तिः तथा बर्हमयमापीडं शिरोभूषणं बिभ्रत् । परिरब्धवत्यः ॥ ६ ॥ अनुवर्णनमेवाह । अक्षण्वतामिति त्रयो-
रिति । अतो नूनमधरसुधैव पूर्णाद्वेणोरुच्चलंती गीतवत्प्रसर्पितुमर्हतीति भावः॥५॥ अभिरेभिरे वर्णयंत्यः । पदे पदे परमानंदमूर्तिं कृष्णं सेवितं नान्यदित्यर्थः ।
दशभिः । अक्षण्वतां चक्षुष्मतां तावदिदमेव फलं प्रियदर्शनं परमन्यन्न विदामो न विद्म इत्यर्थः । तच्च फलं सखिभिः सह पशून्वनं प्रवेशयतो रामकृष्णयोर्वक्त्रं यैर्निपीतं तैरेव जुष्टं

कथंभूतं वक्त्रम् । अनुवेणु वेणुमनुवर्तमानं तं वादयन् । तथाऽनुरक्तकटाक्षमोक्षं स्निग्धकटाक्षविसर्गम् । अथवा यैर्निपीतं तयोर्वक्त्रं तैर्यज्जुष्टमिदमेवाक्षण्वतामक्ष्णोः फलमिति ॥७॥ अन्या आहुः । चूतेति । चूतप्रबालादीनां चित्राभिर्मालाभिरनुपृक्ते ईषदंतरांतरतः संयुक्ते परिधाने नीलपीतांबरे ताभ्यां विचित्रो वेषो ययोस्तौ क्व च कदाचित्पशुपालगोष्ठ्यां गोपालसभायां मध्ये अलमत्यर्थं विरेजतुः । अहो गोपानां पुण्यमिति भावः ॥ ८ ॥ अन्या ऊचुः । हे गोप्यः ! अयं वेणुः किं स्म पुण्यमाचरत्कृतवान् । कथम् । यद्यस्माद्गोपिकानामेव भोग्यां सतीमपि दामोदराधरसुधां स्वयं स्वातंत्र्येण यथेष्टं भुंक्ते । कथम् । अवशिष्टरसं केवलमवशिष्टं रसमात्रं यथा भवति तथा । यतो यासां ह्रदिनीनां पयसा पुष्टास्ता मातृतुल्या ह्रदिन्यो हृष्यत्त्वचो विकसितकमलवनमिषेण रोमांचिता लक्ष्यंते । येषां वंशे जातास्ते तरवो मधुधारामिषेणानंदाश्रु मुमुचुः । यथा आर्याः कुलवृद्धा स्ववंशे भगवत्सेवकं दृष्ट्वा हृष्यत्त्वचोऽश्रु मुंचंति तद्वदिति ॥९॥ काश्चिदाहुः । हे सखि ! वृंदावनं भुवः कीर्तिं स्वर्गादपि विशेषेण वितनोति । कथंभूतम् । यद्देवकीसुतस्य पदांबुजाभ्यां लब्धा लक्ष्मीः शोभा संपद्येन तत् । किंच गोविंदस्य वेणुमनु वेणुनिनादं श्रुत्वाऽनंतरं मंदगर्जितं नीलमेघं तं मत्वा मत्ता ये मयूरास्तेषां नृत्यं प्रेक्ष्य संघशस्तत्र तत्राद्रिसानुष्वपरतान्युपरतक्रियाण्यन्यानि समस्तानि सत्त्वानि यस्मिंस्तत् । नैतदन्येषु लोकेषु विद्यतेऽतो भुवः कीर्तिं वितनोतीत्यर्थः ॥ १० ॥ अपरा आहुः । हे सखि ! मूढमतयस्तिर्यग्जातयोऽप्येता हरिण्यो धन्याः कृतार्थाः या वेणुरणितं वेणुनादमाकर्ण्य नंदनंदनं प्रति प्रणयसहितैरवलोकनैर्विरचितां पूजां समानं दधुः कृतवत्यः । किंच कृष्णसारैः स्वपतिभिः सहिता एव दधुः । अस्मत्पतयस्तु गोपाः क्षुद्राः समक्षं तन्न सहंत इति भावः ॥११॥ अन्या ऊचुः । हे गोप्यः ! आश्चर्यं शृणुत वनितानामुत्सवो यस्मात्तद्रूपं शीलं च यस्य तं कृष्णं निरीक्ष्य तेन वादितवेणोरसंकीर्णं गीतं च श्रुत्वा विमानैर्गच्छंत्यो देव्यो देवानामंकेषु स्थिता अपि स्मरेण नुन्नसाराः परिक्षिप्तधैर्यो मुमुहुः । मोहे लिंगमाहुः । भ्रश्यत्प्रसूनाः कवराश्चूडा यासां ताः । विगता नीव्यो यासां ताः । अत्र सर्वत्र वक्तृभेदान्नातीव संगतिर्वक्तव्या ॥ १२ ॥ क्षरणशंकयैवोत्तभितैरुन्नमितैः कर्णपुटैः पिबंत्यः सत्यः तथा शावाश्च वत्साश्च स्तनपाने प्रवृत्ताः समनंतरमेव गीतं श्रुत्वा तदेव पीयूषमुत्तंभितकर्णपुटैः पिबंतः स्नुतस्तनपयःकवलाः केवलं स्तनेभ्यः क्षरितक्षीरग्रासा मुखेषु येषां ते तस्थुर्विस्मृतक्रिया बभूवुरित्यर्थः । तत्र हेतुः । गोविंदं दृशा मार्गेणात्मनि मनसि स्पृशंत्य आलिंगंत्यः अतएवाश्रूणां कला लेशा लोचनयोर्यासां ता गावस्ते च शावाः ॥ १३ ॥ भो अंब मातरस्मिन्वने ये विहगाः पक्षिणस्ते प्रायेण मुनयो भवितुमर्हंति । कुतः । कृष्णोक्षितं कृष्णद-

पशूननु विवेशयतोर्वयस्यैः ॥ वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७॥ चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ॥ मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रंगे यथा नटवरौ क्व च गायमानौ ॥ ८ ॥ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ॥ भुंक्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽर्याः ॥ ९ ॥ वृंदावनं सखि भुवो वितनोति कीर्तिं यद्देवकीसुतपदांबुजलब्धलक्ष्मि ॥ गोविंदवेणुमनु मत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥ १० ॥ धन्याः स्म मूढमतयोऽपि हरिण्य एता या नंदनंदनमुपात्तविचित्रवेषम् ॥ आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥ ११ ॥ कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ॥ देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ १२ ॥ गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबंत्यः ॥ शावाः स्नुतस्तनपयः कवलाः स्म तस्थुर्गोविंदमात्मनि दृशाश्रुकलाः स्पृशंत्यः ॥ १३ ॥ प्रायो बतांब विहगा मुनयो

सुखेनामीलितदृशस्त्यक्तान्यवाचश्च संतो ये शीनं पुष्पफलाद्यंतरं विना यथा भवति तथा रुचिराः प्रवाला येषां तान्द्रुमभुजान्वृक्षाणां शाखा आरुह्य तेन श्रीकृष्णेनोदितं प्रकटितं कलवेणुगीतं केनापि वेदोक्तकर्मफलपरित्यागेन वेदद्रुमशाखारूढा रुचिरप्रवालस्थानीयानि कर्माण्येवोपाददानाः सुखिनः संतः श्रीकृष्णगीतमेव शृण्वंति । शृण्वंतीति । तथाहि । मुनयः श्रीकृष्णदर्शनं यथा भवति तथा आलिंगनेन स्थगितमाच्छादितं यथा भवति अतस्त एवैते भवितुमर्हंतीति भावः ॥ १४ ॥ आस्तां चेतनानां कथा नद्योऽप्यावर्तैः परिभ्रमैर्लक्षितेन सूचितेन मनोभवेन कामेन भग्नो वेगो यासां ता तथा ऊर्मय एव भुजास्तैः कमलोपहाराः कमलान्युपहरंत्यो मुरारेः पादयुगलं गृह्णंति धारयंति ॥ १५ ॥ लोकार्तिहरणशीलत्वादिसाम्यात्सख्युः श्रीकृष्णस्यांबुदस्तदुपर्युदितः पुनः प्रेम्णा प्रवृद्धः सन्कुसुमावलीभिः पुष्पसमूहैस्तत्तुल्यैस्तुषारैर्वा सह स्ववपुषा छत्रं विहितवान् ॥ १६ ॥ साहंकारमाहुः पूर्णाः । कृतार्थाः पुलिंद्यः शबरांगनाः । कथमित्यत आहुः । प्रथमं दयितानां स्तनेषु मंडितेनानुलिप्तेन पुनश्च रतिसमये उरुगायस्य पदाब्जयो रागेणारुण्येन श्रीः कांतिर्यस्य तेन कुंकुमेन । पुनस्तस्य वनस्थलीषु चंक्रमणेन तृणेषु रूषितेन लग्नेन तद्दर्शनेन तथाभूतस्य कुंकुमस्य दर्शनेन स्मरकृता

## वनेऽस्मिन्कृष्णोक्षितं तदुदितं कलवेणुगीतम् ॥ आरुह्य ये द्रुमभुजान् रुचिरप्रवालान् शृण्वंत्यमीलितदृशो विगतान्यवाचः ॥ १४ ॥ नद्यस्तदा तदुपधार्य मुकुंदगीतमावर्तलक्षितमनोभवभग्नवेगाः ॥ आलिंगनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णंति पादयुगलं कमलोपहाराः ॥ १५ ॥ दृष्ट्वाऽऽतपे व्रजपशून्सह रामगोपैः संचारयंतमनुवेणुमुदीरयंतम् ॥ प्रेमप्रवृद्ध उदितः कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषाऽंबुद आतपत्रम् ॥ १६ ॥ पूर्णाः पुलिंद्य उरुगायपदाब्जरागश्रीकुंकुमेन दयितास्तनमंडितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेन लिंपंत्य आननकुचेषु जहुस्तदाधिम् ॥ १७ ॥ हंतायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः ॥ १८ ॥ गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ॥ अस्पंदनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥ १९ ॥ एवंविधा भगवतो या वृंदावनचारिणः ॥ वर्णयंत्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥ २० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे एकविंशतितमोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ हेमंते प्रथमे मासि नंदव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुंजानाः कात्यायन्यर्चनव्रतम् ॥ १ ॥ आप्लुत्यांभसि कालिंद्या जलांते चोदितेऽरुणे ॥

रुक् तापो यासां तास्तेन कुंकुमेनाननेषु कुचेषु च कामतप्तेषु लिंपंत्यस्तदाधिं कामव्यथां जहुः । अतस्ताः कृतार्था धिगन्या मादृश्यो या एवंभूतमप्याधिशमनं न लभंत इति भावः ॥ १७ ॥ हंतेति हर्षे । हे सख्यः! अयमद्रिर्गोवर्धनो ध्रुवं हरिदासेषु श्रेष्ठः । कुत इत्यत आहुः । यस्माद्रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः । तृणाद्युद्गमनिभेन रोमहर्षदर्शनात् । किंच यद्यस्मान्मानं तनोति सह गोभिर्गणेन सखिसमूहेन च वर्तमानयोस्तयोः । कैः । पानीयैः सुयवसैः शोभनतृणैः कंदरैश्च कंदमूलैश्च यथोचितम् । अतोऽयमतिधन्य इत्यर्थः ॥ १८ ॥ हे सख्यः ! इदं त्वतिचित्रम् । गोपैः सह वने वने गाः संचारयतोस्तयो रामकृष्णयोर्मधुरपदैर्महावेणुनादैः । शरीरिषु ये गतिमंतस्तेषामस्पंदनं स्थावरधर्मस्तरूणां पुलको जंगमधर्म इति । निर्युज्यंते गाव आभिरिति निर्योगाः पादबंधनरज्जवो धृष्यगवां कर्षणार्थाः पाशाश्च तैः कृतं लक्षणं चिह्नं ययोः । शिरसि निर्योगवेष्टनेन स्कंधस्थपाशेन च गोपपरिवृढश्रिया विराजमानयोरित्यर्थः ॥ १९ ॥ २० ॥ इति दशमस्कंधे पूर्वार्धे एकविंशोऽध्यायः ॥ २१ ॥ गोपीनां कामतः कृष्णे निःसीमप्रेमसंगमः । कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥ १ ॥ द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ॥ वरं दत्वा गतः कृष्णो यज्ञशालामिनीयते

॥ २ ॥ प्रथमे मासि मार्गशीर्षे ॥ १ ॥ २ ॥ ३ ॥ महामाये इत्यादिसंबोधनैस्तव न किंचिदशक्यमिति सूचयंत्यः प्रत्येकं प्रार्थयंते ॥ ४ ॥ कृष्णचेतस्त्वमाह । भूयान्नंदसुतः पतिरित्यानचुरिति ॥ ५ ॥ व्रतस्य पूर्वांगमाह । उषसीति । गोत्रैर्नामभिः । अन्योन्याबद्धबाहवः परस्परं गृहीतपाणयः ॥ ६ ॥ ७ ॥ योगेश्वराणामीश्वर इति प्रत्येकं तादृङ्मनोरथपूरणसामर्थ्यं दर्शयति । तासां कर्मणः सिद्धये फलदानायेति ॥ ८ ॥ नीपं कदंबम् । बालैः सह ॥ ९ ॥ हे अबलाः ! नो नर्म न परिहासः यस्माद्यूयं व्रतश्रांताः ॥ १० ॥ एकैकशो वा आगत्य स्वीकुरुत सहैव वा । न तत्रास्माकमाग्रह

कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥ २ ॥ गंधैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपहारैः प्रवालफलतंडुलैः ॥ ३ ॥ कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नंदगोपसुतं देवि पतिं मे कुरु ते नमः ॥ इति मंत्रं जपंत्यस्ताः पूजां चक्रुः कुमारिकाः ॥ ४ ॥ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥ भद्रकालीं समानर्चुर्भूयान्नंदसुतः पतिः ॥ ५ ॥ उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः ॥ कृष्णमुच्चैर्जगुर्यांत्यः कालिंद्यां स्नातुमन्वहम् ॥ ६ ॥ नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् ॥ वासांसि कृष्णं गायंत्यो विजह्रुः सलिले मुदा ॥ ७ ॥ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ॥ वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥ ८ ॥ तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह ॥ ९ ॥ अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् ॥ सत्यं ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः ॥ १० ॥ न मयोदितपूर्वं वा अनृतं तदिमे विदुः ॥ एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ॥ ११ ॥ तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ॥ व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥ १२ ॥ एवं ब्रुवति गोविंदे नर्मणाक्षिप्तचेतसः ॥ आकंठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥ १३ ॥ माऽनयं भोः कृथास्त्वां तु नंदगोपसुतं प्रियम् ॥ जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥ १४ ॥ श्यामसुंदर ते दास्यः करवाम तवोदितम् ॥ देहि वासांसि धर्मज्ञ नोचेद्राज्ञे ब्रुवामहे ॥ १५ ॥ श्रीभगवानुवाच ॥ भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ ॥ अत्रागत्य स्ववासांसि प्रतीच्छंतु शुचिस्मिताः ॥ १६ ॥ ततो जलाशयात्सर्वा दारिकाः शीतवेपिताः ॥ पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥ १७ ॥ भगवानाह ता वीक्ष्य शुद्धभावप्रसादितः ॥ स्कंधे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥ १८ ॥ यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम् ॥ बद्ध्वांजलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥ १९ ॥ इत्यच्युतेनाभिहितं व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ॥ तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं

इत्यर्थः ॥ ११ ॥ क्ष्वेलितं परिहासः । प्रेमपरिप्लुताः प्रेमरसनिमग्नाः ॥ १२ ॥ १३ ॥ तत्र मुग्धा ऊचुः । अंग भोः कृष्ण ! अनयमन्याय्यं मा कृथाः ॥ १४ ॥ प्रौढा ऊचुः । नो चेद्राज्ञे नंदाय कंसाय वा ब्रुवाम ब्रवाम । हे कृष्णेति ॥ १५ ॥ १६ ॥ प्रोत्तेरुर्निर्गताः ॥ १७ ॥ आहताः ईषद्धतयोनीर्वीक्ष्य ॥ १८ ॥ धृतव्रताः सत्यो विवस्त्रा अपो व्यगाहताप्सु स्नाता इति यत्तदेतत् उ एव देवहेलनमपराध एवेत्यर्थः । व्रतवैगुण्यभीतानां प्रायश्चित्तमिवाह । अस्यांहसः पापस्य निवृत्तये मूर्ध्न्यंजलिं बद्ध्वाऽधो नमः प्रणामं कृत्वेति ॥ १९ ॥ इति दोषत्वेनाच्युतेनाभिहितं विवस्त्राप्लवनं

व्रतस्य च्युतिहेतुं मत्वा तस्य पूर्तिकामास्तदशेषकर्मणां तस्य व्रतस्यान्येषामशेषकर्मणां च साक्षात्कृतं फलभूतं तमेव नेमुः । स एवावद्यमृक् पापमार्जकः ॥ २० ॥ २१ ॥ दृढमत्यर्थं प्रलब्धा वंचिता यूयं विवस्त्रा इत्यादिना । त्रपया लज्जया हापितास्त्याजिता अत्रागत्य स्ववासांसीत्याग्रहेण । प्रस्तोभिता उपहसिताः सत्यं ब्रवाणि नो नर्मेत्यादिना । क्रीडनवत्कारिताश्च बद्ध्वांजलिमित्यादिप्राय-श्चित्तच्छलेन । ता नाभ्यसूयन् दोषदृष्ट्या नापश्यन् ॥ २२ ॥ प्रेष्ठसंगमेन सज्जिता वशीकृता अतो गृहीतचित्ताः सत्यो नो चेलुः । गृहीतचित्तत्वमाह । तस्मिन्कृष्णे लज्जायितेक्षणा लज्जाविल-सितमीक्षणं यासां ता इत्यर्थः ॥ २३ ॥ दामोदर इति भक्तवात्सल्यं दर्शयति । अबलाः प्रति ॥ २४ ॥ भोः साध्व्यो भवतीनां मदर्चनमेव संकल्पो मनोरथः स च लज्जया युष्मा-

नेमुरवद्यमृग्यतः ॥ २० ॥ तास्तथाऽवनता दृष्ट्वा भगवान्देवकीसुतः ॥ वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः ॥ २१ ॥ दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ॥ वस्त्राणि चैवापहृतान्यथाऽप्यमुं ता नाभ्यसूयन्प्रियसंगनिर्वृताः ॥ २२ ॥ परिधाय स्ववासांसि प्रेष्ठसंगमसज्जिताः ॥ गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणाः ॥२३॥ तासां विज्ञाय भगवान्स्वपादस्पर्शकाम्यया ॥ धृतव्रतानां संकल्पमाह दामो-दरोऽबलाः ॥ २४ ॥ संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम् ॥ मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥ २५ ॥ न मय्यावेशितधियां कामः कामाय कल्पते ॥ भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते ॥ २६ ॥ याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः ॥ यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥ २७॥ श्रीशुक उवाच ॥ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ॥ ध्यायंत्यस्तत्पदांभोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥२८॥ अथ गोपैः परिवृतो भगवान्देवकीसुतः ॥ वृंदावनाद्गतो दूरं चारयन्गाः सहाग्रजः ॥ २९ ॥ निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ॥ आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥ ३० ॥ हे स्तोककृष्ण हे अंशो श्रीदामन्सुबलार्जुन ॥ विशालर्षभ तेजस्विन्देवप्रस्थ वरूथप ॥ ३१ ॥ पश्यतैतान्महाभागान्परार्थैकांतजीवितान् ॥ वातवर्षातपहिमान्सहंतो वारयंति नः ॥ ३२ ॥ अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ॥ सुजनस्येव येषां वै विमुखा यांति नार्थिनः ॥ ३३ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥ गंधनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥ ३४ ॥ एताव-

भिरकथितोऽपि मया विदितः स मयाऽनुमोदितोऽतः सत्यो भवितुमर्हति । अर्हतीति संभावनोक्त्या आत्यंतिको न भविष्यतीति सूचितम् ॥ २५ ॥ तत्कुत इत्यत आह । न मयीति । कामाय पुनः कामभोगाय । विषयमहिम्ना कामस्यापि शांतिहेतुत्वादिति भावः । कामाप्ररोहे दृष्टांतः । भर्जिता दग्धा क्वथिता पक्वा धाना यवादि । बीजायांकुरोद्गमाय । प्राय इति स्वेच्छया पुनः प्ररोहमपि सूचयति ध्रुवादीनां तथा दर्शनात् ॥ २६ ॥ सिद्धाः पूर्णमनोरथाः । तदाह । इमा आगामिनी रात्रीर्मया रंस्यथेति । आर्या कात्यायनी । सतीः सत्यः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ भक्त्याऽनुकंप्य कन्यास्तास्तद्विवर्जितयज्वनाम् ॥ पत्न्यनुग्रहतस्तेषामहन्कर्मसहामदम्॥ विप्रभार्यानुग्रहाय यज्ञवाटं गच्छन्विप्राणां काठिन्यमभिप्रेत्य तेभ्योऽपि द्रुमाः श्रेष्ठा इति नानभिनंदंति चतुर्भिः । वातवर्षादीन्स्वयं सहंतः सहमाना अस्माकं वारयंति ॥३२॥ सुजनस्य कृपालोरर्थिन इव पश्यतेति । हे स्तोककृष्णादयो गोपाः ! एतान् द्रुमान्पश्यत । परार्थमेवैकांतेन जीवितं येषां तान् । तदाह ।

॥ ३३ ॥ निर्यासो घनरसः । तोक्माः पल्लवाद्यंकुराः ॥ ३४ ॥ ३५ ॥ इत्यभिनंदन् प्रवालादिसमूहैर्नतशाखानां तरूणां मध्येन यमुनां प्राप्तः ॥ ३६ ॥ ३७ ॥ कुमारिकाभ्यः पूर्वमेव तन्नर्माकुलतया अगृहीतभोज्यानामेव निर्गमात्क्षुधार्ता इत्युक्तम् ॥ ३८ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ॥ तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥ १ ॥ ॥ १ ॥ भक्ताया इत्येकवचनं सद्यः सायुज्याभिप्रायेण ॥ २ ॥ ३ ॥ अस्मद्विसर्जिता आवाभ्यां प्रहिताः संतो याचध्वम् । युष्माकं का तत्र लज्जा । ननु तथाऽप्यपात्रत्वादस्मभ्यं किमिति दास्यंतीति चेत्तत्राह । कीर्तयंत इति ॥ ४ ॥ ५ ॥ ६ ॥ अविदूरे वर्तमानौ संतौ वो यदन्नं तल्लषतोऽभिलषतः । वः ओदनं श्रद्धा च यद्यस्ति तर्हि यच्छतेति ॥ ७ ॥ दीक्षिता

जन्मसाफल्यं देहिनामिह देहिषु ॥ प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत्सदा ॥ ३५ ॥ इति प्रवालस्तबकफलपुष्पदलोत्करैः ॥ तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥ ३६ ॥ तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतलाः शिवाः ॥ ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥ ३७ ॥ तस्या उपवने कामं चारयंतः पशून्नृप ॥ कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधपूर्वार्धे द्वाविंशोऽध्यायः ॥ २२ ॥ गोपा ऊचुः॥ राम राम महावीर्य कृष्ण दुष्टनिबर्हण ॥ एषा वै बाधते क्षुन्नस्तच्छांतिं कर्तुमर्हथः ॥ १ ॥ श्रीशुक उवाच ॥ इति विज्ञापितो गोपैर्भगवान्देवकीसुतः ॥ भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥ २ ॥ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ॥ सत्रमांगिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥ तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः ॥ कीर्तयंतो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥ इत्यादिष्टा भगवता गत्वायाचंत ते तथा ॥ कृतांजलिपुटा विप्रान्दंडवत्पतिता भुवि ॥ ५ ॥ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः ॥ प्राप्तान् जानीत भद्रं वो गोपान्नो रामचोदितान् ॥ ६ ॥ गाश्चारयंतावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ॥ तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥ ७ ॥ दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः ॥ अन्यत्र दीक्षितस्यापि नान्नमश्नन्हि दुष्यति ॥ ८ ॥ इति ते भगवद्याच्ञां शृण्वंतोऽपि न शुश्रुवुः ॥ क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥ ९ ॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ १० ॥ तं ब्रह्म परमं साक्षाद्भगवंतमधोक्षजम् ॥ मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥ ११ ॥ न ते यदोमिति प्रोचुर्न नेति च परंतप ॥ गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥ १२ ॥ तदुपाकर्ण्य भगवान्प्रहस्य जगदीश्वरः ॥ व्याजहार पुनर्गोपान् दर्शयँल्लौकिकीं गतिम्

वयमभोज्यान्ना इति वदिष्यंतीति स्वयमेवाशंक्याहुः । दीक्षाया आरभ्याग्नीषोमीयपश्वालंभनात्पूर्वं दोषः न ततोऽन्यत्र । तथा सौत्रामण्याश्चान्यदा ॥ ८ ॥ क्षुद्रे स्वर्गादावाशामात्रं येषाम् । भूरीणि क्लेशाधिकानि कर्माणि येषां अतोऽज्ञा वृथाज्ञानवृद्धा इति मानवंतः ॥ ९ ॥ ननु कर्मक्रममुल्लंघ्यादेशकालेन्यार्थमन्नमन्यस्मै कथं देयं तत्राह । पृथक् चरुपुरोडाशादि द्रव्यम् । तंत्रं प्रयोगः । धर्मोऽपूर्वम् ॥ १० ॥ मनुष्योऽयमिति दृष्ट्या मर्त्यात्मानो ब्राह्मणा वयं महांत इति मन्यमानाः ॥ ११ ॥ १२ ॥ लौकिकीं गतिं नहि कार्यार्थिनो निर्विद्यंते को वा याचको न पराभूयत इत्यादिलोक-

स्थितिं दर्शयन् ॥ १३ ॥ केवलं देहेन गृहे वसंति धिया च मय्येवोषिता यतो मयि स्निग्धा अतो दास्यंतीति ॥ १४ ॥ १५ ॥ ईषिताः प्रेरिताः ॥ १६ ॥ सकृष्णो गोपालैः सह ॥ १७ ॥ तत्क-
थाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाः अतएव तमुपागतं श्रुत्वा जातसंभ्रमा बभूवुः ॥१८॥ भक्ष्यभोज्यलेह्यचोष्यभेदैश्चतुर्विधम् । बहुगुणं संस्कारविशेषैर्बहवो गुणा रससौरभ्यादयो यस्मिंस्तत् । भाजनैरमत्रै-
र्भांडैर्वा । पत्यादिभिर्वार्यमाणा अपि प्रियं श्रीकृष्णमभिसस्रुरभिजग्मुः । अप्रतिबंधे दृष्टांतः । समुद्रं निम्नगा नद्य इवेति ॥ १९ ॥ अत्र हेतुः । भगवतीति । दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो
याभिस्ताः ॥ २० ॥ तथागताः सत्यो ददृशुः ॥ २१ ॥ हिरण्यवत्परिधिः परिधानं यस्य तं पीतांबरमित्यर्थः । वनमालैर्बर्हैर्धातुभिः प्रवालैश्च नटवद्वेषो यस्य तम् । अनुव्रतस्य सख्युरंसे विन्यस्तो
निहितो हस्तो येन तम् । इतरेण हस्तेन लीलयाऽब्जं धुनानं भ्रामयंतम् । कर्णयोरुत्पले यस्य अलकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तं च तं च तं च ॥ २२ ॥ वृत्तेरपि लयेन सामरस्य-

॥ १३ ॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् ॥ दास्यंति काममन्नं वः स्निग्धा मय्युषिता धिया ॥१४॥ गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलंकृताः ॥ नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ १५ ॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः ॥ इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥१६॥ गाश्चारयन्स गोपालैः सरामो दूरमागतः ॥ बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥१७॥ श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्रमाः ॥ १८॥ चतुर्विधं बहुगुणमन्नमादाय भाजनैः ॥ अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बंधुभिः सुतैः ॥ भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥ २० ॥ यमुनोपवनेऽशोकनवपल्लवमंडिते ॥ विचरंतं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥ २१ ॥ श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥ २२ ॥ प्रायःश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः ॥ अंतः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाऽभिमतयो विजहुर्नरेंद्र ॥ २३ ॥ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया ॥ विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥ २४ ॥ स्वागतं वो महाभागा आस्यतां करवाम किम् ॥ यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः ॥ २५ ॥ नन्वद्धा मयि कुर्वंति कुशलाः स्वार्थदर्शनाः ॥ अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥ २६ ॥ प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ॥ यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः ॥ २७ ॥ तद्यात देवयजनं

यस्मिन्कृष्णे निमग्नमनसः आविष्टचेतसस्तं लोचनद्वारै-
रंतः प्रवेश्य सुचिरमुपगुह्य तापं जहुः । अभिमतयोऽहंवृत्तयः प्राज्ञं सुषुप्तिसाक्षिणं परिरभ्य तस्मिन् लयं प्राप्य यथेति ॥ २३ ॥ अखिलदृग्द्रष्टा सर्वबुद्धिसाक्षी । तास्तथा प्राप्ता विज्ञायापि । तथैवात्ये-
माह । प्राय इति । बहुशः श्रुता ये प्रियतमस्योदया उत्कर्षास्त एव कर्णपूराः कर्णौ पूरयंति कृतार्थौ कुर्वंतीति तथा तैः कर्णाभरणैरिति वा ।
दिदृक्षया प्राप्ता इति । इदं व उपपन्नं संपन्नं युक्तमिति वा ॥ २५ ॥ युक्तत्वमाह । नन्विति । आत्मप्रिये आत्मा च प्रियश्च तस्मिन्मयि कुशला विवेकिनोऽतएव स्वस्यात्मनोऽर्थं पुरुषार्थं पश्यंति
तद्विवृणोति । त्यक्तसर्वाशास्त्यक्ताः सर्वा आशा याभिस्ताः केवलमात्मनः स्वस्यैव दिदृक्षयेति ॥ २४ ॥ हे महाभागाः ! वः स्वागतं शुभमागमनम् । तदेवाह । यद्यस्मात्प्रतिबंधतिरस्कारेणास्माकं
ये ते यथा यथावद्भक्तिं कुर्वंति । यथावत्त्वमाह । अद्धा साक्षात् । अत्र हेतुः । अहैतुक्यव्यवहितां फलाभिसंधिरहितामतएवाव्यवहितां निरंतराम् ॥ २६ ॥ आत्मनः सर्वतः प्रेष्ठत्वमुपपादयति ।

प्राणेति । स्वा ज्ञातयः आत्मा देहः एते सर्वे यत्संपर्काद्यस्याध्यासेनोपकरणत्वेन वा ॥ २७ ॥ तत्तस्मात्कृतार्था यूयं देवयजनं यज्ञवाटं यात गच्छत । ननु कृतार्थाः किमिति यास्याम इति चेदत आह । पतय इति । पारयिष्यंति समापयिष्यंति । पतीनामनुग्रहायेत्यर्थः ॥ २८ ॥ नृशंसं परुषम् । निगमं प्रतिज्ञां न मे भक्तः प्रणश्यतीति वेदं वा न स पुनरावर्तत इति । पदात्रसृष्टमवज्ञयाऽपि दत्तम् । बहुमानेन केशैर्निवोढुं दासीभवितुम् ॥ २९ ॥ किंच । न गृह्णंति नोऽस्मान् । हे अरिंदम कामलोभपापादिदमन! भवतः प्रपदयोः पादाग्रयोः पतितदेहानामन्या स्वर्गादिगतिरपि न भवेन्मा-भूत्तत्तस्माद्दास्यमेव विधेहीति ॥ ३० ॥ मयोपेता अनुज्ञाताः । प्रत्यक्षं देवान् प्रदर्श्याह । देवा अपीति ॥ ३१ ॥ तथापि त्वां त्यक्तुं न शक्नुम इति चेत्तत्राह। नेति । प्रीतये सुखाय । अनुरा-

पतयो वो द्विजातयः ॥ स्वसत्रं पारयिष्यंति युष्माभिर्गृहमेधिनः ॥ २८ ॥ पत्न्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम् ॥ प्राप्ता वयं तुलसिदामपदावसृष्टं केशैर्निवोढुमतिलंघ्य समस्तबंधून् ॥२९॥ गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबंधुसुहृदः कुत एव चान्ये ॥ तस्माद्भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद्गतिररिंदम तद्विधेहि ॥ ३० ॥ श्रीभगवानुवाच ॥ पतयो नाभ्यसूयेरन् पितृभ्रातृसुतादयः ॥ लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥ ३१ ॥ न प्रीतयेऽनुरागाय ह्यंगसंगो नृणामिह ॥ तन्मनो मयि युंजाना अचिरान्मामवाप्स्यथ ॥ ३२ ॥ श्रीशुक उवाच ॥ इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ॥ ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥ ३३ ॥ तत्रैका विधृता भर्त्रा भगवंतं यथा श्रुतम् ॥ हृदोपगुह्य विजहौ देहं कर्मानुबंधनम् ॥ ३४ ॥ भगवानपि गोविंदस्तेनैवान्नेन गोपकान् ॥ चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥ ३५ ॥ एवं लीलानरवपुर्नृलोकमनुशीलयन् ॥ रेमे गोगोपगोपीनां रमयन् रूपवाक्कृतैः ॥ ३६ ॥ अथानुस्मृत्य विप्रास्ते अन्वतप्यन्कृतागसः ॥ यद्विश्वेश्वरयोर्याच्ञामहन्म नृविडंबयोः ॥ ३७ ॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ॥ आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥ ३८ ॥ धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम् ॥ धिक्कुलं धिक् क्रिया दाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३९ ॥ नूनं भगवतो माया योगिनामपि मोहिनी ॥ यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ॥ दुरंतभावं योऽविध्यन्मृत्युपाशान्गृहाभिधान् ॥ ४१ ॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि ॥ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥ ४२ ॥

गाय स्नेहवृद्धये । अंगसंगोंऽगाभ्यां संगः ॥ ३२ ॥ अनसूयवः अदोषदृष्टयः ॥ ३३ ॥ देहमिति । तदीयं देहं तत्र विहाय चैतन्येन भगवंतं प्रापेत्यर्थः ॥ ३४ ॥ ३५ ॥ अनुशीलयन्ननुकुर्वन् । गोगोपगोपीनामिति कर्मणि षष्ठी । रूपवाक्कृतैः रूपेण वाचा कृतैश्चरित्रैश्च रमयन् । तान् रमयितुं रेम इत्यर्थः ॥ ३६ ॥ अनुस्मृतिप्रकारमाह । नरानुकरणवतोर्विश्वेश्वरयोर्याच्ञां यदहन्म हतवंतस्तत्कृतागसो वयमित्यनुस्मृत्येति ॥ ३७ ॥ तदा च भार्या गुरूनिव मानयंतो भगवद्भक्तिरहितमात्मानं व्यनिंदन्नित्याह । दृष्ट्वेति । अलौकिकीं लोकातीताम् ॥ ३८ ॥ त्रिवृत् शौक्रं सावित्रं दैक्षमिति त्रिगुणितं जन्म । व्रतं ब्रह्मचर्यम् क्रिया कर्माणि दाक्ष्यं च । क्रिया दाक्ष्यमित्येकं वा पदम् । धिगित्यधिक्षेपे । ये वयं त्वधोक्षजे विमुखास्तेषां जन्मादि तत्सर्वं धिगिति व्यगर्हन्नित्यर्थः ॥ ३९ ॥

॥ ४० ॥ योऽविघ्यदच्छिनत्तं दुरंतं भावं भक्तिं पश्यतेति ॥ ४१ ॥ द्विजातिसंस्कार उपनयनम् । क्रियाः संध्योपासनादयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ आत्मनो दोषापवर्गेण चांचल्यगर्वादित्यागेन ॥ ४६ ॥ ४७ ॥ इत्थंभूतम एवं सर्वत्र श्रुतवंतो वयं हि तथाऽपीति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ न चाचलन् तयोर्दर्शनाय न जग्मुः ॥ ५२ ॥ इति दशमस्कंधे पूर्वार्धे टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे महेंद्रस्य मखं व्यावर्त्य हेतुभिः ॥ कृष्णः प्रवर्तयामास गोवर्धनमखोत्सवम् ॥ १ ॥ भूसुरगणां क्रियागर्वं निरस्य स्वःसुरेषु च ॥ मघवन्मदभंगाय तन्मखं समवारयत् ॥ २ ॥ ब्राह्मणाः कंसाद्भीताः स्वाश्रमस्था एव भगवंतमभजन् भगवानपि तत्रैव निवसन्निंद्रयागकृतोद्यमान्गोपानपश्यदिति संबंधः ॥ १ ॥ २ ॥ वृथा संभ्रमो न भवति मखोऽयमित्येवं

अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे ॥ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया ॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥ ४४ ॥ अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः ॥ ईशितव्यैः किमस्माभिरीशस्यैतद्विडंबनम् ॥ ४५ ॥ हित्वाऽन्यान्भजते यं श्रीः पादस्पर्शाशयाऽसकृत् ॥ आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥ ४६ ॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥४७॥ स एष भगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः ॥ जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ॥ ४८॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ॥ भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥ ४९ ॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥ ५० ॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ॥ अविज्ञातानुभावानां क्षंतुमर्हत्यतिक्रमम् ॥ ५१ ॥ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ॥ दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाचलन् ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे यज्ञपत्न्युद्धरणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीशुक उवाच ॥ भगवानपि तत्रैव बलदेवेन संयुतः ॥ अपश्यन्निवसन्गोपानिंद्रयागकृतोद्यमान् ॥ १ ॥ तदभिज्ञोऽपि भगवान्सर्वात्मा सर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छद्वृद्धान्नंदपुरोगमान् ॥ २ ॥ कथ्यतां मे पितः कोऽयं संभ्रमो व उपागतः ॥ किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥ एतद्ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः ॥ न हि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥ ४ ॥ अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् ॥ उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ॥ ५ ॥ ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति ॥ विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ॥ ६ ॥ तत्र तावत्क्रियायोगो भवतां किं विचारितः ॥ अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥ ७ ॥

एतद्ब्रूहि महान्कामो मम श्रवणे वर्तते। यद्वा तव महान्कामो दृश्यत इति । तूष्णीं स्थितं प्रत्याह । नेति । सर्वात्मनां चेत् किमत्र फलं का देवता केनाधिकारिणा केन वा साधनेन साध्यते ॥ ३ ॥ सर्वत्रात्मदृष्टीनाम् ॥ ४ ॥ अतएव न विद्यते स्वःपर इति दृष्टिर्येषामिति स्वपरदृष्ट्यभावादेव तत्कृद्भेदा अमित्रादयोऽपि तेषां न संतीत्याह । अमित्रेति न मित्रमुदास्त उदार्गानां विद्विन्नेषां तेषां कृत्यं सर्वं कर्म न गोपनीयं किंचिदस्तीत्यर्थः । सत्यपि भेददर्शने उदासीनः शत्रुवद्वर्ज्य आत्मतुल्यत्वात्सुहृन्मंत्रेषु न वर्जनीय इत्याह । उदासीन इति ॥ ५ ॥ किंच मत्प्रोक्ता मह विचारं आर्वत्र कर्म कर्तव्यं न तु गतानुगतिकत्वमात्रेणेत्याह । ज्ञात्वेति । अज्ञात्वा च तत्र विदुषो यथा तत्कर्मफलं स्यात्तथा नाविदुषः ॥ ६ ॥ भवतामयं क्रियायोगः शास्त्रतोऽपि किं विचारितः प्रवृत्तो लौकिका-

चारप्राप्तो वेति साधु सोपपत्तिकं भरायतां कथ्यतामिति ॥ ७ ॥ आचारप्राप्त एवेति सहेतुकमाह । पर्जन्य इति । आत्ममूर्तयः प्रियमूर्तयः ॥ ८ ॥ ततः किमित्यत आह । तमिति । तमिंद्रं वार्मुचां मेघानां पतिं स्वामिनमीश्वरं नियंतारम् । तद्रेतसा तद्वृष्टिपयसा ॥ ९ ॥ उपजीवंत्युपजीविकां कल्पयंति धर्मार्थकामसिद्धये । ननु कृष्यादिभिर्जीवंति किमिंद्रेण तत्राह । पुंसामिति । फलभावनः फलसाधकः । पर्जन्यं विना कृष्यादिवैफल्यादित्यर्थः ॥ १० ॥ ११ ॥ इंद्राय मन्युं जनयन्निति कोपजननद्वारा गर्वपर्वतादिंद्रमवतारयितुं देवतानिराकरणं न त्वयमेवाभिप्राय इत्यर्थः ॥ १२ ॥ प्रथमं तावत्कर्मवादेन देवान्निराकरोति । कर्मणेति। ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यादिति चेत् अहो अशीलितमिमांसानां स्वमतिविलासिता श्रद्धा कर्मणां फलकारणत्वे वचनतोऽवगते किं ततोऽनुपपन्नं नाम ॥ १३ ॥ केचित्पुनरतिसाहसभीताः कर्मपरतंत्रमीश्वरं मन्यंते तन्मतमनूद्य निराकरोति । अस्ति चेदिति । स्वयं कर्मभिरलिप्तोऽन्येषां जीवानां कर्मणां फलरूपी फलदाता

नंद उवाच ॥ पर्जन्यो भगवानिंद्रो मेघास्तस्यात्ममूर्तयः ॥ तेऽभिवर्षंति भूतानां प्रीणनं जीवनं पयः ॥ ८ ॥ तं तात वयमन्ये च वार्मुचां पतिमीश्वरम् ॥ द्रव्यैस्तद्रेतसा सिद्धैर्यजंते क्रतुभिर्नराः ॥ ९ ॥ तच्छेषेणोपजीवंति त्रिवर्गफलहेतवे ॥ पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥ १० ॥ य एवं विसृजेद्धर्मं पारंपर्यागतं नरः ॥ कामाल्लोभाद्भयाद्द्वेषात्स वै नाप्नोति शोभनम् ॥ ११ ॥ श्रीशुक उवाच ॥ वचो निशम्य नंदस्य तथाऽन्येषां व्रजौकसाम् ॥ इंद्राय मन्युं जनयन्पितरं प्राह केशवः ॥१२॥ श्रीभगवानुवाच ॥ कर्मणा जायते जंतुः कर्मणैव विलीयते ॥ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥ १३ ॥ अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ॥ कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥ १४ ॥ किमिंद्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ॥ अनीशे नान्यथा कर्तुं स्वभावविहितं नृणाम् ॥ १५ ॥ स्वभावतंत्रो हि जनः स्वभावमनुवर्तते ॥ स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ १६ ॥ देहानुच्चावचान् जंतुः प्राप्योत्सृजति कर्मणा ॥ शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥ १७ ॥ तस्मात्संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ॥ अंजसा येन वर्तेत तदेवास्य हि दैवतम् ॥१८॥ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ॥ न तस्माद्विंदते क्षेमं जारं नार्यसती यथा ॥ १९ ॥ वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ॥ वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥ २० ॥ कृषिवाणिज्यगोरक्षा कुसीदं तुर्य-

कर्तारं भजते तत्तत्कर्मफलदानेन ॥ १४ ॥ अतः कर्मण एव फलसिद्धेस्तत्पारतंत्र्ये चाजागलस्तनतुल्यत्वान्न देवतया कृत्यमित्याह । किमिंद्रेणेति । ननु कर्मणोऽपि प्रवृत्तिरंतर्याम्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशंक्याह । स्वभावविहितमिति । स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथा कर्तुमनीशेन ॥ १५ ॥ एतद्विवृणोति । स्वभावतंत्र इति प्रवृत्तेः संस्काराधीनत्वात्किमंतर्यामिणेत्यर्थः ॥ १६ ॥ तस्मात्स्वभावतो निष्पन्नस्य कर्मण एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह देहानिति सार्धेन ॥ १७ ॥ संपूजयेत्संमानयेत् । ननु देवतोद्देशेन द्रव्यत्यागात्मकत्वात्कर्मणः कथं देवतां विना सिद्धिरित्याशंक्य कर्मांगमात्रं देवतेति पक्षमुपसंहरन्निव हेतुवादमाश्रित्यान्यामेव देवतां समर्थयते । अंजसेति ॥ १८ ॥ हेतुबलेनैव विपक्षे दोषमाह । आजीव्येति । उपजीवति सेवते ॥ १९ ॥ स्ववृत्तिं वक्तुं दृष्टांतत्वेन वर्णानां वृत्तिभेदमाह । वर्तेतेति । ब्रह्मणा वेदाध्यापनादिना ॥ २० ॥ वैश्यवृत्तेश्चातुर्विध्यमाह । कृषीति । कृषिवाणिज्यसहिता गोरक्षा एवं त्रयम् ।

कुसीदं वृद्धिजीवनं चतुर्थम् ॥ २१ ॥ ननु गवामपि वृत्तिर्महेंद्राधीनैवेत्याशंक्य निरीश्वरसांख्यमताश्रयेण निराकरोति सत्त्वमिति श्लोकद्वयेन । अन्योन्यं स्त्रीपुरुषयोगेन ॥ २२ ॥ सर्वत इति । समु-
द्रशिलोपरादिष्वपि वृष्टिदर्शनान्नप्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः । तैरेव मेघैरेव सिध्यंति जीवंति ॥ २३ ॥ तथापि योगक्षेमार्थं देवतापेक्षेति चेदत आह । न नः पुर इति । पुरः पत्तनानि । जन-
पदा देशाः । अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः ॥ २४ ॥ ब्राह्मणानपि संगृह्णन्निगमयति । तस्मादिति । स्वयमुत्प्रेक्षितयागप्रयोगकल्पनामाह य इंद्रयागसंभारा इति सार्धपंचभिः ।
संभाराः साधनानि ॥ २५ ॥ सूपं मौद्गम् । पायसं केवले पयसि पक्वम् । संयावादयो गोधूमादिविक्रियाः । क्रमश्च सूपपायसयोः श्रुत्यादोहस्यार्थतोऽन्येषां पाठतः ॥ २६ ॥ यागशोभार्थं श्रद्धोत्पा-

मुच्यते ॥ वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥ २१ ॥ सत्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः ॥ रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत्
॥ २२ ॥ रजसा चोदिता मेघा वर्षंत्यंबूनि सर्वतः ॥ प्रजास्तैरेव सिद्ध्यंति महेंद्रः किं करिष्यति ॥ २३ ॥ न नः पुरो जनपदा न ग्रामा न गृहा
वयम् ॥ नित्यं वनौकसस्तात वनशैलनिवासिनः ॥२४॥ तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ॥ य इंद्रयागसंभारास्तैरयं साध्यतां मखः ॥ २५ ॥
पच्यंतां विविधाः पाकाः सूपांताः पायसादयः ॥ संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥ हूयंतामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः ॥ अन्नं
बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥ २७ ॥ अन्येभ्यश्चाश्वचांडालपतितेभ्यो यथार्हतः ॥ यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥ २८ ॥
स्वलंकृता भुक्तवंतः स्वनुलिप्ताः सुवाससः ॥ प्रदक्षिणां च कुरुत गोविप्रानलपर्वतान् ॥ २९ ॥ एतन्मम मतं तात क्रियतां यदि रोचते ॥ अयं गो-
ब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥ ३० ॥ श्रीशुक उवाच ॥ कालात्मना भगवता शक्रदर्पं जिघांसता ॥ प्रोक्तं निशम्य नंदाद्याः साध्वगृह्णंत
तद्वचः ॥ ३१ ॥ तथा च व्यदधुः सर्वं यथाह मधुसूदनः ॥ वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥ ३२॥ उपहृत्य बलीन्सर्वानादृता यवसं
गवाम् ॥ गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥ अनांस्यनडुद्युक्तानि ते चारुह्य स्वलंकृताः ॥ गोप्यश्च कृष्णवीर्याणि गायंत्यः सद्वि-
जाशिषः ॥ ३४ ॥ कृष्णस्त्वन्यतमं रूपं गोपविश्रंभणं गतः ॥ शैलोऽस्मीति ब्रुवन्भूरि बलिमादद्बृहद्वपुः ॥ ३५॥ तस्मै नमो व्रजजनैः सह चक्रे आत्म-
नात्मने ॥ अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥ ३६॥ एषोऽवजानतो मर्त्यान्कामरूपी वनौकसः ॥ हंति ह्यस्मै नमस्यामः शर्मणे आत्मनो
गवाम् ॥ ३७ ॥ इत्यद्रिगोद्विजमखं वासुदेवप्रणोदिताः ॥ यथा विधाय ते गोपाः सहकृष्णा व्रजं ययुः ॥३८॥ इति श्रीमद्भागवते महापुराणे दशम-

दनार्थं चाह । हूयंतामिति । धेनुदक्षिणाः धेनुसहिता दक्षिणाः ता एव वा दक्षिणाः वो युष्माभिः ॥ २७ ॥ यवसं तृणम् ॥ २८ ॥ २९ ॥ सर्वान् शिरःकंपेनानुमोदयन्नाह । गोब्राह्मणाद्रीणा-
मिति । मह्यं मम च ॥३०॥३१॥ तद्द्रव्येण तेन महेंद्रमखद्रव्येण । गिरिं द्विजान्प्रति यथायथम् ॥३२॥ बलीनुपहृत्य दत्त्वा । आदृताः सादराः ॥ ३३ ॥ अनडुद्युक्तानि उत्तमानडुद्भिर्युक्तानि ।
सद्विजाशिषो द्विजाशीर्भिः सहिताः ॥ ३४ ॥ गोपविश्रंभणं गोपानां विश्वासजनकं रूपं गतः प्राप्तः सन् बलिमुपहारमाददभक्षयत् ॥ ३५ ॥ तस्मै आत्मने आत्मना स्वयं व्रजजनैः सह नमश्चक्रे
अहो इति सार्धश्लोकं पठन् ॥ ३६ ॥ कामरूपी सर्पादिरूपः । अस्मै अद्रये शर्मणे क्षेमाय ॥ ३७ ॥ कर्मैवालं प्राक् स्वभावो गुणो वा कर्माग्रं वा तदंशो वा महेशः ॥ वार्ता कर्त्री दैवतेनेत्यमुक्ता

देवत्तोभे षएमती नत्वभीष्टा ॥ ३८ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धटीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ पंचविंशे रुषा शक्रे व्रजनाशाय वर्षति ॥ उद्धृत्य गिरिमासागदरद्गोकुलं प्रभुः ॥ १ ॥ कृष्णो नाथो येषां तेभ्यः ॥ १ ॥ क्रुद्धः सन्निंद्रः सांवर्तकं नाम संवर्तः प्रलयस्तत्कर्तारं मेघानां प्रसिद्धं गणं प्राचोदयत्प्रेषयामास । ननु कृष्णनाथानां घाते कथं प्रवृत्त इत्याशंक्यात्मसंभावनया निरस्तविवेकत्वादित्याशयेनाह वाक्यं चाहेत्यादिपंचभिः । ईशमान्यहमेवेश्वर इति गर्ववान् ॥ २ ॥ देवहेलनं देवस्य ममावज्ञाम् ॥ ३ ॥ अदृढैरसमर्थैः कर्ममयैः क्रियानिर्वर्त्यैरतएव नाममात्रेण या नौरिति व्यवह्रियते तत्सदृशैः । आन्वीक्षिकीमात्मानुस्मृतिरूपाम् ॥ ४ ॥ तथा वाचालं बहुभाषिणं बालिशं शिशुं पंडितमानिनं पंडितंमन्यमतः स्तब्धमविनीतमिति निंदायां योजिताऽपींद्रस्य भारती कृष्णं स्तौति । तथाहि । वाचालं शास्त्रयोनिम् । बालिशमेवमपि शिशुवन्निरभिमानिनं स्तब्धमन्यस्य वंद्यस्याभावादनम्रम् । अज्ञं नास्ति ज्ञो यस्मात्तं सर्वज्ञमित्यर्थः । पंडितमानिनं

स्कंधे पूर्वार्धे चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ श्रीशुक उवाच ॥ इंद्रस्तदात्मनः पूजां विज्ञाय विहतां नृप ॥ गोपेभ्यः कृष्णनाथेभ्यो नंदादिभ्यश्चुकोपसः ॥ १ ॥ गणं सांवर्तकं नाम मेघानां चांतकारिणाम् ॥ इंद्रः प्राचोदयत्क्रुद्धो वाक्यं चाहेशमान्युत ॥ २ ॥ अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ॥ कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥ ३ ॥ यथाऽदृढैः कर्ममयैः क्रतुभिर्नामनौनिभैः ॥ विद्यामान्वीक्षिकीं हित्वा तितीर्षंति भवार्णवम् ॥ ४ ॥ वाचालं बालिशं स्तब्धमज्ञं पंडितमानिनम् ॥ कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥ ५ ॥ एषां श्रियावलिप्तानां कृष्णेनाध्मायितात्मनाम् ॥ धुनुत श्रीमदस्तंभं पशून्नयत संक्षयम् ॥ ६ ॥ अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् ॥ मरुद्गणैर्महावीर्यैर्नंदगोष्ठजिघांसया ॥ ७ ॥ श्रीशुक उवाच ॥ इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबंधनाः ॥ नंदगोकुलमासारैः पीडयामासुरोजसा ॥ ८ ॥ विद्योतमाना विद्युद्भिः स्तनंतः स्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥ ९ ॥ स्थूणास्थूला वर्षधारा मुंचत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम् ॥ १० ॥ अत्यासारातिवातेन पशवो जातवेपनाः ॥ गोपा गोप्यश्च शीतार्ता गोविंदं शरणं ययुः ॥ ११ ॥ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः ॥ वेपमाना भगवतः पादमूलमुपाययुः ॥ १२ ॥ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो ॥ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ॥ १३ ॥ शिलावर्षनिपातेन हन्यमानमचेतनम् ॥ निरीक्ष्य भगवान्मेने कुपितेंद्रकृतं हरिः ॥ १४ ॥ अपर्त्वत्युल्बणं वर्षमतिवातं शिलामयम् ॥ स्वयागे निह-

ब्रह्मविदां बहुमाननीयम् । कृष्णं सदानंदरूपं परं ब्रह्म मर्त्यं तथापि भक्तवात्सल्येन मनुष्यतया प्रतीयमानमिति ॥५॥ अवलिप्तानां मत्तानां आध्मायितात्मनां बृंहितदेवानां धुनुतापनयत । श्रीमदेन यः स्तंभो गर्वस्तम् ॥ ६ ॥ बिभ्यतस्तान्प्रत्याह । अहं चेति अनुव्रजो अन्वनंतरमेवागमिष्यामि । मरुद्गणैर्देवगणैः सह ॥७॥ मघवता इंद्रेण निर्मुक्तं बंधनं येषां ते । प्रलयाभिप्रायेण बद्धा आसन् तदा निर्मुक्तबंधनाः संत आसारैर्धारासंपातैः पीडयामासुः ॥ ८ ॥ स्तनयित्नुभिरशनिभिः । स्तनंतो गर्जंतः । मरुद्गणैरावहप्रवहादिवायुसमूहैर्नुन्नाः प्रेरिताः । जलशर्करा जलोपलान् ॥ ९ ॥ स्थूणावत्स्थूलाः । अभ्रेषु मुंचत्सु सत्सु । नतोन्नतं नतं निम्नमुन्नतं तद्विपरीतं यथा भवति तथा भूर्नादृश्यत ॥ १० ॥ जातवेपना जातकंपाः ॥ ११ ॥ तत्र पशूनां यानं विशिनष्टि । शिर इति ॥ १२ ॥ गोपगोपीनां प्रार्थनामाह । कृष्ण कृष्णेति । त्वमेव नाथो यस्य तद्गोकुलं गवां कुलं वंशं नोऽस्मांश्च देवादिंद्रात्त्रातुं रक्षितुमर्हसि ॥ १३ ॥ विज्ञापनात्पूर्वमेव कुपितेनेंद्रेण कृतं तद्वर्षं मेने ॥ १४ ॥

कथं मेने तदाह । अपर्त्विति । अपगत ऋतुर्यस्य तद्वर्षमतिशयितो वातो यस्मिंस्तदतिवातम् । शिलामयं शिलाप्रचुरम् ॥ १५ ॥ तत्र प्रतिज्ञापूर्वं गोवर्धनोद्धरणमाह । तत्रेति । तत्र
प्रतिविधिं प्रतीकारं स्वसामर्थ्येन साधयिष्यामि तेन च मौढ्याल्लोकेशमानिनां श्रीमदलक्षणं तमो हरिष्यामि । बहुवचनेन वरुणादीनभिप्रेति ॥१६॥ ननु देवाः सात्त्विकास्त्वद्भक्ताश्च कुतस्तेषां तम-
स्तत्राह । नहीति । सद्भावः सत्त्वं मद्भक्तिर्वा तद्युक्तानां सुराणामीशा वयमिति विस्मयो गर्वो हि यस्मान्न घटतेऽतो संतस्ते । किंच तेषां मानभंगोऽनुग्रह एवेत्याह । मत्त इति ॥ १७ ॥ गोपाये

ते‌ऽस्माभिरिंद्रो नाशाय वर्षति ॥ १५ ॥ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये ॥ लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः ॥ १६ ॥ न हि स-
द्भावयुक्तानां सुराणामीशविस्मयः ॥ मत्तो सतां मानभंगः प्रशमायोपकल्पते ॥ १७ ॥ तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ॥ गोपाये स्वात्मयो-
गेन सोऽयं मे व्रत आहितः ॥ १८ ॥ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ॥ दधार लीलया कृष्णश्छत्राकमिव बालकः ॥ १९ ॥ अथाह
भगवान्गोपान्हेऽंब तात व्रजौकसः ॥ यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥ २० ॥ न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने ॥ वातवर्षभये-
नालं तत्त्राणं विहितं हि वः ॥ २१ ॥ तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः ॥ यथावकाशं सधनाः सव्रजाः सोपजीविनः ॥ २२ ॥ क्षुत्तृड्व्यथां
सुखापेक्षां हित्वा तैर्व्रजवासिभिः ॥ वीक्ष्यमाणो दधावद्रिं सप्ताहं नाचलत्पदात् ॥ २३ ॥ कृष्णयोगानुभावं तं निशाम्येंद्रोऽतिविस्मितः ॥ निस्तंभो
भ्रष्टसंकल्पः स्वान्मेघान्संन्यवारयत् ॥ २४ ॥ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ॥ निशाम्योपरतं गोपान्गोवर्धनधरोऽब्रवीत् ॥ २५॥ निर्यात
त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ॥ उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥ २६ ॥ ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ॥ शकटोढो-
पकरणं स्त्रीबालस्थविराः शनैः ॥ २७ ॥ भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः ॥ पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ २८ ॥ तं प्रेम-
वेगान्निभृता व्रजौकसो यथा समीयुः परिरंभणादिभिः ॥ गोप्यश्च सस्नेहमपूजयन्मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥ २९ ॥ यशोदा रोहिणी नंदो
रामश्च बलिनां वरः ॥ कृष्णमालिंग्य युयुजुराशिषः स्नेहकातराः ॥ ३० ॥ दिवि देवगणाः साध्याः सिद्धगंधर्वचारणाः ॥ तुष्टुवुर्मुमुचुस्तुष्टाः पुष्प-
वर्षाणि पार्थिव ॥ ३१ ॥ शंखदुंदुभयो नेदुर्दिवि देवप्रणोदिताः ॥ जगुर्गंधर्वपतयस्तुंबुरुप्रमुखा नृप ॥ ३२ ॥ ततोऽनुरक्तैः पशुपैः परिश्रितो राज-
न्स्वगोष्ठं सबलोऽव्रजद्धरिः ॥ तथाविधान्यस्य कृतानि गोपिका गायंत्य ईयुर्मुदिता हृदिस्पृशः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे

रक्षिष्यामि किंच सोऽयं मे मया व्रतो नियमः संकल्पो वा आहितो धृत इत्यर्थः ॥ १८ ॥ कृत्वा उत्कृत्य । छत्राकमुच्छिलींध्रम् ॥ १९ ॥ यथोपजोषं यथासुखम् ॥ २० ॥ २१ ॥ सव्रजाः शकट-
मंडलसहिताः । सोपजीविनो भृत्यपुरोहितादिसहिताः ॥ २२ ॥ पदात्स्थानात् ॥ २३ ॥ २४ ॥ २५ ॥ व्युदप्राया विगतोदकप्रायाः । स्वल्पजला इत्यर्थः ॥ २६ ॥ शकटोढोपकरणं शकटैरूढमुप-
करणं यथा भवति तथा ॥ २७ ॥ २८ ॥ निभृताः पूर्णाः । यथा यथोचितं परिरंभणादिभिः समीयुरुपजग्मुः । सदाशिषः श्रेष्ठानाशीर्वादान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ततो गोवर्धनस्था-

नात् । अस्य श्रीकृष्णस्य तथाविधानि गोवर्धनोद्धरणादिरूपाणि कृतानि कर्माणि गायंत्य ईयुर्ययुः । कथंभूताः । एवं प्रेम्णा हृदि स्पृशंतीति हृदि स्पृशस्ताः । यद्वा कथंभूतस्य । प्रेष्ठत्वेन तासां हृदि स्पृशतीति हृदिस्पृक् तस्य ॥ ३३ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां पंचविंशोऽध्यायः ॥ २५ ॥ षड्विंशे विस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः ॥ नंदो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत् ॥ १ ॥ समभ्येत्य नंदमभिगम्य ॥ १ ॥ यदूचुस्तदाह । बालकस्येति । यद्यस्मादद्भुतानि मर्माणि तस्माद्ग्राम्येषु गोपालेषु कथं जन्मार्हति । आत्मजुगुप्सितमात्मानर्हम् ॥ २ ॥ अद्भुतानि कर्माण्याहुः । यः सप्तहायन इति । कथं बिभ्रत्स्थित इति । पुष्करं पद्मं गजराणमहागज इव ॥ ३ ॥ महौजसो महाबलायाः । तनोर्वय आयुर्यौवनं वा कालेन यथा पीयते तद्वत् । कथमित्यनुवर्तते

पूर्वार्धे पंचविंशोऽध्यायः ॥ २५ ॥ श्रीशुक उवाच ॥ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते ॥ अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ॥ १ ॥ बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै ॥ कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥ यः सप्तहायनो बालः करेणैकेन लीलया ॥ कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव ॥ ३ ॥ तोकेनामीलिताक्षेण पूतनाया महौजसः ॥ पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ॥ ४ ॥ हिन्वतोऽधःशयानस्य मास्यस्य चरणावुदक् ॥ अनोऽपतद्विपर्यस्तं रुदतः प्रपदा हतम् ॥ ५ ॥ एकहायन आसीनो ह्रियमाणो विहायसा ॥ दैत्येन यस्तृणावर्तमहन्कंठग्रहातुरम् ॥ ६ ॥ क्वचिद्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले ॥ गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥ वने संचारयन्वत्सान्सरामो बालकैर्वृतः ॥ हंतुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥ ८ ॥ वत्सेषु वत्सरूपेण प्रविशंतं जिघांसया ॥ हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥ ९ ॥ हत्वा रासभदैतेयं तद्बंधूंश्च बलान्वितः ॥ चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥ १० ॥ प्रलंबं घातयित्वोग्रं बलेन बलशालिना ॥ अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः ॥ ११ ॥ आशीविषतमाहींद्रं दमित्वा विमदं ह्रदात् ॥ प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम् ॥ नंद ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥ १३ ॥ क्व सप्तहायनो बालः क्व महाद्रिविधारणम् ॥ ततो नो जायते शंका व्रजनाथ तवात्मजे ॥ १४ ॥ नंद उवाच ॥ श्रूयतां मे वचो गोपा व्येतु शंका च वोऽर्भके ॥ एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥ वर्णास्त्रयः किलास्यासन्गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥ प्रागयं वसुदे-

॥ ४ ॥ अनसोऽधःशयानस्य मास्यस्य मासास्त्रयः परिच्छेदका यस्य उदगूर्ध्वं चरणौ हिन्वतश्चालयतः प्रपदेन पादाग्रेण हतं विपर्यस्तमनः कथमपतत् ॥ ५ ॥ यः कृष्णो दैत्येन ह्रियमाणः संस्तं तृणावर्तं दैत्यं कथमहन्नित्यर्थः ॥ ६ ॥ हैयंगवस्तैन्ये नवनीतचौर्ये । बाहुभ्यां गच्छन् रिंगन्नित्यर्थः ॥७॥ मुखतो हंतुं कामो यस्य तं बकवेषमरिं बाहुभ्यां मखतः कथमपाटयत् ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ आशीविषतमोऽतिक्रूरविषश्चासावहींद्रश्च तम् ॥ १२ ॥ औत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामात्माऽयं स्यादिति शंका ॥ १३ ॥ उक्तमप्यतिविस्मयेनाभिनयेन वदंति । क्व सप्तहायन इति ॥ १४ ॥ प्राक्श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्तासंभावनस्य नंदस्य कृष्णतत्त्वावबोधकं जातं स इदानीं तेनैव वाक्येन गोपाननुपदिशति । श्रूयतामिति ॥ १५ ॥ १६ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ तस्मात्तस्य कर्मसु विस्मयो नास्तीति नंदस्योक्तिः ॥ २२ ॥ इत्यद्धा साक्षान्मां प्रति समादिश्य गर्गे च स्वगृहं गते सति तदानीं तथा मन्यमानोऽपि इदानीं कृष्णं नारायणस्यांशं मन्ये । अत्र हेतुः । अक्लिष्टकारिणमिति ॥ २३ ॥ २४ ॥ गोवर्धनोद्धरणं मपरिकरमनुस्मरन्प्रकटितैश्वर्यस्य श्रीकृष्णस्य प्रीतिं प्रार्थयते । देव इति । यज्ञविप्लवेन या रुट् तया देवे इंद्रे वर्षति सति वज्राश्मवर्षानिलैः अशनिजलशर्करातीव्रवायुभिः सीदत्पालपशुस्त्रि आत्मशरणं सीदंतः पालाः पशवः स्त्रियश्च यस्मिंस्तत्तथा आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वा अनुकंपी उत्स्मयन् हसन्प्रौढिमाविष्कुर्वन् शैलमुत्पाट्याबलो बालो लीलार्थमुच्छिलींध्रं यथा तथैकेन करेण बिभ्रद्धद्गोष्ठमपान्पालितवान् । एवं महेंद्रमदभित् गवामिंद्र इत्युत्तराध्यायार्थं च स्मरति । स एवं-भूतः श्रीकृष्णो नः प्रीयात्प्रीयतामिति । षड्विंशे दशमे व्यक्तः षड्विंशो दशमो हरिः ॥ व्यनक्तु पंचविंशं मां चतुर्विंशतितः पृथक् ॥ २५ ॥ इति श्रीमद्भागवते दशमस्कंधपूर्वार्धे टीकायां षड्-

वस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १७ ॥ बहूनि संति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १८ ॥ एष वः श्रेय आधास्यद्गोपगोकुलनंदनः ॥ अनेन सर्वदुर्गाणि यूयमंजस्तरिष्यथ ॥ १९ ॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥ २० ॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वंति मानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षा-निवासुराः ॥ २१ ॥ तस्मान्नंद कुमारोऽयं नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२ ॥ इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते ॥ मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥ २३ ॥ इति नंदवचः श्रुत्वा गर्गगीतं व्रजौकसः ॥ दृष्टश्रुतानुभावास्ते कृष्णस्यामित-तेजसः ॥ मुदिता नंदमानर्चुः कृष्णं च गतविस्मयाः ॥ २४ ॥ देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वाऽनुकं-प्युत्स्मयन् ॥ उत्पाट्यैककरेण शैलमबलो लीलोच्छिलींध्रं यथा बिभ्रद्गोष्ठमपान्महेंद्रमदभित्प्रीयान्न इंद्रो गवाम् ॥ २५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे षड्विंशतितमोऽध्यायः ॥ २६ ॥ श्रीशुक उवाच ॥ गोवर्धने धृते शैल आसाराद्रक्षिते व्रजे ॥ गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च ॥ १ ॥ विविक्त उपसंगम्य व्रीडितः कृतहेलनः ॥ पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥ २ ॥ दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः ॥ नष्टत्रिलोकेशमद इंद्र आह कृतांजलिः ॥ ३ ॥ इंद्र उवाच ॥ विशुद्धसत्त्वं तव धाम शांतं तपोमयं ध्वस्तरजस्तमस्कम् ॥ मायामयोऽयं गुणसंप्रवाहो

विंशोऽध्यायः ॥ २६ ॥ सप्तविंशे तदालक्ष्य कृष्णस्य प्राभवं परम् ॥ वर्ण्यते सुरभींद्राभ्यामभिषेकमहोत्सवः ॥ १ ॥ गोवर्धने धृते शैल इति शक्रस्य भयेनागमने हेतुः आसाराद्रक्षिते व्रज इति सुरभे-र्हर्षेणागमने ॥ १ ॥ तत्रेंद्र आगत्य किं कृतवाँस्तदाह विविक्त उपसंगम्येत्यादिना । अथाह सुरभिरित्यतः प्राक्तनेन ग्रंथेन । विविक्ते एकांते । पादयोः पस्पर्श नमश्चकार ॥ २ ॥ अस्य श्रीकृष्णस्य श्रुतश्चासावनुभावश्च श्रुतानुभावः दृष्टः श्रुतानुभावो येन स इंद्रः । नष्टस्त्रिलोकेशोऽहमिति मदो यस्य सः ॥ ३ ॥ तत्र ममापराधं क्षमस्वेति वक्तुं तव तावदपराधो नास्त्येव त्वयाऽनुग्रह एव कृत इत्याह चतुर्भिः । विशुद्धसत्त्वमिति । धाम स्वरूपं शांतमेकरूपमतश्च तपोमयं प्रचुरज्ञानं सर्वज्ञमित्यर्थः । कुतः । ध्वस्तरजस्तमस्कं ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् अतएवायमस्मदादिषु दृश्यमानो

समृद्धा आशिषो यासां ताः ॥ १ ॥ रासक्रीडा रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषस्तां क्रीडाम् । अन्योन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह ॥ २ ॥ तन्माहात्म्यमभिनयेन दर्शयति । रासो-
त्सव इत्यक्षरचतुष्टयाधिकेन सार्धेन । तासां मंडलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन तेनैव कंठे गृहीतानामुभयत आलिंगितानाम् । कथंभूतेन । यं सर्वाः स्त्रियः स्वनिकटं मामेवाश्लिष्टवा-
निति मन्येरंस्तेन । एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः । नन्वेकस्य कथं तथा प्रवेशः । सर्वसन्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तम् । योगेश्वरेणेति । अचिन्त्यशक्तिनेत्यर्थः
॥ ३ ॥ तावत्तत्क्षणमेवौत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकुलं संकीर्णं नभो बभूव ॥ ४ ॥ ततस्य भगवतः श्रीकृष्णस्यामलं निर्मलं यशो जगुरिति ॥ ५ ॥ सप्रियाणां कृष्ण-
सहितानाम् । तुमुलः संकीर्णः ॥ ६ ॥ महामरकतो नीलमणिरिव हैमानां मणीनां मध्ये ताभिः स्वर्णवर्णाभिराश्लिष्टाभिः शुशुभे । गोपीदृष्ट्यभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनम् ॥ ७ ॥

गोपचिताशिषः ॥ १ ॥ तत्रारभत गोविंदो रासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥ रासोत्सवः संप्रवृत्तो गोपीमंडल-
मंडितः ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कंठे स्वनिकटं स्त्रियः ॥ ३ ॥ यं मन्येरन्नभस्तावद्विमानशतसंकुलम् ॥
दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥ ततो दुंदुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥ जगुर्गंधर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥ वल-
यानां नूपुराणां किंकिणीनां च योषिताम् ॥ सप्रियाणामभूच्छब्दस्तुमुलो रासमंडले ॥ ६ ॥ तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ॥ मध्ये मणीनां
हैमानां महामरकतो यथा ॥ ७ ॥ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुंडलैर्गंडलोलैः ॥ स्विद्यन्मुख्यः कबररशना-
ग्रंथयः कृष्णवध्वो गायंत्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥ उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमा-
वृतम् ॥ ९ ॥ काचित्समं मुकुंदेन स्वरजातीरमिश्रिताः ॥ उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात्
॥ १० ॥ काचिद्रासपरिश्रांता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कंधं श्लथद्वलयमल्लिका ॥ ११ ॥ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥
चंदनालिप्तमाघ्राय हृष्टरोमा चुचुंब ह ॥ १२ ॥ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितम् ॥ गंडं गंडे संदधत्या अदात्तांबूलचर्वितम ॥ १३ ॥

स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह । पादन्यासैरिति । भुजविधुतिभिः करचालनैर्भज्यमानैर्मध्यैश्चलद्भिः कुचैश्च पटैश्च गंडलोलैर्गंडेषु चंचलैः । स्विद्यन्मुख्यः स्विद्यंति स्वेदमु-
द्गिरंति मुखानि यासां ताः । कबरेषु रशनासु च ग्रंथयो दृढा यासाम् । यद्वा तेषु तासु चाग्रंथयः शिथिलग्रंथय इत्यर्थः । तत्र नानामूर्तिः कृष्णो मेघचक्रमिव तास्तु बहुविधास्तडित इव स्वेदस्तुषार
इव गीतं गर्जितमिवेति यथासंभवमूह्यम् ॥ ८ ॥ नृत्यमाना नृत्यंत्यः । रक्तकंठ्यो नानारागैरनुरंजितकंठ्यः । कृष्णस्याभिमर्शेन संस्पर्शेन मुदिताः । इदं विश्वम् ॥ ९ ॥ मुकुंदेन सह स्वरजातीः षड्-
जादिस्वरालापगतीः । अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः । प्रीयमाणेन संमानिता तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती ॥ १० ॥ एवं नृत्यगीतादिना श्रीकृष्ण-
संमानितानां तासामतिप्रीतिविलसितं वृत्तमाह । काचिदिति । श्लथंति वलयानि मल्लिकाश्च यस्याः सा ॥ ११ ॥ उत्पलस्य सौरभमिव सौरभं यस्य तं बाहुम् ॥ १२ ॥ नाट्येन नृत्येन विक्षिप्ता-

श्रंचलयोः कुंडलयोस्त्विषेण त्विषा मंडितं गंडं कपोलं तथाभूते स्वगंडे संदधत्याः संयोजयंत्याः ॥ १३ ॥ कूजती नूपुरे मेखला च यस्याः सा ॥ १४ ॥ एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजन्हुरित्याह । गोप्य इति ॥ १५ ॥ तत्र वादकेषु गायकेषु गंधर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसंपत्तिं दर्शयन्रासससंभ्रममाह । कर्णोत्पलेति । कर्णोत्पलैश्चालकविटंकैरलकालंकृतैः कपोलैश्च धर्मैश्च पादेषु श्रीः शोभा यासां ताः । घोषाः किंकिण्यः । वलयनूपुरघोषैर्वाद्यैर्वादित्रैः । स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः । एतेन तालगतिर्गतुष्टाः केशाः सशिरःकंपं पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम् । भगवता सह ननृतुः । क्व । भ्रमरा एव गायका यस्यां राससभायाम् ॥ १६ ॥ यथा गोप्यो नानाविभ्रमैर्भगवता सह विजन्हुरेवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह । एवमिति । तद्विलासानभिभूतस्यैव रतौ दृष्टांतः । यथाऽर्भक इति । स्वप्रतिबिंबैर्विभ्रमः क्रीडा यस्य स इव । अनेनैतद्दर्शितम् । स्वीयमेव सर्वकलाकौशलं सौगंध्यलावण्यमाधुर्यादि च तासु संचार्य ताभिः सह रेमे यथाऽर्भकः स्वप्रतिबिंबैरिति ॥ १७ ॥ तास्तु भगवद्विलासैराकुला बभूवुरित्याह । तदंगेति । तस्यांगसंगेन प्रकृष्टा मुत्प्रीतिस्तया आकुला-

नृत्यंती गायती काचित्कूजन्नूपुरमेखला ॥ पार्श्वस्थाऽच्युतहस्ताब्जं श्रांताऽधात्स्तनयोः शिवम् ॥ १४ ॥ गोप्यो लब्ध्वाऽच्युतं कांतं श्रिय एकांतवल्लभम् ॥ गृहीतकंठ्यस्तद्दोर्भ्यां गायंत्यस्तं विजह्रिरे ॥ १५ ॥ कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥ गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥ एवं परिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमे रमेशो व्रजसुंदरीभिर्यथाऽर्भकः स्वप्रतिबिंबविभ्रमः ॥ १७ ॥ तदंगसंगप्रमुदाकुलेंद्रियाः केशान्दुकूलं कुचपट्टिकां वा ॥ नांजः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥ १८ ॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥ कामार्दिताः शशांकश्च सगणो विस्मितोऽभवत् ॥ १९ ॥ कृत्वा तावंतमात्मानं यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥ तासामतिविहारेण श्रांतानां वदनानि सः ॥ प्रामृजत्करुणः प्रेम्णा शंतमेनांग पाणिना ॥ २१ ॥ गोप्यः स्फुरत्पुरटकुंडलकुंतलत्विड्गंडश्रिया सुधितहासनिरीक्षणेन ॥ मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥ ताभिर्युतः श्रममपोहितुमंगसंगघृष्टस्रजः सकुचकुंकुमरंजितायाः ॥ गंधर्वपालिभिरनुद्रुत आविशद्वाः श्रांतो गजीभिरिभराडिव

न्यवशानींद्रियाणि यासां ताः । विश्लथबंधान्केशादीनंजसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं न समर्था बभूवुः । विस्रस्ता माला आभरणानि च यासां ताः ॥ १८ ॥ न केवलं ता एवाकुलेंद्रियाः किंतु देव्योऽपीत्याह । कृष्णविक्रीडितमिति । किंच शशांकश्चेति । अनेनैतत्सूचितम् । शशांकेन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्रतत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजन्हुरिति ॥१९॥ किंच कृत्वेति । अयं भावः । कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नंदगोपसुतं देवि पतिं मे कुरु ते नम इति प्रत्येकं ताभिः प्रार्थनाद्भगवताऽपि यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा इति तथैव प्रतिश्रुतत्वात्तावंतमात्मानं कृत्वा रेमे इति । यावतीर्यावत्यः ॥ २० ॥ कृपातिशयमाह । तासामिति ॥ २१ ॥ ततोऽतिहृष्टानां गोपीनां चरितमाह । गोप्य इति । स्फुरतां स्वर्णकुंडलानां कुंतलानां च त्विषा गंडेषु या श्रीस्तया सुधितेनामृतायितेन हाससहितेन निरीक्षणेन च ऋषभस्य पत्युः कृष्णस्य मानं दधत्यः पूजां कुर्वंत्यस्तत्कर्माणि जगुः । तस्य कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥ अथ जलकेलिमाह । ताभिरिति । तासामंगसंगेन घृष्टा संमर्दिता या स्रक् तस्या अतएव तासां कुचकुंकुमेन रंजितायाः संबंधिभिर्गंधर्वपालिभिर्गंधर्वपा गंधर्वपतय

इव गायंतो येऽलयस्तैरनुद्रुतोऽनुगतः स कृष्णो वाः उदकमाविशत् । भिन्नसेतुर्विदारितवप्रः । स्वयं चातिक्रांतलोकवेदमर्यादः ॥ २३ ॥ स्वरतिरात्मारामोऽपि । अत्र गोपीमंडलेऽम्भसि वा ॥ २४ ॥ स्थलजलक्रीडे दर्शिते वनक्रीडां दर्शयति । ततश्चेति । यमुनाया उपवने जलस्थलप्रसूनानां गंधो यस्मिंस्तेनानिलेन जुष्टानि दिशां तटान्यंता यस्मिन् । यद्वा दिशश्च तटं स्थलं च यस्मिन्नुपवने । भृंगाणां प्रमदानां च गणेनावृतः ॥ २५ ॥ रासक्रीडां निगमयति । एवमिति । स कृष्णः सत्यसंकल्पोऽनुरागिस्त्रीकदंबस्थ एवं सर्वा निशाः सेवितवान् । शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूता निशाः । यद्वा निशा इति द्वितीयाऽत्यंतसंयोगे । शृंगाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु या कथास्ताः सिषेव इति । एवमप्यात्मन्येवावरुद्धः सौरतश्चरमधातुर्न तु स्खलितो यस्येति कामजयोक्तिः ॥ २६ ॥ २७ ॥ प्रतिकूलमधर्ममित्यर्थः । आचरत्कृतवान् । न चेदमधर्ममात्रं कलंजभक्षणादिव किंतु महासाहसमित्याह । परदाराभिमर्शनमिति

भिन्नसेतुः ॥ २३ ॥ सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णोक्षितः प्रहसतीभिरितस्ततोऽङ्ग ॥ वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेंद्रलीलः ॥२४॥ ततश्च कृष्णोपवने जलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः ॥२५॥ एवं शशांकांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ॥ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयः ॥२६॥ राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥ स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता ॥ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥ २८ ॥ आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ॥ किमभिप्राय एतं नः संशयं छिंधि सुव्रत ॥ २९ ॥ श्रीशुक उवाच ॥ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥ नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ॥ विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥ ३१ ॥ ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥ तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥ कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥ विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥ ३३ ॥ किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥ यत्पादपंकजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबंधाः ॥ स्वैरं चरंति मुनयोऽपि न नह्यमाना-

॥ २८ ॥ आप्तकामस्य नायमधर्म इति चेद्यद्येवं कामाभावान्निंदितं केनाभिप्रायेण कृतवानिति पृच्छति । आप्तकाम इति ॥ २९ ॥ परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह । धर्मव्यतिक्रम इति । साहसं च दृष्टं प्रजापतींद्रसोमविश्वामित्रादीनां तच्च तेषां तेजस्विनां दोषाय न भवतीति ॥ ३० ॥ तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेनान्योऽपि कुर्यादित्याशंक्याह । नैतदिति । अनीश्वरो देहादिपरतंत्रः । यथा रुद्रव्यतिरिक्तो विषमाचरन् भक्षयन् ॥ ३१ ॥ कथं तर्हि सदाचारस्य प्रामाण्यमत आह । ईश्वराणामिति । तेषां वचः सत्यमतस्तदुक्तमाचरेदेव आचरितं तु क्वचित्सत्यमतः स्ववचोयुक्तं तेषां वचसा यद्यद्युक्तमविरुद्धं तत्तदेवाचरेत् ॥ ३२ ॥ ननु तर्हि तेऽपि किमेवं साहसमाचरंति तत्राह । कुशलेति । प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नान्यदित्यर्थः ॥३३॥ प्रस्तुतमाह । किमुतेति । कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥ एतदेव स्फुटीकरोति । यस्य पादपंकजपरागस्य निषेवणेन तृप्ताः । यद्वा । यस्य पादपंकजपरागे निषेवा

येषां ते च ते तृप्ताश्चेति भक्ता इत्यर्थः । तथा ज्ञानिनश्च न नह्यमाना बंधनमप्राप्तवंतः ॥ ३५ ॥ परदारत्वं गोपीनामंगीकृत्य परिहृतमिदानीं भगवतः सर्वांतर्यामिणः परदारसेवा नाम न काचिदित्याह । गोपीनामिति । योंऽतश्चरत्यध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडनेन देहभाङ्नत्वस्मदादितुल्यो येन दोषः स्यादिति ॥ ३६ ॥ नन्वेवं चेदाप्तकामस्य निंदिते कुतः प्रवृत्तिरित्यत आह । अनुग्रहायेति । शृंगाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान्कर्तुमिति भावः ॥ ३७ ॥ नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवमेवेति वदंति तत्राह । नासूयन्निति । एवंभूतैश्वर्याभावे तथा कुर्वंतः पापा ज्ञेया इति भावः ॥ ३८ ॥ ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते ॥ ३९ ॥ भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह । विक्रीडितमिति । अचिरेण धीरः सन्हृद्रोगं

स्तस्येच्छयात्तवपुषः कुत एव बंधः ॥ ३५ ॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योंऽतश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥ ३६ ॥ अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥ भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥ ३७ ॥ नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥ ३८ ॥ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ॥ अनिच्छंत्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ३९ ॥ विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे रासक्रीडायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ श्रीशुक उवाच ॥ एकदा देवयात्रायां गोपाला जातकौतुकाः ॥ अनोभिरनडुद्युक्तैः प्रययुस्तेंऽबिकावनम् ॥ १ ॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेंऽबिकाम् ॥ २ ॥ गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥ रजनीं तां महाभागा नंदसुनंदकादयः ॥ ४ ॥ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः ॥ यदृच्छयाऽऽगतो नंदं शयानमुरगोऽग्रसीत् ॥ ५ ॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥ तस्य चाक्रंदितं श्रुत्वा गोपालाः सहसोत्थिताः ॥ ग्रस्तं च दृष्ट्वा विभ्रांताः सर्पं विव्यधुरुल्मुकैः ॥ ७ ॥ अलातैर्दह्यमानोऽपि नामुंचत्तमुरंगमः ॥ तमस्पृशत्पदाऽभ्येत्य भगवान्सात्वतांपतिः ॥ ८ ॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ॥ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥ तमपृच्छद्धृषीकेशः प्रणतं समु-

कामामाशु अपहिनोति परित्यजतीति ॥ ४० ॥ सेयं श्रीपरमानंदसेविश्रीधरनिर्मिता ॥ श्रीभागवतभावार्थदीपिका दशमाश्रया ॥ १ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ चतुस्त्रिंशेऽहिना ग्रस्तं नंदं हरिरमूमुचत् ॥ विद्याध्रं चांगिरःशापाच्छंखचूडं तथावधीत् ॥ १ ॥ रासापदेशतः कामं किंकरीकृत्य कामतः ॥ अनुगृह्णन्वशं निन्ये तथा विद्याधराधिपम् ॥ २ ॥ तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसंगं दर्शयति । एकदेति ॥ १ ॥ २ ॥ गावो गाः । मधु मधुरम् । मध्वन्नं मधुना सहितमन्नम् ॥ ३ ॥ जलमात्रं प्राश्योपोषितास्तां निशां तत्र ऊषुर्न्यवसन् ॥ ४ ॥ महानहिरजगरः । उरगः उरसा गच्छन्नित्यलक्षितत्वमुक्तम् । अग्रसीज्जग्रास ॥ ५ ॥ ६ ॥ विव्यधुस्ताडयामासुः । उल्मुकैर्ज्वलत्काष्ठैः ॥ ७ ॥ अला-

तैस्तैरेवोल्मुकैः ॥ ८ ॥ विद्याधरैरभ्यर्चितं पूजितम् ॥ ९ ॥ गोपेष्वात्मन ऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छन् । दीप्यमानेन वपुषा समवस्थितम् ॥ १० ॥ यः परया शोभया प्रकाशते स भवान्क
इति ॥ ११ ॥ १२ ॥ प्राह समुपहसितवानस्मि प्रलब्धैरुपहसितैः । मदीयेनैव पापेन निमित्तेन ॥ १३ ॥ यद्यतः शापात् ॥ १४ ॥ आपृच्छे स्वं लोकं गंतुमनुज्ञां याचे । हे अमीवहन्दुःखनाशन !
॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अहिदेहं निहत्यैवं प्रागुन्मत्तं सुदर्शनम् ॥ तद्वदुन्मादिनं कृष्णः शंखचूडमताडयत् ॥ तत्प्रसंगमाह । कदाचिदिति ॥ २० ॥ विरजोंबराविति । विरजसी

पस्थितम् ॥ दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथं जुगुप्सितामेतां गतिं वा प्रापितो-
ऽवशः ॥ ११ ॥ सर्प उवाच ॥ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः ॥ श्रिया स्वरूपसंपत्त्या विमानेनाचरन्दिशः ॥ १२ ॥ ऋषीन्विरूपानंगिरसः
प्राहसं रूपदर्पितः ॥ तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना ॥ १३ ॥ शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ॥ यदहं लोकगुरुणा पदा
स्पृष्टो हताशुभः ॥ १४ ॥ तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् ॥ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥ प्रपन्नोऽस्मि महायो-
गिन्महापुरुष सत्पते ॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥ १६ ॥ ब्रह्मदंडाद्विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ॥ यन्नाम गृह्णन्नखिलान् श्रोतॄ-
नात्मानमेव च ॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ १७ ॥ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवंद्य च ॥ सुदर्शनो दिवं यातः
कृच्छ्रान्नंदश्च मोचितः ॥ १८ ॥ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ॥ समाप्य तस्मिन्नियमं पुनर्व्रजं नृपा ययुस्तत्कथयंत
आदृताः ॥ १९ ॥ कदाचिदथ गोविंदो रामश्चाद्भुतविक्रमः ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ २० ॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्ध-
सौहृदैः ॥ स्वलंकृतानुलिप्तांगौ स्रग्विणौ विरजोंबरौ ॥ २१ ॥ निशामुखं मानयंतावुदितोडुपतारकम् ॥ मल्लिकागंधमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥
जगतुः सर्वभूतानां मनःश्रवणमंगलम् ॥ तौ कल्पयंतौ युगपत्स्वरमंडलमूर्च्छितम् ॥ २३ ॥ गोप्यस्तद्गीतमाकर्ण्य मूर्छिता नाविदन्नृप ॥ स्रंसद्दुकूल-
मात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥ एवं विक्रीडितोः स्वैरं गायतोः संप्रमत्तवत् ॥ शंखचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥ तयोर्निरी-
क्षतो राजंस्तन्नाथं प्रमदाजनम् ॥ क्रोशंतं कालयामास दिश्युदीच्यामशंकितः ॥ २६ ॥ क्रोशंतं कृष्णरामेति विलोक्य स्वपरिग्रहम् ॥ यथागा दस्युना
ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥ माभैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥ स वीक्ष्य

निर्मले अंबरे ययोस्तौ ॥ २१ ॥ किंच । निशाप्रवेशं सत्कुर्वंतौ उदित उडुपस्तारकाश्च यस्मिंस्तत् । मल्लिकागंधेन मत्ता अलयो यस्मिंस्तत् ॥ २२ ॥ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि तौ
स्वरमंडलस्य मूर्छितं युगपत्कल्पयंतौ । मनःश्रवणयोर्मंगलं यथा भवति तथा जगतुरगायतामिति ॥ २३ ॥ मूर्च्छितास्तद्गीतलीनचित्ताः स्रंसद्दुकूलं यस्मात्तमात्मानं देहम् । स्रस्ता केशेभ्यः
स्रजो यस्य तं च ततो नाविदन् ॥ २४ ॥ २५ ॥ निरीक्षतोर्निरीक्षमाणयोः । तौ नाथौ यस्य तं प्रमदाजनं कालयामास । हठात्प्रेरयामास ॥ २६ ॥ दस्युना व्याघ्रेण ॥ २७ ॥ मा भैष्ट भयं न

प्राप्नुतेत्यभयवाचौ ॥ २८ ॥ २९ ॥ ३० ॥ शिरसा सह चूडामणिं जहारेत्यर्थः ॥ ३१ ॥ ३२ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ पंचत्रिंशे वनं याते कृष्णे गोकुलयोषितः ॥ युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥ १ ॥ एवं रात्रिषु कृष्णेन स्वैरमभिरमितानां दिवा तद्विरहितानामनुगीतेन दिननिस्तारप्रकारमाह । गोप्य इति । दुःखेन कृच्छ्रेण ॥ १ ॥ वामबाहुकृतवामकपोल इत्यादीनि द्वादशयुगलानि । हे गोप्यो ! वामे बाहौ तन्मूले कृतोऽर्पितो वामकपोलो येन सः बल्गिते नर्तिते भ्रुवौ येन स वल्गितभ्रूर्मुकुंदः । अधरे अर्पितं वेणुं कोमलाभिरंगुलिभिराश्रिता मार्गाः सप्तस्वरछिद्राणि यस्य तं यत्र यदा ईरयति वादयति ॥ २ ॥ तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेणुगीतमुपधार्याकर्ण्य प्रथमं विस्मितास्ततः काममार्गणेभ्यः समर्पितानि चित्तानि याभिस्तास्तत्परवशा इत्यर्थः । सलज्जाः सत्यः कश्मलं मोहं ययुः । अत्र लिंगम् । अपस्मृता विस्मृता नीव्यो याभिरिति । अत एवंभूतस्य कृष्णस्य विरहं कथं सहाम इति सर्वत्र वाक्यशेषः ॥ ३ ॥ हंत हे अबला ! इदं चित्रं शृणुत । हारहासो हारवद्विशदो हासो यस्य सः । यद्वा वेणुवादनेनाधोवदनेन हसतो हारेषु

तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥ २९ ॥ तमन्वधावद्गोविंदो यत्र यत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः ॥ ३० ॥ अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः ॥ जहार मुष्टिनैवांग सहचूडामणिं विभुः ॥ ३१ ॥ शंखचूडं निहत्यैवं मणिमादाय भास्वरम् ॥ अग्रजायाददत्प्रीत्या पश्यंतीनां च योषिताम् ॥ ३२ ॥ इति श्रीमद्भावते महापुराणे दशमस्कंधे पूर्वार्धे शंखचूडवधो नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥ श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥ कृष्णलीलाः प्रगायंत्यो निन्युर्दुःखेन वासरान् ॥ १ ॥ गोप्य ऊचुः ॥ वामबाहुकृतवामकपोलो वल्गितभ्रूरधरार्पितवेणुम् ॥ कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः ॥ २ ॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ॥ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥ हंत चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ॥ नंदसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥ वृंदशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दंतदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥ बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडंबः ॥ कर्हिचित्सबल आलि सगोपैर्गाः समाह्वयति यत्र मुकुंदः ॥ ६ ॥ तर्हि भग्नगतयः सरितो वै तत्पदांबुजरजोनिलनीतम् ॥ स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः

स्फुरन्हासो यस्य सः । यद्वा हारवद्वक्षसि शोभमानो हासो यस्य सः । यद्वा हाराणां हास इव विशदा स्फूर्तिर्यस्मिन्नुरसीति । उरसि स्थिरा विद्युदिव लक्ष्मीर्यस्य सः । यर्हि यदा कूजितवेणुर्भवति ॥ ४ ॥ तदा व्रजे वृषा मृगा गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते । आराद्दूरादेव दंतैर्दष्टाः कवला ग्रासा यैस्ते धृता उत्तंभिताः कर्णा यैस्ते निद्रिता इव लिखितचित्रमिव चासन् । अविदुषां तिरश्चामिदमतिचित्रमित्यर्थः ॥ ५ ॥ किंच अचेतनासु सरित्सु तदतीव चित्रमित्याहुः । हे आलि सखि ! बर्हिणो मयूरस्तस्य स्तबका मयूरपिच्छा धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिवर्हः परिकरस्तं विडंबयत्यनुकरोतीति तथा स मुकुंदो गोपैः सह । वेणुनेत्युपरितनमत्रापि ज्ञातव्यम् । यत्र यदा गाः सम्यगाह्वयति ॥ ६ ॥ तर्हि तदा । तद्ध्वनिश्रवणात् अनिलेनानीतं तस्य पदांबुजरजः स्पृहयंत्य इव भग्नगतयः सरितो वै निश्चितं वयमिव ता अप्यबहुपुण्या यतो न प्राप्नुवंति । केवलं प्रेम्णा वेपिता भुजास्तरंगा यासां ताः । स्तिमिता निश्चला आपो

यासां ताः । गोप्योऽपि लोचनयोःस्तिमितजला भवंतीति ॥ ७ ॥ स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः । अनुचरैर्गोपैर्देवादिभिर्वा । मुग्धानां वाक्यमादिपुरुष इवेति । अचलभूतिर्निश्चलश्रीः । वेणुना तत्तन्नाम्ना गानेन ॥ ८ ॥ तदा प्रणता भारेण विटपाः शाखा यासां ता वनगता लताः स्वस्मिन्विष्णुं प्रकाशमानं सूचयंत्य इव मधुधारा ववृषुः । स्मेति विस्मये । तरवश्च तथा तत्पत्नीनामपि तथैवानंद इति भावः । एतानि विष्णुव्यक्तिलक्षणानि ॥ ९ ॥ किंच सरसि कमलवनेषु विहरतां पक्षिणामपि मन आकर्षणं तद्गीतं किं पुनरन्येषामित्याहुः । दर्शनीयतिलक इति । दर्शनीयस्तिलको यस्य । दर्शनीयानां सुंदराणां मध्ये मुख्य इति वा । वनमालासु या दिव्यगंधा तुलसी तस्या मधुना मत्तैरलिकुलैरलघु उच्चैरभीष्टमनुकूलं गीतमाद्रियन्नादरेण गृह्णन् यर्ह्यधरे संधितवेणुर्भवति ॥१०॥ तर्हि ये सरसि सारसा हंसा अन्ये च विहंगास्ते चारुणा गीतेन हृतचेतस एत्य तत आगत्य हरिमुपासताभजंत । तत्समीपे उपविविशुर्वा । हंतेति विषादे ॥ ११ ॥ मेघोऽपि हरिं सेवत इत्याहुः । सहबल इति । भो व्रजदेव्यो गोप्यः! सहबलः सरामः कृष्णः स्रग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य । यद्वा मुक्ताफलस्रगापीडेन विलासो यस्येति । क्षितिभृतः सानुषु गिरेस्त-

॥ ७ ॥ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ॥ वनचरो गिरितटेषु चरंतीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥ ८ ॥ वनलतास्तरव आत्मनि विष्णुं व्यंजयंत्य इव पुष्पफलाढ्याः ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥ दर्शनीयतिलको वनमालादिव्यगंधतुलसीमधुमत्तैः ॥ अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हि संधितवेणुः ॥ १० ॥ सरसि सारसहंसविहंगाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हंत मीलितदृशो धृतमौनाः ॥ ११ ॥ सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरंभति विश्वम् ॥ १२ ॥ महदतिक्रमणशंकितचेता मंदमंदमनुगर्जति मेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥ विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ॥ तव सुतः सति यदाऽधरबिंबे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥ सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ॥ कवय आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥ निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ॥ व्रजभुवः शमयन्खु-

टेषु वर्तमानः स्वयं जातहर्षो विश्वं हर्षयन्यदा वेणुरवेणोपरंभति निनादयति नादयति । नादेन पूरयतीत्यर्थः ॥ १२ ॥ तदा मेघो महतः कृष्णस्यातिक्रमणे शंकितं चेतो यस्य स न पुरतो याति न चोच्चैर्गर्जति किंतु तत्रैव स्थितः सन्वेणुरवमनु मंदं मंदं गर्जति । किंच सुहृदं विश्वार्तिहरणादिसाम्यात्सुहृत्कृष्णस्तं सुमनोभिरभ्यवर्षत् । अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तम् । तुषारो वा कुसुमतया कल्पितः स एव वा देवतारूपोऽभ्यवर्षदिति। प्रतपादातपात्त्रायत इति प्रतपत्रं छत्रं तच्छायया कुर्वन्निति ॥१३॥ अपि च महदेतदाश्चर्यमित्याहुः । विविधेति । हे सति यशोदे! तव सुतो नानागोपक्रीडासु विदग्धो निपुणो वेणुवाद्ये विषये निजैव शिक्षा यासु ताः । स्वोत्प्रेक्षिता नत्वन्यतः श्रुता इत्यर्थः । स्वरजातीर्निषादऋषभादिस्वरालापभेदाननयद्दर्शितवान् ॥१४॥ ततः स्वरजातीः सवनशो मंद्रमध्यमतारभेदेन यतो गीतध्वनिरागतस्ततश्चानता कंधरा चित्तं च येषां ते उपधार्य समाकर्ण्य कवयः कोविदा अपि न निश्चितं तत्त्वं तद्भेदो यैस्ते कश्मलं मोहं ययुरिति ॥ १५ ॥ अस्माकं तु मोहं किं ब्रूम इत्याहुः । निजपदाब्जदलैरिति । ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैर्निजानि पदान्येवाब्जदलानि तैर्व्रजभुवः खुराक्रमणव्यथां शमयन्त्वप्संगा

देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो वादितवेणुः सन्यद्व्रजति ॥ १६ ॥ तेन निमित्तेन सविलासवीक्षणेनार्पितो मनोभववेगो यासु ता वयम् । कुजा वृक्षास्तेषां गतिं गमिताः सत्यो मोहने न विदामः कबरं वा वसनं वेति ॥ १७ ॥ किंच । मणिधरो मणीन् ग्रथितान्गोगणनार्थं धरतीति मणिधरः क्वचिद्देशे एतैर्मणिभिर्गा आसमंताद्गणयन् । तथा दयितगंधा या तुलसी तस्या मालया सह वर्तमानः प्रणयिनः प्रियस्यानुचरस्यांसे भुजं प्रक्षिपन् यत्र कदाचिदगायत ॥ १८ ॥ तदा क्वणितवेणुरवेण वंचितान्यपहतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य गृहिण्यो भार्या गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसतान्वासत न न्यवर्ततेत्यर्थः । कुतः । यतो विमुक्ता गृहाशा याभिस्ता गोपिका इव ता अपि ह्येवमेवान्वासतेति ॥ १९ ॥ तदेवं वृंदावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि परावर्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयंति । कुंददामकृतकौतुकवेष इति । गोपीनामुत्सवाय कुंददामभिः कृतः कौतुकेनोत्सवेन वेषोऽलंकारो येन सः। हे अनघे यशोदे ! तव वत्सः पुत्रो नंदसूनुः कृष्णः । यद्वा सहैव बह्व्यः कथयंत्यः काश्चित्तव वत्स इति काश्चिन्नंदसूनुरिति चाहुः । नर्मदो हर्षदः सन्यदा विजहार क्रीडति स्म ॥२०॥ तदा मलयजस्य चंदनस्येव सुरभिः शीतश्च यः स्पर्शस्तेन तं कृष्णं मानयन्ननुकूलं यथा तथोपवाति वीजयति । यद्वा मलयजो दक्षिणो वायुः । यद्वा मलयजस्य कृष्णेन स्वांगेऽनुलिप्तस्य स्पर्शेन मानयन्निति ।

रतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥ व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥ कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥ मणिधरः क्वचिदागणयन्गा मालया दयितगंधतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन्भुजमगायत यत्र ॥ १८ ॥ क्वणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥ कुंददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ॥ नंदसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥ मंदवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन ॥ वंदिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥ वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनांते गतिवेणुरनुगेडितकीर्तिः ॥ २२ ॥ उत्सवं श्रमरुचाऽपि दृशीनामुन्नयन्खुररजश्छुरितस्रक् ॥ दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥ मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ॥ बदरपांडुवदनो मृदुगंडं मंडयन्कनककुंडललक्ष्म्या ॥ २४ ॥ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष

किंच वंदिन इव स्तावकाः संतो गंधर्वादिगणा वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत ॥ २१ ॥ आयांतमालोक्य हृष्यंत्यः परस्परमूचुः । वत्सल इति । व्रजस्य गवां च यद्वा व्रजे निबद्धानां गवामनुकंप्यानामस्माकमित्यर्थः । वत्सलो हितकृत् । कुतः । यद्यस्मादगध्रः अगं धरतीति गोवर्धनोद्धरणः । बहुशो रक्षणस्योपलक्षणमेतत् । वृद्धैर्ब्रह्मादिभिः पथि वंद्यमानचरण इति । ते सेर्ष्यं सायं शीघ्रमागंतुं न ददतीत्यर्थः । उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः ॥ २२ ॥ श्रमयुक्तयाऽपि कांत्या नेत्राणां हर्षमुन्नयन्नुच्चैः प्रापयन् । खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य । सुहृदामस्माकमाशिषो मनोरथस्य दित्सया दातुमिच्छया देवक्या जठरे भवतीति तथा स एवोडुराजश्चंद्रो निर्वृतिहेतुत्वेन स एष एतीति ॥ २३ ॥ अतिसंभ्रमेण काश्चित्समीपमायांतं कथयंति ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य सः । बदरपांडुवदनः ईषत्पक्वबदरवत्पांडुरं वदनं यस्य सः । अत्र हेतुः । कनककुंडलयोर्लक्ष्म्या कांत्या मृदू कोमलौ गंडौ यस्मिंस्तद्वदनं मंडयन्निति कोमलगंडस्थलं वा शोभयन्निति ॥ २४ ॥ यदुपतिरिति देवकीजठरभूरिति च प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज इत्यादिगर्गवाक्यप्रसिद्ध्योक्तं यद्वा सख उदेयिवान्सात्वतां कुल इतिवज्ज्ञात्वा काश्चिद्वदं-

तीति । गजेंद्रगतिश्चंद्र इव प्रसन्नवक्त्रे व्रजगवामस्माकमनंतं दिनतापं च शमयन्नुपयाति एष समीपमायातीति ॥ २५ ॥ एवं विरहदुःखेनापि नु अहो कृष्णलीला एव गायंत्यस्तस्मिन्नाविशं चेतना जीवितं यासां तास्तस्मिन्नेव मनः संकल्परूपं यासां ता अतो महानुदय उत्सवो यासां ता अहःस्वपि रेमिरे ॥ २६ ॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धे टीकायां पंचत्रिंशोऽध्यायः ॥ ३५ ॥ षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ ॥ वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ १ ॥ गोपीगिरामांतरगायातं शंखचूडं निहत्य सः ॥ अहन्न गोपीमहानंदागहं दुष्टमरिष्टकम् ॥ २ ॥ एवं देवगंधर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्तमाने तद्विरुद्धार्थांतरगाधिकारार्थमथशब्दः । तर्हि तदा । वृषभाकृतिरसुरः । तं वर्णयति सार्धत्रयेण । महांतौ ककुत्कायौ यस्य । खुरैर्विदारितां महीं कंपयन् ॥ १ ॥ रंभमाणो वृषभजातिशब्दं कुर्वन् । विलिखन् विदारयन् । उद्यम्योर्ध्वं कृत्वा । वप्राणि तटान्युत्क्षिपन् ॥ २ ॥ किंचित्किंचिच्छकृन्मध्ये मध्ये ईषदीषत्पुरीषं मुंचन् । तथा मूत्रयन्मूत्रमुत्सृजन् । स्तब्धलोचनोऽनिमिषलोचनः यस्य । ध्वनिना गवां नारीणां च ॥ ३ ॥ तत्र । आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः ॥ अत ऊर्ध्वं प्रसूतिः स्यादिति विभागः । ककुदि गलपृष्ठशृंगे ॥ ४ ॥ ५ ॥ कृष्ण कृष्ण रक्षेति ॥ ६ ॥ ७ ॥ इत्येवं वदन् । आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन कोपयन् ॥ ८ ॥ भुजाभोगं भुजा भुजः स एव भोगः सर्पदेहस्तं सर्पदेहाकारं भुजमित्यर्थः । स्वयमच्युतः अन्यान्दुष्टान्हरतीति हरिः । उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमंतो मेघा यस्मिन् ॥ ९ ॥ अग्रे न्यस्ते विषाणाग्रे येन सः । स्तब्धे असृक्कल्ये लोचने यस्य सः । कटाक्षिप्य कटाक्षेण तिर्यङ्निरीक्ष्य ॥ १० ॥ प्रत्यपोवाह प्रतिलोमं व्यनुदत् ॥ ११ ॥ अपविद्धोऽपक्षिप्तः । आपतदाद्रवत् । स्विन्नानि स्वेदयुक्तानि सर्वांगानि यस्य सः । क्रोधमूर्च्छितः

दिनांते ॥ मुदितवक्त्र उपयाति दुरंतं मोचयन्व्रजगवां दिनतापम् ॥ २५ ॥ श्रीशुक उवाच ॥ एवं व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः ॥ रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे वृंदावनक्रीडायां गोपिकायुगलगीतं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ श्रीशुक उवाच ॥ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ महीं महाककुत्कायः कंपयन्खुरविक्षताम् ॥ १ ॥ रंभमाणः खरतरं पदा च विलिखन्महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥ किंचित्किंचिच्छकृन्मुंचन्मूत्रयन्स्तब्धलोचनः ॥ यस्य निर्ह्रादितेनांग निष्ठुरेण गवां नृणाम् ॥ ३ ॥ पतंत्यकालतो गर्भाः स्रवंति स्म भयेन वै ॥ निर्विशंति घना यस्य ककुद्यचलशंकया ॥ ४ ॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलम् ॥ ५ ॥ कृष्ण कृष्णेति ते सर्वे गोविंदं शरणं ययुः ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ ६ ॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ गोपालैः पशुभिर्मंद त्रासितैः किमसत्तम ॥ ७ ॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥ ८ ॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याद्रवत्तूर्णमिंद्रमुक्तोऽशनिर्यथा ॥१०॥ गृहीत्वा शृङ्गयोस्तं वा अष्टादश पदानि सः ॥ प्रत्यपोवाह भगवान्गजः प्रतिगजं यथा ॥ ११ ॥ सोऽपविद्धो भगवता पुनरुत्थाय

क्रोधेन व्याप्तः ॥ १२ ॥ कृत्वा विषाणमुत्पाट्य तेनैव जघान स चापतत् ॥ १३ ॥ मूत्रं च शकृच्च मूत्रशकृत् एकवद्भावः । तदुभयं समुत्सृजन्नित्यर्थः । पादांश्च क्षिपन्नितस्ततश्चालयन् अनवस्थितेक्षणः प्रचलितनेत्रः । कृच्छ्रं कष्टं जगाम । अथ निर्ऋतेर्मृत्योः क्षयं निवासं जगाम । कृच्छ्रं यथा भवति तथा मृत इति वा ॥ १४ ॥ नयनोत्सवो नयनानां मूर्तिमानुत्सवः ॥ १५ ॥ कामं व्रजे वसंतं तं कृष्णं तेन तु विस्मृतम् ॥ नारदः स्मारयामास कंसं दूतगिरेव तु ॥ तदाह । अरिष्ट इति । देवदर्शनो देवर्षिः । यद्वा एवं कथिते एवं भविष्यतीति साक्षाद्देववद्दर्शनं ज्ञानं यस्य सः ॥ १६ ॥ आप्तेनेव नारदेनोक्तमाह । यशोदाया इति । देवक्याः अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह । यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह । रोहिणीपुत्रं रामं च देवक्याः

सत्वरः ॥ आपतत्स्विन्नसर्वांगो निःश्वसन्क्रोधमूर्छितः ॥ १२ ॥ तमापतंतं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथार्द्रमंबरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्च पादाननवस्थितेक्षणः ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरंतो हरिमीडिरे सुराः ॥ १४ ॥ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥ १५ ॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कंसायाथाह भगवान्नारदो देवदर्शनः ॥ १६ ॥ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥ न्यस्तौ स्वमित्रे नंदे वै याभ्यां ते पुरुषा हताः ॥ १७ ॥ निशम्य तद्भोजपतिः कोपात्प्रचलितेंद्रियः ॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ १८ ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥ ज्ञात्वा लोहमयैः पाशैर्बबंध सह भार्यया ॥ १९ ॥ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ २० ॥ ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥ अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट् ॥ २१ ॥ भो भो निशम्यतामेतद्वीरचाणूरमुष्टिकौ ॥ नंदव्रजे किलासाते सुतावानकदुंदुभेः ॥ २२ ॥ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ २३ ॥ मंचाः क्रियंतां विविधा मल्लरंगपरिश्रिताः ॥ पौरा जानपदाः सर्वे पश्यंतु स्वैरसंयुगम् ॥ २४ ॥ महामात्र त्वया भद्र रंगद्वार्युपनीयताम् ॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ २५ ॥ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसंतु पशून्मेध्यान्भूतराजाय मीढुषे ॥ २६ ॥ इत्याज्ञाप्यार्थतंत्रज्ञ आहूय यदुपुंगवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ २७ ॥ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८ ॥ अतस्त्वामाश्रितः

सप्तमं सुतमाह । यद्वा नंदसुतत्वेन प्रसिद्धं रामं च वसुदेवभार्याया रोहिण्याः पुत्रमाह । तौ वसुदेवसुतौ चेत्कथं व्रजं गतौ तत्राह । वसुदेवेनेति ॥ १७ ॥ १८ ॥ निवारित इति । हते वसुदेवे तौ पलायेतामतो बध्यतामिति मंत्रं वदता नारदेन निवारित इति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ मह्यं मम निदर्शितो विधात्रा नारदेन वा । व्रजं गंतुमुद्यतौ तावाह भवद्भ्यामिति ॥ २३ ॥ मंचा उत्तुंगस्तंभादिरचितस्थानानि ॥ २४ ॥ अहितौ शत्रू ॥ २५ ॥ मीढुषे वरदाय ॥ २६ ॥ अर्थतंत्रज्ञोऽर्थसिद्धांतमेव जानातीति ॥२७॥ हे दानपते अक्रूर ! मैत्रं मित्रकृत्यं त्वया क्रियताम् । त्वत्तोऽ-

न्य आदृतः सादरो हिततमश्च न विद्यत इति ॥ २८ ॥ २९ ॥ ३० ॥ तौ मे मृत्युर्नितरां सृष्टः । वैकुंठसंश्रयैर्विष्णुमंश्रयैर्देवैः ॥ ३१ ॥ किं ततस्तत्राह । घातयिष्य इति । कालकल्पेन मृत्युतुल्येन ।
वैद्युतोपमैरशनितुल्यैः ॥ ३२ ॥ ३३ ॥ ३४ ॥ नष्टकंटका नष्टशत्रुः । ननु कतिपयासुहृद्वधेन नष्टकंटका कथं स्यादिति तत्राह । जरासंध इति ॥ ३५ ॥ ३६ ॥ यदुपुरश्रियं द्रष्टुं चेति
॥ ३७ ॥ तत्र स्वमनीषितं विचारितं सध्यक् सम्यक् स्वावद्यं मरणं तन्मार्जनम् । तथाप्येतावनभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह । सिद्ध्यसिद्ध्योरिति ॥ ३८ ॥ पुरुषकारस्य व्यभिचारमाह ।
मनोरथानिति ॥ ३९ ॥ ४० ॥ इति दशमस्कंधे पूर्वार्धे टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ॥ नारदेन स्तुतः क्रीडन् व्योमासुरमशातयीत् ॥ १ ॥ वृषवे-

सौम्य कार्यगौरवसाधनम् ॥ यथेंद्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥ २९ ॥ गच्छ नंदव्रजं तत्र सुतावानकदुंदुभेः ॥ आसाते ताविहानेन रथ-
नानय मा चिरम् ॥ ३० ॥ निसृष्टः किल मे मृत्युर्देवैर्वैकुंठसंश्रयैः ॥ तावानय समं गोपैर्नंदाद्यैः साभ्युपायनैः ॥ ३१ ॥ घातयिष्य इहानीतौ काल-
कल्पेन हस्तिना ॥ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ३२ ॥ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान् ॥ तद्बंधून्निहनिष्यामि वृष्णिभोजदशार्हकान्
॥ ३३ ॥ उग्रसेनं च पितरं स्थविरं राज्यकामुकम् ॥ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ३४ ॥ ततश्चैषा मही मित्र भवित्री नष्टकंटका ॥
जरासंधो मम गुरुर्द्विविदो दयितः सखा ॥ ३५ ॥ शंबरो नरको बाणो मय्येव कृतसौहृदाः ॥ तैरहं सुरपक्षीयान्हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥
एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥ ३७ ॥ अक्रूर उवाच ॥ राजन्मनीषितं सध्यक् तव स्वावद्य-
मार्जनम् ॥ सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम् ॥ ३८ ॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाऽप्याज्ञां करोमि
ते ॥ ३९ ॥ श्रीशुक उवाच ॥ एवमादिश्य चाक्रूरं मंत्रिणश्च विसृज्य सः ॥ प्रविवेश गृहं कंसस्तथाऽक्रूरः स्वमालयम् ॥ ४० ॥ इति श्रीमद्भागवते
महापुराणे दशमस्कंधे पूर्वार्धे अक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ श्रीशुक उवाच ॥ केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनो-
जवः ॥ सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः ॥ १ ॥ "विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहांबुदोपमः ॥ दुराशयः कंस-
हितं चिकीर्षुर्व्रजं स नंदस्य जगाम कंपयन् ॥ १ ॥" तं त्रासयंतं भगवान्स्वगोकुलं तद्धेषितैर्वालविघूर्णितांबुदम् ॥ आत्मानमाजौ मृगयंतमग्रणीरु-
पाह्वयत्सव्यनदन्मृगेंद्रवत् ॥ २ ॥ स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ॥ जघान पद्भ्यामरविंदलोचनं दुरासदश्चंडजवो दुर-

पासुरं यद्वत्केशिनं हयवेषिणम् ॥ कंसप्राणसखं हत्वा कंसं व्यसुमिवाकरोत् ॥ २ ॥ केशी त्विति । प्रथमश्लोकेन य एवंभूतः केशीत्यनूद्य तं भगवानुपाह्वयदिति द्वितीयेनान्वयः । महाहयः सन्महीं
निर्जरयन् श्लथयन्विदारयन्नित्यर्थः । सटाभिः केसरैरवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः संकीर्णं नभः कुर्वन् । हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन सः ॥ १ ॥ तद्धेषितैर्वालैर्तान-
खुरैर्हेषितैः । वालैः पुच्छलोमभिर्विघूर्णिताः परिभ्रामिता अंबुदा येन तम् । आजौ संग्रामार्थम् । आत्मानं कृष्णम् । अग्रणीः पुरतो निर्गतः सन्नुपाह्वयत्स्वसमीपमाजुहाव । स च केशी तन्निशम्य
मृगेंद्रवन्नादमकरोत् ॥ २ ॥ ततः केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्याभिमुखः सन्नभिजगाम । किंच । अत्यमर्षणोऽतिकुपितोऽत्यंतमसहमानो वा । प्रत्यक्पद्भ्यां जघान । दुरास-

दोऽन्यैरभिभवितुमशक्यः । दुरत्यय उद्यतः सन् दुरतिक्रमः । अत्र हेतुः । चंडजवश्चंडस्तीव्रो जवो वेगो धावनं यस्य ॥ ३ ॥ तद्वननं वंचयित्वा तं च हननाय प्रसारितयोः पादयोर्हस्ताभ्यां गृहीत्वा। परिविध्य भ्रामयित्वा । व्यवस्थितस्तथैव स्थितो बभूव ॥ ४ ॥ व्यादाय मुखं प्रसार्य वेगेन हरिं प्रत्याद्रवत् । सोऽपि हरिर्हसन्नुत्तरं सव्यं भुजम् । निर्भयत्वे दृष्टांतः । यथोरगं बिल इति ॥ ५ ॥ ततः किं तदाह । दंता इति । चर्वणाय भगवद्भुजं स्पृशंतीति तथा ते व्यादानेन ये विवृताः । अयो लोहं स्पृशंतीति स्पृशः । यद्वा तप्तमयमतितप्तं लोहादि स्पृशंतो यथेति । आमयो जलोदरम् ॥६॥ लेंडं पुरीषमुत्सृजन् ॥ ७ ॥ कर्कटिकाफलं हि पक्वं सार्धंतं विदीर्णं भवति तद्वद्विदीर्णात्तस्य देहात् । व्यसोर्विगतप्राणात् । अविस्मितो गर्वरहितः । अयत्नेन हयोऽरियेन सः ॥ ८ ॥ कंसाय कृष्णमादिश्य तद्रहस्यादिपैशुनैः ॥ कंसघातादिकृष्णस्य कार्यमावेदयन्मुनिः ॥ तदाह देवर्षिरित्यादिना । न चायं सूचकः किंतु सर्वसुहृदित्याह । भागवतप्रवर इति ॥ ९ ॥ अस्मद्रहस्यं वैरिणि कंसे सूचितवानिति मा शंकीरित्याह । कृष्णकृष्णेत्यादिना । अयं भावः । त्वमीश्वरो भूभारदैत्यसंहारायावतीर्णोऽस्यतस्तदनुरूपाचरणेन विश्वं परिपालयेति । तत्र त्वयि यावद्भयशंकैव नास्तीत्याह । अप्रमेयात्मन्नपरि-

त्ययः ॥ ३ ॥ तद्वंचयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ॥ सावज्ञमुत्सृज्य धनुःशतांतरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ४ ॥ स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्प्रवेशयामास यथोरगं बिले ॥ ५ ॥ दंता निपेतु-र्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ॥ ६ ॥ समेधमानेन सकृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेंडं विसृजन्क्षितौ व्यसुः ॥ ७ ॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः ॥ अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ८ ॥ देवर्षिरुपसंगम्य भागवतप्रवरो नृप ॥ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ ९ ॥ कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ १० ॥ त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ ११ ॥ आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् ॥ तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥ १२ ॥ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् ॥ अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥ १३ ॥ दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ॥

च्छिन्नरूप । योगेशाचिंत्यप्रभाव । जगदीश्वर विश्वनियंतः । वासुदेव सर्वभूतेषु वर्तमान । अखिलावास सर्वस्याश्रय । संप्रति सात्वतां प्रवर श्रेष्ठ । प्रभो सर्वशक्ते ॥ १० ॥ कथमेवं रूपोऽहमिति चेदत आह । त्वमात्मेति । न हि त्वं जीववत्परिच्छिन्नः किंतु सर्वभूतानामांतर एकोऽनुस्यूत आत्मा । अंतरस्यूतत्वे दृष्टांतः । एधसां काष्ठानामंतर्ज्योतिरिवेति । भूतेषु स्थितोऽपि तैर्न दृश्यस इत्याह । गूढ इति । अत्र हेतवः । गुहाशयो बुद्धेरप्यांतरः । किंच साक्षी नहि साक्षी दृश्यत इत्यर्थः । अपि च महापुरुषः अतः परिच्छिन्नमतिर्न ज्ञायस इत्यर्थः । तर्हि सर्वांतरत्वे किं प्रमाणमत आह । ईश्वर इति । नहीश्वरं विना परतंत्राणां जीवानां प्रवृत्तिर्घटत इत्यर्थः ॥ ११ ॥ अहमीश्वरोऽन्यत्सर्वमीशितव्यमित्येतदेव कुत इत्यत आह । आत्मनेति । साधनांतरनिरपेक्ष एवात्माश्रयः स्वतंत्रः मायया शक्त्या भवान् गुणान्ससृजे सृष्टवान् । तैः सृष्टैर्गुणैरिदं विश्वं सृजसि संहरस्यवसि पालयसि । ननु सृष्ट्यादिक्रिया षट्कारकसाध्यैव दृष्टेत्याह । सत्यसंकल्प इति । नहि संकल्पैकसाध्ये बहिःसाधनापेक्षेति भावः । अतस्त्वमीश्वर इत्युपसंहारः ॥ १२ ॥ प्रस्तुतमाह । स त्वमिति । भूधरभूतानां भुवं धरंतीति भूधरा राजानस्तद्रूपाणाम् ॥ १३ ॥ १४ ॥ परश्वोऽहनीति । अथैवाक्रूर

एष्यति श्वो मथुरां गंताऽसि पश्चश्चाणूरादींश्च त्वया निहतान् द्रक्ष्यतीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १५ ॥ तस्यानु तदनंतरम् । शंखादीनाम् । शंखः पंचजनः । वध द्रक्ष्यामीत
शेषः । भाविनिर्देशमात्रमेतन्न त्वानंतर्यं विवक्षितम् ॥ १६ ॥ १७ ॥ भार्यया जाम्बवत्या सह । स्वधामतो महाकालपुरात् ॥ १८ ॥ १९ ॥ द्वारकामावसन् द्वारकायां वसन् । कर्ता करिष्यति ॥२०॥
अमुष्य विश्वस्य भूभारस्य वा ॥ २१ ॥ एवं विज्ञाप्य कृताभिनंदनं भगवंतं नमस्यति द्वयेन । विशुद्धविज्ञानघनमिति । केवलं ज्ञानैकमूर्तिम् । अतएव स्वसंस्थया स्वरूपमस्यक्स्थित्यैव परमानंद-
रूपया सम्यगाप्ताः सर्वेऽर्था येन तम् । आप्तकामतोक्त्वा सत्यसंकल्पतामाह । अमोघवांछितमिति । ननु वांछा चेदस्ति तर्हि दुर्निवारा संसृतिरत आह । स्वतेजसेति चिच्छक्त्या नित्यनिवृत्तो माया-

यस्य हेपितसंत्रस्तास्त्यजंत्यनिमिषा दिवम् ॥ १४ ॥ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् ॥ कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १५ ॥
तस्यानु शंखयवनमुराणां नरकस्य च ॥ पारिजातापहरणमिंद्रस्य च पराजयम् ॥ १६ ॥ उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् ॥ नृगस्य मोक्षणं
पापाद्द्वारकायां जगत्पते ॥ १७ ॥ स्यमंतकस्य च मणेरादानं सह भार्यया ॥ मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥ १८ ॥ पौंड्रकस्य वधं
पश्चात्काशिपुर्याश्च दीपनम् ॥ दंतवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ १९ ॥ यानि चान्यानि वीर्याणि द्वारकामावसन्भवान् ॥ कर्ता द्रक्ष्याम्यहं
तानि गेयानि कविभिर्भुवि ॥ २० ॥ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २१ ॥ विशुद्धविज्ञा-
नघनं स्वसंस्थया समाप्तसर्वार्थममोघवांछितम् ॥ स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवंतमीमहि ॥ २२ ॥ त्वामीश्वरं स्वाश्रयमात्ममायया
विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २३ ॥ श्रीशुक उवाच ॥ एवं यदुपतिं कृष्णं भाग-
वतप्रवरो मुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २४ ॥ भगवानपि गोविंदो हत्वा केशिनमाहवे ॥ पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः
॥ २५ ॥ एकदा ते पशून्पालाश्चारयंतोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥ २६ ॥ तत्रासन्कतिचिच्चोराः पालाश्च कतिचिन्नृप ॥
मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २७ ॥ मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २८ ॥
गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः ॥ शिलया पिदधे द्वारं चतुःपंचावशेषिताः ॥ २९ ॥ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् ॥

कार्यरूपो गुणप्रवाहो यस्मात्तम् । अतो भगवंतं निरतिशयैश्वर्यमीमहि शरणं व्रजेमेति ॥ २२ ॥ ननु त्रिकालज्ञस्त्वं कथं मत्प्रपंचं न जानासि जानासि चेत्कथमगुणप्रवाहं ब्रवीषि तत्राह । त्वामिति ।
ईश्वरमन्यस्य वशयितारं स्वाश्रयमन्यस्यावशमत आत्ममायया आत्माधीनया मायया विनिर्मिता अशेषविशेषा महदाद्या यादवादिरूपा वा कल्पना येन तं धुर्यं श्रेष्ठं नतोऽस्मीति ॥ २३॥२४॥२५ ॥
ननु नारदेन व्योमवधो न दृष्टस्तत्कथं व्योमवधप्रसक्तिरिति तत्रोच्यते । प्रातरेव केशिवधानंतरं नारदेनोक्तमंगीकृत्य पुनस्तथैव पशून्पालयता व्योमो हतः । यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि केशिना-
रिवधप्रसंगादत्रोच्यत इति द्रष्टव्यम् । केचित्पुनः शंखचूडवधात्पूर्वमेव पठंति च । तमाह । एकदेति ॥ २६ ॥ २७ ॥ मेषायितान्मेषवदाचरितान्स्वयं चोरवदाचरितः सन्नपोवाहापकृष्य निनाय

॥ २८ ॥ पिदधे छादितवान् ॥ २९ ॥ शरणद आश्रयप्रदः । हरिः सिंह इव ॥ ३० ॥ ३१ ॥ पशुमारं पशुमारो यथा भवति तथा । अनिःश्वासमित्यर्थः ॥ ३२ ॥ भुवि गोपैः स्तूयमान उपरि वैमानिकैर्देवैरिति ॥ ३३ ॥ इति दशमे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः ॥ तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥ १ ॥ प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ॥ ततो व्योमे हतेऽक्रूरः सायं गोकुलमागमत् ॥ २ ॥ तदेवं नारदेन कंसवधादिकार्ये विज्ञापिते श्रीकृष्णो मथुरां गंतुमुद्यतो वर्तते तदाऽक्रूरोऽपि गोकुलमागमदित्याह । अक्रूरोऽपीति ॥ १ ॥ २ ॥ अपिः संभावनायाम् । अर्हते योग्याय ॥ ३ ॥ स्वस्य कृष्णस्य दर्शनेऽसंभवमाशंक्य पुनः संभावयति ममैतदिति द्वयेन । विषयात्मनो विषयाविष्टचित्तस्य । शूद्राज्जन्म यस्य तस्य ब्रह्मकीर्तनं वेदोच्चारणं यथेति ॥ ४ ॥ यद्वा मैवं किं त्वधमस्य नीचस्यापि मम स्यादेव । कुत इत्यत आह । ह्रियमाणः कालनद्येति। अयं भावः । यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किंचि-

गोपान्नयंतं जग्राह वृकं हरिरिवौजसा ॥ ३० ॥ स निजं रूपमास्थाय गिरींद्रसदृशं बली ॥ इच्छन्विमोक्तुमात्मानं नाशक्नोद्ग्रहणातुरः ॥ ३१ ॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३२ ॥ गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः ॥ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे व्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ छ ॥ श्रीशुक उवाच ॥ अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ॥ उषित्वा रथमास्थाय प्रययौ नंदगोकुलम् ॥१॥ गच्छन्पथि महाभागो भगवत्यंबुजेक्षणे ॥ भक्तिं परामुपगत एवमेतदचिंतयत् ॥ २ ॥ किं मयाचरितं भद्रं किं तप्तं परमं तपः ॥ किं वाऽथाप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥ ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥ मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ॥ ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥ ५ ॥ ममाद्यामंगलं नष्टं फलवांश्चैव मे भवः ॥ यन्नमस्ये भगवतो योगिध्येयांघ्रिपंकजम् ॥ ६ ॥ कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येंऽघ्रिपद्मं प्रहितोऽमुना हरेः ॥ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन्यन्नखमंडलत्विषा ॥ ७ ॥ यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ॥ गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुंकुमांकितम् ॥ ८ ॥ द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकंजलोचनम् ॥ मुखं मुकुंदस्य गुडालकावृतं प्रदक्षिणं मे प्रचरंति वै मृगाः ॥ ९ ॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥

त्कदाचित्तरति कूलं प्राप्नोति तथा कर्मवशेन कालेन ह्रियमाणानां जीवानामपि मध्ये कश्चित्तरेदिति संभवतीति ॥ ५ ॥ अतोऽनया प्रवृत्त्यैव ममामंगलं ध्रुवं नष्टमेवेति ज्ञायते । भवो जन्म च सफलं जातमिति । यद्यतो नमस्करिष्यामि ॥ ६ ॥ अमंगलनाशे सूचकांतरमाह । कंस इति । बतेत्याश्चर्ये । अतिखलः कंसोऽपि ममात्यंतमनुग्रहं कृतवान् । यतोऽमुना कंसेन प्रहितो हरेरंघ्रिपद्मं द्रक्ष्ये द्रक्ष्यामीति । पूर्वेऽम्बरीषादयस्तमःसंसारमतरंस्तीर्णाः ॥ ७ ॥ अंघ्रिपद्मं विभावयति । यदिति । ब्रह्मादिभिरर्चितमिति परमैश्वर्यमाह । श्रिया चेति सौभाग्यातिशयम् । मुनिभिर्भक्तसहितैरिति परमपुरुषार्थत्वम् । गोचारणायेति कृपालुत्वम् । यद्गोपिकानामिति प्रेममात्रसुलभत्वम् ॥ ८ ॥ मनोरथांतरं करोति । द्रक्ष्यामीति । शोभमानौ कपोलौ नासिका च यस्मिंस्तत् । स्मितसहितोऽवलोको यस्मिन् अरुणकंजवल्लोचने यस्मिन् तच्च तच्च मुखम् । गुडालकावृतं वक्रकेशावृतम् । तदानीमेव शुभसूचकं दृष्ट्वातिहृष्यन्नाह । प्रदक्षिणमिति ॥ ९ ॥ पुनरप्यन्यच्चिंतयति । अप्यद्येति । ईयुषः प्राप्त-

वतः लावण्यस्य धामाश्रयस्तस्य विष्णोः । यद्वा विष्णोर्लावण्ययुक्तं यद्धाम वपुस्तस्य उपलंभनं दर्शनं भविता भविष्यति । अपि यद्येवं स्यात्तर्हि मह्यं मम दृशो लोचनस्य फलं न स्यादिति न । अपितु स्यादेवेत्यर्थः ॥ १० ॥ य ईक्षितेत्यादिचतुर्भिः कालापकम् । तत्रैवं शंका । नन्वस्मदादिव देवभोक्तृत्वकर्तृत्वादिधर्मैस्तत्र तत्र प्रतीयमानस्य कथं विष्णुत्वमितीमां शंकां श्लोकत्रयेणापाकुर्वंश्चतुर्थेन तमहं द्रक्ष्यामीति मनोरथं करोति । तथाहि य ईक्षितेति । असत्सतोः कार्यकारणयोरीक्षितापि क्षणमात्रकर्ताऽप्यहंरहितोऽहंकारहीनः । तथाऽपास्ततमोभिदाभ्रमः तमः स्वाज्ञानं ततो भिदा भेदस्ततो भ्रमोऽभिनिवेशादिः अपास्ता अपाकृतास्तम आदयो यस्मिन्सः । कुत एतत्तत्राह । स्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेण । तथापि स्वमायया स्वाधीनया मायया तदीक्षया तस्यैवेक्षया प्राणाक्षधीभिः सहितैरात्मन्नात्मनि स्वस्मिन्नेव रचितैर्जीवैः सदनेषु वृंदावनतरुषु गोपीगृहेषु च लीलया कर्माणि कुर्वन्सक्तवदभीयते आभिमुख्येन प्रतीयते ॥ ११ ॥ ननु सर्वथाऽहंकारादिरहितस्यात्मारामस्य लीलाऽपि कुत इत्याशंक्य वरानुग्रहार्थेत्याशयेनाह । यस्येति । अखिलान्यखिलस्य वा अमीवानि पापानि घ्नंतीत्यखिलामीवहानि तैः । तथा सुमंगलैः शोभनानि मंगलानि येभ्यस्तैः गुणाः करुणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचो जगत्प्राणंति जीवयंति शुंभंति शोभयंति पुनंति पवित्रयंति । व्यतिरेकमाह । या इति । तैर्विरक्ता रहितास्तास्तु स्वलंकृता

लावण्यधाम्नो भवितोपलंभनं मह्यं न न स्यात्फलमंजसा दृशः ॥ १० ॥ य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ॥ स्वमाययाऽऽत्मन्रचितस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥ ११ ॥ यस्याखिलामीवहभिः सुमंगलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ॥ प्राणंति शुंभंति पुनंति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥ स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ॥ यशो वितन्वन्व्रज आस्त ईश्वरो गायंति देवा यदशेषमंगलम् ॥ १३ ॥ तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकांतं दृशिमन्महोत्सवम् ॥ रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ १४ ॥ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये ॥ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखान्वनौकसः ॥ १५ ॥ अप्यंघ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपंकजम् ॥ दत्ताभयं कालभुजंगरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेंद्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगंधिकगंध्यपानुदत् ॥ १७ ॥ न मय्युपैष्य-

अपि वस्त्राद्यलंकृतशववच्छोभमाना मताः सतां संमताः ॥ १२ ॥ स्वयंरचितान्सेतून्वर्णाश्रमधर्मान्पालयताममरवर्याणां सुखकर्ता सन्नवतीर्णः यद्यशः ॥ १३ ॥ त्रैलोक्ये एकमेव कांतम् । दृशिर्दृष्टिस्तद्वतां महानुत्सवो यस्मात् । यद्वा महानुत्सव एव । अतएव श्रिय ईप्सितमास्पदमेवंभूतं रूपं श्रीमूर्तिं दधानं तमीश्वरं द्रक्ष्यामीति । अत्र लिंगम् । उषसः प्रभातसमयाः । सुदर्शनाः शुभदर्शनाः । सुखं प्रभाता रजन्यः शुभसूचिका बभूवुरित्यर्थः ॥ १४ ॥ किंच । अथ दर्शनानंतरं सपदि तत्क्षणमेव रथादवतीर्णः सन्प्रधानयोः पुरुषयो रामकृष्णयोश्चरणं योगिभिरप्यात्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि । आभ्यां सहानयोः सखीन् गोपांश्च नमस्यामीति ॥ १५ ॥ किंच अपीति । अधास्यत् धास्यति नाद्भिमावयति दत्ताभयमिति सार्धेन ॥ १६ ॥ बलिना तावत्पदत्रयपरिमितभूदानसमये तस्य हस्ते उदकं निहितम् । कौशिक इंद्रस्तेनापि कदाचित्किंचिन्निहितमिति ज्ञातव्यम् । मुमुक्षूणां संसारभयनिवर्तकं सकामानामभ्युदयप्रदं चेत्युक्तमनुरक्तानां परमसुखदं चेत्याह । यद्वा वाशब्दो वितर्के । विहारे रासक्रीडायाम् । सौगंधिकस्य गंध इव गंधो यस्य तत्सौगंधिकगंधि ॥ १७ ॥

एवं परमानुग्रहं संभाव्य पुनरप्यसंभवमाशंक्य परिहरति । न मयीति । यद्यप्यहं कंसेन प्रहितोऽतस्तस्य दूतस्तथापि मय्यरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः । यतो विश्वदृक् सर्वज्ञोऽतो मम चेतसोंऽतश्च बहिश्च यदीहितं चेष्टितमेतद्यः क्षेत्रज्ञोंऽतर्यामी नित्यज्ञानेनेक्षते । अयं भावः । चेतसो बहिरेवं कंसमनुवर्तेऽतस्तु कृष्णमेव तदेतदसौ हृदि स्थितो जानातीति । यद्वा एतस्य जगत ईहितमिति ॥ १८ ॥ अपि यदंघ्रिमूले चरणोपांतेऽवहितं संयतं कृपामृतेनार्द्रया दृशा मामीक्षिता द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः परां मुदं वोढा प्राप्स्यामीति ॥ १९ ॥ अथ मां परिरप्स्यते आलिंगिष्यति यदा तदैव मे आत्मा देहस्तीर्थीक्रियतेऽतिपवित्रीकरिष्यते । उच्छ्वसिति श्लथो भविष्यति । अतो देहात् ॥ २० ॥ तत भोस्तातेति । तदा जन्मभृतः सफलजन्मानः । अन्यथा तज्जन्मैव न भवतीत्याह । महीयसेति । महीयसा श्रीकृष्णेन योऽनादृतोऽमुष्य तस्य जंतोस्तज्जन्म धिक् ॥ २१ ॥ ननु सुहृदादिषु परिष्वंगसंप्रश्नादयो जीवधर्माः कथमीश्वरे संगच्छंतेऽत आह । न तस्येति । दयितः प्रियस्तद्विपरीतोऽप्रियः सुहृत्तमो हिततमस्तद्विपरीतो द्वेष्य एतत्सर्वव्यतिरिक्त उपेक्ष्य इति । दयितादयो न संतीति सत्यं तथापि भक्तान्भजते तत्र यथा ये भक्तास्तांस्तथा भजते ।

त्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ॥ योंऽतर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥ अप्यंघ्रिमूलेऽवहितं कृतांजलिं मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशंक ऊर्जिताम् ॥ १९ ॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बंधश्च कर्मात्मक उच्छ्वसित्यतः ॥ २० ॥ लब्धांगसंगं प्रणतं कृतांजलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ॥ तथापि भक्तान्भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ २२ ॥ किंचाग्रजो माऽवनतं यदूत्तमः स्मयन्परिष्वज्य गृहीतमंजलौ ॥ गृहं प्रवेश्याप्तसमस्तसत्कृतं संप्रक्ष्यते कंसकृतं स्वबंधुषु ॥ २३ ॥ श्रीशुक उवाच ॥ इति संचिंतयन्कृष्णं श्वफल्कतनयोऽध्वनि ॥ रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥ २४ ॥ पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ॥ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवांकुशाद्यैः ॥ २५ ॥ तद्दर्शनाह्लादविवृद्धसंभ्रमः प्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः ॥ रथादवस्कंद्य स तेष्वचेष्टत प्रभोरमून्यंघ्रिरजांस्यहो इति ॥ २६ ॥ देहंभृतामियानर्थो हित्वा दंभं भियं शुचम् ॥ संदेशाद्यो हरेर्लिंगदर्शनश्रवणादिभिः ॥ २७ ॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनी-

ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहमिति भगवद्वचनात् । अविषमत्वेपि भक्तेभ्य एव फलं ददातीत्यत्र दृष्टांतः । यद्वत्सुरद्रुम इति ॥ २२ ॥ यो मयांजलिः करिष्यते तस्मिन्नेवांजलौ गृहीतं माम् । आप्तानि समस्तान्यर्घादिसत्कृतानि येन तं माम् ॥ २३ ॥ स तु मार्गमपि न वेद तथापि रथेन प्राप्त इति ॥ २४ ॥ अखिलैर्लोकपालैः किरीटेषु जुष्टाः अमलाः पादरेणवो यस्य तस्य । क्षितिकौतुकानि क्षितेरलंकाररूपाणि ॥ २५ ॥ तद्दर्शनेन य आह्लादस्तेन विवृद्धः संभ्रमो यस्य सः । प्रेम्णा ऊर्ध्वाणि रोमाणि यस्य सः । अश्रूणां कलाभिर्लेशैराकुले ईक्षणे यस्य सः । अवस्कंद्यावप्लुत्य तेषु पदेषु सोऽक्रूरः अचेष्टत व्यलुठत् । अहो इति दुर्लभतां भावयन् ॥ २६ ॥ ननु किमर्थमेवं व्यलुठत नास्ति प्रेमसंभ्रमे फलोद्देश इत्याह । देहंभृतामिति । देहभाजामेतावानेव पुरुषार्थः कंसस्य संदेशादारभ्य हरेर्लिंगदर्शनश्रवणादिभिर्योऽयमक्रूरस्य वर्णित इति । संदेश आद्यो यस्यार्थस्य स यावानक्रूरस्य जात इति वा ॥ २७ ॥ ततः कृष्णं रामं च ददर्श । गावो दुह्यंतेऽस्मिन्निति गोदोहनं

नाभित्वादीत्यत आह । नवेति । हे अकुंठधामन्नप्रच्युतस्वरूप । भवायाभ्युदयाय । न केवलमेतावत्किंत्वस्मदनुग्रहार्थमपीत्याह । वयं चेति । सर्वे लोकपालास्त्वया पालिताः सप्तापि भुवनानि पालयाम इति ॥ ३७ ॥ ननु यदि विभावयितारो यूयं विभाव्यानि च भुवनानि संति तर्हि कथमुक्तं त्वं हि ब्रह्मेति नहि ब्रह्मत्वे मम सजातीयविजातीयभेदः संभवतीत्यत आह । त्वमिति । एकः सजातीयभेदरहितः । कुतः । आद्यः पुरुषः पुरुषाणामवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः । तुरीयः शुद्ध इत्यर्थः । तदपि कुतः । स्वदृक् स्वप्रकाशज्ञानरूपः । शुद्धादेव ह्युपाधियोगाज्जीवा जायंते । यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्व एव आत्मानो व्युच्चरंतीति श्रुतेः । अतः सजातीयरहितः किंच अद्वितीयो विजातीयरहितोऽपि । कुतः । हेतुः सर्वस्य तथा स्वयं हेतुरहितश्चेति । कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयतेऽत आह । प्रतीयस इति । सर्वगुणप्रसिद्ध्यै सर्वविषयप्रकाशनाय ॥ ३८ ॥ तर्हि किमहमेवं संसारीत्युच्यते नहिनहीति सदृष्टांतमाह । यथैवेति हे भूमन्स्वया छायया मेघलक्षणया परदृष्ट्या पिहितश्छादितोऽपि सूर्यश्छायां मेघं च रूपाणि च मेघांतरितान्घटादीनपि संचकास्ति प्रकाशयति एवं गुणेनाहंकारेण स्वकार्येण जीवावरकेण तद्दृष्ट्या पिहितोऽपि

ऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः ॥ प्रतीयसेऽथापि यथा विकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥ ३८ ॥ यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च संचकास्ति ॥ एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥ ३९ ॥ यन्मायामोहितधियः पुत्रदारगृहादिषु ॥ उन्मज्जंति निमज्जंति प्रसक्ता वृजिनार्णवे ॥ ४० ॥ देवदत्तमिमं लब्ध्वा नृलोकमजितेंद्रियः ॥ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवंचकः ॥ ४१ ॥ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ॥ विपर्ययेंद्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥ ४२ ॥ अहं ब्रह्माऽथ विबुधा मुनयश्चामलाशयाः ॥ सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥ ४३ ॥ तं त्वा जगत्स्थित्युदयांतहेतुं समं प्रशांतं सुहृदात्मदैवम् ॥ अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम् ॥ ४४ ॥ अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ॥ संपाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥ ४५ ॥ श्रीभगवानुवाच ॥ यदात्थ भगवँस्त्वन्नः करवाम प्रियं तव ॥ भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥ ४६ ॥ अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः ॥

गुणान्सत्त्वादीनुपाधीन्गुणिनश्चोपहितान् जीवानपि चकास्ति । आत्मप्रदीपः स्वप्रकाशः । अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥३९॥ किंच मायाश्रयस्यान्यान्मोहयतस्तव कुतः संसृतिरित्याशयेनाह । यन्मायेति । पुत्रादिषु प्रसक्ताः । वृजिनार्णवे दुःखसागरे । उन्मज्जंति देवादियोनिषु निमज्जंति स्थावरादिषु । तदुक्तं वायवीये । विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोरिति ॥ ४० ॥ एवं जीवेश्वरव्यवस्थां निरूप्येदानीमभजंतं निंदति द्वाभ्याम् । देवेति । देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वापीऽति ॥ ४१ ॥ शोच्यत्वे हेतुः । यस्त्वामिति विपर्यया विपरीता अनात्माप्रियाऽनीश्वरा ये इंद्रियार्थाः पुत्रादयस्तदर्थम् ॥ ४२ ॥ अहमन्ये च शुद्धमनसस्त्वामेव प्राप्ता इत्याह । अहमिति ॥ ४३ ॥ भगवतो भजनीयत्वे हेतून्वदंस्तद्भक्तिं प्रार्थयते । तं त्वेति । समत्वे हेतुः । प्रशांतमिति । सुसेव्यत्वमाह । सुहृदात्मदैवं सुहृद्बुद्धिप्रवर्तकत्वात् । आत्मा च सर्वात्मकत्वात् । एवंभूतं दैवमीश्वरं त्वाम् । न चान्यो भजनीयोऽस्तीत्याह । अनन्यमेकं समानासमानजातीयरहितम् । तत्कुतः । जगतात्मनां च केतमधिष्ठानम् ॥ ४४ ॥ स्वयं भक्तिमाशास्य स्वभक्तस्याभीष्टमाशास्ते । अयमिति । दैत्यपतौ प्रह्लादे ॥ ४५ ॥ ४६ ॥ वैरोचनिर्बलिमद्भक्तस्तत्सु-

तत्त्वादवध्यस्तावत् । किंच प्रह्लादायेति । अन्वयो वंशः ॥ ४७ ॥ तर्हि किमित्येवं कृतं तत्राह । दर्पोपशमनायेति ॥ ४८ ॥ अनुगृह्णाति चत्वार इति ॥ ४९ ॥ सह वध्वा ऊषया ॥ ५० ॥ रुद्रानु-
मोदित इति तदभिप्रेतस्यैव बाणभुजभंगस्य कृतत्वात् ॥ ५१ ॥ पौरादिभिरभ्युद्यतोऽभिमुखमागत्य सत्कृतः ॥ ५२ ॥ ५३ ॥ इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे टीकायां त्रिषष्टितमोऽध्यायः ॥६३॥
चतुःषष्टितमे कृष्णो नृगं पापादमोचयत् ॥ ब्रह्मस्वहारिदोषोक्त्या राज्ञो द्दसानशिक्षयत् ॥ १ ॥ विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् ॥ अन्वशासद्यदून्कृष्णो नृगोद्धारप्रसंगतः ॥ २ ॥ १ ॥ पि-

प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ ४७ ॥ दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ॥ सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ ४८ ॥ चत्वारोऽस्य भुजाः शिष्टा भविष्यंत्यजरामराः ॥ पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुर ॥ ४९ ॥ इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः ॥ प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥ ५० ॥ अक्षौहिण्या परिवृतं सुवासःसमलंकृतम् ॥ सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ ५१ ॥ स्वराजधानीं समलंकृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम् ॥ विवेश शंखानकदुंदुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ ५२ ॥ य एवं कृष्णविजयं शंकरेण च संयुगम् ॥ संस्मरेत्प्रातरुत्थाय न तस्य स्यात्पराजयः ॥ ५३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धेऽनिरुद्धानयनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ श्रीशुक उवाच ॥ एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ॥ विहर्तुं सांबप्रद्युम्नचारुभानुगदादयः ॥ १ ॥ क्रीडित्वा सुचिरं तत्र विचिन्वंतः पिपासिताः ॥ जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥ कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः ॥ तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयाऽन्विताः ॥ ३ ॥ चर्मजैस्तांतवैः पाशैर्बद्ध्वा पतितमर्भकाः ॥ नाशक्नुवन्समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ ४ ॥ तत्रागत्यारविंदाक्षो भगवान्विश्वभावनः ॥ वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ ५ ॥ स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ॥ संतप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणांबरस्रक् ॥ ६ ॥ पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुंदः ॥ कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥ ७ ॥ दशामिमां वा कतमेन कर्मणा संप्रापितोऽस्यतदर्हः सुभद्र ॥ आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम् ॥ ८ ॥ श्रीशुक उवाच ॥ इति स्म राजा संपृष्टः कृष्णेनानंतमूर्तिना ॥ माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥ ९ ॥ नृग उवाच ॥ नृगो नाम नरेंद्रोऽहमिक्ष्वाकुतनयः प्रभो ॥ दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ १० ॥ किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ ११ ॥ यावंत्यः सिकता भूमेर्यावंत्यो दिवि तारकाः ॥ यावंत्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ १२ ॥ पयस्विनी-

पासितास्तृषिता जलं विचिन्वंतः । सत्त्वं जीवम् ॥ २ ॥ तं च कृकलासं वीक्ष्य ॥ ३ ॥ चर्मजैश्चर्ममयैः पाशैस्तांतवैस्तंतुमयैश्च ॥ ४ ॥ ५ ॥ संतप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः । अद्भुता
अलंकारांबरस्रजो यस्य सः । स्वर्गी देवो बभूवेति ॥ ६ ॥ ७ ॥ यद्यपि । क्षमं योग्यम् ॥ ८ ॥ ९ ॥ यदि ते कर्णमस्पृशमित्यसंदेहे संदेहवचनं यदि वेदाः प्रमाणं स्युरितिवत् । कर्णपथं नूनं प्राप्तः

स्वामित्यर्थः ॥ १० ॥ किंच किं न्विति । सर्वेषां भूतानामात्मनो बुद्धेः साक्षिणस्तेऽविदितं किं नु न किंचित् ॥ ११-१३ ॥ श्रुतव्रतेभ्योऽदंभाचारेभ्यः । तपसा श्रुताः प्रख्याताश्च ते ब्रह्मणि वदान्या अत्युदारा अध्यापनशीलाश्च ते संतश्च तेभ्यः ॥ १४ ॥ पूर्तं वापीकूपादि चरितं कृतम् ॥ १५ ॥ एवं वर्तमानस्य मम संकटं किंचिदापन्नं शृण्वित्याह । कस्यचिदिति । द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य । संपृक्ता मिलिता । अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६ ॥ १७ ॥ प्रतिग्राहिणोक्तं दातेति स्वामिनोक्तमपहर्तेति । अभवद्भ्रमः व्याकुलोऽभवमित्यर्थः ॥ १८ ॥ तदोभावपि प्रत्येकमनुनीतौ प्रार्थितौ । कथं तदाह । गवामिति सार्धेन ॥ १९ ॥ २० ॥ अपरः प्रतिग्राही । दुराग्रहो यल्लक्षं त्वयोक्तमन्यदपि गवामयुतं यदि तदपीमां विहाय यच्छामीत्युक्त्वा गां त्यक्त्वा

न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥ १३ ॥ स्वलंकृतेभ्यो गुणशील-
स्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृंगीः ॥
वद्भ्यः सीदत्कुटुंबेभ्य ऋतव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुंगवेभ्यः ॥ १४ ॥ गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदा-
सीस्तिलरूप्यशय्याः ॥ वासांसि रत्नानि परिच्छदान्रथानिष्टं च यज्ञैश्चरितं च पूर्तम् ॥ १५ ॥ कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ॥ संपृक्ता-
ऽविदुषा सा च मया दत्ता द्विजातये ॥ १६ ॥ तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् ॥ ममेति प्रतिग्राह्याह नृगो मे दत्तवानिति ॥ १७ ॥
विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ ॥ भवान्दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः ॥ १८ ॥ अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै ॥
गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥ १९ ॥ भवंतावनुगृह्णीतां किंकरस्याविजानतः ॥ समुद्धरतं मां कृच्छ्रात्पतंतं निरयेऽशुचौ
॥ २० ॥ नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥ २१ ॥ एतस्मिन्नंतरे याम्यैर्दूतैर्नीतो
यमक्षयम् ॥ यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥ २२ ॥ पूर्वं त्वमशुभं भुंक्ते उताहो नृपते शुभम् ॥ नांतं दानस्य धर्मस्य पश्ये लोकस्य
भास्वतः ॥ २३ ॥ पूर्वं देवाशुभं भुंज इति प्राह पतेति सः ॥ तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो ॥ २४ ॥ ब्रह्मण्यस्य वदान्यस्य
तव दासस्य केशव ॥ स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः ॥ २५ ॥ स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुति-
दृशाऽमलहृद्विभाव्यः ॥ साक्षादधोक्षज उरुव्यसनांधबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥ २६ ॥ देवदेव जगन्नाथ गोविंद पुरुषोत्तम ॥
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥ २७ ॥ अनुजानीहि मां कृष्ण यांतं देवगतिं प्रभो ॥ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम्

ययावित्यर्थः ॥ २१ ॥ एतस्मिन्नंतर इति । इतःपूर्वं पापाभावान्नेतुमसमर्था इति भावः ॥ २२ ॥ उताहो इत्येकं पदम् । अथवा पूर्वं शुभमिति । नांतमिति यमस्य स्वस्य वा वाक्यम् । पश्ये पश्या-मि ॥ २३ ॥ हे देव ! यमः पूर्वमशुभं भुंज इति मयोक्ते स यमः पतेति प्राह ॥२४॥ २५ ॥ दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभिनंदति । हे विभो ! स त्वं ममाक्षिपथो लोचन-गोचरः सन्कथं साक्षात्प्रत्यक्षोऽसीत्यर्थः । किमत्राश्चर्यं तदाह । पर आत्मा अतएव योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषाऽमले हृदि विभाव्यश्चिंत्यः । यतोऽधोक्षजः अक्षजमैंद्रियकज्ञानं तदधोऽगोच-यस्मात्सः । यस्येह भवापवर्गो भवेत्तस्य भवाननुदृश्यः स्यात् । उरुव्यसनेन कृकलासभवदुःखेनांधबुद्धेस्तु ममैतच्चित्रमित्यर्थः ॥ २६ ॥ उद्रिक्तभक्तिवद्धुधा संबोधयन्नाह । देवदेवेति ॥ २७ ॥

अनुज्ञापयति । अनुजानीहीति । देवलोकेऽपि सतो वर्तमानस्यात्मनो मनसः सन्निधिं प्रार्थयते । यत्र क्वापीति । त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयादिति ॥२८॥ याम्यन्नमस्यति । नम इति । सर्वभावाय सर्वस्य भावो जन्म येन तस्मै ब्रह्मणे कर्तृत्वेऽप्यविकाराय । कुतः । अनंतशक्तये अनंता मायाख्या शक्तिर्यस्य तस्मै वासुदेवाय सर्वभूताश्रयायेत्युपादानत्वमुक्तम् । श्रीकृष्णाय सदानंदरूपायेति पुरुषार्थत्वमुक्तम् । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति स्मृतेः ॥ किंच योगानामिष्टापूर्तादिकर्मणां पतये फलदात्रे । अयं भावः । एवंभूतं त्वां विहाय गंतुमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति ॥ २९–३१ ॥ मनागीपदपि भुक्तं सदग्नेरग्निसदृशस्य तेजीयसोऽतितेजस्विनोऽपि दुर्जरम् ॥ ३२ ॥ ३३ ॥ किंच विषादपि

॥ २८ ॥ नमस्ते सर्वभावाय ब्रह्मणेऽनंतशक्तये ॥ कृष्णाय वासुदेवाय योगानां पतये नमः ॥ २९ ॥ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ॥ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥ ३० ॥ कृष्णः परिजनं प्राह भगवान्देवकीसुतः ॥ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ३१ ॥ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ॥ तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ३२ ॥ नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ॥ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ३३ ॥ हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३४ ॥ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हंति त्रिपूरुषम् ॥ प्रसह्य तु बलाद्भुक्तं दशपूर्वान् दशापरान् ॥ ३५ ॥ राजानो राजलक्ष्म्यांधा नात्मपातं विचक्षते ॥ निरयं येऽभिमन्यंते ब्रह्मस्वं साधु बालिशाः ॥ ३६ ॥ गृह्णंति यावतः पांसून्क्रंदतामश्रुबिंदवः ॥ विप्राणां हतवृत्तीनां वदान्यानां कुटुंबिनाम् ॥ ३७ ॥ राजानो राजकुल्याश्च तावतोऽब्दान्निरंकुशाः ॥ कुंभीपाकेषु पच्यंते ब्रह्मदायापहारिणः ॥ ३८ ॥ स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ३९ ॥ न मे ब्रह्मधनं भूयाद्यद्गृद्ध्वाऽल्पायुषो नृपाः ॥ पराजिताश्च्युता राज्याद्भवंत्युद्वेजिनोऽहयः ॥ ४० ॥ विप्रं कृतागसमपि नैव द्रुह्यत मामकाः ॥ घ्नंतं बहु शपंतं वा नमस्कुरुत नित्यशः ॥ ४१ ॥ यथाऽहं प्रणमे विप्राननुकालं समाहितः ॥ तथा नमत यूयं च योऽन्यथा मे स दंडभाक् ॥ ४२ ॥ ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ॥ अजानंतमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ४३ ॥ एवं विश्राव्य भगवान्मुकुंदो द्वारकौकसः ॥ पावनः सर्वलोकानां विवेश निजमंदिरम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे नृगोपाख्यानं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ श्रीशुक उवाच ॥ बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः ॥ सुहृद्दिदृक्षुरुत्कंठः प्रययौ नंदगोकुलम् ॥ १ ॥ परि-

घोरमित्याह । हिनस्तीति । संसर्गि संसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह । वह्निरिति । अपिच समूलमिति । वह्निर्मूलान्यवशेषयति । ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ॥ ३४ ॥ दुरनुज्ञातं यथावदनुज्ञातम् । त्रिपूरुषं कुलं स्वयं पुत्रं पौत्रं च । प्रसह्य हठात् । बलाद्राजाद्याश्रयतः ॥ ३५ ॥ ये ब्रह्मस्वमभिमन्यंते इच्छंति ते निरयमेवाभिमन्यंते । अतो बालिशा अज्ञा आत्मपातं न विचक्षत इति ॥३६॥ अपिच गृह्णंतीति ॥ ३७–३९ ॥ गृद्ध्वा अभिकांक्ष्य ॥ ४० ॥ ४१ ॥ प्रणमे नमामि ॥ ४२ ॥ न केवलमर्थवादविभीषिकेयं किंतु प्रत्यक्षमित्याह । ब्राह्मणार्थ इति ॥ ४३ ॥ ४४ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ पंचषष्टितमे रामश्चक्रे गोकुलमागतः ॥ रममाणस्तु गोपीभिः कालिंद्याः

कर्षणं मदात् ॥ १ ॥ रामस्य चरितं चित्रं कालिंद्याकर्षणादि यत् ॥ पौंड्रकांतादि कृष्णस्य पृथगुक्तमतः परम् ॥ २ ॥ १ ॥ आशीर्भिरभिनंदितो बभूव ॥ २ ॥ तदाह चिरमिति ॥ ३ ॥ गोपवृद्धांश्च विधिवदभिवंद्य यविष्ठैरभिवंदितो बभूवेत्यर्थः । अपिच यथा वय इति ॥ ४ ॥ ते सर्वे स्वेषु यादवेषु तं राममनामयमारोग्यं पप्रच्छुः ते च तेन पृष्टा इति ॥ ५ ॥ कृष्णे कृष्णप्राप्त्यर्थं संन्यस्ताखिल-राधसस्त्यक्तसर्वविषयाः ॥ ६ ॥ ७ ॥ ८ ॥ रामस्य संदर्शनेनादृताः सादराः ॥ ९ ॥ १० ॥ ११ ॥ तर्हि तद्गमने युष्माभिः प्रतिबंधः किं न कृतः । तद्वाक्यविश्वासादिति चेत् । ननु विश्वासः किमिति कृतस्तत्राहुः । कथंन्विति वक्तृबहुत्वान्नानाविधानि वाक्यानि ॥ १२ ॥ तत्रान्या ऊचुः । कथं न गृह्णंतीति । अन्या ऊचुः । गृह्णंति वा इति चित्रकथस्य चित्रकथाकथनकोविदस्य ।

ष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेव च ॥ रामोऽभिवाद्य पितरावाशीर्भिरभिनंदितः ॥ २ ॥ चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः ॥ इत्यारोप्यां-कमालिंग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥ गोपवृद्धांश्च विधिवद्यविष्ठैरभिवंदितः ॥ यथा वयो यथा सख्यं यथा संबंधमात्मनः ॥ ४ ॥ समुपेत्याथ गोपालान्हास्यहस्तग्रहादिभिः ॥ विश्रांतं सुखमासीनं पप्रच्छुः पर्युपागताः ॥५॥ पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा ॥ कृष्णे कमलपत्राक्षे संन्य-स्ताखिलराधसः ॥ ६ ॥ कच्चिन्नो बांधवा राम सर्वे कुशलमासते ॥ कच्चित्स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥ दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ॥ निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः ॥ ८ ॥ गोप्यो हसंत्यः पप्रच्छू रामसंदर्शनादृताः ॥ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥ कच्चित्स्मरति वा बंधून्पितरं मातरं च सः ॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ अपि वा स्मरतेऽस्माक-मनुसेवां महाभुजाः ॥ १० ॥ मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄरपि ॥ यदर्थे जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो ॥ ११ ॥ ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः ॥ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥ १२ ॥ कथं नु गृह्णंत्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुर-स्त्रियः ॥ गृह्णंति वै चित्रकथस्य सुंदरस्मितावलोकोच्छ्वसितस्मरातुराः ॥ १३ ॥ किं नस्तत्कथया गोप्यः कथाः कथयतापराः ॥ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥ १४ ॥ इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् ॥ गतिं प्रेमपरिष्वंगं स्मरंत्यो रुरुदुः स्त्रियः ॥ १५ ॥ संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयंगमैः ॥ सांत्वयामास भगवान्नानानुनयकोविदः ॥ १६ ॥ द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ॥ रामः क्षपासु भगवान्गो-पीनां रतिमावहन् ॥ १७ ॥ पूर्णचंद्रकलामृष्टे कौमुदीगंधवायुना ॥ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥ वरुणप्रेषिता देवी वारुणी वृक्ष-

किंच सुंदरं स्मितं यस्मिंस्तेनावलोकनेनोच्छ्वसितः क्षुभितो यः स्मरस्तेनातुराः ॥ १३ ॥ अन्या ऊचुः । किं न इति । कालस्तावत्तस्य चास्माकं च यात्येव किंतु तस्य सुखेनास्माकं तु दुःखेनेत्ये-तावानेव विशेष इति ध्वनितम् ॥ १४ ॥ १५ ॥ नानाविधेष्वनुनयेषु कोविदः ॥ १६ ॥ मधुं चैत्रम् । माधवं वैशाखं । गोपीनां रतिमिति । श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबालानामन्यासामित्य-भियुक्तप्रसिद्धिः ॥१७॥ पूर्णचंद्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले कौमुदीगंधवायुना कुमुद्वतीनां गंधवातेन सेविते । यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यंते । कुमुदगंधवातेनेत्यर्थः

॥ १८ ॥ वारुणी सुधया सहोत्पन्ना मदिरा ॥ १९ ॥ २० ॥ क्षीबो मत्तः ॥ २१ ॥ स्वेद एव प्रालेयं हिमं तेन भूपितम् ॥ २२ ॥ मत्तोऽयमित्यनादृत्यानागतामापगां नदीम् ॥ २३ ॥ आहूता आहूता यद्यस्मान्नागच्छसि तस्मात् नेष्ये गमयिष्यामि ॥ २४ ॥ चकिता कंपिता ॥ २५ ॥ एकांशेन शेषाख्येन ॥ २६ ॥ २७ ॥ विजगाहावगाहनं कृतवान् ॥ २८ ॥ उत्तीर्णाय निर्गतायामितांबरादीनि कांतिर्ददौ । कांतिर्लक्ष्मीः यथोक्तं वैष्णवे । वरुणप्रहिता चास्मै मालामम्लानपंकजाम् ॥ समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छतेति ॥ हरिवंशे च बलं प्रति लक्ष्मीवाक्यम् । जानरूपमयं

कोटरात् ॥ पतंती तद्वनं सर्वं स्वगंधेनाध्यवासयत् ॥ १९ ॥ तं गंधं मधुधाराया वायुनोपहृतं बलः ॥ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ ॥ २० ॥ उपगीयमानचरितो वनिताभिर्हलायुधः ॥ वनेषु व्यचरत्क्षीबो मदविह्वललोचनः ॥ २१ ॥ स्रग्व्येककुंडलो मत्तो वैजयंत्या च मालया ॥ बिभ्रत्स्मितमुखांभोजं स्वेदप्रालेयभूषितम् ॥ २२ ॥ स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ॥ निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ॥ अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥ २३ ॥ पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ नेष्ये त्वां लांगलाग्रेण शतधा कामचारिणीम् ॥ २४ ॥ एवं निर्भर्त्सिता भीता यमुना यदुनंदनम् ॥ उवाच चकिता वाचं पतिता पादयोर्नृप ॥ २५ ॥ राम राम महाबाहो न जाने तव विक्रमम् ॥ यस्यैकांशेन विधृता जगती जगतःपते ॥ २६ ॥ परं भावं भागवतो भगवन्मामजानतीम् ॥ मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सल ॥ २७॥ ततो व्यमुंचद्यमुनां याचितो भगवान्बलः ॥ विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥ २८ ॥ कामं विहृत्य सलिलादुत्तीर्णायासितांबरे ॥ भूषणानि महार्हाणि ददौ कांतिः शुभां स्रजम् ॥ २९ ॥ वसित्वा वाससी नीले मालामामुच्य कांचनीम् ॥ रेजे स्वलंकृतो लिप्तो माहेंद्र इव वारणः ॥ ३० ॥ अद्यापि दृश्यते राजन्यमुनाकृष्टवर्त्मना ॥ बलस्यानंतवीर्यस्य वीर्यं सूचयतीव हि ॥ ३१ ॥ एवं सर्वा निशा याता एकेव रमतो व्रजे ॥ रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे बलदेवविजये यमुनाकर्षणं नाम पंचषष्टितमोऽध्यायः ॥ ६५ ॥

॥ श्रीशुक उवाच ॥ नंदव्रजं गते रामे करूषाधिपतिर्नृप ॥ वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १ ॥ त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ॥ इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥ २ ॥ दूतं च प्राहिणोन्मंदः कृष्णायाव्यक्तवर्त्मने ॥ द्वारकायां यथा बालो नृपो बालकृतोऽबुधः ॥ ३ ॥ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ॥ कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥ ४॥ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः ॥ भूतानामनुकंपार्थं त्वं तु मिथ्याऽभिधां त्यज ॥ ५ ॥ यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत ॥ त्यक्त्वैहि मां त्वं शरणं नोचेद्देहि ममाहवम्

चैकं कुंडलं वज्रभूषणम् ॥ आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम् ॥ देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियामित्यादि ॥ २९ ॥ वसित्वा परिधाय । आमुच्य कंठे निधाय । चंदनादिभिरालिप्तः ॥ ३० ॥ ३१ ॥ एकेव एकैव निशा यथा । तथा माधुर्यैर्विलासैः ॥ ३२ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां पंचषष्टिमोऽध्यायः ॥ ६५ ॥ षट्युक्तषष्टितमे काशीं गत्वाऽहव

॥ ३–७ ॥ हे मूढ !
पौंड्रकं हरिः ॥ तन्मित्रं न ततो वृत्तं सुदक्षिणवधादिकम् ॥ १ ॥ १ ॥ प्रस्तोभितः प्रोत्साहितः । स्तुत्या बालैरज्ञैः ॥ २ ॥ बालकृतो नृपो बालैर्नृपत्वेन क्रीडायां परिकल्पितः ॥ मां शरणमेहीत्यस्योत्तरम् । मुख-
उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि । यैः सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः । यद्वा यैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवं श्लाघसे तान्युत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः ॥ ८ ॥ पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२ ॥
मिति । वटाः कंकादिवन्यपक्षिविशेषाः । तत्र तदा शुनां शरणमाश्रयो भवितास्मि ॥ ९ ॥ काशीमिति । पौंड्रकस्यापि तदा मित्रपुरेऽवस्थानात् ॥ १० ॥ ११ ॥

उवाच दूतं भगवान्परिहास-
॥ ६ ॥ श्रीशुक उवाच ॥ कत्थनं तदुपाकर्ण्य पौंड्रकस्याल्पमेधसः ॥ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥ ७ ॥ शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥९॥
कथामनु ॥ उत्स्रक्ष्ये मूढचिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥ मुखं तदपिधायाज्ञ कंकगृध्रवटैर्वृतः ॥ अक्षौ-
इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् ॥ कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥ १० ॥ पौंड्रकोऽपि तदुद्योगमुपलभ्य महारथः ॥ अक्षौहिणीभिस्तिसृभिरपश्यत्पौंड्रकं हरिः ॥१२॥
हिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥ ११ ॥ तस्य काशीपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप ॥ अमूल्य-
शंखार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् ॥ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३ ॥ कौशेयवाससी पीते वसानं गरुडध्वजम् ॥ शूलैर्गदाभिः
मौल्याभरणं स्फुरन्मकरकुंडलम् ॥ १४ ॥ दृष्ट्वा तमात्मनस्तुल्यवेषं कृत्रिममास्थितम् ॥ यथा नटं रंगगतं विजहास भृशं हरिः ॥ १५ ॥ गजस्यंदनवाजिपत्तिमत् ॥
परिघैः शक्त्यृष्टिप्रासतोमरैः ॥ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥ १६ ॥ कृष्णस्तु तत्पौंड्रककाशिराजयोर्बलं बभौ चितं मोदवहं मन-
गदासिचक्रेषुभिरार्दयद्भृशं यथा युगांते हुतभुक्पृथक्प्रजाः ॥ १७ ॥ आयोधनं तद्रथवाजिकुंजरद्विपत्खरोष्ट्रैररिणाऽवखंडितैः ॥ नान्यस्त्राण्युत्सृजामि ते ॥ १९ ॥
स्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८ ॥ अथाह पौंड्रकं शौरिर्भो भो पौंड्रक यद्भवान् ॥ दूतवाक्येन मामाह इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौंड्रकम् ॥
त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम् ॥ व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥२०॥ न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः
शिरोऽवृश्चद्रथांगेन वज्रेणेंद्रो यथा गिरेः ॥ २१ ॥ तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः ॥ स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबंधनः ॥
॥ २२ ॥ एवं मत्सरिणं हत्वा पौंड्रकं ससखं हरिः ॥ द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥ २३ ॥ किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥२५॥
बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवत् ॥२४॥ शिरः पतितमालोक्य राजद्वारे सकुंडलम् ॥ सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं
राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबांधवाः ॥ पौराश्च हा हता राजन्नाथ नाथेति प्रारुदन् ॥ २६ ॥

॥ १४–१६ ॥ गजस्यंदनादिलक्षणबलमर्दितवान् । पृथक् प्रजाः प्रत्येकं भूतग्रामं यथा युगांते दहति
॥ १३ ॥ गरुडः कृत्रिमो ध्वजे यस्य तम् । अमूल्योऽनर्घ्यो मौलिराभरणं च यस्य तम् ॥ १८–२० ॥ गिरेः शृंगं यथेति ॥ २१–२४ ॥ प्रथमं किमिदमिति पश्चात्कस्य-
॥ १७ ॥ आयोधनं रणस्थानम् । अरिणा चक्रेण चितमाकीर्णम् । आक्रीडनमिव कल्पांतरुद्रस्य क्रीडास्थानमिव

मिति विभाव्य कस्य चेति संशयिरे संशयं कृतवंत इति ॥ २५ ॥ २६ ॥ संस्थाविधिमुत्तरक्रियाम् । अपचितिं निष्कृतिम् ॥ २७ ॥ आत्मनाऽभिसंधाय बुद्ध्या व्यवस्य । सुदक्षिणोऽभ्यर्दाः
॥ २८ ॥ वरमदात् वृणीष्वेत्युक्तवानित्यर्थः ॥ २९ ॥ ऋत्विजमृत्विजमिव स्वनियोगकारिणम् । यज्ञस्य देवमृत्विजमिति श्रुतेः ॥ ३० ॥ अब्रह्मण्ये प्रयोजित इति कृष्णे प्रयोजितो विपरीतो भवि-
ष्यतीति सूचितम् । अभिचरन्नभिचारं कुर्वन् । व्रती गृहीतनियमः ॥ ३१ ॥ तप्तं ताम्रमिव शिखाश्मश्रूणि च यस्य सः अंगारोद्गारीणि लोचनानि यस्य सः ॥ ३२ ॥ दंष्ट्राभिरुग्रभ्रुकुटीदंडेन

पितुः ॥ निहत्य पितृहंतारं यास्याम्यपचितिं पितुः ॥ २७ ॥ इत्यात्मनाऽभिसंधाय सोपाध्यायो महेश्वरम् ॥ सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥ प्रीतोऽविमुक्ते भगवाँस्तस्मै वरमदाद्भवः ॥ पितृहंतृवधोपायं स वव्रे वरमीप्सितम् ॥ २९ ॥ दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् ॥ अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ३० ॥ साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः ॥ इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन्व्रती ॥ ३१ ॥ ततोऽग्निरुत्थितः कुंडान्मूर्तिमानतिभीषणः ॥ तप्तताम्रशिखाश्मश्रुरंगारोद्गारिलोचनः ॥ ३२ ॥ दंष्ट्रोग्रभ्रुकुटीदंडकठोरास्यः स्वजिह्वया ॥ आलिहन्सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलत् ॥ ३३ ॥ पद्भ्यां तालप्रमाणाभ्यां कंपयन्नवनीतलम् ॥ सोऽभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन्दिशः ॥ ३४ ॥ तमाभिचारदहनमायांतं द्वारकौकसः ॥ विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥ ३५ ॥ अक्षैः सभायां क्रीडंतं भगवंतं भयातुराः ॥ त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥ ३६ ॥ श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम् ॥ शरण्यः संप्रहस्याह माभैष्टेत्यविताऽस्म्यहम् ॥३७॥ सर्वस्यांतर्बहिःसाक्षी कृत्यां माहेश्वरीं विभुः ॥ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ३८ ॥ तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम् ॥ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुंदास्त्रमथाग्निमार्दयत् ॥ ३९ ॥ कृत्यानलः प्रतिहतः स रथांगपाणेरस्त्रौजसा स नृपभग्नमुखो निवृत्तः ॥ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः ॥ ४० ॥ चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम् ॥ सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्यश्वरथान्नशालाम् ॥ ४१ ॥ दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् ॥ भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ॥ ४२ ॥ य एनं श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् ॥ समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते ॥ ४३ ॥ इति श्रीमद्भागवते दशमस्कंधे महापुराणे उत्तरार्धे पौंड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥६६॥ ॥ राजोवाच ॥ भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः ॥

कठोरं क्रूरमास्यं यस्य सः । त्रिशिखं त्रिशूलम् ॥ ३३ ॥ दिशः प्रदहन् ॥ ३४ ॥ ३५ ॥ त्राहि त्राहीत्याहुरिति शेषः ॥ ३६ ॥ अहमविताऽस्मि रक्षिष्यामीति ॥ ३७॥३८ ॥ रोदसी च प्रकाशय-
दिति शेषः । यद्वा स्वतेजसा खादीन्प्रति जाज्वल्यमानमत्यर्थं प्रकाशमानमित्यर्थः । आर्दयदपीडयत् ॥ ३९ ॥ अर्दितोऽग्निर्यत्कृतवाँस्तदाह । कृत्यानल इति सहर्त्विग्भिर्जनैश्च वर्तमानम् । अभिचर्यते
मार्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥ अट्टादिसहिताम् । अट्टा मंचाः ॥ ४१–४३ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥ सप्तषष्टितमे रामो गिरौ रैवतके

मदात् ॥ स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं खलम् ॥ १ ॥ कालिंदीविदारणानंतरं रामचरितं द्विविदवधादिसंगतमप्यनुक्त्वा तत्पूर्वभावित्वेन पौंड्रकवधादि निरूप्येदानीं तदेव प्रस्तौति भूयोऽहमि-त्यादिना । रामचरितश्रवणेच्छायामद्भुतकर्मत्वं हेतुस्तत्र चानंतत्वं तत्राप्यप्रमेयत्वमिति ॥ १ ॥ नरकस्य सखेति हरिणा वैरे कारणम् । सुग्रीवसचिव इति तस्य मंत्रबलम् । मैंदस्य भ्रातेति रामा-यणेऽतिप्रसिद्धत्वेन वीर्याधिक्यमुक्तमिति ॥ २ ॥ सख्युर्नरकस्यापचितिमानृण्यम् । राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहदिति ॥ ३ ॥ किंच क्वचिदिति । कदाचित्स द्विविदः

अनंतस्याप्रमेयस्य यदन्यत्कृतवान्प्रभुः ॥ १ ॥ श्रीशुक उवाच ॥ नरकस्य सखा कश्चिद्द्विविदो नाम वानरः ॥ सुग्रीवसचिवः सोऽथ भ्राता मैंदस्य वीर्यवान् ॥ २ ॥ सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम् ॥ पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन् ॥ ३ ॥ क्वचित्स शैलानुत्पाट्य तैर्देशान्समचूर्णयत् ॥ आनर्तान्सुतरामेव यत्रास्ते मित्रहा हरिः ॥ ४ ॥ क्वचित्समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ॥ देशान्नागायुतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥ आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः ॥ ६ ॥ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ॥ निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥ ७ ॥ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः ॥ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥ तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम् ॥ सुदर्शनीयसर्वांगं ललनायूथमध्यगम् ॥ ९ ॥ गायंतं वारुणीं पीत्वा मदविह्वललोचनम् ॥ विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥ १० ॥ दुष्टः शाखामृगः शाखामारूढः कंपयन्द्रुमान् ॥ चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ॥ ११ ॥ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः ॥ हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥ ता हेलयामास कपिर्भ्रूक्षेपैः संमुखादिभिः ॥ दर्शयन्स्वगुदं तासां रामस्य च निरीक्षतः ॥ १३ ॥ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ॥ स वंचयित्वा ग्रावाणं मदिराकलशं कपिः ॥ १४ ॥ गृहीत्वा हेलयामास धूर्तस्तं कोपयन्हसन् ॥ निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलम् ॥ १५ ॥ कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः ॥ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ १६ ॥ क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ॥ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ १७ ॥ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥ तं तु संकर्षणो मूर्ध्नि पतंतमचलो यथा ॥ १८ ॥ प्रतिजग्राह बलवान्सुनंदेनाहनच्च तम् ॥ मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ १९ ॥ गिरिर्यथा गैरिकया प्रहारं नानुचिंतयन् ॥ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ २० ॥ तेनाहनत्सु-

मित्रहा सखिहंता ॥ ४ ॥ तस्य समुद्रस्य जलं बाहुभ्यामुत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् प्लावयामासेति ॥ ५ ॥ आश्रमस्थान्वनस्पतीन् भंक्त्वा आहवनीयादीनपि मूत्रादि कृतवान् ॥ ६ ॥ अप्यधात्पिदधे । पेशस्कारी भ्रमरः ॥ ७–९ ॥ प्रभिन्नं मत्तम् ॥ १० ॥ ११ ॥ जात्या स्वभावेनैव चापलं यासां ताः ॥ १२ ॥ हेलयामासावजज्ञे । निरीक्षतो निरीक्षमाणस्य समनादित्यर्थः ॥ १३ ॥ १४ ॥ आस्फालयद्योपितां वासांस्याकृष्य पाटितवान् ॥ १५ ॥ विप्रचक्रे एवमपकृतवान् ॥ १६ ॥ शालं वृक्षम् ॥ १७ ॥ १८ ॥ सुनंदेन मुसलेनाहनत । अहनदित्यर्थः । तं वानरम् ।

मस्तिष्कं मस्तकावयवविशेषः ॥ १९ ॥ गैरिकया लोहितधातुना । नानुचिंतयन्नगणयन् ॥ २०–२३ ॥ अरूरुजत्ताडयामास ॥ २४ ॥ यादवेंद्रः संकर्षणः क्रुद्धः सन् । जत्रौ कंठबाहुमूले ॥ २५ ॥
टंकाः सतोयविवराणि तत्सहितः ॥ २६ ॥ २७ ॥ जगतो व्यतिकरं नाशमावहतीति तथा तम् ॥ २८ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमे सांबे-
निरुद्धे कौरवैर्युधि ॥ तद्विमोचाय रामेण गजाह्वयविकर्षणम् ॥ १ ॥ रामचरित्रांतरं निरूपयितुमाह । दुर्योधनसुतामिति । समितिंजयः संग्रामजित् ॥ १ ॥ २ ॥ नोऽस्माकं महीमस्माभिर्दत्ताम् ।

संक्रुद्धस्तं बलः शतधाऽच्छिनत् ॥ ततोऽन्येन रुषा जघ्ने तं चापि शतधाऽच्छिनत् ॥२१॥ एवं युद्ध्यन्भगवता भग्ने भग्ने पुनःपुनः ॥ आकृष्य सर्वतो
वृक्षान्निर्वृक्षमकरोद्वनम् ॥ २२ ॥ ततोऽमुंचच्छिलावर्षं बलस्योपर्यमर्षितः ॥ तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥ स बाहू तालसंकाशौ
मुष्टीकृत्य कपीश्वरः ॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥ २४ ॥ यादवेंद्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललांगले ॥ जत्रावभ्यर्दयत्क्रुद्धः
सोऽपतद्रुधिरं वमन् ॥ २५ ॥ चकंपे तेन पतता सटंकः सवनस्पतिः ॥ पर्वतः कुरुशार्दूल वायुना नौरिवांभसि ॥ २६ ॥ जयशब्दो नमःशब्दः
साधुसाध्विति चांबरे ॥ सुरसिद्धमुनींद्राणामासीत्कुसुमवर्षिणाम् ॥ २७ ॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ॥ संस्तूयमानो भगवाञ्जनैः
स्वपुरमाविशत् ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ श्रीशुक उवाच ॥
दुर्योधनसुतां राजँल्लक्ष्मणां समितिंजयः ॥ स्वयंवरस्थामहरत्सांबो जांबवतीसुतः ॥ १ ॥ कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ॥ कदर्थीकृत्य नः
कन्यामकामामहरद्बलात् ॥ २ ॥ बध्नीतेमं दुर्विनीतं किं करिष्यंति वृष्णयः ॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुंजते महीम् ॥ ३ ॥ निगृहीतं सुतं
श्रुत्वा यद्येष्यंतीह वृष्णयः ॥ भग्नदर्पाः शमं यांति प्राणा इव सुसंयताः ॥ ४ ॥ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ॥ सांबमारेभिरे बद्धुं कुरु-
वृद्धानुमोदिताः ॥ ५ ॥ दृष्ट्वाऽनुधावतः सांबो धार्तराष्ट्रान्महारथः ॥ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठ-
तिष्ठेति भाषिणः ॥ आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन् ॥ ७ ॥ सोपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनंदनः ॥ नामृष्यत्तदचिंत्यार्भः सिंहः
क्षुद्रमृगैरिव ॥ ८ ॥ विस्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः ॥ कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक् ॥ ९ ॥ चतुर्भिश्चतुरो वाहानेकैकेन
च सारथीन् ॥ रथिनश्च महेष्वासाँस्तस्य तत्तेऽभ्यपूजयन् ॥ १० ॥ तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ॥ एकस्तु सारथिं जघ्ने चिच्छेदान्यः
शरासनम् ॥ ११ ॥ तं बध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि ॥ कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ १२ ॥ तच्छ्रुत्वा नारदोक्तेन

न ते भूपतय इति भावः ॥ ३ ॥ यांति यास्यंति । प्राणा इंद्रियाणीव । सुसंयताः प्राणायामादिभिर्दमिताः ॥ ४ ॥ कुरुवृद्धो भीष्मस्तेनानुमोदितास्तत्सहिताः षडेते इत्यर्थः ॥ ५ ॥ ६ ॥ कर्णाऽ-
[illegible] ॥ नामृष्यत असहदचिंत्यस्य भगवतोऽर्भोऽर्भकः । अचिंत्यश्चासावर्भश्चेति वा ॥ ८ ॥ ९ ॥ तत्प्रपंचयति । चतुर्भिरिति । चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसंधेया । तत्कर्म ते संमा-

नितवंतः ॥ १० ॥ ११ ॥ स्वस्य दुर्योधनस्य कन्यां च नीतवान् ॥ १२ ॥ १३ ॥ यतः कलिं नैच्छदतः सांत्वयित्वा जगामेति ॥ १४ ॥ १५ ॥ धृतराष्ट्रं प्रतिबुभुत्समयेति अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥ विधिवदभिवंद्य ॥ १७ ॥ तमुद्धवमर्चयित्वा सत्कृत्य । मंगलपाणय उपायनहस्ताः ॥ १८ ॥ वृद्धा अपि प्रणेमुः ॥ १९–२१ ॥ यद्यूयमित्युग्रसेनवाक्यम् । मृष्ये सहे । अथाशु तमानीय समर्पयंतीति शेषः ॥ २२ ॥ वीर्यं प्रभावः शौर्यमुत्साहो बलं सत्त्वं तैरुन्नद्धमुच्छृंखलम् । कथम् ! आत्मनः शक्तेः सममनुरूपम् ॥ २३ ॥ उपानत्पादरक्षा शिर आरोढुमिच्छतीति हीना अस्मा-

राजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १३ ॥ सांत्वयित्वा तु तान्रामः संनद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः ॥ १४ ॥ जगाम हास्तिनपुरं रथेनादित्यवर्चसा ॥ ब्राह्मणैः कुलवृद्धैश्च वृतश्चंद्र इव ग्रहैः ॥ १५ ॥ गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः ॥ उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया ॥ १६ ॥ सोऽभिवंद्यांबिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् ॥ दुर्योधनं च विधिवद्राममागतमब्रवीत् ॥ १७ ॥ तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् ॥ तमर्चयित्वाऽभिययुः सर्वे मंगलपाणयः ॥ १८ ॥ तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन् ॥ तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ १९ ॥ बंधून्कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ॥ परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २० ॥ उग्रसेनः क्षितीशेशो यद्व आज्ञापयत्प्रभुः ॥ तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलंबितम् ॥ २१ ॥ यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ॥ अबध्नीताथ तन्मृष्ये बंधूनामैक्यकाम्यया ॥ २२ ॥ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः ॥ कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥ २३ ॥ अहो महच्चित्रमिदं कालगत्या दुरत्यया ॥ आरुरुक्षत्युपानद्वै शिरो मुकुटसेवितम् ॥ २४ ॥ एते यौनेन संबद्धाः सहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २५ ॥ चामरव्यजने शंखमातपत्रं च पांडुरम् ॥ किरीटमासनं शय्यां भुंजंत्यस्मदुपेक्षया ॥ २६ ॥ अलं यदूनां नरदेवलांछनैर्दातुः प्रतीपैः फणिनामिवामृतम् ॥ येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयंत्यद्य गतत्रपा बत ॥ २७ ॥ कथमिंद्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुंधीत सिंहग्रस्तमिवोरणः ॥ २८ ॥ श्रीशुक उवाच ॥ जन्मबंधुश्रियोन्नद्धमदास्ते भरतर्षभ ॥ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥ २९ ॥ दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन्मुहुः ॥ ३० ॥ नूनं नानामदोन्नद्धाः शांतिं नेच्छंत्यसाधवः ॥ तेषां हि प्रशमो दंडः पशूनां लगुडो यथा ॥ ३१ ॥ अहो यदून्सुसंरब्धान्कृष्णं च कुपितं शनैः ॥ सांत्वयित्वाऽहमेतेषां शममिच्छन्निहागतः ॥ ३२ ॥ त इमे मंदमतयः कलहाभिरताः खलाः ॥ तं मामवज्ञाय मुहुर्दुर्भाषान्मानिनोऽब्रुवन् ॥ ३३ ॥ नोग्रसेनः किल विभुर्भोज-

नाज्ञापयंतीत्यर्थः ॥ २४ ॥ अस्यैव प्रपंचः एत इति चतुर्भिः । यौनेन पृथाया विवाहेन ॥ २५ ॥ किंच । चामरव्यजने इति । भुंजंत्युपभुंजत इत्यर्थः । अस्मदुपेक्षया अस्माकमनादरेण ॥ २६ ॥ अलमिति । अतः परं तान्यपहरिष्याम इत्यर्थः ॥ २७ ॥ अवरुंधीत स्वीकुर्यात् । उरगो मेषः ॥ २८ ॥ जन्मना बंधुभिः श्रीपर्यालोचनया श्रिया उन्नद्ध उत्कटो मदो येषां ते । दुर्वाच्यं परुषं वाक्यम् ।

असभ्या दुर्जनाः ॥ २९ ॥ ३० ॥ नानाधनाभिजनादिमदैरुन्नद्धास्तेषां दंड एव प्रशमः प्रकर्षेण शमयतीति तथा । यथा लगुडो दंडः ॥ ३१ ॥ ३२ ॥ दुर्भाषानवाच्यशब्दान ॥ ३३ ॥ दुर्भाषणमनुस्मरति षड्भिः नोग्रसेन इति । विभुराज्ञापयितुं समर्थः ॥ ३४ ॥ अहो धृष्टाः श्रीकृष्णमप्यधिक्षिपंतीति कुपित आह सुधर्मेत्यादिभिस्त्रिभिः ॥ ३५ ॥ ३६ ॥ मौल्युत्तमैर्मौलियुक्तैरुत्तमांगैः । उत्तमैर्मौलिभिरिति वा । उपासितानि तीर्थानि यैर्योगिभिस्तेषामपि तीर्थम् । यद्वा उपासितं सर्वैः सेवितं तीर्थं गंगा तस्यास्तीर्थं तीर्थत्वनिमित्तम् । किंच ब्रह्मा भवः श्रीश्चाहमपि उद्वहेम । कथंभूता

वृष्ण्यंधकेश्वरः ॥ शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३४ ॥ सुधर्माऽऽक्रम्यते येन पारिजातोऽमरांघ्रिपः ॥ आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥ ३५ ॥ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३६ ॥ यस्यांघ्रिपंकजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥ ३७ ॥ भुंजते कुरुभिर्दत्तं भूखंडं वृष्णयः किल ॥ उपानहः किल वयं स्वयं तु कुरवः शिरः ॥ ३८ ॥ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ॥ असंबद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥ ३९ ॥ अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥ ४० ॥ लांगलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गंगायां प्रहरिष्यन्नमर्षितः ॥ ४१ ॥ जलयानमिवाघूर्णं गंगायां नगरं पतत् ॥ आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥ ४२ ॥ तमेव शरणं जग्मुः सकुटुंबा जिजीविषवः ॥ सलक्ष्मणं पुरस्कृत्य सांबं प्रांजलयः प्रभुम् ॥ ४३ ॥ राम रामाखिलाधार प्रभावं न विदाम ते ॥ मूढानां नः कुबुद्धीनां क्षंतुमर्हस्यतिक्रमम् ॥ ४४ ॥ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ॥ लोकान्क्रीडनकानीश क्रीडतस्ते वदंति हि ॥ ४५ ॥ त्वमेव मूर्ध्नीदमनंतलीलया भूमंडलं बिभर्षि सहस्रमूर्धन् ॥ अंते च यः स्वात्मनि रुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६ ॥ कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ॥ बिभ्रतो भगवन्सत्त्वं स्थितिपालनतत्परः ॥ ४७ ॥ नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४८ ॥ श्रीशुक उवाच ॥ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितः सुप्रसन्नो माभैष्टेत्यभयं ददौ ॥ ४९ ॥ दुर्योधनः पारिबर्हं कुंजरान्षष्टिहायनान् ॥ ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥ ५० ॥ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ॥ दासीनां निष्ककंठीनां सहस्रं दुहितृवत्सलः ॥ ५१ ॥ प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ॥ ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनंदितः

वयम् । यस्य कलाया अंशस्य कला अंशाः ॥ ३७ ॥ ३८ ॥ मत्तानामिव मद्यादिना रूक्षाः परुषाः । अनुशासिता स्वयं दंडधरः सन् ॥ ३९ ॥ ४० ॥ लांगलाग्रेण दक्षिणतः प्राकारमूले निखातेन । उद्विदार्य उत्पाट्य ॥ ४१ ॥ ४२ ॥ जिजीविषव इत्यक्षराधिक्यं सोढव्यम् ॥ ४३ ॥ मूढानां प्रभावानभिज्ञानाम् । अतिक्रममपराधम् ॥ ४४ ॥ ४५ ॥ शेषे शयनं करोषि । शेषपर्यंके परिशिष्यमाणो यः स च त्वमेवेति वा ॥ ४६ ॥ अस्मासु कोपश्च तवायमुचित एवेत्याहुः । कोपस्तु इति । स्थितिपालने तत्परस्तात्पर्यवान्कोपः । पाठांतरे संबोधनम् ॥ ४७ ॥ विश्वं कर्म कृत्यं यस्य

स त्वमिति संबोधनम् ॥ ४८ ॥ वेपमानमयनं परं येषां तैः ॥ ४९ ॥ तुरंगमाश्च द्वादशायुतानि ॥ ५० ॥ ५१ ॥ सुहृद्भिः कौरवैः ॥ ५२ ॥ मध्येसभायां सभामध्ये ॥ ५३ ॥ ५४ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ एकोनसप्ततितमे गार्हस्थ्यं प्रतिमंदिरम् ॥ कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥ १ ॥ १ ॥ दिदृक्षामभिनयेनाह । चित्रमिति द्व्यष्टसहस्रस्त्रीरुदावहत्परिणीतवान् ॥ २ ॥ तां द्वारवतीमनुवर्णयति पुष्पितेति सार्धत्रयेण । पुष्पितेषूपवनेष्वारामेषूद्यानेषु च द्विजानामलीनां च कुलानि तैर्नादिताम् ॥ ३ ॥ छुरितेषु व्याप्तेषु ॥ ४ ॥ महामरकतैः प्रख्यायंते प्रकाशंत इति तथा तैः । स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥ ५ ॥ पतंत्यः प्रचलंत्यः पताका ये तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥ ६ ॥ तस्यां

॥ ५२ ॥ ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बंधूननुरक्तचेतसः ॥ शशंस सर्वं यदुपुंगवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ ५३ ॥ अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गंगायामनुदृश्यते ॥ ५४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे हास्तिनपुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ श्रीशुक उवाच ॥ नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ॥ कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ १ ॥ चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ॥ गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥ २ ॥ इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३ ॥ उत्फुल्लेंदीवरांभोजकह्लारकुमुदोत्पलैः ॥ छुरितेषु सरःसूच्चैः कूजितां हंससारसैः ॥ ४ ॥ प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ॥ महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ५ ॥ विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ॥ संसिक्तमार्गांगणवीथिदेहलीं पतत्पताकाध्वजवारितातपाम् ॥ ६ ॥ तस्यामंतःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ॥ हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥ ७ ॥ तत्र षोडशभिः सद्मसहस्रैः समलंकृतम् ॥ विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥ विष्टब्धं विद्रुमस्तंभैर्वैदूर्यफलकोत्तमैः ॥ इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥ ९ ॥ वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः ॥ दान्तैरासनपर्यंकैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥ दासीभिर्निष्ककंठीभिः सुवासोभिरलंकृतम् ॥ पुंभिः सकंचुकोष्णीषसुवस्त्रमणिकुंडलैः ॥ ११ ॥ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतं विचित्रवलभीषु शिखंडिनोऽंग ॥ नृत्यंति यत्र विहितागुरुधूपमक्षैर्निर्यातमीक्ष्य घनबुद्धय उन्नदंतः ॥ १२ ॥ तस्मिन्समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ॥ विप्रो ददर्श चमरव्यजनेन रुक्मदंडेन सात्वतपतिं परिवीजयंत्या ॥ १३ ॥ तं सन्निरीक्ष्य भगवान्सहसोत्थितः श्रीपर्यंकतः सकलधर्मभृतां

द्वारकायाम् । सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम् । षोडशभिः सद्मसहस्रैः समलंकृतं हरेरंतःपुरं विवेश । तत्र च तस्य शौरेः पत्नीनां भवनेष्वेकतमं विवेशेत्यन्वयः । यत्र च स्वकौशलं त्वष्ट्रा दर्शितमित्यंतःपुरभवनयोर्विशेषणम् ॥ ७ ॥ ८ ॥ तदनुवर्णयति चतुर्भिः । विष्टब्धमिति । विद्रुमस्तंभैर्विष्टब्धं विधृतम् । वैदूर्यमयानि फलकोत्तमानि स्तंभाश्रयणानि छादनानि वा इंद्रनीलमयैः कुड्यादिभिश्चोपलक्षितम् । जगत्या भूमिकया चेंद्रनीलमय्या । न हता त्विड् यस्यास्तया ॥ ९ ॥ मुक्तादाम्नां विलंबा विविधानि लंबनानि विद्यंते येषु तैः । मण्युत्तमैः परिष्कृतैर्भूषितैः ॥ १० ॥ ११ ॥ ईक्ष्य समीक्ष्य । घनो मेघोऽयमिति बुद्धिर्येषां ते ॥ १२ ॥ अनु सवं सर्वकालम् । आत्मना समानानि गुणरूपवयांसि सुवेषोऽलंकारश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह ॥ १३ ॥

श्रियो रुक्मिण्याः पर्यंकतः अवीविशदुपवेशयामास ॥ १४ ॥ अबिभ्रदबिभ्रः दधारेत्यर्थः । बिभ्रदिति शत्रंतं वा । तदा संपूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः । कथंभूतः । यस्य चरणशौचं गंगा अशेषतीर्थं सः अतएव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः । सतां पतित्वे हेतुः । ब्रह्मण्यदेव इति यद्गुणकृतं नाम तस्यैव यतो युक्तं समंजसमतस्तद्धर्मप्रवर्तनार्थमेवमाचरणमित्यर्थः ॥ १५ ॥ अभिभाष्य दिष्ट्याऽत्र त्वदागमनमित्यादि प्रियमुक्त्वा ॥ १६ ॥ भगवता स्वस्यार्हणमनर्हं मन्यमानस्तत्संभावयन्नाह । नैवेति । सर्वमित्रत्वादेवमर्हणं न तु मम योग्यत्वात् नहि

वरिष्ठः ॥ आनम्य पादयुगलं शिरसा किरीटजुष्टेन सांजलिरवीविशदासने स्वे ॥ १४ ॥ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ॥ ब्रह्मण्यदेव इति यद्गुणनामयुक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १५ ॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याऽभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवामहे किम् ॥ १६ ॥ नारद उवाच ॥ नैवाऽद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥ दृष्टं तवांघ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः सनारदः ॥ योगेश्वरेश्वरस्यांग योगमायाविवित्सया ॥ १९ ॥ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥ पृष्टश्चाविदुषे वासौ कदा यातो भवानिति ॥ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥ अथापि ब्रूहि नो ब्रह्मन्जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥ २२ ॥ तत्राप्यचष्ट गोविंदं लालयंतं सुतान्शिशून् ॥ ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥ २३ ॥ जुह्वंतं च वितानाग्नीन्यजंतं पंचभिर्मखैः ॥ भोजयंतं द्विजान्क्वापि भुंजानमवशेषितम् ॥ २४ ॥ क्वापि संध्यामुपासीनं जपंतं ब्रह्मवाग्यतम् ॥ एकत्र चासिचर्मभ्यां चरंतमसिवर्त्मसु ॥ २५ ॥ अश्वैर्गजैरथैः क्वापि विचरंतं गदाग्रजम् ॥ क्वचिच्छयानं पर्यंके स्तूयमानं च बंदिभिः ॥ २६ ॥ मंत्रयंतं च कस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः ॥ जलक्रीडारतं क्वापि वारमुख्याऽबलावृतम् ॥ २७ ॥ कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलंकृताः ॥ इतिहासपुराणानि शृण्वंतं मंगलानि च ॥ २८ ॥ हसंतं हास्यकथया कदाचित्प्रियया गृहे ॥ क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ २९ ॥ ध्यायंतमेकमासीनं पुरुषं प्रकृतेः परम् ॥ शुश्रूषंतं गुरून्क्वापि कामैर्भोगैः सपर्यया ॥ ३० ॥ कुर्वंतं

कथं कंसादिष्वमैत्री तत्राह । खलानां दमश्च नैवाद्भुतमिति । कुतः । जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः । अतः खलदमः साधुसंमाननं च युक्तमिति भावः ॥ १७ ॥ यदुक्तं प्रभो किं करवामेति तत्राह । दृष्टमिति । भक्तजनताया अपवर्गरूपम् । किंच अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिंत्यम् । किंच । संसारकूपे पतितानामुत्तरणायावलंबमाश्रयम् । एवंभूतं तवांघ्रियुगलं मया दृष्टमतः कृतकृत्योऽस्मि । तथापि त्वत्स्मृतिर्यथाऽनुगृहाण । ततस्तद्ध्यायन्नेव नित्यं चरामीति ॥ १८ ॥ १९ ॥

अर्चंर्दीव्यंतमित्यादौ ददर्शेति ज्ञातव्यम् ॥ २०-२३ ॥ वितानाग्नीनाहवनीयादीनग्निहोत्रेण । पंचभिर्महायज्ञैर्यजंतम् ॥ २४-३१ ॥ काले तत्तत्समये विधिना उपयापनं प्रापणं विवाहमित्यर्थः ।
कल्पयंतं घटयंतम् । विभूतिभिर्विभवैः ॥ ३२ ॥ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तत्तद्गृहं प्रतिनयनम् । उपानयनं तत्तद्गृहात्पुनरानयनम् । तैर्महोत्सवान्कल्पयंतम् । योगेश्वरेशस्य तेषामपत्यानां
महोत्सवान्वीक्ष्य लोकाः सर्वे विसिस्मिरे विस्मयं चक्रुः तथाभूतान् कल्पयंतम् ॥ ३३-३५ ॥ अव्यक्तलिंगं वेषांतरेण छन्नम् ॥ ३६ ॥ ३७ ॥ हे योगेश्वर ! आत्मन् आत्मनि मम मनसि तव
स्वरूपमेवानिर्माताः प्रतीतास्तव योगमायाः केवलं विदाम विद्मः नतु त्वत्परमार्थमिति भावः ॥ ३८ ॥ त्वन्मानुष्यनाट्येन मुह्याम्यतो मां प्रस्थापयेत्याह । अनुजानीहीति ॥ ३९ ॥ तत्तस्माल्लोकं

पुत्राणां दुहितॄणां च काले विध्युपयापनम् ॥ दारैर्वरै-
विग्रहं केश्चित्संधिं चान्यत्र केशवम् ॥ कुत्रापि सह रामेण चिंतयंतं सतां शिवम् ॥ ३१ ॥
स्तत्सदृशैः कल्पयंतं विभूतिभिः ॥ ३२ ॥ प्रस्थापनोपानयनैरपत्यानां महोत्सवान् ॥ वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३३ ॥ यजंतं
सकलान्देवान्क्वापि क्रतुभिरूर्जितैः ॥ पूर्तयंतं क्वचिद्धर्मं कूपाराममठादिभिः ॥ ३४ ॥ चरंतं मृगयां क्वापि हयमारुह्य सैंधवम् ॥ घ्नंतं ततः पशून्मे-
ध्यान्परीतं यदुपुंगवैः ॥ ३५ ॥ अव्यक्तलिंगं प्रकृतिष्वंतःपुरगृहादिषु ॥ क्वचिच्चरंतं योगेशं तत्तद्भावबुभुत्सया ॥ ३६ ॥ अथोवाच हृषीकेशं नारदः
प्रहसन्निव ॥ योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥ ३७ ॥ विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् ॥ योगेश्वरात्मन्निर्भाता भवत्पाद-
निषेवया ॥ ३८ ॥ अनुजानीहि मां देव लोकांस्ते यशसाप्लुतान् ॥ पर्यटामि तवोद्गायँल्लीलां भुवनपावनीम् ॥ ३९ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्ध-
र्मस्य वक्ताऽहं कर्ता तदनुमोदिता ॥ तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥ ४० ॥ श्रीशुक उवाच ॥ इत्याचरंतं सद्धर्मान्पावनान्गृहमेधि-
नाम् ॥ तमेव सर्वगेहेषु संतमेकं ददर्श ह ॥ ४१ ॥ कृष्णस्यानंतवीर्यस्य योगमायामहोदयम् ॥ मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः ॥ ४२ ॥
इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ॥ सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ ४३ ॥ एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय
गृहीतशक्तिः ॥ रेमेऽंग षोडशसहस्रवरांगनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४४ ॥ यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि
हरिश्चकार ॥ यस्त्वंग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥४५॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे श्रीकृष्ण-
गार्हस्थ्यदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ श्रीशुक उवाच ॥ अथोषस्युपवृत्तायां कुक्कुटान्कूजतोऽशपन् ॥ गृहीतकंठ्यः पतिभिर्माधव्यो

शिक्षयन्निमं धर्ममास्थितो न तु तत्त्वतः हे पुत्र ! मा खिदः मोहं मा प्राप्नुहीति ॥४०॥ इत्येवमनुगृहीतस्तमेकमेव संतं ददर्शेति ॥ ४१ ॥ मुहुर्मुहुर्दृष्ट्वा जातकौतुको मुनिर्विस्मितोऽभूदिति ॥ ४२ ॥
श्रद्धितः श्रद्धया युक्त आत्मा यस्य तेन ॥ ४३ ॥ नारददृष्टां श्रीकृष्णलीलां निगमयति । एवमिति । अखिलस्य भवायोद्भवाय गृहीताः शक्तयो नानामूर्तयो येन सः रेमेऽंग न तत्रासक्तः च तेन
निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥ अनन्यविषयाण्यसाधारणानि । अपवर्गमार्गे मोक्षप्रदे ॥ ४५ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ तनस्तु

सप्ततितमे कृष्णस्याह्निककर्मणि ॥ दूतनारदयोः कार्ये कार्यमंत्रविचारणम् ॥ १ ॥ जगन्मंगलचारित्रमाह्निकं जगदीशितुः ॥ नारदेन कचित्किंचिद्दृष्टमाह यथाक्रमम् ॥ २ ॥ अथेति । इत्यर्थकामध-
र्मेषु कृष्णेन श्रद्धितात्मनेति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारेऽथशब्दः उपवृत्तायामासन्नायाम् । पतिभिः श्रीकृष्णैः । माधव्यो माधवस्य भार्याः ॥ १ ॥ बंदिन इव श्रीकृष्णं बोधयंति गांति
वयांसि पक्षिणोऽरूरुवन्नतिशयेनाकूजन् । मंदारवनवायुभिर्गायत्स्वलिष्वनिद्राणि निद्रारहितानि वयांसि ॥ २ ॥ वैदर्भीत्युपलक्षणम् । परिरंभणविश्लेपात्तं पर्यालोच्य ॥ ३ ॥ ४ ॥ एकमखंडम् ।
तत्र हेतुः । अनन्यं निरुपाधिं अतएवाव्ययं नित्यम् । स्वयं ज्योतिष्ट्वे हेतुः । नित्यनिरस्तं नित्यनिवृत्तं कल्मषमविद्या यस्मात्तम् । उपलक्षणमाह । अस्येति । अस्य विश्वस्य लक्षितभावश्चासौ निर्वृ-
तिश्च । भावः सत्ता । निर्वृतिरानंदः । तथाहि । गुणक्षोभात्पूर्वं सत्तामात्रं यः सदेव सोम्येदमग्र आसीदित्यादिश्रुतेः । स एवानंदश्च विज्ञानमानंदमित्यादिश्रुतेः । तं सदानंदमित्यर्थः ॥ ५ ॥ आ-

विरहातुराः ॥ १ ॥ वयांस्यरूरुवन्कृष्णं बोधयंतीव बंदिनः ॥ गायत्स्वलिष्वनिद्राणि मंदारवनवायुभिः ॥ २ ॥ मुहूर्तं तं तु वैदर्भी नामृष्यदति-
शोभनम् ॥ परिरंभणविश्लेषात्प्रियबाह्वंतरं गता ॥ ३ ॥ ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ॥ दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥४॥
एकं स्वयंज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम् ॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥ ५ ॥ अथाप्लुतो-
ऽभस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ॥ चकार संध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥ उपस्थायार्कमुद्यंतं तर्प-
यित्वाऽऽत्मनः कलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥ ७ ॥ धेनूनां रुक्मशृंगीणां साध्वीनां मौक्तिकस्रजाम् ॥ पयस्विनीनां गृष्टीनां
सवत्सानां सुवाससाम् ॥ ८ ॥ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह॥ अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ॥ ९ ॥ गोविप्रदेवतावृद्धगुरून्भू-
तानि सर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मंगलानि समस्पृशत् ॥ १० ॥ आत्मानं भूषयामास नरलोकविभूषणम् ॥ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुले-
पनैः ॥ ११ ॥ अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः ॥ कामांश्च सर्ववर्णानां पौरांतःपुरचारिणाम् ॥ प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनंदत
॥ १२ ॥ संविभज्याग्रतो विप्रान्स्रक्तांबूलानुलेपनैः ॥ सुहृदः प्रकृतीर्दारानुपायुंक्त ततः स्वयम् ॥ १३ ॥ तावत्सूत उपानीय स्यंदनं परमाद्भुतम् ॥
सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥ गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत् ॥ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥

प्लुतः । स्नातः संध्यायाः उपगम उपासनमादिर्यथा भवति तथा क्रियाकलापं चकार । काण्वत्वादुदयात्पूर्वमेव हुतानलः । ब्रह्म गायत्रीं जजाप ॥ ६ ॥ कला अंशान्देवान् ऋषीन्पितॄंश्च तर्पयित्वा
॥ ७ ॥ गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥ बद्वमिति । हिरण्येन परिवृतान् कृष्णान् शुक्लदतो मृगान् ॥ मष्णारे भरतोऽददाच्छतं बद्वानि सप्त चेति श्रुत्युक्तानि सप्तोत्तरशतं बद्वान्येकीकृत्य पुराणे
चतुर्दशलक्षत्वेन गणितानि । यथोक्तं भरतमेवाधिकृत्य नवमस्कंधे । मृगान् शुक्लदतः कृष्णान्सुवर्णेन परिष्कृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दशेति ततश्चेयं बद्वसंख्याश्लोकेन संगृह्यते ।
चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदशेति । दिने दिने च प्रतिगृहं चेति ॥ ९ ॥ आत्मसंभूतीः । मंगलानि कपिलादीनि ॥ १० ॥ नरलोकस्य विभूषण-
रूपमात्मानम् । स्वीयैः पीतांबरकौस्तुभादिभिः ॥ ११ ॥ कामानभिलपितानर्थान् ॥ १२ ॥ विप्रादीन्स्रगादिभिः संविभज्य । तेभ्यस्तानि दत्त्वेत्यर्थः । उपायुंक्त भोगार्थमग्रहीत् ॥ १३ ॥ १४ ॥

पाणी कृतेऽञ्जलौ गृहीत्वा ॥ १५ ॥ सव्रीडप्रेमवीक्षितैरीक्षितः क्षणं स्थितस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादिति ॥ १६ ॥ एवं सर्वगृहेभ्यः पृथक् पृथङ्निर्गत्यानंतरमेक एव सन्सुधर्मां प्रावि-
शत् । यन्निविष्टानां यत्र प्रविष्टानाम् ॥ १७ ॥ नृसिंहैर्नृषु श्रेष्ठैः ॥ १८ ॥ उपमंत्रिणः परिहासकाः । पृथक् पृथक् स्वस्वसमुदायैः ॥ १९ ॥ मृदंगादयः प्रसिद्धाः । दरः शंखः सूतादयस्तुष्टुवुः
॥ २० ॥ ब्राह्मणा ब्रह्म वेदमाहुर्मंत्रान्व्याचख्युरित्यर्थः । वादिनो वदनचतुराः ॥ २१–२३ ॥ गिरिव्रजे तत्संज्ञके दुर्गे रुद्धा आसन् । तेषां च दुःखमावेदयदित्यन्वयः ॥ २४ ॥ कृष्णकृष्णेति पट्-
श्लोकी राज्ञां विज्ञप्तिस्तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादो द्वाभ्यां प्रार्थनमिति ॥ २५ ॥ पृथग्दर्शिनो लोकस्य भवभयं विवृण्वंतो नमंति । लोक इति । विकर्म निषिद्धं काम्यं च तस्मिन्नि-
तरां रतः । स्वे कुशले धर्मे । भवतोऽर्चने त्वयोदिते पंचरात्रे । सामान्यतश्च गीतासु । यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति । प्रमत्तोऽनवहितो

ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ॥ कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः ॥१६॥ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ॥ प्राविशद्यन्नि-
विष्टानां न संत्यंग षडूर्मयः ॥ १७ ॥ तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि
तारकागणैः ॥ १८ ॥ तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम् ॥ उपतस्थुर्नटाचार्या नर्तक्यस्तांडवैः पृथक् ॥ १९ ॥ मृदंगवीणामुरजवेणुतालदर-
स्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्च सूतमागधबंदिनः ॥ २० ॥ तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ॥ पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः
॥ २१ ॥ तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥ स नमस्कृत्य कृष्णाय परेशाय कृतांजलिः ॥
राज्ञामावेदयद्दुःखं जरासंधनिरोधजम् ॥ २३ ॥ ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः ॥ प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥
कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभयभंजन ॥ वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥ २५ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते
भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥ लोके भवान् जगदिनः कलयाऽवतीर्णः सदक्ष-
णाय खलनिग्रहणाय चान्यः ॥ कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥ २७ ॥ स्वप्नायितं नृपसुखं परतंत्रमीश
शश्वद्भयेन मृतकेन धुरं वहामः ॥ हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह ॥ २८ ॥ तन्नो भवान्प्रणतशोकहरांघ्रि-

यावदयं लोकस्तावदेवास्य लोकस्य यः सद्यो जीविताशां छिनत्ति तस्मै तुभ्यमनिमिषाय कालात्मने नम इति ॥ २६ ॥ सेयं लोकस्य गतिर्वयं तु त्वद्भक्ता अतोऽस्माकं कुत एतद्दुःखमापन्नमित्या-
शयेनाहुः । लोक इति । भो ईश । जगत इन ईश्वरः । त्वयि सद्रक्षणार्थमवतीर्णेऽपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चिज्जरासंधादिस्त्वदाज्ञामपि लंघयति । किंच त्वया रक्ष्यमाणोऽपि जनः
स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः । न चैतदुभयमपि युक्तमिति भावः ॥ २७ ॥ किं दुःखं तदाहुः । स्वप्नायितमिति । स्वप्नवज्जातं नृपसुखं नृपोचितं सुखम् । यतः परतंत्रं नियमसाध्यम् ।
किंच संप्रति शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण धुरं पुत्रदारादिचिंतां केवलं वहामः । अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामाः संतस्त्वां नाश्रिता इत्याहुः । हित्वेति । ननु त्वत्तो यद्-
नीहैर्निष्कामैर्लभ्यमात्मनि स्वतः सिद्धं सुखं तद्धित्वा क्लिश्याम इति ॥ २८ ॥ त्वन्मायाकृतं कर्मबंधं त्वमेव निवर्तयेति प्रार्थयंते । तन्न इति । विमुंच मोचय । मगधो जरासंधस्तन्मयात्कर्म-

पाशात् । भवद्भिरेव विक्रम्य ततो निर्गम्यतामिति चेदत आहुः । य इति । एक एवायुतमतंगजानां वीर्यं बिभ्रत्सन्स्वभवने भूभुजोऽस्मान् रुरोध । सिंहो मेषीरिव ॥ २९ ॥ किंच युष्मदीया जय-
मित्यस्मानधिकं बाधत इत्याहुः । यो वा इति । हे उदात्तचक्र उद्यतसुदर्शन ! यो वै द्विनवकृत्वोऽष्टादशवारांस्त्वया सह मृधे वर्तमाने तत्र सप्तदशकृत्वस्त्वया खलु भग्नः पराजितः पश्चादनंतवीर्यमपि
नृलोके निरतं नरशरीरविनोदं भवंतं सकृज्जित्वोढदर्पः प्राप्तगर्वो युष्मत्प्रजा नो रुजति पीडयति तत्तत्र यद्युक्तं तद्विधेहीत्यर्थः ॥ ३० ॥ दूत आह । इतीति ॥ ३१–३४ ॥ भूयान्महान्गुणो लाभोऽ-
यमस्माकं यत्सर्वलोकवृत्तांतज्ञानमिति ॥ ३५ ॥ ईश्वरः कर्ता येषां तेषु ॥ ३६ ॥ एवमविदुषेव सर्वज्ञेन जरासंधवधार्थमेव पांडवचिकीर्षितं पृष्टो नारदो मायेयमिति ज्ञात्वाह दृष्टा इति त्रिभिः ।
विश्वसृजश्च ब्रह्मणोऽपि मायिनो मोहकस्य तेष्वशक्तिभिर्विद्यादिभिर्भूतेष्वंतर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते तर्हि भूतानि मां किं न पश्यंति तत्राह । वह्नेरिव च्छन्नरुच इति । स्वशक्ति-
बिभ्रद्रुरोध भवने मृगराडिवावीः ॥ २९ ॥ यो वै त्वया द्विनवकृत्व
युग्मो बद्धान्वियुंक्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतंगजवीर्यमेको
उदात्तचक्र भग्नो मृधे खलु भवंतमनंतवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि ॥ ३० ॥ दूत उवाच ॥
इति मागधसंरुद्धा भवद्दर्शनकांक्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परम-
द्युतिः ॥ बिभ्रत्पिंगजटाभारं प्रादुरासीद्यथा रविः ॥ ३२ ॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववंद उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा
॥ ३३ ॥ सभाजयित्वा विधिवत्कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥ ३४ ॥ अपिस्विदद्य लोकानां त्रयाणामकुतोभयम् ॥
ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥ ३५ ॥ नहि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पांडवानां चिकीर्षितम् ॥ ३६ ॥
श्रीनारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमँश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम्
॥ ३७ ॥ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ॥ यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥
जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥ ३९ ॥ अथाप्याश्रावये
ब्रह्मन् नरलोकविडंबनम् ॥ राज्ञः पैतृष्वस्रेयस्य भक्तस्य च चिकीर्षितम् ॥ ४० ॥ यक्ष्यति त्वां मखेंद्रेण राजसूयेन पांडवः ॥ पारमेष्ठ्यकामो नृपति-
स्तद्भवाननुमोदताम् ॥ ४१ ॥ तस्मिन्देवक्रतुवरे भवंतं वै सुरादयः ॥ दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ॥ ४२ ॥ श्रवणात्कीर्तनाद्ध्या-
तज्जगत्सृजतः किंतु केवलं तुभ्यं नमनमेव
भिरेव छन्ना रुक् प्रकाशो यस्य तस्य अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३७ ॥ इदं जगत् । कथंभूतम् । असदेव यत्तव मायया विद्यमानात्मतया भासते
शक्यमित्याह । तस्मै नम इति । कुतः । स्वेन रूपेण सर्वतो विलक्षणात्मने अचिंत्यायेत्यर्थः ॥ ३८ ॥ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह । जीवस्येति । अविद्या तमसावृतत्वेनानर्थ-
प्रापकाच्छरीरात्संसरतः । तेनैव तपसा तस्माच्छरीराद्विमोक्षोपायमजानतः । प्राज्वालयत्प्रदीपितवान् । तं त्वा त्वाम् । यशःश्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥ ३९ ॥ आश्रावये श्रावयिष्या-
मि । नरलोकविडंबनं ब्रह्म त्वाम् । ब्रह्मन्निति पाठेऽपि हे ब्रह्मन्परमात्मन्नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥ ४० ॥ ४१ ॥ न चात्रैवानुमोदनं कार्यं किं तु तत्रागंतव्यमित्याशयेनाह । तस्मि-

त्विति ॥ ४२ ॥ तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यंतीत्याह श्रवणादिति । अंतेवसायिनः श्वपचा अपि । ब्रह्ममयस्य ब्रह्मघनमूर्तेः । ईक्षा च अभिमर्शः स्पर्शनं च तौ विद्येते येषाम् ॥ ४३॥ कैमुत्यमतिशयेनाह । यस्येति । हे भुवनानां मंगलरूप ! दिवि पाताले भूमौ च प्रथितं यस्य यशो विश्वं पुनाति । कथम् । प्रथितं दिग्वितानं दिग्भवनानां वितानवदलंकरणम् । तथा चरणांबु च प्रथितं पुनाति । कथं तत्प्रथितम् । दिवि मंदाकिनीति अधश्च भोगवतीति इह च भूमौ गंगेति । तस्य तवागमनात्सर्वं मंगलं पवित्रं च भविष्यतीति भावः ॥ ४४ ॥ तत्रैवं नारदोक्तं तेषु वर्तमाने- ष्वात्मीयपक्षेषु यादवेषु जरासंधस्य विजिगीषया अगृह्णत्स्वमन्यमानेषु । वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥ चक्षुश्च हेतुः । मंत्रार्थानां मंत्रसाध्यानां तत्त्ववित्परिपाकवेदिता ॥ ४६ ॥ ४७ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥ अथैकसप्ततितम उद्धवस्य तु मंत्रतः ॥ इंद्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥ १ ॥ राजसूयमिषं कृत्वा भीमदुर्यो-

नात्पूयंतेऽन्तेऽवसायिनः ॥ तव ब्रह्ममयस्येश किमुतेक्षाऽभिमर्शिनः ॥ ४३ ॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमंगल दिग्विता- नम् ॥ मंदाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणांबु पुनाति विश्वम् ॥ ४४ ॥ श्रीशुक उवाच ॥ तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजि- गीषया ॥ वाचःपेशैः स्मयन्भृत्यमुद्धवं प्राह केशवः ॥ ४५ ॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित् ॥ तथाऽत्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥ इत्युपामंत्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥ इति श्रीमद्भागवते महा- पुराणे दशमस्कंधे उत्तरार्धे भगवद्याने सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ श्रीशुक उवाच ॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानां मत- माज्ञाय कृष्णस्य च महामतिः ॥ १ ॥ उद्धव उवाच ॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविंद राज्ञो बद्धान्विमुंचतः ॥ ४ ॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥ द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥

धनादिषु ॥ कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥ २ ॥ देवर्षेर्मतं राजसूयगमनम् । सभ्यानां मतं राजरक्षा । कृष्णस्य तु भयम् ॥ १ ॥ यक्ष्यतो यागं करिष्यतः पैतृष्वस्रेयस्य पितृस्वसुः पुत्रस्य साचिव्यं साहाय्यं तच्च कार्यम् । तथा शरणार्थिनां राज्ञां रक्षा च कार्या ॥ २ ॥ तत्र प्रथमं राजसूयार्थं गंतव्यं ततो राजरक्षा कर्तव्येत्याह यष्टव्यमित्यष्टभिः । अतो दिग्विजयहेतोः । उभयार्थो राजसूयार्थः शरणागतरक्षार्थश्च ॥ ३ ॥ ४ ॥ अत्युत्सुकतया सद्य एव जरासंधं हंतुमिच्छतो यादवानालक्ष्याह । स वा इति । अन्येषां ततो बलिनामपि यद्यपि समबल एव भीमस्तथापि तं विना । भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥ ननु स्वबलसाम्येऽपि सेनाबलं तस्याधिकमिति चेदत आह । द्वैरथ इति । द्वंद्वयुद्धे शतेनाक्षौहिणीभिर्युतो मागधो मा न जेतव्य इत्यर्थः । नन्वसौ स्वसैन्यमेव युद्धाय नियुंजीत कुतस्तेन द्वैरथमिति तत्राह । ब्रह्मण्य इति । न प्रत्याख्याति न निराकरोति ॥ ६ ॥ भिक्षेत द्वंद्वयुद्धं याचताम् । तथापि समबलत्वात्साम्यमेव स्यादत आह । तव

सन्निधाविति ॥ ७ ॥ नन्वकिंचित्कुर्वतो मम सन्निधानात्किं स्यादत आह । निमित्तमिति । अयमर्थः । यथा तवारूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भस्तथा शर्वश्च तन्निरोधे तथाऽत्र त्वमेव सन्निधिमात्रेण हंता भीमो निमित्तमात्रमिति ॥ ८ ॥ अतोऽनेनोपायेन त्वया स शीघ्रं हंतव्य इत्याशयेनाह । गायंतीति । जरासंधधृतानां राज्ञां देव्यः पत्न्यस्ते विशदं कर्म स्व-गृहेषु बालकलालनादौ गायंति । किं तत्कर्म । स्वशत्रोर्जरासंधस्य वधमात्मनां पतीनां विमोक्षणं च । वत्स मा रोदीः श्रीकृष्ण एवं करिष्यतीति । अत्र दृष्टांताः । गोप्यश्चेत्यादयः । यथा गोप्यः शंखचूडवधं स्वमोक्षं च गायंति । अवतारांतरगतं कुंजरपतेर्नक्रात् । जनकात्मजायाश्च रावणात् । पित्रोश्च कंसगृहान्मोक्षम् । अत एवंभूतानां तासां कृपया त्वया तथैव कर्तव्यमिति भावः ॥९॥ किंच जरासंधवध इति । भूर्यर्थायेति । ततः शिशुपालवधादयोऽपि सुखसाध्या भविष्यंतीति भावः । एतच्च सर्वं भविष्यत्येवेति । संभावयन्नाह । प्राय इति । पच्यत इति पाकः कर्म तस्य विपाकः

हनिष्यति न संदेहो द्वैरथे तव सन्निधौ ॥ ७ ॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥ गायंति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ॥ गोप्यश्च कुंजरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥ जरासंध-वधः कृष्ण भूर्यर्थायोपकल्पते ॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥ श्रीशुक उवाच ॥ इत्युद्धववचो राजन्सर्वतो भद्रमच्युतम् ॥ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥ ११ ॥ अथादिशत्प्रयाणाय भगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥ १२ ॥ निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छादन् ॥ संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुहद्गरुडध्वजम् ॥ १३ ॥ ततो रथ-द्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदंगभेर्यानकशंखगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥ १४ ॥ नृवाजिकांचनशिबिका-भिरच्युतं सहात्मजाः पतिमनुसुव्रता ययुः ॥ वरांबराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥ नरोष्ट्रगोमहिषखराश्वतर्यनःकरे-णुभिः परिजनवारयोषितः ॥ स्वलंकृताः कटकुटिकंबलांबराद्युपस्करा ययुरधियुज्य सर्वतः ॥ १६ ॥ बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीट-वर्मभिः ॥ दिवांऽशुभिस्तुमुलरवं बभौ रवेर्यथाऽर्णवः क्षुभिततिमिंगिलोर्मिभिः ॥ १७ ॥ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदध-

फलं तेन राज्ञां पुण्यविपाकेन जरासंधादीनां पापविपाकेनेति । पाठांतरे जरासंधस्य पापविपाकेनेति । तेनायं क्रतुस्तवाभिप्रेतस्य गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ १० ॥ अच्युतमुपपत्त्या वृद्धम् । यदुवृद्धा इति वदता अनिरुद्धादयस्तथा नापूजन्निति सूचितम् ॥ ११ ॥ अनुज्ञाप्यानुज्ञां प्राार्थ्य । गुरून्वसुदेवादीन् ॥ १२ ॥ अवरोधान्स्वान्दारान् । निर्गमय्य प्रमाणं कारयित्वा ॥ १३ ॥ भटाः पदातयः । सादिनोऽश्वारोहाः । रथादिनायकैः करालया तीव्रयाऽऽत्मसेनया परिवृतो निराक्रमन्निरगात् । कुतः सकाशात् । मृदंगादिभिर्वाद्यैः प्रघोषेण घोषितायाः ककुभः ॥ १४ ॥ नृवाजिभिर्नर-यानैरश्वैश्च कांचनशिबिकाभिश्चाच्युतं पतिमनुययुः सुव्रताः पतिव्रताः । वराण्यंबरादीनि यासां ताः ॥ १५ ॥ नरोष्ट्रादिभिर्यानैः । अश्वतरी गर्दभ्यामश्वाज्जाता । अनः शकटम् । करेणुर्गजी । परि-जनयोषितो वारयोषितश्च । कटकुट्य उशीरादितृणनिर्मितगृहाः कंबलांबराद्यश्चोपस्कराः कुड्यादिरूपा यासां ताः । अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य ॥ १६ ॥ रवेरंशुभिश्च तद्बलं

दिवा बभौ । कथंभूतम् । तुमुलरवमाकुलस्वनम् । क्षुभितैस्तिमिंगिलैरूर्मिभिश्च ॥ १७ ॥ मुनिर्नारदो विहायसा ययाविति शेषः ॥ १८ ॥ मा भैष्टेति बहुत्वं राजाभिप्रायेण ॥ १९ ॥ प्रत्यैक्षन्प्रत्यै-
क्षंत । यद्यस्मान्मुमुक्षवः ॥ २० ॥ आनर्तादयो मार्गस्थदेशास्तांस्तीर्त्वाऽतिक्रम्य विनशनं कुरुक्षेत्रम् । अतीयायातिक्रम्य ययौ ॥ २१ ॥ शक्रप्रस्थमिंद्रप्रस्थम् ॥ २२ ॥ २३ ॥ प्राणा इंद्रियाणि
प्राणं मुख्यं प्राणमिव ॥ २४ ॥ सस्वजे परिरेभे ॥ २५ ॥ रमाया अमलं निर्दोषमालयम् । विस्मृतो लोकव्यवहारो येन सः ॥ २६ ॥ २७ ॥ अर्जुनेन समन्तात्परिष्वक्त एव केवलं पादौ नमस्कु-

द्विहायसा ॥ निशम्य तद्भूपतिराहृतार्हणो मुकुंदसंदर्शननिर्वृतेंद्रियः ॥ १८ ॥ राजदूतमुवाचेदं भगवान्प्रीणयन्गिरा ॥ माभैष्ट दूत भद्रं वो घात-
यिष्यामि मागधम् ॥ १९ ॥ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि संदर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥ २० ॥ आनर्तसौवीरमरूंस्तीर्त्वा
विनशनं हरिः ॥ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥ ततो दृषद्वतीं तीर्त्वा मुकुंदोऽथ सरस्वतीम् ॥ पंचालानथ मत्स्यांश्च शक्रप्रस्थमथा-
गमत् ॥ २२ ॥ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥ २३ ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥
अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः ॥ २४ ॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पांडवः ॥ चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः ॥ २५ ॥
दोर्भ्यां परिष्वज्य रमामलालयं मुकुंदगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥ तं मातुलेयं परि-
रभ्य निर्वृतो भीमः स्मयन्प्रेमजलाकुलेंद्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥ अर्जुनेन परिष्वक्तो यमाभ्या-
मभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥ २८ ॥ मानितो मानयामास कुरुसृंजयकैकयान् ॥ सूतमागधगंधर्वा वंदिनश्चोपमंत्रिणः
॥ २९ ॥ मृदंगशंखपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविंदाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूय-
मानो भगवान्विवेशालंकृतं पुरम् ॥ ३१ ॥ संसिक्तवर्त्मकरिणां मदगंधतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुंभैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृ-
भिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥ उद्दीप्तदीपबलिभिः प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृंगैर्जुष्टं ददर्श
भवनैः कुरुराजधाम ॥ ३३ ॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युव-
तयः स्म नरेंद्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं

र्वन्नर्जुनः कृष्णेन भुजाभ्यां धृत इति भावः । यमाभ्यां त्वभिवादितश्चेति ॥ २८–३१ ॥ चित्रध्वजादिभिर्विराजमानम् ॥ ३२ ॥ प्रतिसद्म उद्दीप्तैर्दीपबलिभिः पुष्पादिप्रकरैश्च जुष्टम् । जालेभ्यो गवा-
क्षेभ्यो निर्गतैर्धूपैः रुचिरम् । विलसंत्यः पताका यस्मिंस्तत् । मूर्धन्या मूर्ध्नि भवा हेमकलशा येषां तैः । रजतमयानि रूप्यमयान्युरूणि स्थूलानि शृंगाणि कलशाधस्तनभूमिका येषां तैर्भवनैर्जुष्टं
कुरुराजस्य धाम पुरं ददर्श ॥ ३३ ॥ नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयम् । किं पुनर्नारीणामित्यर्थः ॥ ३४ ॥ गृह्य स्वागतं तत्प्रश्नादिकं प्रियमुक्तमपर्या[illegible]

॥ ३५ ॥ उडुपसहाः चंद्रसहचरा इत्यर्थः । अमूभिः किं पुण्यमकारि ॥ ३६ ॥ श्रेण्य एकशिल्पोपजीविनां संवास्तेषु मुख्याश्च ॥ ३७ ॥ अभ्युपेतोऽभिगमनेन सत्कृतः ॥ ३८ ॥ सस्नुषा द्रौपदी-सहिता ॥ ३९ ॥ कृत्यं प्रकारविशेषम् । प्रमोदेनोपहृतोऽभिभूतः ॥ ४० ॥ गुरुस्त्रीणां च कृष्णाया द्रौपद्याश्च । भगिन्या सुभद्रया ॥ ४१ ॥ आनर्चार्चितवती ॥ ४२ ॥ अन्याश्च याः कृष्णपत्न्योऽभ्यागतास्ता अपि ॥ ४३ ॥ प्रत्यहं नवं नवं यथा भवति तथा सुखं निवासयामास ॥ ४४ ॥ कथंभूतम् । यः प्रेम्णा नित्यं फाल्गुनेन संयुतः । अतएव तस्य सहायेन मता येन खांडवेन वह्निं तर्पयित्वा तत्र च मयं मोचयित्वा तं मयं प्रयुज्य युधिष्ठिराय दिव्या सभा कृता तं जनार्दनम् । अनेन राज्ञः कृष्णोपकारानुस्मरणं दिव्यत्वात्सभाया यथा मनोरथं सर्वावकाशसंपादनं च दर्शितम्

विदधुरुत्स्मयवीक्षितेन ॥ ३५ ॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुंदपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥ तत्रतत्रोपसंगम्य पौरा मंगलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥ अंतःपुरजनैः प्रीत्या मुकुंदः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमंदिरम् ॥३८॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यंकात्सस्नुषा परिषस्वजे ॥ ३९ ॥ गोविंदं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवंदितः ॥ ४१ ॥ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा ॥ ४२ ॥ कालिंदीं मित्रविंदां च शैब्यां नाग्नजितीं सतीम् ॥ अन्याश्चाभ्यागतायास्तु वासःस्रङ्मंडनादिभिः ॥ ४३ ॥ सुखं निवासयामास धर्मराजो जनार्दनम् ॥ ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥ तर्पयित्वा खांडवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥ ४६ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे कृष्णस्येंद्रप्रस्थगमनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ श्रीशुक उवाच ॥ एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥ आचार्यैः कुलवृद्धैश्च ज्ञातिसंबंधिबांधवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥ युधिष्ठिर उवाच ॥ क्रतुराजेन गोविंद राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥ ३ ॥ त्वत्पादुके अविरतं परि ये चरंति ध्यायंत्यभद्रनशने शुचयो गृणंति ॥ विंदंति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥ तद्देवदेव भवतश्चरणारविंदसेवानुभावमिह

॥ ४५ ॥ ४६ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ॥ दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥ १ ॥ आस्थितः आसनमिति शेषः ॥ १ ॥ शृण्वतामेवेति । यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेवताननादृत्य कृष्णमुवाचेत्यर्थः । आभाष्य भो भो कृष्ण ! भक्तवत्सलेत्येवं संबोध्य ॥ २ ॥ विभूतीरंशान् ॥ ३ ॥ एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह । त्वत्पादुके इति । परये चरंतीति यच्छब्दव्यवधानमार्षम् । ये परिचरंति देहेन ध्यायंति मनसा । अभद्रस्य नशने नाशके । गृणंति वाचा । ते भवस्यापवर्गं मोक्षं विंदंति । यद्याशासते तर्ह्याशिषोऽपि तव एव विंदंति नान्ये चक्रवर्तिनोऽपि ॥ ४ ॥ भगवतो भक्तपक्षपातमा-

विष्कारयन्नाह । तद्देवदेवेति । तत्तस्मात्पश्यतु साक्षात् । एवं निश्चितेऽपि ये कर्मादिप्रधानाः केचित्कुरुसृंजया भगवद्भक्तिं न बहु मन्यंते तेषां मोहनिवृत्तये ये त्वां भजंति यदि वा न भजंति तेषामुभयेषां निष्ठां स्थितिं प्रदर्शयन ॥ ५ ॥ ननु रागादिरहिते मयि कथमिदं वैषम्यं स्यात्तत्राह । नेति । स्वः पर इति भेदमतिस्तव न स्यादेव । कुतः । ब्रह्मणो निरुपाधेः । किंच सर्वस्यात्मनोऽतः समदृशः । किंच स्वसुखानुभूतेः । अतो रागाद्यभावादिति भावः । तथापि संसेवमानानामेव त्वत्प्रसादो नान्येषाम् । तत्राऽपि सेवाऽनुरूपमुदयः फलं न त्वत्र विपर्ययोऽन्यथाभावः । यथा कल्पद्रुमस्य रागादिराहित्येऽपि सेवकेष्वेव फलजनकत्वं नान्येषु ॥ ६ ॥ सत्यं मद्भक्तानामेव कैवल्यादि नान्येषामित्यनुमोदमान आह । सम्यगिति । शत्रुकर्शनेति संबोधयन्सर्वराजविजयशक्तिं संचारयति । अनुभविष्यति द्रक्ष्यति । सर्वलोकव्याप्ता भविष्यतीत्यर्थः ॥ ७ ॥ ८ ॥ किमत्र मयाऽन्येन वा संपादनीयं तव तु सुकर एव राजसूय इत्याह । विजित्येति । जगतीं सर्वां पृथ्वीम् । संभारान्यज्ञोप-

पश्यतु लोक एषः ॥ ये त्वां भजंति न भजंत्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृंजयानाम् ॥ ५ ॥ न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरोरिव ते प्रसादः सेवाऽनुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥ श्रीभगवानुवाच ॥ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन ॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ॥ संभृत्य सर्वसंभारानाहरस्व महाक्रतुम् ॥ ९ ॥ एते ते भ्रातरो राजँल्लोकपालांशसंभवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः ॥ ११ ॥ श्रीशुक उवाच ॥ निशम्य भगवद्गीतं प्रीतः फुल्लमुखांबुजः ॥ भ्रातॄन्दिग्विजयेऽयुंक्त विष्णुतेजोपबृंहितान् ॥ १२ ॥ सहदेवं दक्षिणस्यामादिशत्सह सृंजयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः ॥ १३ ॥ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा ॥ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥ श्रुत्वाऽजितं जरासंधं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिंगधरास्त्रयः ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥ ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम् ॥ ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिंगिनः ॥ १७ ॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे

स्करान्संभृत्य संपाद्याहरस्वानुतिष्ठेत्यर्थः ॥ ९ ॥ ननु नृपतिविजयादि कथं शक्यं स्यादत आह । एत इति । किंच आत्मवता जितेंद्रियेण त्वयाऽहं च जितोऽस्मि वशीकृतोऽस्मि । अकृतात्मभिरजितेंद्रियैः ॥ १० ॥ आस्तां तावदेवंभूतस्य तव परैरभिभवशंका अकिंचनमपि मत्परं कोऽपि नाभिभवितुं प्रभवतीत्याह । न कश्चिदिति । तेजसा प्रभावेण । विभूतिभिः सत्यादिसंपत्तिभिः ॥ ११ ॥ अयुंक्त नियुक्तवान् । विष्णोस्तेजसोपबृंहितान्संवर्धितान् । तेजोपबृंहितानिति संधिरार्षः ॥ १२ ॥ नकुलादीनां मत्स्यादिभिः सहायैः सह गमनेन संबंधः ॥ १३ ॥ [illegible] यागं करिष्यते ॥ १४ ॥ आद्यो हरिः श्रीकृष्णः ॥ १५ ॥ ब्रह्मलिंगधरा ब्राह्मणलिंगधारिणः । यतो यत्र बृहद्रथसुतो जरासंधः ॥ १६ ॥ गृहेषु वर्तमानं समयाचेरन् सम्यग्याचितवंतः ॥ १७ ॥

॥ १८ ॥ नन्विदं कामयामह इति विशेषो निर्दिश्यताम् । अन्यथा यस्य पुत्रादेर्वियोगो दुःसहः स कथं देयः तथा राजमंडनं किरीटाद्यदेयं यत्नांच्छितुभ्यः कथं देयं तथाऽतिरम्यं रत्नाभरणादिपुत्रा-
दियोग्यं कथं परस्मै देयमिति चेदत आहुः किं दुर्मर्षमित्यादि । अथ दृष्टांतत्वेनार्थांतरमाहुः । किमकार्यमिति । यथाऽसाधूनामकार्यं नास्ति । तथा तितिक्षूणां दुर्मर्षं दुःसहं नास्ति । वदान्यानाम
स्वदाराणामदेयं नास्ति समदर्शिनां परश्च नास्ति । अतः किं विशेषनिर्देशेनेत्यर्थः ॥ १९ ॥ किंच अर्थिने धीरेण मुद्गलादिवत्प्राणा अपि न वंचनीया इत्याशयेनाहुः । योऽनित्येनेति । नाचिनोति
न संपादयति । स वाच्यः स निंद्यः ॥ २० ॥ विश्वामित्रार्थानृण्याय हरिश्चंद्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चांडालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः । रंतिदेवः सकु
टुंबोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथंचिल्लब्धान्नोदकाद्यर्थिभ्यो दत्त्वा ब्रह्मलोकं गतः । उंछवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुंबोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः । शिबिः शरणागतकपोतरक्षणाय

॥ १८ ॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥ योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥ २० ॥ हरिश्चंद्रो रंतिदेव उञ्छवृत्तिः शिविर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञाय दृष्टपूर्वानचिंतयत् ॥ २२ ॥ राजन्यबंधवो ह्येते ब्रह्मलिंगानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४॥ श्रियं जिहीर्षतेंद्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५॥ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबंधुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्या-त्मशिरोऽपि वः ॥ २७॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेंद्र द्वंद्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकांक्षिणः ॥ २८॥ असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥ २९ ॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मंदा युद्धं तर्हि ददामि वः ॥ ३० ॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥

स्वमांसं श्येनाय दत्त्वा दिवं गतः । बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्त्वा तमेवात्मसाच्चकार । कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्त्वा विमानेन दिवं गतः । व्याधस्तयोः
सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥ २१ ॥ ज्याहतैर्ज्याघातकिणांकितैः । दृष्टपूर्वान्
द्रौपदीस्वयंवरादिषु ॥ २२ ॥ २३ ॥ इंद्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेः नु अहो । नेति पाठे न श्रूयते किं अपितु श्रूयत इति ॥ २४ ॥ तं श्लाघते । विष्णव इति ।
शुक्रेण वार्यमाणोऽपि अतएव विष्णुरिति जानन्नपि ॥ २५ ॥ पतमानेन पतता क्षत्रबंधुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेनासंपादयता को न्वर्थः न कोऽपीत्यर्थः ॥ २६ ॥ एवं
निश्चित्याह । हे विप्रा इति ॥ २७ ॥ २८ ॥ राजन्यतामेव प्रपंचयति । असाविति ॥ २९ ॥ ३० ॥ यतो मद्भिया समुद्रं शरणं गतः ॥ ३१ ॥ वयमाऽप्यतुल्यो नातिसत्त्वो नातिबलश्च न च

देहेन मया समोऽतोऽर्जुनो योद्धा न भवेत् । भीमस्तु भवेत् यतो मम तुल्यबलः ॥ ३२ ॥ प्रादाय दत्त्वेत्यर्थः ॥ ३३ ॥ समेखले युद्धांगणे ॥ ३४ ॥ मंडलानि गदायुद्धगतिभेदान् । सव्यं दक्षिणं च यथा भवति तथा । रंगिणो रंगगतयोर्नटयोरिवेति निर्भयत्वेनोपमा ॥ ३५ ॥ चटचटेति गदयोः परस्पराघातशब्दानुकरणम् । वज्रस्य निष्पेषः पातस्तत्सदृशः । युध्यतोर्दंतिनोर्दंताघातशब्द इव शुशुभे ॥ ३६ ॥ अंसकट्यादीनुपेत्य । दीप्तो मन्युर्ययोस्तयोर्द्विरदयोर्गजयोरर्कशाखाभ्यां समं युध्यतोस्ते यथा चूर्णीभवतस्तद्वत् ॥ ३७ ॥ अपिष्टां चूर्णीचक्रतुः ॥ ३८ ॥ शिक्षा अभ्यासः बलं

अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः ॥ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ॥ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥ ततः समेखले वीरौ संयुक्तावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥ मंडलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रंगिणोः ॥ ३५ ॥ ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ॥ गदयोः क्षिप्तयो राजन्दंतयोरिव दंतिनोः ॥ ३६ ॥ ते वै गदे भुजजवेन निपात्यमाने अन्योन्यतोंऽसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्य यथाऽर्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्व्योः ॥ ३७ ॥ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥ एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥ एकदा मातुलेयं वै प्राह राजन्वृकोदरः ॥ न शक्तोऽहं जरासंधं निर्जेतुं युधि माधव ॥ ४१ ॥ शत्रोर्जन्ममृती विद्वान्जीवितं च जराकृतम् ॥ पार्थमाप्याययन्स्वेन तेजसाऽचिंतयद्धरिः ॥ ४२ ॥ संचिंत्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥ तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ ४४ ॥ एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः पाटयामास शाखामिव महागजः ॥ ४५ ॥ एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥ हाहाकारो महानासीन्निहते मगधेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥ सहदेवं तत्तनयं भगवान्भूतभावनः ॥ अभ्यषिंचदमेयात्मा मगधानां पतिं प्रभुः ॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे जरासंधवधो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ श्रीशुक उवाच ॥ अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ॥

सत्त्वं ओजः प्रभावः समानि तानि ययोस्तयोः ॥ ३९–४१ ॥ जन्म शकलरूपं मृतिः पुनः शकलीभावस्ते विद्वान् जानन् जरानाम राक्षसी तत्कृतम् । अचिंतयत्कथमसौ शकलीभवेदिति ॥ ४२ ॥ विटपं शाखाम् । करेण विटपं गृहीत्वा हरिर्भीमस्य यथाऽहं विटपं पाटयामि तथा त्वमेनं विपाटयेति संज्ञाय संकेतेनारिवधोपायं दर्शयामासेत्यर्थः ॥ ४३–४५ ॥ एकैकः पादादिर्ययोस्ते शकले ॥ ४६ ॥ ४७ ॥ दुर्वृत्तत्वादसौ हतो न तु राज्याभिलाषेणेति दर्शयन्नाह सहदेवमिति ॥ ४८ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ [illegible]

मोचयित्वा नृपान्हरिः ॥ राजार्हभोगैः स्वान्देशान्प्रस्थाप्य पुनरागमत ॥ १ ॥ अत्युन्नद्धजरासंधवधात्तद्बद्धभूपतीन् ॥ विमोच्य कृपया कृष्णो निजरूपमदर्शयत् ॥ २ ॥ ये निर्जिता जरासंधेन
निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गताः संतो घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥ क्षुधा क्षामाः कृशाः । संरोधेन परिकर्शिताः क्लेशिताः ॥ २ ॥ ३ ॥ ४ ॥ भ्राजन् भ्राजमानो वरमणिः कौस्तुभो
यया सा ग्रीवा यस्य तम् । निवीतं कंठलंबितया व्याप्तम् । पिबंत इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ॥ ५ ॥ रंभंतः परिरंभमाणा इव ॥ ६ ॥ कृष्णदर्शनाह्लादेन ध्वस्तः संरोधन-
क्लमो येषां ते ॥ ७ ॥ संरोधाद्रक्षितानस्मान् घोरायाः संसृतेरपि पाहि मोचय ॥ ८ ॥ ननु भवंतो जरासंधाख्ययाविष्टा इहामुत्र भोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशंक्य संप्रति न वयं तथाभूता
इत्याहुः नैनमित्यष्टभिः । हे नाथ ! वयमेनं नान्वसूयामः अन्वनुदोषदृष्ट्या न पश्यामः । कुत इत्यत आहुः । अनुग्रह इति । यद्यस्मात् ॥ ९ ॥ एतदेव व्यतिरेकेणोपपादयंति राज्यैश्वर्येति राज्यै-

ते निर्गता गिरिद्रोण्यां मलिना मलवाससः ॥ १ ॥ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥
श्रीवत्सांकं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम् ॥ ३ ॥ पद्महस्तं गदाशंखरथांगैरुपलक्षितम् ॥ किरीटहारकटककटिसूत्रांग-
दाञ्चितम् ॥ ४ ॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ पिबंत इव चक्षुर्भ्यां लिहंत इव जिह्वया ॥ ५ ॥ जिघ्रंत इव नासाभ्यां रंभंत इव बाहुभिः ॥
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥ कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्रांजलयो नृपाः ॥ ७ ॥ राजान
ऊचुः ॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः ॥ ८ ॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनु-
ग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विंदते नृपः ॥ त्वन्मायामोहितो नित्या मन्यते संपदोऽचलाः ॥ १० ॥
मृगतृष्णां यथा बाला मन्यंत उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरे-
तरस्पृधः ॥ घ्नंतः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥ १२ ॥ त एव कृष्णाद्य गभीररंहसा दुरंतवीर्येण विचालिताः
श्रियः ॥ कालेन तन्वा भवतोऽनुकंपया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥ अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवः ॥
उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संस-

श्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृंखलो नित्या अचलाश्च संपदो मन्यते । यद्वा । अनित्याः सतीरचलाः शाश्वतीर्मन्यते ॥ १० ॥ किंच अवस्तु सद्वस्तुतया पश्यंतीत्याहुः । मृगतृष्णामिति । वैकारिकीं
सृष्ट्यादिविकारापन्नाम् । अयुक्ता अविवेकिनः ॥ ११ ॥ राज्यस्य योगवियोगयोरनर्थार्थवहत्वमस्मास्वेव दृष्टमित्याहुः वयमिति द्वाभ्याम् श्रीमदेन नष्टा दृष्टिर्येषां ते । अस्याः पृथिव्याः । इतरेत-
रस्पृधः परस्परं स्पर्धमानाः । पुरः पुरतः । त्वा त्वां मृत्युमविगणय्य । पुरा ये दुर्मदा वयम् ॥ १२ ॥ हे कृष्ण ! त एव वयमद्य विनष्टदर्पास्ते चरणौ स्मरामः स्मर्तुमाशास्महे । कथंभूताः । भवत-
स्तन्वा मूर्त्या कालेन श्रियो विचालिता विभ्रंशिताः अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥ १३ ॥ अतएवाथो अनंतरं मृगतृष्णिसदृशं राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां
भुवा जन्मक्षेत्रेण देहेनोपासितव्यं सेव्यं न स्पृहयामहे प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं न स्पृहयामहे । कथंभूतम् । कर्णयो रोचनं रुचिजनकमात्रम् । तत्र गतस्य स्पर्धाधन-

पगमेन सुखाभावादित्यर्थः ॥ १४ ॥ यद्येवंभूता यूयं तर्हि मम चरणौ स्मरत ततोऽनायासेन मुक्तिर्भविष्यतीति किं मदपेक्षयेति चेदत आहुः । तं न इति । त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥ १५ ॥ १६ ॥ श्लक्ष्णया मंजुलया ॥ १७ ॥ यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिर्जायते जायतामित्यर्थः ॥ १८ ॥ हे भूपाः! मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं संकल्पितं दिष्ट्या भद्रम् । भवद्भिरुक्तं च सत्यमेवेत्याह । भवंत इति । श्रीश्च ऐश्वर्यं च ताभ्यां मदस्तेनोन्माहमुद्बंधनं स्वैराचारमित्यर्थः । पश्ये पश्यामि ॥१९॥ तदेवाह । हैहय इति । हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः । नहुषो देवेंद्रतां प्राप्त उन्मत्तः शचीसंगाय ब्राह्मणान् शिबिकां वाहयंस्तैरेव ततो भ्रंशितोऽजगरत्वमवाप । वेनोऽप्युन्मत्तो ब्राह्मणा-

रतामिह ॥ १५ ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥ १६ ॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबंधनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७॥ श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥ १८ ॥ दिष्ट्या व्यवसितं भूपा भवंत ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥ भवंत एतद्विज्ञाय देहाद्युत्पाद्यमंतवत् ॥ मां यजंतोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥ संतन्वंतः प्रजातंतून्सुखं दुःखं भवाभवौ ॥ प्राप्तं प्राप्तं च सेवंतो मच्चित्ता विचरिष्यथ ॥ २२ ॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ्मामंते ब्रह्म यास्यथ ॥ २३ ॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ॥ तेषां न्ययुंक्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥ २४ ॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥ भोजयित्वा वरान्नेन सुस्नातान्समलंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः ॥ २६ ॥ ते पूजिता मुकुंदेन राजानो मृष्टकुंडलाः ॥ विरेजुर्मोचिताः क्लेशात्प्रावृडंते यथा ग्रहाः ॥ २७ ॥ रथान्सदश्वानारोप्य मणिकांचनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥ २८ ॥ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायंतः कृतानि च जगत्पतेः ॥ २९ ॥ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतंद्रिताः ॥ ३० ॥ जरासंधं घातयित्वा भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः ॥ ३१ ॥ गत्वा ते खांडवप्रस्थं शंखान्दध्मुर्जितारयः ॥ हर्षयंतः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥ यच्छ्रुत्वा प्रीतमनस इंद्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शांतं राजा चाप्तमनो-

नधिक्षिपंस्तैरेव हुंकृतैर्हतः । रावणो राक्षसेश्वरः सीतामभिलषन्राघवेण हतः नरको दैत्येश्वरोऽदितिकुंडलाद्याहरणात्सत्यैव हतः । अपरेऽपि श्रीमदात्स्थानाद्भ्रंशिताः ॥ २० ॥ यदुत्पाद्यं देहादि तदंतवत् । एवं विज्ञाय युक्ता अप्रमत्ता रक्षथ रक्षतेत्यर्थः ॥ २१ ॥ प्रजातंतून्पुत्रादिसंततीः । प्राप्तं प्राप्तं समत्वेन सेवमानाः ॥ २२ ॥ मां ब्रह्म यास्यथ ॥ २३ ॥ स्त्रियश्च तेषां मज्जनप्रसाधनादौ न्ययुंक्त ॥ २४ ॥ २५ ॥ सुस्नातान्सम्यगलंकृतान भोगैश्च युक्तान्वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सहदेवेन कारयामास ॥ २६ ॥ प्रावृडंते ग्रहा यथा ॥ २७ ॥ प्रीणय्य तर्पयित्वा

॥ २८ ॥ २९ ॥ जगदुः ऊचुः ॥ ३० ॥ ३१ ॥ खांडवप्रस्थमिंद्रप्रस्थम् ॥ ३२ ॥ शांतं मृतम् । आप्तमनोरथो बभूव ॥ ३३ ॥ ३४ ॥ ३५ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ॥ अग्रपूजाप्रसंगेन चैद्यघातादि वर्ण्यते ॥ १ ॥ राजसूयमुखे हत्वा जरासंधं तदंतरे ॥ चैद्यं तदंतं कुर्वंतं बीजं कलिमिवावपत् ॥ २ ॥ कृष्णस्य चानुभावमिति चकारात्तस्य स्वाज्ञाऽनुविधायित्वं चालक्ष्येत्यर्थः ॥ १ ॥ तदाह । ये स्युरिति । ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः सर्वे च लोका लोकपालाश्च ते शिरसैव तवानुशासनं वहंति । दुर्लभं लब्ध्वेति । भाग्येनैतल्लब्धमिति बहुमानेनेत्यर्थः ॥ २ ॥ स भवान्परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यंतविडंबनमननुरूपमनुकरणम् । स्वतेजोहानिप्रसंगा-दित्यर्थः ॥ ३ ॥ अथवा तव परिपूर्णस्याज्ञापनाज्ञाधारणाभ्यां न तेजसो हानिवृद्धी अतः कृपया सर्वं संगच्छत इत्याह । नह्येकस्याद्वितीयस्येति । समानासमानरहितस्य ब्रह्मणस्तवोभयं माया ।

रथः ॥ ३३ ॥ अभिवंद्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥ निशम्य धर्मराजस्तत्केशवेनानुकंपि-तम् ॥ आनंदाश्रुकलां मुंचन्प्रेम्णा नोवाच किंचन ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ श्रीशुक उवाच ॥ एवं युधिष्ठिरो राजा जरासंधवधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥ युधिष्ठिर उवाच ॥ ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ॥ वहंति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥ स भवानरविंदाक्षो दीनानामीशमानिनाम् ॥ धत्तेऽ-नुशासनं भूमँस्तदत्यंतविडंबनम् ॥ ३ ॥ न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥ न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः ॥ ६ ॥ द्वैपायनो भरद्वाजः सुमंतुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवष-स्त्रितः ॥ ७ ॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशंपायन एव च ॥ ८ ॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छंदा वीरसेनोऽकृतव्रणः ॥ ९ ॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलांगलैः ॥ कृष्ट्वा तत्र

परमात्मन इति सर्वजीवनियंतुस्तव नियम्यत्वं सुतरां न वास्तवम् । अतः परानुग्रहार्थैरेतैः कर्मभिस्तव तेजो न वर्धते न च ह्रसति । रवेरिवोदयास्तमयादिकर्मभिरित्यर्थः । तथा च श्रुतिः । न कर्मणा वर्धते नो कनीयानिति ॥ ४ ॥ नन्वेवमप्यहं परमेश्वरो ममेदं नीचं कर्मायोग्यमिति मनसि कथं न भवेदत आह । न वै त इति । हे अजित! तव भक्तानामेव तावदियं नानाधीर्भेदमतिर्ना-स्ति । यथा पशूनामज्ञानां वैकृता शरीरविषया । तव तु नास्तीति किं पुनर्वक्तव्यमित्यर्थः ॥ ५ ॥ यज्ञिये यज्ञोचिते वसंतादिकाले । युक्तानभियुक्तान् । स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥ तानाह द्वैपायन इति त्रिभिः ॥ ७ ॥ ८ ॥ अकृतव्रणांतानेतान् त्विग्गुपद्रष्ट्रादिभेदेन वव्रे ॥ ९ ॥ अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १० ॥ ११ ॥ देवयजनं यज्ञभूमिम् ।

कृष्ट्वा कर्षणादिभिः संशोध्य । दीक्षयांचक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥ उपकरणा उपस्कराः । वरुणस्य राजसूये यथा आसन्निति शेषः । किंच इंद्रादयो देवगणाः ॥ १३ ॥ १४ ॥
ये च राजादयः समाहूतास्तत्र समीयुः स्म । ते सर्वे कृष्णभक्तस्य पांडुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयमविस्मिताः संतः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः ॥ १५ ॥ याजका ऋत्विजः ॥ १६ ॥
सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥ अग्र्यार्हणमग्रपूजा तस्यार्हं योग्यम् । अनैकांत्याद्योग्यानां बहुत्वेनैकस्यानिश्चयात् ॥ १८ ॥ १९ ॥ सांख्यं ज्ञानम् । योग उपासना ॥ २० ॥ ननु सांख्यं
केवलपरं योगः स विशेषणपरः कथमुभयोरेकपरत्वं तत्राह । एक एवाद्वितीयोऽसावतः सांख्यस्यैतत्परत्वं युक्तम् । विशेषणभूतस्य सर्वप्रपंचस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वि-

इंद्रादयो लोकपाला विरिंचिभवसंयुताः ॥ १३ ॥ सगणाः
यथाऽऽम्नायं दीक्षयांचक्रिरे नृपम् ॥ १२ ॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥ राजसूयं समीयुः स्म
सिद्धगंधर्वा विद्याधरमहोरगाः ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥ राजसूयेन विधिवत्प्राचेतसमि-
राज्ञः पांडुसुतस्य वै ॥ १५ ॥ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥ अयाजयन्महाराजं याजका देववर्चसः ॥ सदस्याग्र्यार्हणार्हं वै विमृशंतः
वामराः ॥ १६ ॥ सौत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान्यथावत्सुसमाहितः ॥ १७ ॥ एष वै देवताः सर्वा देशकाल-
सभासदः ॥ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाऽब्रवीत् ॥ १८ ॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ॥ एक एवाद्वितीयोऽसावैत-
धनादयः ॥ १९ ॥ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ अग्निराहुतयो मंत्राः सांख्यं योगश्च यत्परः ॥ २० ॥ ईहते यदयं सर्वः श्रेयो धर्मा-
दात्म्यमिदं जगत् ॥ आत्मनात्माश्रयः सभ्याः सृजत्यवति हंत्यजः ॥ २१ ॥ विविधानीह कर्माणि जनयन्यदवेक्षया ॥ सर्वभूतात्मभूताय कृष्णायानन्य-
दिलक्षणम् ॥ २२ ॥ तस्मात्कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति
दर्शिने ॥ देयं शांताय पूर्णाय दत्तस्यानंत्यमिच्छता ॥ २४ ॥ इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ॥ तत्पादाववनिज्यापः शिरसा
सत्तमाः ॥ २५ ॥ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥ अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्सम-
लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २७ ॥ वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ॥ इत्थं निशम्य दमघोषसुतः
वेक्षितुम् ॥ २८ ॥ इत्थं सभाजितं वीक्ष्य सर्वे प्रांजलयो जनाः ॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥

तीयपरत्वमित्याह । एतदात्म्यमिति । एष श्रीकृष्ण आत्मा यस्य तदेतदात्मा तस्य भाव एतदात्म्यम् । भवितर्यैव भावनिर्देशः । एतदात्म्यमिदं सर्वमिति श्रुतेः । अत्र हेतुः । आत्मनेति । हे सभ्याः !
आत्माश्रयोऽन्यनिरपेक्षः स्वयमज इदं जगत्सृजत्यवति हंति चेति ॥ २१ ॥ किंच विविधानीति । यस्यावेक्षयाऽनुग्रहेण विविधानि कर्माणि तपोयोगादीनि जनयन् कुर्वन् यत्सम्भाव्यं सर्वो जन
जनो धर्मादिलक्षणं श्रेय ईहते साधयति । कर्माणि तत्फलानि च यदधीनानीत्यर्थः ॥ २२ ॥ २३ ॥ नन्वात्मना क्रियमाणमर्हणमात्मनः कथं स्यात्तत्राह । सर्वभूतानामात्मभूताय अनन्यदर्शिने

निरस्तभेदमतये ॥ २४ ॥ श्रीकृष्णानुभाववित्सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥ द्विजेरितं साधु साध्विति घोषं श्रुत्वा । हार्दमभिप्रायम् ॥ २६ ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ हे सदसस्पतयः सर्वे बालस्य भाषितं मा मन्यध्वं मा जानीत मा गृह्णीत । किं तत् । यद्यतः कृष्णोऽर्हणे अग्रपूजायां सम्मतस्तत् ॥ ३२ ॥ ३३ ॥ अस्यैव वास्तवार्थः पूर्ववदूह्यः । गोपाल इति । वेदपृथिव्यादिपालक इत्यर्थः । कुत्सितं वेदविपरीतं लपंतीति कुलपाः पाखंडास्तान् अंसते समाघातयतीति तथा सः । अकाकः कं च अकं च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः आप्तकाम इत्यर्थः । स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हत्यपि तु सर्वस्वमपि तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किंत्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥ वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् । अनामगोत्रमिति श्रुतेः । अतएवानधिकारित्वात्सर्वैर्धर्मैर्बहिष्कृतः । स्वैरत्वात् । अतएव निर्गुणस्तमआदिरहितः । एवंभूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्ह-

स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः ॥ ३० ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥ यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ ३२ ॥ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३३ ॥ सदस्पतीनतिक्रम्य गोपालः कुलपांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथापानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥ ब्रह्मर्षिसेवितान्देशान्हित्वैते ब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधंते दस्यवः प्रजाः ॥ ३७ ॥ एवमादीन्यभद्राणि बभाषे नष्टमंगलः ॥ नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ॥ ३८ ॥ भगवन्निंदनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपंतश्चेदिपं रुषा ॥ ३९ ॥ निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४० ॥ ततः पांडुसुताः क्रुद्धा मत्स्यकैकयसृंजयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४१ ॥ ततश्चैद्यस्त्वसंभ्रांतो जगृहे खड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ ४२ ॥ तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ॥ शिरः क्षुरांतचक्रेण जहारापततो रिपोः ॥ ४३ ॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥ चैद्य-

तीत्यर्थः ॥ ३५ ॥ अपि च कथं वर्णनीयो मादृशैरेषां यदूनां महिमा यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिर्बहिष्कृतमपि तु शिरसा धृतम् । किंचास्मदादिकुलवत्किं वृथा पानरतमपि त्वतिनियताचारमित्यर्थः । अहो यदूनामेतावदीदृशं माहात्म्यम् । यदुकुलवृद्धस्य ययातेः शापो न प्राभूदित्यादि । अयं तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥ किंच । ये राजानो दुष्टानुच्चाटयंति तदर्थं कीकटादिदेशानप्याश्रयंति एते तु ब्रह्मर्षिसेवितानेव देशानाश्रित्याब्रह्मवर्चसं समुद्रं दुर्गमपि हित्वा हापयित्वेत्यर्थः । बाधंते तथा वा दस्यवः प्रजास्ताश्च । अयमर्थः । वेदतदर्थाभियोगो ब्रह्मवर्चसं तद्विरुद्धमब्रह्मवर्चसं समुद्रं मुद्राऽत्र लिंगं तत्सहितं समुद्रम् । वेदविरुद्धलिंगधारिणं पाखंडमित्यर्थः । तल्लिंगं त्याजयित्वा बाधंते दंडयंति । कथंभूतम् । दुर्गम् । धर्मवत्प्रतीते … इत्यर्थः । तथा दस्यवो दस्यूनपि प्रजावेषेण वर्तमानान् दंडयंति । अतो यदुभ्योऽन्यः को नाम धार्मिकोऽस्तीति । पारुष्यं तूक्तार्थमेव ॥ ३७ ॥ शिवा फेरुस्तस्या रुतं श्रुत्वा यथा

सिंहो न किंचिदूचे नदन ॥ ३८—४२ ॥ तावदुत्थायेत्यस्यायमभिप्रायः । एष मत्पार्षदो मत्तुल्यबलः सर्वानेतान्हन्यादतो मयैव शीघ्रं हंतव्य इति तत्क्षणमेवोत्थाय शिरो जहारेति ॥ ४३-४५ ॥ नन्वेवं निंदकस्य कथं वासुदेवे प्रवेशस्तत्राह । जन्मत्रयेति । जन्मत्रयेऽनुगुणितमनुवर्तितं यद्वैरं तेन संरब्धयाऽऽविष्टया । तन्मयतां तत्स्वरूपतां यातः । पुनः पार्षदो बभूवेत्यर्थः । अत्र हेतुः । भावो हीति भावो भावना अनुध्यानं भवस्य ध्येयाकारजन्मनः कारणम् । पेशस्कारिध्यानेन कीटादौ तथा दृष्टत्वादित्यर्थः ॥ ४६—५१ ॥ सुरा मानवाः खेचराः प्रमथाश्च ॥ ५२ ॥ पापं धर्मक्षिपम् । अत्र हेतुः । कलिं कलेरंशम् । अतएव कुरुकुलस्यामयं व्याधिवन्नाशकम् ॥ ५३ ॥ वितानं यज्ञं च ॥ ५४ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ पंच-

देहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४५ ॥ जन्मत्रयानुगुणितवैरसंरब्धया धिया ॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ ४६ ॥ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ॥ सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥ ४८ ॥ ततोऽनुज्ञाप्य राजानमनिच्छंतमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥ वैकुंठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥५०॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ॥ कृष्णं क्रतुं च शंसंतः स्वधामानि ययुर्मुदा ॥ ५२ ॥ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ॥ यो न सेहे श्रियं स्फीतां दृष्ट्वा पांडुसुतस्य ताम् ॥ ५३ ॥ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ॥ राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥ ५४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥ ऋषिरुवाच ॥ पितामहस्य ते यज्ञे राजसूये महात्मनः ॥ बांधवाः परिचर्यायां तस्यासन्प्रेमबंधनाः ॥ ३ ॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ॥ बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥ ६ ॥ निरूपिता महायज्ञे नानाकर्मसु ते तदा ॥ प्रवर्तंते स्म राजेंद्र राज्ञः प्रियचिकीर्षवः ॥ ७ ॥ ऋत्विक्सदस्यबहु-

सप्ततितमे यज्ञावभृथसंभ्रमः ॥ सुयोधनस्य चाभ्रांत्या मानभंगो दृशि भ्रमात् ॥ १ ॥ दुर्योधनस्यैकस्यैव दुःखे कारणं प्रष्टुमुक्तमनुवदति । अजातशत्रोरिति ॥ १ ॥ इति श्रुतम् । तन्मुखादिते-त्यर्थः ॥ २ ॥ दुर्योधनस्यासहनकारणत्वेन यागमहोत्सवमेव पुनः सिंहावलोकनेन निरूपयति पितामहस्येत्यादिना । एकदांतःपुरे तस्येत्यतः प्राक्तनेन ग्रंथेन । प्रेमबंधनाः प्रेमयंत्रिताः ॥ ३ ॥ पूजायां सम्माननेन । द्रव्यसाधने नानावस्तुसंपादने ॥ ४ ॥ गुरूणां शुश्रूषणे चंदनालेपनादौ ॥ ५ ॥ ६ ॥ निरूपिता नियुक्ताः संतो नानाकर्मसु प्रवर्तंते स्म ॥ ७ ॥ ऋत्विजश्च सदस्याश्च बहुविदः

बहुविदश्च तेषु । स्विष्टेषु सम्यक्पूजितेषु । सूनृतं प्रियवाक् समर्हणमलंकारादिदक्षिणाश्च प्रसिद्धास्ताभिः । द्युनद्यां गंगायाम् ॥ ८ ॥ ९ ॥ १० ॥ चित्राणि ध्वजपताकाग्राणि येषु तैरिभेन्द्रैः स्यंदनैरर्वभिरश्वैर्भटैश्च । एवं चतुरंगैः सैन्यैर्निर्ययुः ॥ ११ ॥ यजमानो युधिष्ठिरः पुरःसरो येषां ते ॥ १२ ॥ सदस्या ऋत्विजोऽन्ये च द्विजश्रेष्ठा निर्ययुः ॥ १३ ॥ किंच । गंधादिभिः स्वलंकृता नरा नार्यश्च मिथो विजन्हुः ॥ १४ ॥ रसानेवाह । तैलेति । किंच सांद्रकुंकुमादिभिः पुंभिर्लिप्तास्तान्प्रलिंपंत्यो वारयोपितश्च विजन्हुः ॥ १५ ॥ नृभिर्गुप्ता रथादियानैर्नृदेव्यो राजपत्न्यो निरगमन्निरगुः ।

वित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥ मृदंगशंखपणवधुंधुर्यानकगोमुखाः ॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥ नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ॥ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥ चित्रध्वजपताकाग्रैरिभेंद्रस्यंदनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥ यदुसृञ्जयकांबोजकुरुकेकयकोसलाः ॥ कंपयंतो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगंधर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥ स्वलंकृता नरा नार्यो गंधस्रग्भूषणांबरैः ॥ विलिंपंत्योऽभिषिंचंत्यो विजह्रुर्विविधै रसैः ॥ १४ ॥ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताः प्रलिंपंत्यो विजह्रुर्वारयोषितः ॥ १५ ॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥ ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नांबरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥ स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ॥ आचांतं स्नापयांचक्रुर्गंगायां सह कृष्णया ॥ १९ ॥ देवदुंदुभयो नेदुर्नरदुंदुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥ २२ ॥ बंधुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥ सर्वे जनाः सुररुचो मणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुंडलयुगालकवृंदजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥ देवर्षिपितृभूतानि लोकपालाः

एतदुपलब्धुं विमानवरैर्देव्यो यथा तद्वत् । मातुलेयैः सखिभिश्च परितः सिच्यमानाः । सव्रीडेन हासेन विकसंति वदनानि यासां ताः ॥ १६ ॥ देवरान्पतिभ्रातॄन् उत सखीन्सखीनपि । दृतीभिरुदकनोदनचर्मयंत्रैः सेचनपात्रैश्च । मलधियां कामिनाम् ॥ १७ ॥ क्रियाभिरंगक्रियाभिः क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥ पत्नीसंयाजो यागविशेषः । अवभृथसंबंधि आवभृथ्यं च । तैश्चरित्वाताननुष्ठायेत्यर्थः ॥ १९—२१ ॥ अहते नूतने । आनर्चार्चितवान् ॥ २२ ॥ २३ ॥ सुराणामिव रुक् कांतिर्येषाम् । मणिकुंडलैः सहिताः स्रगुष्णीषादयो येषां ते । कुण्डलयुगेनालकवृंदेन च जुष्टा

वक्त्रश्रीर्यासां ताः ॥ २४—२९ ॥ गतज्वरो निश्चिंत आसीत् ॥ ३० ॥ अच्युते आत्मा यस्य तस्य ॥ ३१ ॥ नरेंद्रादीनां लक्ष्मीर्लक्ष्म्यो विभूतयो विश्वसृजा मयेनोपक्लृप्ता विरचिताः ताभिः सह कुरुराड् दुर्योधनोऽतप्यत ॥ ३२ ॥ महिषीसहस्रमिति बहुत्वोपलक्षणम् । क्वणद्भिरंघ्रिभिः शोभा यस्य । मध्ये सुचारु मध्यमित्यर्थः । कुचकुंकुमैः शोणा हारा यस्य तत् । श्रीमंति मुखानि यस्य तत् । चलैः कुंडलैः कुंतलैश्चाढ्यं संपन्नमशोभतेति शेषः ॥ ३३ ॥ क्वापि कदाचित्स विरेजे इति शेषः । स्वस्य चक्षुषा हिताहितज्ञापकेन ॥ ३४ ॥ ३५ ॥ मानी साहंकारः । किरीटं

सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसंतः पिबन्मर्त्योऽमृतं यथा ॥ २७ ॥ ततो युधिष्ठिरो राजा सुहृत्संबंधिबांधवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ २८ ॥ भगवानपि तत्रांग न्यवात्सीत्तत्प्रियं-करः ॥ प्रस्थाप्य यदुवीरांश्च सांबादींश्च कुशस्थलीम् ॥ २९ ॥ इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥ एकदांतःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥ यस्मिन्नरेंद्रदितिजेंद्रसुरेंद्रलक्ष्मीर्नाना विभांति किल विश्वसृजोपक्लृप्ताः ॥ ताभिः पतीन्द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥ यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदंघ्रिशोभम् ॥ मध्ये सुचारु कुचकुंकुमशोणहारं श्रीमन्मुखं प्रचलकुंडलकुंतलाढ्यम् ॥ ३३ ॥ सभायां मयक्लृप्तायां क्वापि धर्म-सुतोऽधिराट् ॥ वृतोऽनुजैर्बंधुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥ आसीनः कांचने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बंदिभिः ॥ ३५ ॥ तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥ ३६ ॥ स्थलेऽभ्यगृह्णाद्वस्त्रांतं जलं मत्वा स्थलेऽपतत् ॥ जले च स्थलवद्भ्रांत्या मयमायाविमोहितः ॥ ३७ ॥ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यंग राज्ञा कृष्णानु-मोदिताः ॥ ३८ ॥ स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ॥ बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे दुर्योधनमानभंगो नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथ सौभपतिर्हतः ॥ १ ॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्नि-

च माला च विद्येते यस्य सः । न्यविशद्विवेश । क्षिपन् हास्यादीनधिक्षिपन् ॥ ३६ ॥ तत्र स्थले वस्त्रांतमभ्यगृह्णादाकुंचितवान् । कुतः तस्मिन्स्थले एव भ्रांत्या जलं मत्वा जले नापतत् । कुतः स्थलवद्भ्रांत्या ॥ ३७ ॥ ३८ ॥ भुवो भरं भारं जिहीर्षुरिति । अथ संपादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वेति । किंच यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रांतिं प्राप मयमाया तु निमित्तमात्रम् । स भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादिहास्येन च तस्य पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ३९ ॥ ४० ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे पंच

सप्ततितमोऽध्यायः ॥ ७५ ॥ ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे ॥ द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥ १ ॥ संपाद्य धर्मराजस्य राजसूयमहोदयम् ॥ निहत्य सौभगजादीनथोपारमदच्युतः ॥ २ ॥ १—३ ॥ प्रत्यहं सकृत्पांसुमुष्टिमेकां ग्रसन् भक्षयन् ॥ ४ ॥ संवत्सरांत इति आशुतोषोऽपि भगवानुमापतिः श्रीकृष्णविद्विषि शाल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत् तस्यातिनिर्बंधमालक्ष्य संवत्सरांते च वरेण छंदयामासेच्छां कारितवान्वरं वृणीष्वेत्युवाचेत्यर्थः ॥ ५ ॥ ६ ॥ तथेति प्रतिज्ञाय गिरिशेनादिष्टोऽयस्मयं लोहमयं पुरं सौभमंज्ञं निर्माय रचयित्वा प्रादात् ॥ ७ ॥ तमसोंऽधकारस्य धामाश्रयम् । अन्यैर्दुरासदं दुष्प्राप्यम् ॥ ८ ॥ ९ ॥ प्रासादा गृहा अट्टालास्तदुपरिगृहास्तोलिकास्तत्पर्यंतकुड्यानि ताः । विहारान् क्रीडास्थानानि च स बभंज । किंच

र्जितः संख्ये जरासंधादयस्तथा ॥ २ ॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥ संवत्सरांते भगवानाशुतोष उमापतिः ॥ वरेण छंदयामास शाल्वं शरणमागतम् ॥ ५ ॥ देवासुरमनुष्याणां गंधर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥ तथेति गिरिशादिष्टो मयः परपुरंजयः ॥ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥ स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥ ८ ॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥ पुरीं बभंजोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ॥ विहारान्सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥ शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥ प्रचंडश्चक्रवातोऽभूद्रजसाऽऽच्छादिता दिशः ॥ ११ ॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥ प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥ सात्यकिश्चारुदेष्णश्च सांबोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविंदश्च गदश्च शुकसारणौ ॥ १४ ॥ अपरे च महेष्वासा रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ॥ यथा सुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥ विव्याध पंचविंशत्या स्वर्णपुंखैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥ २० ॥ बहुरूपैकरूपं तद्दृश्यते

विमानाग्र्यात्तस्माच्छस्त्रवृष्ट्यादयः पेतुः ॥ १० ॥ आसारशर्करा धारासंपातवज्जलोपमाः ॥ ११ ॥ शं सुखं नाभ्यपद्यत ॥ १२—१५ ॥ तुमुलं व्याकुलम् । लोमहर्षणं रौद्रम् ॥ १६ ॥ नैशं निशि भवं तम उष्णगुः सूर्य इव ॥ १७ ॥ किंच विव्याधेति । स्वर्णमयानि पुंखानि पृष्ठप्रांता येषां तैः । अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः । ध्वजिनीपालं सेनान्यम् । सन्नतानि निम्नानि पर्वाणि ग्रंथयो येषां तैः ॥ १८ ॥ सैनिकान्भटान् । नेतॄन्सारथीन् ॥ १९ ॥ स्वपरसेनयोर्वर्तमानाः सर्वे पूजयामासुः संमानितवंतः ॥ २० ॥ कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न

दृश्यते एवं दुर्विभाव्यं दुर्वितर्क्यमभूत् ॥ २१ ॥ किंच क्वचिदिति एवं तद्दुरवस्थितमनवस्थितं चाभूत् ॥ २२ ॥ २३ ॥ अग्निवद्दाहकोऽर्कवद्दुरुपसर्पस्ततः संस्पर्शो येषां तैः । आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैर्दुःसहैः । पीड्यमानं पुरमनीकानि च यस्य सः । परैर्यदुभिरीरितैर्मुक्तैः ॥ २४ ॥ भृशार्दिता अपि स्वं स्वं रणं स्वां युद्धभूमिम् ॥ २५ ॥ मौर्व्या कार्ष्णायसमय्या व्याहत्य प्रहृत्य ॥ २६ ॥ अपोवाहान्यतो निनाय ॥ २७ ॥ २८ ॥ मत् मत्तो विना । क्लीबं चित्तं यस्य तेन । त्वया सूतेन ॥ २९ ॥ पितरौ रामकृष्णावभिसंगम्य तत्पार्श्वं गत्वा ताभ्यां पृष्टः स्वयोग्यं किं नु वक्ष्यामीति ॥ ३० ॥ भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितं मत्क्लैब्यं कथयिष्यन्ति । तत्कथनमनुकरोति । कथं कथमिति ॥ ३१ ॥ विभो हे समर्थ । एतदपसर्पणम् । धर्ममाह सूत इति ॥ ३२ ॥ अपोवाहितोऽपनीतः । उपसृष्ट उपसर्गं पीडां प्राप्त इति कृत्वा । यतः परेण शत्रुणा गदया हतः सन्मूर्छितो निःसंज्ञतां गतो भवानिति ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे

न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥ यत्रयत्रोपलक्ष्येत ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुञ्चञ्छरान्सात्वतयूथपाः ॥ २३ ॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥ २४ ॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥ प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिंदमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥ न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥ किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रांतः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥ व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥ सारथिरुवाच ॥ धर्मं विजानतायुष्मन्कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥ एतद्विदित्वा तु भवान्मयाऽपोवाहितो रणात् ॥ उपसृष्टः परेणेति मूर्च्छितो गदया हतः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे शाल्वयुद्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ श्रीशुक उवाच ॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥ विधमंतं स्वसैन्यानि द्युमंतं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥ गदसात्यकिसांबाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकंधराः ॥ ४ ॥ एवं यदूनां

दशमस्कंधे उत्तरार्धे टीकायां षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ सप्तसप्ततितमे नानामायाविचक्षणः ॥ कृष्णेनागत्य शाल्वस्तु हतः सौभं च चूर्णितम् ॥ १ ॥ दंशितः सन्नद्धः ॥ १ ॥ विधमंतं नाशयंतम् । प्रतिहत्य ॥ २ ॥ अष्टानां विनियोगमाह । चतुर्भिरिति ॥ ३ ॥ सौभेयाः सौभस्थाः ॥ ४ ॥ नवानां रात्रीणां समाहारो नवरात्रम् । त्रयाणां नवरात्राणां समाहारस्त्रिणवरात्रम् । सप्तविंशतिमहोरात्राणीत्यर्थः ।

तुमुलमाकुलम् । उल्बणं घोरम् ॥ ५ ॥ परमतमुपन्यस्यति इंद्रप्रस्थं गत इत्यादिना ॥ ६ ॥ ७ ॥ आह चेति । स्वगतमेव पथि चिंताविजृंभितभाषणम् । आर्याभिसंगतो बलभद्रसहितः ॥ ८ ॥
दुर्निमित्तदर्शनाकुलचित्त एवं चिंतयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य सौभं च शाल्वराजं च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥ ते त्वया ॥ १० ॥ आ-
स्थाय सम्यगधिष्ठायारुणानुजं ध्वजे वर्तमानं गरुडम् ॥ ११ ॥ हतप्रायश्च बलस्य सैन्यस्येश्वरः ॥ १२ ॥ १३ ॥ तं च शाल्वम् । शरसंदोहैः शरजालैः । खं सूर्य इव रश्मिभिरिति मुनीनन्यावि-

शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥ इंद्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले
च संस्थिते ॥ ६ ॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ ७ ॥ आह चाहमिहायात आर्य-
मिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं
प्राह केशवः ॥ ९ ॥ रथं प्रापय मे सूत शाल्वस्यांतिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥ इत्युक्तश्चोदयामास रथमा-
स्थाय दारुकः ॥ विशंतं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूताय शक्तिं भीमर-
वां मृधे ॥ १२ ॥ तामापतंतीं नभसि महोल्कामिव रंहसा ॥ भासयंतीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १३ ॥ तं च षोडशभिर्विध्वा बाणैः
सौभं च खे भ्रमत् ॥ अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ॥ बिभेद न्यपतद्धस्ता-
च्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ निनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥ यत्त्वया मूढ नः
सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥ तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ॥ न याम्यपुनरावृत्तिं
यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मंद न पश्यस्यंतिकेऽंतकम् ॥ पौरुषं दर्शयंति स्म शूरा न बहुभाषिणः ॥ १९ ॥
इत्युक्त्वा भगवान् शाल्वं गदया भीमवेगया ॥ तताड जत्रौ संरब्धः स चकंपे वमन्नसृक् ॥ २० ॥ गदायां सन्निवृत्तायां शाल्वस्त्वंतरधीयत ॥ ततो
मुहूर्त आगत्य पुरुषः शिरसाऽच्युतम् ॥ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥ कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ॥
बद्ध्वाऽपनीतः शाल्वेन सौनिकेन यथा पशुः ॥ २२ ॥ निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ॥ विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा
॥ २३ ॥ कथं राममसंभ्रांतं जित्वाऽजेयं सुरासुरैः ॥ शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥ २४ ॥ इति ब्रुवाणे गोविंदे सौभराट् प्रत्यु-

पुलत्वाभिराकाशोपमा सौभस्य । अचिंत्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् । अयत्नेनैव रश्मिवच्छरजालप्रसारणात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १४ ॥ दोर्बाहुम् ॥ १५ ॥ १६ ॥ सख्युः
शिशुपालस्य । ईक्षतामस्माकम् । प्रमत्तोऽनवहितः । व्यापादितो निहतः ॥ १७ ॥ अपराजितोऽहमिति मानिनं मानवंतम् । अपुनरावृत्तिं मृत्युम् । तिष्ठेः स्थास्यसि ॥ १८-२२ ॥ घृणी दया-

वान् ॥ २३ ॥ २४ ॥ २५ ॥ जनिता जनयिता । ईशश्चेच्छक्तश्चेत् ॥ २६ ॥ २७ ॥ स्वबोधः स्वतःसिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्यस्वभावे उपप्लुतो निमग्न आस्ते अशिक्षित तत-
त्सर्वमासुरीं मायामबुध्यन् । मायेयमिति ज्ञातवान् ॥ २८ ॥ स्वाप्नं स्वप्नप्रपंचं यथा ॥ २९ ॥ एवं परमतमुपन्यस्य निराकरोति । एवमिति । केचन । नान्विता अनन्विताः पूर्वापरानुसंधा-
नरहिताः । तदाह । यत्स्ववाच इति । तत्रानुस्मरंतीत्यर्थः । अयमभिप्रायः । न तावद्राजसूयार्थं रामेण सह गतः श्रीकृष्णः संकर्षणमनुजानीते परमुक्तत्वात् ॥ ३० ॥ असंभावितं चेत्याह । क्व
शोकमोहाविति । भयं वा दुर्निमित्तदर्शनकृतं नूनं हन्युः पुरीं ममेति यदुक्तं यच्च हस्ताच्छार्ङ्गं न्यपतदित्युक्तं तद्वयं वा क्वेति । अज्ञेषु संभवो येषां ते । अस्खलितानि विज्ञानज्ञानैश्वर्याणि यस्य सः ।

पस्थितः ॥ वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥ एष ते जनिता तातो यदर्थमिह जीवसि ॥ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥ एवं निर्भर्त्स्य मायावी खड्गेनानकदुंदुभेः ॥ उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥ ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषंगतः ॥ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ॥ स्वाप्नं यथा चांबरचारिणं रिपुं सौभस्थमालोक्य निहंतुमुद्यतः ॥ २९ ॥ एवं वदंति राजर्षे ऋषयः केचनान्विताः ॥ यत्स्ववाचो विरुध्येत नूनं ते न स्मरंत्युत ॥ ३० ॥ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ॥ क्व चाखंडितविज्ञानज्ञानैश्वर्यस्त्वखंडितः ॥ ३१ ॥ यत्पाद-सेवोर्जितयाऽऽत्मविद्यया हिन्वंत्यनाद्यात्मविपर्ययग्रहम् ॥ लभंत आत्मीयमनंतमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥ तं शस्त्रपूगैः प्रहरंत-मोजसा शाल्वं शरैः शौरिरमोघविक्रमः ॥ विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ॥ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथांगमद्भुतम् ॥ वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥ जहार तेनैव शिरः सकुंडलं किरीटयुक्तं पुरुमायिनो हरिः ॥ वज्रेण वृत्रस्य यथा पुरंदरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥ तस्मिन्निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुंदुभयो राजन्दिवि देवगणे-रिताः ॥ सखीनामपचितिं कुर्वन्दंतवक्त्रो रुषाऽभ्ययात् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे सौभवधो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौंड्रकस्यापि दुर्मतेः ॥ परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदम् ॥ १ ॥ एकः पदातिः

तत्र विज्ञानं स्वरूपविषयम् । ज्ञानं बाह्यविषयम् ॥ ३१ ॥ किंच । यस्य पादसेवया ऊर्जिता पुष्कला या आत्मविद्या तया अनादिश्चासावात्मविपर्ययग्रहश्च तं [illegible] इत्यादिलक्षणकं
हिन्वंति नाशयंति संतः । ऐश्वरं पदं च । तस्य सतां गतेः कुतो नु मोह इति । अतो नैतद्वचनं सत्यमित्यर्थः ॥ ३२ ॥ किं तर्हि सत्यं तदाह । तं शस्त्रपूगैरिति । वर्म कवचम् । रुरोज बभंज
॥ ३३ ॥ ३४ ॥ लयार्कसंनिभं प्रलयकालीनसूर्यसदृशम् ॥ ३५ ॥ ३६ ॥ देवगणैरीरिता वादिताः । किंच सखीनामिति ॥ ३७ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां सप्तसप्ततितमो-

ध्यायः ॥ ७७ ॥ ततोऽष्टसप्ततितमे दंतवक्रविदूरथौ ॥ हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥ १ ॥ सखीनामपचितिं कुर्वन्नित्युक्तं तदेवाह । शिशुपालस्येति । पारोक्ष्यमौहृदं परोक्षे कर-णीयं सुहृत्कृत्यम् ॥ १ ॥ २ ॥ प्रत्यधात्प्रतिरुरोध ॥ ३ ॥ मुकुंदं प्राह दुर्मद इत्यादेरधिक्षेपपरता स्फुटैव । परमार्थस्तु दुर्मदो गतमदः प्राह । मुकुंदं तृतीये जन्मनि मुक्तिदानार्थमागतम् । अर्थानि जन्मत्रयेऽन्विष्यमाणोऽद्य ब्रह्मशापावसाने भवान्मम स्वामी दृष्टिपथं गतः प्राप्तः एतद्दिष्ट्या दिष्ट्या भद्रं भद्रम् । अति हर्षे वीप्सा ॥ ४ ॥ किंच । हे कृष्ण ! त्वमस्माकं मातुलेयो बंधुः । परमपि मित्रध्रुक् मित्राणि घातितवान्मां च जिघांससि तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः । अतस्त्वामेतावन्मात्रमहं याचे । किं तदाह । अमंद सर्वसहनसमर्थ । क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि । तामेकवारं सहस्वेति । ननु वज्रतुल्यां त्वद्गदां को वा सहेत नैवमित्याह । अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः ॥ ५ ॥ नन्वेवं हननं कस्य पुरुषार्थ-

संक्रुद्धो गदापाणिः प्रकंपयन् ॥ पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥ तं तथा यांतमालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात्कृष्णः सिंधुं वेलेव प्रत्यधात् ॥ ३ ॥ गदामुद्यम्य कारूषो मुकुंदं प्राह दुर्मदः ॥ दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ॥ अतस्त्वां गदया मंद हनिष्ये वज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बंधुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥ एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्त्रैरिव द्विपम् ॥ गदयाऽताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥ गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनांतरे ॥ ८ ॥ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ॥ प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥ विदूरथस्तु तद्भ्राता भ्रातृ-शोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥ ११ ॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेंद्र सकिरीटं सकुंडलम् ॥ १२ ॥ एवं सौभं च शाल्वं च दंतवक्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥ १३ ॥ मुनिभिः सिद्धगंधर्वैर्विद्याधर-महोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥ १४ ॥ उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥ १५ ॥ एवं योगेश्वरः कृष्णो भगवान् जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १६ ॥ श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पांडवैः ॥ तीर्था-भिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥ पृथू-

स्तमाह । तर्हीति । अज्ञ न विद्यते ज्ञो यस्मात् हे सर्वज्ञेत्यर्थः । परमार्थतः । स्वामिनमेतद्देहसंबंधेन बंधुरूपमरिं ब्रह्मशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्यमुपैम्युपैष्यामि । विशेषेणाधी-यते मनसि चिंत्यत इति व्याधिः । देहेंऽतर्यामितया चरतीति तथा तमीश्वरं हत्वा क्षात्रधर्मेणाराध्य । हंतेर्गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञात्वेति वा । तेन यथा पित्रादीनामानृण्यमुपयंति तद्वदिति ॥ ६ ॥ रूक्षैरित्यादिप्रतीत्यभिप्रायेण । तोत्त्रैरंकुशादिभिः ॥ ७–१५ ॥ एवं श्रीकृष्णो महाबलानपि लीलया जयत्येवेति कृत्वा स कदाचिज्जरासंधादिभिर्निर्जित इति पशुदृष्टीनामीयते । नित्यजये हेतवः । योगेश्वरो भगवान् जगदीश्वर इति ॥ १६ ॥ विदूरथांतमामथ्य पूतनादिदनोः कुलम् ॥ कृष्णस्तूपारमन्नाराद्रामोऽहन्सूतबल्वलौ ॥ तत्प्रसंगमाह । श्रुत्वेति ॥ १७ ॥ प्रतिस्रोतं प्रतिलोमम् ॥ १८ ॥

सुदर्शनं तीर्थम् । चक्रं चक्रतीर्थम् ॥ १९ ॥ यमुनामनु यानि तीर्थानि गंगामनु च यानि तानि सर्वाणि गत्वा नैमिषमरण्यं जगाम ॥ २० ॥ अभिप्रेत्य आगाम इति ज्ञात्वा ॥ २१ ॥ महर्षेर्व्यास्य ॥ २२ ॥ सूतं प्रतिलोमजम् । न कृतं प्रह्वणमंजलिश्च येन तम् । अध्यासीनं च तान् तेभ्योऽप्युच्चैरासीनमित्यर्थः ॥ २३ ॥ २४ ॥ अज्ञानतस्त्वस्य इति चेन्नैवमित्याह । ऋषेरिति ॥ २५ ॥ ननु बहुज्ञः कथमेवं कुर्यात्तत्राह । अदांतस्येति । गुणाय यथोचितानुष्ठानाय ॥ २६ ॥ विप्रानध्यास्तामस्यका किंचित्करोतु किं तवेति चेत्तत्राह । एतदर्थ इति । धर्मध्वजिन उत्तमलिंगधारिणः ॥ २७ ॥ भावित्वादिति । नहि भवितव्यं केनापि परिहर्तुं शक्यत इत्यर्थः । अहनत् अहन् ॥ २८ ॥ ते त्वया ॥ २९ ॥ अधार्मिकप्रतिलोमजस्य कोऽयमधर्म इति चेत्तत्राहुः । अस्येति । पुराण-

दकं बिंदुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥ यमुनामनु यान्येव गंगामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिनंद्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ २१ ॥ सोऽर्चितः सपरीवारकृतासनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ २२ ॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणांजलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥ कस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४ ॥ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥ अदांतस्याविनीतस्य वृथापंडितमानिनः ॥ न गुणाय भवंति स्म नटस्येवाजितात्मनः ॥ २६ ॥ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ २७ ॥ एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ २८ ॥ हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनंदन ॥ आयुश्चात्माक्लमं तावद्यावत्सत्रं समाप्यते ॥ ३० ॥ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः ॥ ३१ ॥ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन ॥ चरिष्यति भवाँल्लोकसंग्रहोऽनन्यचोदितः ॥ ३२ ॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥ ३३ ॥ दीर्घमायुर्बतैतस्य सत्त्वमिंद्रियमेव च ॥ आशासितं यत्तद्ब्रूत साधये योगमायया ॥ ३४ ॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ ३५ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिंद्रियसत्त्ववान्

प्रवचनायात्मनः शरीरस्य नास्ति क्लमो यस्मिंस्तदायुश्च दत्तमिति ॥ ३० ॥ ब्रह्मवधोऽपि किं समेश्वरस्येति चेत्सत्यमेव तथापि प्रायश्चित्तं कर्तव्यमित्याशयेनाहुः योगेश्वरस्येति साधेन । आम्नायो ब्राह्मणो न हंतव्य इत्यादिलक्षणः ॥ ३१ ॥ तथाऽप्येतस्या ब्रह्महत्यायाः पावनं प्रायश्चित्तं हे लोकपावनानन्यचोदितः स्वयमेव भवान्यदि करिष्यति नहि लोकसंग्रहो भविष्यति नान्यथेति ॥ ३२ ॥ वधस्य निर्वेशं प्रायश्चित्तम् । प्रथमे कल्पे मुख्यकल्पे । विधीयतामुपदिश्यताम् ॥३३॥ किंच पत हे मुनयः ! एतस्य दीर्घमायुः सत्त्वं बलमिंद्रियं तत्पाटवं च अन्यच यद्भवद्भिराशासितमपेक्षितं तदुक्तं सर्वम् ॥ ३४ ॥ अस्त्रादीनां यथा सत्यता भवेदस्माकं च वचः सत्यं यथा भवेत्तथा विधीयतामित्यर्थः ॥ ३५ ॥ तथा संपादयन्नाह । आत्मा वा इति । अंगादंगात्संभवसि हृदयादभिजायसे ॥ आत्मा

वै पुत्रनामासि स जीव शरदः शतमित्यादि वेदानुशासनं वेदवचनम् । तस्मादस्य रोमहर्षणस्य पुत्र उग्रश्रवा भवतां पुराणप्रवक्ता भवेत्स चायुरादिमाँश्च भवेत् अतः साक्षाज्जीवनादस्मत्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥ प्रथमं तावदपेक्षितं कथय तदहं करिष्यामीत्याह । किं वः काम इति किंविषयो वः कामो वर्तते तद्ब्रूतेति अथा-नंतरं ब्रह्मदंडं गृहीत्वाऽपचितिं निष्कृतिमजानतो मे हे बुधाः ! यथावच्चिंत्यतामपचितिरिति ॥३७॥ प्रथमं तावदपेक्षितं कर्तव्यं कथयंति इल्वलस्येति द्वाभ्याम् ॥ ३८ ॥ ३९ ॥ प्रायश्चित्तमाहुः । तत-श्चेति । परीत्य प्रदक्षिणीकृत्य । सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमित्यविरोधः । सुसमाहितः कामक्रोधादिरहितः । चरित्वा कृच्छ्राणि ॥ ४० ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे

॥ ३६ ॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिंत्यतां बुधाः ॥ ३७ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥ ३८ ॥ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्र-सुरामांसाभिवर्षिणम् ॥ ३९ ॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादशमासाँस्तीर्थस्नायी विशुद्ध्यसे ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचंडः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगंधस्तु सर्वशः ॥ १ ॥ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलभृत् ॥ २ ॥ तं विलोक्य बृहत्कायं भिन्नांजनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥ सस्मार मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ॥ मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥ सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुंचन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥ ६ ॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिंचन्महाभागा वृत्रघ्नं विबुधा यथा ॥ ७ ॥ वैजयंतीं ददुर्मालां श्रीधामाम्लानपंकजाम् ॥ रामाय वाससी दिव्यं दिव्यान्याभरणानि च ॥ ८ ॥ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीन् जगाम पुलहाश्रमम् ॥ १० ॥ गोमतीं गंडकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄनिष्ट्वा गंगासागरसंगमे ॥ ११ ॥ उपस्पृश्य महेंद्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ॥ सप्तगोदावरीं वेणां पंपां भीमरथीं ततः ॥ १२ ॥ स्कंदं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाऽद्रिं

टीकायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये ॥ निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥ १ ॥ उपावृत्ते प्राप्ते ॥ १ ॥ २ ॥ भिन्नो विदीर्णोऽजनचय उपमा यस्य तमतिकृष्णमित्यर्थः । तप्तताम्रवच्छिखाश्मश्रूणि च यस्य तम् । दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तम् ॥ ३ ॥ ४ ॥ ५ ॥ अरुणो रुधिरेण दैत्यः । शैलो धातुभिर्यथेति ॥ ६ ॥ ७ ॥ श्रियो धामान्यम्लानानि पंकजानि यस्यां ताम् ॥ ८ ॥ किं तत्सरः । यत इति । आस्रवदुदगात् ॥ ९ ॥ अनुस्रोतेनानुलोमतः पुलहाश्रमं हरिक्षेत्रम् ॥ १० ॥ गोमत्यां गंडक्यां विपाशायां च स्नात्वा

शोणे च आप्लुतः इष्ट्वा संपूज्य ॥ ११ ॥ १२ ॥ श्रीशैलं श्रीपर्वतम् ॥ १३ ॥ कांचीं पुरीम् ॥ १४–१६ ॥ दक्षिणमर्णवम् ॥ १७ ॥ फाल्गुनमनंतपुरम् । पंचाप्सरसं सरः । अस्पर्शद्गवायुतं ॥ १८ ॥ केरलादीन्देशान् ॥ १९ ॥ द्वीपमयनं यस्यास्ताम् ॥ २० ॥ २१ ॥ २२ ॥ विनशनं कुरुक्षेत्रम् ॥ २३ ॥ विवक्षुर्वक्तुमिच्छुः । किं वदिष्यतीति भिया तूष्णीमासन्निति ॥ २४–२६ ॥

वेंकटं प्रभुः ॥ १३ ॥ कामकोष्णीं पुरीं कांचीं कावेरीं च सरिद्वराम् ॥ श्रीरंगाख्यं महापुण्यं यत्र संनिहितो हरिः ॥ १४ ॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५ ॥ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥ तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ॥ योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ १७ ॥ ततः फाल्गुनमासाद्य पंचाप्सरसमुत्तमम् ॥ विष्णुः संनिहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १८ ॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ॥ गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ तापीं पयोष्णीं निर्विंध्यामुपस्पृश्याथ दंडकम् ॥ २० ॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥ श्रुत्वा द्विजैः कथ्यमानं कुरुपांडवसंयुगे ॥ सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ २२ ॥ स भीमदुर्योधनयोर्गदाभ्यां युद्ध्यतोर्मृधे ॥ वारयिष्यन्विनशनं जगाम यदुनंदनः ॥ २३ ॥ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मंडलानि विचित्राणि चरंताविदमब्रवीत् ॥ २५ ॥ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर ॥ एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम् ॥ २६ ॥ तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २७ ॥ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरंतावन्योऽन्यं दुरुक्तं दुष्कृतानि च ॥ २८ ॥ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ २९ ॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वंगं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥ ३० ॥ तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥ स्वपत्न्यावभृथस्नातो ज्ञातिबंधुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेंदुः सुवासाः सुष्ठ्वलंकृतः ॥ ३२ ॥ ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ॥ अनंतस्याप्रमेयस्य मायामर्त्यस्य संति हि ॥ ३३ ॥ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ॥ सायं प्रातरनंतस्य विष्णोः स दयितो भवेत् ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

अन्यः पराजयो वा । रणः संग्रामः ॥ २७ ॥ अर्थवद्वाक्यम् ॥ २८ ॥ दिष्टं प्राचीनं कर्म । समुपागतः संगतः ॥ २९ ॥ क्रत्वंगं यज्ञमूर्तिम् ॥ ३० ॥ आत्मन्यात्मतत्त्वे विश्वं यतोऽनुस्यूतं येन विदुः पश्यंति तद्विशुद्धं विज्ञानं व्यतरद्दात ॥ ३१–३४ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥ अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् ॥ संपू-

ज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥ १ ॥ सुरारिमारको हरिः पुरा चकार शंसताम् ॥ अतःपरं विनैव तन्निजोपकारमाचरत् ॥ २ ॥ रामचरितानि श्रुत्वा पुनर्मुकुंदवीर्याणि पृच्छति । हे भगवन् ! श्रोतुमिच्छामेत्यन्वयः ॥ १ ॥ उत्तमश्लोकस्य श्रीकृष्णस्य । सत्या मनोहरा विषयवैतृष्ण्यजनिकाः कथाः । विशेषज्ञः सारवित् । विषण्णो विषादं प्राप्तः ॥ २ ॥ कथाश्रवणं स्तुवन् दृष्टांततयाऽन्यार्थानाह । सा वागिति तावेव करौ यौ तत्कर्म कर्तारौ । तदेव मनो यत्स्थिरजंगमेषु वसंतं स्मरेत् । यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः ॥ ३ ॥ उभयलिंगं स्थिरं जंगमं च तस्यैव लिंगमिति मत्वा आनमेत्तदेव शिरः । तदेव तस्य लिंगमित्येव यत्पश्यति तदेव चक्षुः । तान्येवांगानि यानि पादोदकं भजंतीति ॥ ४ ॥ ५ ॥ ६ ॥ तथाविधा कुचैला । किंच क्षुत्क्षामा यत्किंचि-

॥ राजोवाच ॥ भगवन्यानि चान्यानि मुकुंदस्य महात्मनः ॥ वीर्याण्यनंतवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥ १ ॥ को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसंतं स्थिरजंगमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥ शिरस्तु तस्योभयलिंगमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ॥ अंगानि विष्णोरथ तज्जनानां पादोदकं यानि भजंति नित्यम् ॥ ४ ॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त इंद्रियार्थेषु प्रशांतात्मा जितेंद्रियः ॥ ६ ॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥ ७ ॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ दरिद्रा सीदमाना सा वेपमानाऽभिगम्य च ॥ ८ ॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ ९ ॥ तमुपैहि महाभागा साधूनां च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुंबिने ॥ १० ॥ आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यंधकेश्वरः ॥ स्मरतः पादकमलमात्मानमपि यच्छति ॥ किं न्वर्थकामान्भजतो नात्यभीष्टाञ्जगद्गुरुः ॥ ११ ॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ १२ ॥ इति संचिंत्य मनसा गमनाय मतिं दधे ॥ अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥ १३ ॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतंडुलान् ॥ चैलखंडेन तान्बध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥ कृष्णसंदर्शनं मह्यं कथं स्यादिति चिंतयन् ॥ १५ ॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः ॥ विप्रोऽगम्यांधकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १६ ॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेश-

त्संपन्नमन्नं तस्मै परिविष्य स्वयं क्षुधा जीर्णा ॥ ७ ॥ पतिव्रता सती । म्लायता शुष्यता वदनेन । सीदमाना भर्तुर्भोगसंपादनाशक्त्याऽवसीदंती । वेपमाना भयेन कंपमाना ॥ ८–१० ॥ भोजवृष्ण्यंधकेश्वर इति तत्स्वीकारमात्रेण सर्वे ते दास्यंतीति भावः । नात्यभीष्टान्परिपाकविरसत्वात् ॥ ११ ॥ १२ ॥ अप्यस्ति किमस्तीति प्रश्नः ॥ १३ ॥ १४ ॥ मह्यं मम ॥ १५ ॥ गुल्मानि रक्षार्थं सैन्यस्थानानि । कक्षाः प्रतोलीः । अतीयायातिक्रम्य जगाम । सद्विजः द्विजैः सहितः । ततश्च अगम्या दुर्गमा येंऽधका वृष्णयश्च तेषां गृहेषु ॥ १६ ॥ तथा हरेर्द्व्यष्टसहस्राणां महिषीणां च ये

गृहास्तेषु मध्ये श्रीमदेकतमं गृहं विवेश । तदा च स द्विजो ब्रह्मानंदं गतो यथा तथा बभूवेति शेषः ॥ १७ ॥ पर्यग्रहीत्पर्यरंभत ॥ १८ ॥ अब्बिंदूनानंदाश्रूणि ॥ १९ ॥ समर्हणमुपायनमुपहृत्य समर्प्य । पादावनेजनीरापः ॥ २०-२२ ॥ धमनिभिः शिराभिः संततं व्याप्तम् ॥ २३ ॥ अवधूतं मलिनम् ॥ २४ ॥ विस्मयमाह किमनेनेति [illegible] ॥ २५ ॥ संभृतः संमानितः ॥ २६ ॥ करौ गृह्य गृहीत्वा ॥ २७ ॥ भार्या ऊढा परिणीता नवेति गृहस्थलिंगदर्शनाद्भोगादर्शनाच्च संशयादिव प्रश्नः ॥ २८ ॥ अर्थालाभादलाभेऽनुगतं मन [illegible] आय इति । नहि ते चित्तं धन-सकामविहतं कामैरविहतं न भवतीति मे विदितम् । तथाहि धनेषु वस्त्रादिषु नैवातिप्रीयसे । हे विद्वन्निति । विदुषस्त्वेतद्युक्तमिति भावः ॥ २९ ॥ [illegible] किं गृहधर्मत्यागेनेत्याशंक्याह । केचिदिति । दैवीरीश्वरमायारचिताः प्रकृतीर्विषयवासनास्त्यजंतः । कामैरनाकृष्टचेतसामपि । कर्मकरणे दृष्टांतः । यथाऽहमिति । लोकसंग्रहं लोकस्य संग्रहो [illegible] यथा भवति तथाऽहमनासक्तोऽपि

कतमं श्रीमद्ब्रह्मानंदं गतो यथा ॥ १७ ॥ तं विलोक्याच्युतो दूरात्प्रियापर्यंकमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥ सख्युः प्रियस्य विप्रर्षेरंगसंगातिनिर्वृतः ॥ प्रीतो व्यमुंचदब्बिंदून्नेत्राभ्यां पुष्करेक्षणः ॥ १९ ॥ अथोपवेश्य पर्यंके स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥ २० ॥ अग्रहीच्छिरसा राजन्भगवाँल्लोकपावनः ॥ व्यलिंपद्दिव्यगंधेन चंदनागुरुकुंकुमैः ॥ २१ ॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥ अर्चित्वाऽऽवेद्य तांबूलं गां च स्वागतमब्रवीत् ॥ २२ ॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ॥ देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै ॥ २३ ॥ अंतःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ २४ ॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च ॥ २५ ॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यंकस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ २६ ॥ कथयांचक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ॥ आत्मनो ललिता राजन्करौ गृह्य परस्परम् ॥ २७ ॥ श्रीभगवानुवाच ॥ अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥ २८ ॥ प्रायो गृहेषु ते चित्तमकामविहतं तथा ॥ नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥ २९ ॥ केचित्कुर्वंति कर्माणि कामैरहतचेतसः ॥ त्यजंतः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम् ॥ ३० ॥ कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ३१ ॥ स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ॥ आद्योऽङ्ग यत्राश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ३२ ॥ नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरंत्यंजो भवार्णवम् ॥ ३३ ॥ नाहमिज्याप्रजातिभ्यां तपसो-

कर्माणि यथा करोमि तद्वत् ॥ ३० ॥ नौ आवयोः । यतो गुरोः विज्ञेयं परमात्मतत्त्वम् । तमसः संसारस्य ॥ ३१ ॥ तत्रात्मज्ञानप्रदस्य गुरोरत्यंतं पूज्यत्वं वक्तुं पूर्वकं त्रीन् गुरूनाह । स वा इति । इह संसारे यत्र संभवो जन्ममात्रं स पिता तावदाद्यः प्रथमो गुरुः पूज्यः । कर्मविद्याप्रदं गुरुमाह । द्विजातेः सतः पुंसः सत्कर्मणां यत्र संभवः उपनीय वेदाध्यापक इत्यर्थः । स द्वितीयो गुरुः यथाऽहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः । ब्रह्मविद्याप्रदं गुरुमाह । आश्रमिणां सर्वेषामपि ज्ञानदो यः स तु साक्षादहमेवेति ॥ ३२ ॥ अतो ज्ञानप्रदं गुरुरूपं मामाश्रित्य ये संसारं तरंति ते सुबुद्धिमंत इत्याह । नन्विति । हे ब्रह्मंस्ते ननु वर्णाश्रमवतां मध्येऽर्थकोविदाः । इह मनुष्यजन्मनि तत्रापि वर्णाश्रमवत्त्वे सति ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेणांजः सुखेनैव

भवार्णवं तरंतीति ज्ञानप्रदाद्गुरोरधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥ अतएव तद्भजनादधिको धर्मश्च नास्तीत्याह । नाहमिति । इज्या गृहस्थधर्मः प्रजातिः प्रकृष्टं जन्म उपनयनं तेन ब्रह्मचारिधर्म उपलक्ष्यते । ताभ्यां तथा तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण वा अहं परमेश्वरस्तथा न तुष्येयं यथा सर्वभूतात्माऽपि गुरुशुश्रूषयेति ॥ ३४ ॥ किंच अस्माकं गुरुशुश्रूषणं किमपि दैवादेव सम्पन्नं तत्किं त्वया स्मर्यत इति पृच्छति । अपि न इति । गुरौ निवसतामस्माकं यत्किमपि वृत्तं तत् । कच्चित्कदाचित् ॥ ३५ ॥ अपर्तौ अपगते ऋतौ अकाल इत्यर्थः । वातश्च वर्षं च तयोः समाहारः । स्तनयित्नवो गर्जितानि चाभवन् ॥ ३६ ॥ निम्नं कूलं नतमुन्नतं च स्थानम् ॥ ३७ ॥ अंबूनां संप्लवो व्यामिश्रणं यस्मिन्नेकोदके तस्मिन्वन इत्यर्थः । परिबभ्रिम भ्रमु भरण इति धातो रूपम् । परितो बभ्रिम इडागमश्छांदसः । भारान् धृतवंत इत्यर्थः ॥ ३८ ॥ ३९ ॥ उवाच कृपया श्लोकत्रयीम् । यया वयं कृतार्था इत्याह । अहो इति । आत्मा देहः ॥ ४० ॥ गुरोर्निष्कृतं

पशमेन वा ॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ ॥ गुरुदारैश्चोदितानामिंधनानयने क्वचित् ॥ ३५ ॥ प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ॥ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥३६॥ सूर्यश्चास्तंगतस्तावत्तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥ ३७ ॥ वयं भृशं तत्र महानिलांबुभिर्निहन्यमाना मुहुरंबुसंप्लवे ॥ दिशोऽविदंतोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥ ३८ ॥ एतद्विदित्वा उदिते रवौ सांदीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ३९ ॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः संतु मनोरथाः ॥ छंदांस्ययातयामानि भवंत्विह परत्र च ॥ ४२ ॥ इत्थं विधान्यनेकानि वसतां गुरुवेश्मसु ॥ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशांतये ॥ ४३ ॥ ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥ यस्य छंदोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोऽत्यंतविडंबनम् ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे श्रीदामचरितेऽशीतितमोऽध्यायः ॥ ८० ॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन्हरिः ॥ सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ॥ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥ २ ॥

प्रत्युपकारः । सर्वे अर्था यस्मात्स आत्मा देहस्तस्यार्पणं विनियोगः ॥ ४१ ॥ अयातयामानि यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवति तद्वदन्यदपि गतसारं गौण्या वृत्त्या यातयाममित्युच्यते । अगतसाराणि छंदांसि मत्तोऽधीयमानानि भवंत्वित्यर्थः ॥ ४२ ॥ इत्थंविधान्येवंप्रकाराण्यनेकानि वृत्तानि किं त्वया स्मर्यत इति शेषः । फलितमुपसंहरति । गुरोरिति ॥ ४३ ॥ अस्माभिः किमनिर्वृत्तमसंपन्नं येषामस्माकं भवता सहवासोऽभूत् ॥ ४४ ॥ भवतस्तु सर्वमेतद्विडंबनमात्रमित्याह । यस्येति । छंदोमयं वेदाख्यं ब्रह्म तथा श्रेयसामावपनं तदुद्भवस्थानं देहो मूर्तिर्यस्य तस्य तव ॥ ४५ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायामशीतितमोऽध्यायः ॥ ८० ॥ एकाशीतितमे सख्युर्जग्ध्वा पृथुकतंडुलान् ॥ श्रियं निर्मितवानिंद्रदुर्लभां तु तदाश्रमे ॥ १ ॥ संकथयन्मुख-

गोष्ठीः कुर्वन् । सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः ॥ १ ॥ ब्रह्मन् क्ष्वेलीं कुर्वन् ॥ २ ॥ लज्जया [illegible] अपवर्गानि [illegible] ॥ ३ ॥
॥ ४ ॥ ५ ॥ सर्वभूतानामात्मदृगंतःकरणसाक्षी ॥ ६ ॥ अमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥ अतिजीर्णत्वाद्गमनस्य पुनस्तन्मध्ये चीरेण बद्धान् ॥ ८ ॥ [illegible] हे सखे । मां [illegible]
माम् ॥ ९ ॥ इति वदन्नेकां मुष्टिं जग्ध्वा । तत्परेति । अयं भावः । एतावता पुंस इहामुत्र च मत्कटाक्षविलासभूतानां सर्वसंपदां समृद्धये [illegible] मा मामेनदर्थानां कुर्विति

श्रीभगवानुवाच ॥ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥ सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिंतयन्नायं श्रीकामो माभजत्पुरा ॥६॥ पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ॥ प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥ ७ ॥ इत्थं विचिंत्य वसनाच्चीरबद्धान्द्विजन्मनः ॥ स्वयं जहार किमिदमिति पृथुकतंडुलान् ॥ ८ ॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे ॥ तर्पयंत्यंग मां विश्वमेते पृथुकतंडुलाः ॥ ९ ॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ॥ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥ एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये ॥ अस्मिँल्लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥ ११ ॥ ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमंदिरे ॥ भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥ १२ ॥ श्वोभूते विश्वभावेन स्वसुखेनाभिवंदितः ॥ जगाम स्वालयं तात पथ्यनुव्रज्य नंदितः ॥ १३ ॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम् ॥ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १४ ॥ अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १५ ॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः ॥ ब्रह्मबंधुरिति स्माहं बाहुभ्यां परिरंभितः ॥ १६ ॥ निवासितः प्रियाजुष्टे पर्यंके भ्रातरो यथा ॥ महिष्या वीजितः श्रांतो बालव्यजनहस्तया ॥ १७ ॥ शुश्रूषया परमया पादसंवाहनादिभिः ॥ पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ॥ सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको नूनं धनं मेऽभूरि नाददात् ॥२०॥ इति तच्चिंतयन्नंतः प्राप्तो निजगृहांतिकम् ॥ सूर्यानलेंदुसंकाशैर्विमानैः सर्वतो वृतम् ॥ २१ ॥ विचित्रोपवनोद्यानैः

॥ १० ॥ त्वत्तोषकारणं तव तोषस्य कारणं यथा भवेत्तथा सर्वसंपत्समृद्धये । यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ॥ ११ ॥ स्वर्गतं स्वर्गाधिगतम् ॥ १२ ॥ श्वोभूते उदिते रवौ । भावस्तेनेति विश्वभावस्तेनेति पुरतो भाविनमिंद्रदुर्लभं विभवं सूचयति । स्वसुखेन स्वानंदपूर्णेनेति दानेऽदीनतां दर्शयति । नंदितो विनयोक्तिभिः ॥ १३ ॥ व्रीडितः स्वागमनकारणेन लज्जितः । महतः श्रीकृष्णस्य दर्शनेन निर्वृतः सुखं प्राप्तः ॥ १४ ॥ निर्वृतिमेवाह अहो इति चतुर्भिः । यद्यतः लक्ष्मीमुरसि बिभ्रता आश्लिष्टोऽहम् ॥ १५ ॥ पापीयानधीनः ॥ १६ ॥ १७ ॥ पूजितः चंदनलेपनादिभिः ॥ १८ ॥

एवं संपूज्यापि धनस्यादाने कारणं कल्पयति स्वर्गापवर्गयोरिति द्वाभ्याम् ॥१९॥ स्वर्गादीनां यद्यपि तस्य चरणार्चनमेव कारणं तथाऽपि कारुणिकत्वादभूर्यपि स्वल्पमपि धनं मह्यं नाददात् ॥२०॥ इत्येवं चिंतयन्निजगृहस्यांतिकं तत्प्रांतम् । तस्य विशेषणं सूर्येति ॥ २१ ॥ विचित्रोपवनादिभिर्वृतम् । कथंभूतैः । कूजद्भिर्द्विजकुलैः पक्षिसमूहैराकुलैर्व्याप्तैः । तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि तथा तैः ॥ २२ ॥ किंच जुष्टमिति । हरिणीनामिवाक्षीणि यासां ताभिः । तदैश्वर्यं दृष्ट्वा वितर्कितवाँस्तदाह । किमिदमिति । प्रथमं तेजःपुंजं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्य चेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमित्येवंरूपमभूदिति ॥ २३ ॥ अमरप्रभास्तत्तुल्यकांतयः प्रत्यगृह्णन्नुपायनादिभिरादृतवंतः ॥ २४ ॥ उद्गतो हर्षो यस्याः सा अतिसंभ्रम आदरो यस्याः सा । आलयात्कमलवनाद्रूपधारिणी श्रीरिव स्वर्गस्य तत्र भगवता आनीतत्वात्स्वर्गिणामिव तयो रूपं च बभूवेति भावः ॥ २५ ॥ बुद्ध्या अयमेवं वंद्य इति निश्चयेन । मनसा संकल्पेन ॥ २६–२८ ॥ यत्र मंदिरे पयःफेननिभाः शय्या आस्तरणानीत्यादिसंपदस्तत्र सर्वसंपदां समृद्धीर्विलोक्य तर्कयामासेति चतुर्थेनान्वयः । यत्र च दांता गजदंतमयाः पर्यंकाः ॥ २९ ॥ यत्रा-

कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदांभोजकह्लारोत्पलवारिभिः ॥ २२ ॥ जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ॥ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥ २४ ॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा ॥ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥ २५ ॥ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कंठाऽश्रुलोचना ॥ मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥ पत्नीं वीक्ष्य विस्फुरंतीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककंठीनां मध्ये भांतीं सविस्मतः ॥२७॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमंदिरम् ॥ मणिस्तंभशतोपेतं महेंद्रभवनं यथा ॥ २८ ॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ पर्यंका हेमदंडानि चामरव्यजनानि च ॥ २९ ॥ आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलंबीनि वितानानि द्युमंति च ॥ ३० ॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥ नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥ ३४ ॥ किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं

सनानि च मृदून्युपस्तरणानि तूलादिमयानि येषु तानि । यत्र मुक्तादामविलंबवंति द्युमंति च वितानानि ॥ ३० ॥ ३१ ॥ स ब्राह्मणो निर्व्यग्रः सन् स्थिरः सन्नहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास कुत एषा समृद्धिरागतेति ॥ ३२ ॥ निश्चिनोति । नूनमिति । एतन्ममेति एष चासावहं च तस्यैतन्मम । महती विभूतिर्यस्य तस्यावलोकादन्यः ॥ ३३ ॥ ननु स चेदवलोकनमात्रेण महदैश्वर्यं दत्तवाँस्तर्हीदं तुभ्यं मया दत्तमिति किं नावोचदत आह । नन्विति । ननु मे सखा समक्षमब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशते ददाति । अत्र हेतुः । भूरिभोजः स्वयं तद्देयं पर्जन्यवदीक्षमाण इति । अयमर्थः । स्वयं तावद्भूरिभोजो बहुभोज आप्तकामत्वाल्लक्ष्मीपतित्वाच्च अतो यथा पारावारपरिपूरकोऽतिवदान्यः पर्जन्यः कदाचिद्बह्वपि वर्षमल्पमेव च मन्यमानो लज्जयेव समक्षमवर्षन्रात्रौ निद्राणे कर्षके तत्क्षेत्रमाप्लावयत्येवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिंद्रादिपदमप्यतितुच्छं मन्वानस्तस्य च भजनं बहु मन्यमानः समक्षमब्रुवाण एव ददातीति ॥ ३४ ॥

तद्देवाह । किंचिदिति । ऊरु बह्वपि स्वदत्तं यत्किंचित्करोत्यल्पं मन्यते । सुहृत्कृतं फल्ग्वपितुच्छमपि भूरिकारी बहु मन्यत इत्यर्थः । अतएव मयोपनीतां [illegible] प्रीतियुतः स्वयमेव गृहीत- वान् ॥ ३५ ॥ श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते । तस्येति । सौहृदं प्रेम सख्यं हिताशंसनं च मैत्री उपकारकत्वं च दास्यं सेवकत्वं [illegible] । [illegible] मे मम स्यान्न तु विभूतिः । किंच महानुभावेन तेनैव विषज्जतो विशेषेण संगं प्राप्नुवतस्तद्भक्तेषु प्रकृष्टः संगः स्यादिति ॥ ३६ ॥ ननु भक्तः [illegible] किमिति प्रार्थयसे न [illegible] । भक्तायेति । संपदः कोशादीन्राज्यमैश्वर्यं विभूतीः कलत्रपुत्रादीन्न समर्थयति न ददात्यपि तु दृढां भक्तिमेव । कुतः । अदीर्घबोधाय । अविवेकिनो मम न [illegible] भक्तिरेव स्यादिति

फल्ग्वपि भूरिकारी ॥ मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसंगः ॥ ३६ ॥ भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्थयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयान् जायया त्यक्ष्यन्बुभुजे नातिलंपटः ॥ ३८ ॥ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं परा- जितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ४० ॥ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबंधाद्विमुच्यते ॥ ४१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे पृथुकोपाख्यानं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥ तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः ॥ समंतपंचकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥ निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥४॥ महत्यां तीर्थयात्रायां तत्रागन्भारतीः प्रजाः ॥ वृष्णयश्च तथाक्रूरवसुदेवाहु- कादयः ॥ ५ ॥ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसांबाद्याः सुचंद्रशुकसारणैः ॥ ६ ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥

भावः ॥ ३७ ॥ त्यक्ष्यन् शनैः शनैस्त्यागमभ्यस्यन् । जायया सह बुभुजे ॥ ३८ ॥ श्रीकृष्णस्यैवं ब्रह्मण्यता नातिचित्रमित्याह । तस्येति ॥ ३९ ॥ [illegible] स्वभृत्यैः पराजितं [illegible] ध्यानं तस्य वेगस्तेनोद्ग्रथितमात्मबंधनमहंकारो यस्य सः । गतिमित्याविष्टलिंगं धाम विशेषणम् । सतां ब्रह्मविदां प्राप्यमित्यर्थः ॥ ४० ॥ एतत्पृथुकोपाख्यानं [illegible] ॥ ४१ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥ द्व्यशीतितमे आगत्य कुरुक्षेत्रं रविग्रहे ॥ वृष्णीन् दृष्ट्वा मुदा भूपाः कृष्णकथा मिथः ॥ १ ॥ [illegible] कृष्णः प्रकल्प्यैंद्रं पदं भुवि ॥ नंदादिसुहृदानंदी कुरुक्षेत्रं जगाम सः ॥ २ ॥ कल्पक्षये यथा सर्वग्रास इत्यर्थः ॥ १ ॥ [illegible] ॥ २ ॥ अब्राह्मणक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह । निःक्षत्रियामिति त्रिभ्याम् ॥ ३ ॥ अन्यो [illegible] यथा ॥ ४ ॥ [illegible]

॥ ५ ॥ ६ ॥ सुचंद्रशुकसारणैः सहानिरुद्धो द्वारकारक्षायामास्ते । तथा कृतवर्मा च यूथपतिः सेनानीः । देवधिष्ण्याभैर्विमानसंकाशैः । तरलास्तरंगास्तद्वत् । प्लवो गतिर्येषां तैः ॥ ७ ॥ विद्याधरद्युभिर्विद्याधराणामिव द्युतिर्येषां तैः । महातेजा महातेजसः ॥ ८ ॥ दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषाम् ॥ ९ ॥ पुनरन्येद्युराप्लुत्य । यद्वा तस्मिन्नेवाहनि मुक्तिस्नानं कृत्वा ॥ १० ॥ ११॥ स्निग्धा शीतला छाया येषामंघ्रिपानामंघ्रिपु मूलेषु ॥ १२–१४ ॥ प्रोत्फुल्लैर्हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते ॥ १५ ॥ अतिसौहृदेन यत् स्मितं तेनामला अपांगैर्दृशो दृष्टयो यासां ताः । मिथः

ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ ७ ॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ व्यरोचंत महातेजाः पथि कांचनमालिनः ॥ ८ ॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ९ ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासः स्रग्रुक्ममालिनीः ॥ रामहृदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १० ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ ११ ॥ भुक्त्वोपविविशुः कामं स्निग्धछायांघ्रिपांघ्रिषु ॥ तत्रागतास्ते ददृशुः सुहृत्संबंधिनो नृपान् ॥ १२ ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृंजयान् ॥ कांबोजकैकयान्मद्रान्कुंतीनानर्तकेरलान् ॥ १३ ॥ अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप ॥ नंदादीन्सुहृदो गोपान्गोपीश्चोत्कंठिताश्चिरम् ॥ १४ ॥ अन्योऽन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥१५॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापांगदृशोऽभिरेभिरे ॥ स्तनैः स्तनान्कुंकुमपंकरूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १६ ॥ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवादिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः ॥१७॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुंदं च जहौ संकथया शुचः ॥ १८ ॥ कुंत्युवाच ॥ आर्यभ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १९ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरंति स्वजनं यस्य दैवमदक्षिणम् ॥ २० ॥ वसुदेव उवाच ॥ अंब मास्मानसूयेथा दैवक्रीडनकान्नरान् ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥ २१ ॥ कंसप्रतापिताः सर्वे वयं याता दिशं दिशम् ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ २२ ॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानंदनिर्वृताः ॥ २३ ॥ भीष्मो द्रोणोंऽबिकापुत्रो गांधारी ससुता तथा ॥ सदाराः पांडवाः कुंती सृंजयो विदुरः कृपः ॥ २४ ॥ कुंतिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥ २५ ॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥ २६ ॥ राजानो ये च राजेंद्र युधिष्ठिरमनुव्रताः ॥

परस्परं संवीक्ष्य दोर्भिरभिरेभिरे आलिंगनं कृतवत्यः ॥ १६ ॥ १७ ॥ संकथया मिथः सप्रेमगोष्ठ्या ॥ १८ ॥ तामेव वसुदेवपृथयोः संकथामाह आर्येत्यादिचतुर्भिः । अकृताशिषमपूर्णमनोरथम् ॥ १९ ॥ यस्य दैवमदक्षिणमननुकूलं तं स्वजनमपि संतं सुहृदादयो नानुस्मरंति । अतो मम दैवं प्रतिकूलं युष्माकं कोऽपराध इति भावः ॥ २० ॥ २१ ॥ ईशवशत्वमेवाह । कंसप्रतापिता इति । हे

स्वसः । एतर्ह्येव संप्रत्येव ॥ २२–२६ ॥ युधिष्ठिरं येऽनुव्रतास्ते राजसूये जितवान् ॥ २७ ॥ २८ ॥ जन्मभाजो नृणां मध्ये सफलजन्मानः ॥ २९ ॥ किंच न केवलं [illegible] दर्शनमेव [illegible]
वहु युष्माकं स्वतःसंपन्नमित्याहुः यद्विश्रुतिरिति द्वाभ्याम् । यदिति पृथक् पदम् । यस्येत्यर्थः । विश्रुतिः कीर्तिः श्रुतिभिर्नुता वेदैः स्तुता इदं विश्वमलं [illegible] पाठे
श्रुतिः श्रवणमर्मावं पापमिति । यस्य पादावनेजनपयो गंगा च यस्य वचो वाक्यरूपं शास्त्रं च वेदाख्यं विश्वं पुनाति । किंच कालेन भर्जितं [illegible]
ऽङ्घ्रिपद्मस्पर्शेनोत्था आविर्भूता शक्तिर्यस्याः सा नोऽस्माकमखिलानर्थानभितो वर्षति ॥ ३० ॥ दर्शनं च स्पर्शनं चानुपथोऽनुगतिश्च प्रजल्पा गोष्ठी [illegible] भोजनं च [illegible]
विवाहसंबंधस्तेन सह वर्तमानः सपिंडबंधो दैहिकसंबंधः । तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः सयौनः सपिंडबंधो येषां वोऽस्ति । किंच येषां [illegible] निरयवर्त्मनि

श्रीनिकेतं वपुः शौरेः स्वस्त्रीकं वीक्ष्य विस्मिताः ॥ २७ ॥ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान्
॥ २८ ॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २९ ॥ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादा-
वनेजनपयश्च वचश्च शास्त्रम् ॥ भूः कालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३० ॥ तद्दर्शनस्पर्शनानुपथप्रजल्प-
शय्यासनाशनसयौनसपिंडबंधः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३१ ॥ श्रीशुक उवाच ॥ नंदस्तत्र यदू-
न्प्राप्तान्ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद्वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥ ३२ ॥ तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे
गाढं चिरदर्शनकातराः ॥ ३३ ॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥ ३४ ॥ कृष्णरामौ परि-
ष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकंठौ कुरूद्वह ॥ ३५ ॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा
सुतौ विजहतुः शुचः ॥ ३६ ॥ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरंत्यौ तत्कृतां मैत्रीं बाष्पकंठ्यौ समूचतुः ॥ ३७ ॥ का विस्मरेत
वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ आवाप्याप्यैंद्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३८ ॥ एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपाल-
नानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रचभयौ न सतां परः स्वः ॥ ३९ ॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं

प्रवृत्तिमार्गे वर्तमानानां स्वर्गापवर्गाभ्यां विरमयति वितृष्णान्करोतीति तथा सः । ते यूयं जन्मभाज इति । यद्वा तदिति सामान्यनिर्देशः स इत्यर्थः । स विष्णुः स्वयं येषां वो निरयवर्त्मनि संसा-
रकारणे गृहे वर्तमानानामपि बध्यते संबध्यत इति । बंधो दर्शनादिभिः संबद्धः सन्स्वर्गापवर्गविरम आस परमसुखप्रदो बभूवेत्यर्थः ॥ ३१ ॥ अनःस्थार्थैरिति । नवैव [illegible] शकटेषु स्थापितैः
रर्थैः सदागत इत्यर्थः ॥ ३२ ॥ ३३ ॥ वसुदेवस्तं परिष्वज्य प्रेमविह्वलो बभूवेति शेषः ॥ ३४ ॥ ३५ ॥ तौ सुतौ परिरभ्य नंदो यशोदा च विरहशोकान्विजहतुस्त्यक्तवन्तौ । यद्वा शुचोऽश्रूणि वि
जहतुर्मुमुचतुरित्यर्थः ॥ ३६ ॥ व्रजेश्वरीं यशोदाम् ॥ ३७ ॥ अनिवृत्तां निवृत्तिकारणे सत्यप्यनुवर्तमानाम् । ऐंद्रमैश्वर्यं प्राप्यापि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३८ ॥ तत्कृतां मैत्री-
माहतुः । एतावितिं न दृष्टौ पितरौ याभ्यां तौ वस्तुतस्त्वजन्मत्वादेवादृष्टपितरौ । हे भवति ! युवयोः पित्रोर्न्यस्तावेतौ संप्रीणनादीनि प्राप्याकुत्रचभयौ कदाचिदपि भयरहितौ सन्तौ उपतुर्वासं चक्रतुः ।

कथंभूतयोः । अक्ष्णोर्नेत्रयो रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः । युक्तं युवयोरेतद्यतः सतां परः स्व इति नास्ति वैषम्यम् ॥ ३९ ॥ अभीष्टत्वे लिंगम् । यद्यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकं पक्ष्मकृतं विधातारं शपंति । दृग्भिर्नेत्रद्वारैर्हृदि कृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः । अपि नित्ययुजामारूढयोगिनामपि ॥ ४० ॥ ४१ ॥ चिरायितान्विलंबितान् । अत्र हेतुः । शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥ ४२ ॥ अपिस्वित् अस्मानवध्या यथाऽवजानीथ । अकृतज्ञा एत इत्याविशंकया ईषच्छंकया न शंकामात्रनिश्चितमेवैतत्परित्यज्य गतत्वादित्यत आह । नूनमिति ॥ ४३ ॥ एतत्सदृष्टांतमाह । वायुरिति । आक्षिपते पृथक्करोतीत्यर्थः ॥ ४४ ॥ अपि च अतिभद्रमिदं यदुत भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह । मयीति । मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पत इति । यदुत भवतीनां मत्स्नेह आसीत्तद्दिष्ट्याऽतिभद्रम् । कुतः । मदापनो मत्प्रापण इति ॥ ४५ ॥ कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह । अहं हीति । हे अंगनाः! भौतिकानां शरावसैंधवादीनां यथाऽऽकाशादीनि पंचमहाभूतान्याद्यंतादिरूपाण्येवं सर्वभूतानां जरायुजादीनामहम् । अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥४६॥

यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपंति ॥ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४० ॥ भगवाँस्तास्तथाभूता विविक्त उपसंगतः ॥ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१ ॥ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गताँश्चिरायितान् शत्रुपक्षक्षपणचेतसः ॥ ४२ ॥ अप्यवध्या यथाऽस्मान्स्विदकृतज्ञा विशंकया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ ४३ ॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥४४॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४५ ॥ अहं हि सर्वभूतानामादिरंतोऽतरं बहिः ॥ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरंगनाः ॥ ४६ ॥ एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥४७॥ श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४८ ॥ आहुश्च ते नलिननाभ पदारविंदं योगेश्वरैर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे वृष्णिगोपसंगमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ श्रीशुक उवाच ॥ तथाऽनुगृह्य भगवान्गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥

ननु चतुर्विधभूतग्रामाणां तद्भोक्ता आत्मैवाद्यंतादिरूपस्तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तंत इति कुतस्त्वत्प्राप्तिरस्माकमित्यत आह । एवं हीति । अयमर्थः । शरावादीनां यथा भौतिकानां महाभूतान्याद्यंतादिरूपाण्येवमेवैतानि चतुर्विधानि भूतान्यपि भौतिकत्वाविशेषात्स्वकारणेषु भूतेष्वेव वर्तंते न तु भोक्तर्यात्मनि । आत्मा तु तेषु भूतेष्वात्मना भोक्तृरूपेण ततो व्याप्तो न कारणत्वेन । अथैतदुभयं भूतभौतिकरूपं भोग्यं च भोक्तारं चात्मानं मय्यक्षरे परिपूर्णे आभातं पश्यतेति ॥ ४७ ॥ अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिता बोधितास्तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिंगं यासां तास्तमेवाध्यगन् प्रापुः ॥४८॥ एवं प्राप्तोऽपि कृष्णः पुनर्गृहव्यासंगेन माऽपयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह । आहुश्चेति । हे नलिननाभ! ते पदारविंदं गेहंजुषां गृहसेविनीनामपि नो मनसि सदा उदियादाविर्भवेत् ॥ ४९ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ॥ द्रौपद्यै कृष्णभार्याभिरुक्ताः स्व-

स्वकरग्रहः ॥ १ ॥ अन्ययं कुशलम् ॥ १ ॥ तत्पादच्युतया हतमंहो येषां ते ॥ २ ॥ महतां मनस्तः सकाशान्मुखद्वारतो निःसृतं कश्चित्कदाचित्कदाचित् [illegible]
छिनत्तीति तथा तम् । देहकृद्देहधरस्तद्विपयाज्ञानच्छिदं वा ॥ ३ ॥ हित्वेति पदद्वयम् । त्वां हि एव त्वामेव नताः स्मेत्यर्थः । कथंभूतम् । आत्मधाम [illegible]
बुद्धिनिमित्तास्तिस्रोऽवस्था यस्मिंस्तम् । अतएवानंदसंप्लवं सर्वानंदकदंबरूपम् । अखंडं चापरिच्छिन्नम् । यतो न कुंठः कुंठितो बोधो [illegible] श्रीकृष्णस्य [illegible]
दिवत्प्रतीतेरत आह । कालोपसृष्टेति । कालेनोपसृष्टा विप्लुताश्च ते निगमाश्च तेषामवने रक्षार्थमात्ता उपात्ता योगमायया आकृतिर्येन [illegible]
रूपत्वादस्माकं च त्वन्मायैवैतत्सर्वं वैपरीत्यात्त्वामेव नताः स्मेति । यद्वा त्वामिति प्रकरणाज्ज्ञातव्यम् । त्वां नताः स्म । किं कृत्वा हित्वा । किम् । [illegible]
देहदैहिकसंगं परित्यज्येत्यर्थः । समानमन्यत् ॥ ४ ॥ त्रिषु लोकेषु गीताः ॥ ५ ॥ कौसल्ये हे सत्ये शैब्ये हे मित्रविंदे । रोहिणी नाम का [illegible]

प्रत्यूचुर्हृष्टमनसस्तत्पादच्युताहतांहसः ॥ २ ॥ कुतोऽशिवं त्वच्चरणांबुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ॥ पिबंति ये कर्णपुटैरलं प्रभो देहभृतां
देहकृदस्मृतिच्छिदम् ॥ ३ ॥ हित्वाऽऽत्मधामविधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठबोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परम-
हंसगतिं नताः स्म ॥ ४ ॥ ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वंधककौरवस्त्रियः ॥ समेत्य गोविंदकथा [illegible]
शृणु वर्णयामि ते ॥ ५ ॥ द्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जांबवति कौसले ॥ हे सत्यभामे कालिंदि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥ [illegible]
पत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥ ७ ॥ रुक्मिण्युवाच ॥ चैद्याय मार्पयितुमुद्यतकार्मुकेषु [illegible]
जेयभटशेखरितांघ्रिरेणुः ॥ निन्ये मृगेंद्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ सत्यभामोवाच ॥ यो मे [illegible]
ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥ जांबवत्युवाच ॥ [illegible]
देहकृदमुं निजनाथदेवं सीतापतिं त्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥
कालिंद्युवाच ॥ तपश्चरंतीमाज्ञाय स्वपादस्पर्शनाशया ॥ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ॥ ११ ॥ भद्रोवाच ॥ [illegible]

॥ ७ ॥ मामामर्पयितुं संपादयितुं राजसु जरासंधादिषूद्यतकार्मुकेषु सत्स्वजेया ये भटास्तेषां शेखरिणा मुकुटवत्कृता अंघ्रिरेणवो येन । तेषां मध्ये सर्वं [illegible]
र्चनायास्तु ॥ ८ ॥ सत्राजिद्भ्रातृवधेन सिंहकृतेन तस्य हयस्य तेन मे ततेन तातेन लिप्तमभिशापं दुर्यशोऽपमार्ष्टुं परिहर्तुमृक्षराजं जित्वा रत्नं स्यमंतकमपाजहारानीतवान् । [illegible]
दात् । तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामादिशन् ददौ । दत्तामक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ॥ ९ ॥ देहकृत्पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं [illegible]
प्राज्ञायाविज्ञाय त्रिणवहानि त्रिनवाहानि । हस्वश्छंदोऽनुरोधेन । सप्तविंशतिदिनान्यमुनाऽभ्ययुध्यत् । परीक्षितः संजाता परीक्षा यस्य स परीक्षितः [illegible]
मणिना सह मामर्हणमुपाहरदर्हणतया समर्पितवान् । अहो तर्हि त्वमपि श्रेष्ठाऽसि तत्राह । अमुष्याहं दासीति ॥ १० ॥ सख्या अर्जुनेन तस्य गृहमार्जनी गृहसंमार्जनकर्त्री ॥ ११ ॥ [illegible]

गतं स्वबलिं द्विपारिः सिंह इवेति मे भ्रातुश्चापकुरुतोऽपकारं कुर्वतो विजित्य । श्रियौको लक्ष्मीनिवासः । तस्यांघ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वमनुभवं प्रतिजन्म मेऽस्तु ॥ १२ ॥ सप्तोक्ष्णो वृषभान् । बलं च वीर्यं च सुतीक्ष्णशृंगाणि चातिशयितानि येषां तान्मे पित्रा कृतान्संपादितान्बलीयसे मा दातुं क्षितिपानां वीर्यस्य बलस्य परीक्षणाय तानतिप्रसिद्धान्वीराणां दुर्मदं घ्नंति ये तांस्तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडन्ननायासेनैव बबंध । अजतोकानजापत्यानि ॥ १३ ॥ वीर्यमेव शुल्कं देयं यस्यास्ताम् । दासीभिः सह चतुरंगिणीं गजाश्वादिसेनायुक्तां पुरं निन्ये ॥ १४ ॥ हे कृष्णे हे द्रौपदि तस्मिन्नेव चित्तं यस्यास्तां मां अक्षौहिण्या सेनया सह सखीजनैश्च सह ॥ १५ ॥ येन पादसंस्पर्शेनात्मनो मे तत्कैवल्याख्यं श्रेयो भवेत्सः । यद्वा येन कारणेनात्मनो जीवस्य तच्छ्रेयः स

विजित्य भूपान्निन्येऽश्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄँश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमंघ्र्यवनेजनत्वम् ॥ १२ ॥ सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबंध ह यथा शिशवोऽजतोकान् ॥ १३ ॥ य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरंगिणीम् ॥ पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥ मित्रविंदोवाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥ अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ॥ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥ लक्ष्मणोवाच ॥ ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं मुकुंदे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान् ॥ १७ ॥ ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥ श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥ पित्रा संपूजिताः सर्वे यथा वीर्यं यथा वयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥ आदाय व्यसृजन्केचित्सज्यं कर्तुमनीश्वराः ॥ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥ सज्यं कृत्वाऽपरे वीरा मागधांबष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविंदंस्तदवस्थितिम् ॥ २३ ॥ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे

एव पुरुषार्थ इति ॥ १६ ॥ राज्ञि हे द्रौपदि यथा मित्रविंदायास्तथैव ममापि चित्तं मुकुंदविषयमासीत् । सुसंमृश्य सुविचार्य पद्महस्तया श्रिया वृतः किलातोऽपि मम चित्तं श्रीमुकुंदे आसेति ॥१७॥ तत्र श्रीकृष्णप्राप्तावुपायमचीकरत्कारयामास ॥ १८ ॥ यथा राज्ञि तव स्वयंवरे पार्थस्येप्सया आप्तुमिच्छया कृतस्तथा मत्स्यं कारितवान् । पाठांतरे पार्थस्येषुणाऽपाकृतः । तर्हीममप्यर्जुन एव किं नाविध्यत्तत्राह । अयं त्विति । स मत्स्यो बहिरेवाच्छन्नो नांतरतः । स्तंभलग्नयोर्ध्वदृष्ट्या संलक्ष्यतेऽयं तु न तथा किंतु स्तंभमूले निहितकलशजले केवलं दृश्यतेऽतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः ॥ १९ ॥ २० ॥ मत्स्यं वेद्धुम् । पर्षदि संसदि । मद्धियो मय्येव धीर्येषामिति । अन्यचित्ता न वेद्धुं शक्ता इति भावः ॥ २१ ॥ तदेवाह । आदायेति । अमुना चापेन ॥ २२ ॥ नाविंदंस्तदवस्थितिमिति मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥ यत्तो यत्नवान् । असृजन्मुमोच । स बाणो मत्स्यं नाच्छिनत्परं

केवलं पस्पर्श । ज्ञानवानप्यर्जुनो बलेनापूर्ण इत्यर्थः ॥ २४ ॥ २५ ॥ अभिजिति सर्वार्थसाधके मुहूर्ते ॥ २६ ॥ २७ ॥ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवालङ्कृत्य [illegible] मालाम् । तद्रङ्गमिति । [illegible] कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रंगं प्राविशम् । कनकेनोज्ज्वलां रत्नमालाम् । निवीय प्रावृत्य परिधाय च नीवीबंधनेन च । कौशिकाग्र्ये [illegible] सव्रीडो हासो [illegible] यस्याः सा । कवर्यां धृताः स्रजो यया सा ॥ २८ ॥ उरवः कुंतला यस्मिन् । कुंडलयोस्त्विषो यस्मिंस्तं गंडस्थलं यस्मिंस्तच्च तत् । शिशिरः संतापहरो हासो [illegible] कटाक्षमोक्षा [illegible] । अनुरक्तं हृदयं यस्याः साऽहम् ॥ २९ ॥ ३० ॥ याज्ञसेनि हे द्रौपदि! ईशे श्रीकृष्णे मया वृते सति स्पर्धन्तः स्पर्धमानाः । नन्वेवं परमेश्वरे [illegible] हृच्छयातुरा इति । [illegible]

परम् ॥ २४ ॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाऽथ लीलया ॥ २५ ॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥ दिवि दुंदुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७ ॥ तद्रंगमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कवरीधृतस्रक् ॥ २८ ॥ उन्नीय वक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ २९ ॥ तावन्मृदंगपटहाः शंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥ एवं वृते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः ॥ ३१ ॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य संनद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥ दारुकश्चोदयामास कांचनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥ ३३ ॥ तेऽन्वसज्जंत राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वंघ्रिकंधराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥ ३५ ॥ ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥ ३६ ॥ पिता मे पूजयामास सुहृत्संबंधिबांधवान् ॥ महार्हवासोऽलंकारैः शय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसंगनिवृत्त्याऽद्धा तपसा च बभूविम ॥ ३९ ॥ महिष्य ऊचुः ॥ भौमं

येन कामेनातुरा विवशाः कामविजृंभिता स्पर्धन्तीति भावः ॥ ३१ ॥ हयरत्नानां चतुष्टयं यस्मिंस्तं रथम् । द्वाभ्यां मामालिंग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा [illegible] ॥ ३२ ॥ मृगाणां मिषतां मृगराडिव तदा हरिर्जगामेति शेषो ज्ञातव्यः । दारुकस्यैव वा मृगराजोपमा ॥ ३३ ॥ अन्वसज्जंत पृष्ठतः सक्ता बभूवुः । निषेद्धुं प्रतिबंधं कर्तुं केचन पुनर्नो [illegible] पथि संयत्ता [illegible] । उद्धृतेष्वासा ऊर्ध्वीकृतचापाः । ग्रामसिंहाः श्वानो हरिं सिंहं यथेति ॥ ३४ ॥ ३५ ॥ रविं छादयंति ते रविच्छदा ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सा च सा च । तां [illegible] पुरीं यदुपतिः समाविशत् । स्वकेतनं मंडलमस्ताचलं वा ॥ ३६ ॥ महार्हवासःप्रभृतिभिः सुहृदादीन्पूजयामास ॥ ३७ ॥ दास्यादिभिः महायुधानि पूर्णायापि ददौ ॥ ३८ ॥ इमा वयं [illegible]

वृत्त्या तपसा स्वधर्मेणाद्धा साक्षात्तस्य गृहदासिका बभूविम ॥ ३९ ॥ क्षितिजये दिग्विजये जितानां राज्ञां कन्या नोऽस्मांस्तेन रुद्धा ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत्पादांबुजमनुस्मरंतीर्नः परिणिनायोदवहत् । आप्तकामोऽपि यः ॥ ४० ॥ न वयमिति । साम्राज्यादि न कामयामहे किंतु एतस्य श्रीमत्पादरजोमूर्ध्ना वोढुं कामयामहे इति । ननु तस्य गृहिण्यो यूयं सर्वगंधद्वाजः किमेवं कामयध्वमत आहुः । हे साध्वि । साम्राज्यं सार्वभौमपदम् । स्वाराज्यमैंद्रं पदम् । भौज्यं तदुभयभोगभाक्त्वम् । विविधं राजत इति विराट् तस्य भावो वैराज्यमणिमादिसिद्धिभाक्त्वमित्यर्थः । पारमेष्ठ्यं ब्रह्मपदम् । आनंत्यं मोक्षम् । हरेः पदं तत्सालोक्यादि न तु कामयामह इति । यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यभौज्यस्वाराज्यवैराज्यानि व्याख्येयानि ॥ ४१ ॥ तत्किं तत्पादरज एव काम्यतेऽत आहुः । श्रियः कुचकुंकुमगंधाढ्यमिति । ब्रह्मादिसेव्या लक्ष्म्याऽपि सेवितत्वादिति भावः ॥ ४२ ॥ ननु तर्ह्यतिदुर्लभत्वात्किं तद्वांछयाऽत आहुः ।

निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरंतीः पादांबुजं परिणिनाय य आप्तकामः ॥ ४० ॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनंत्यं वा हरेः पदम् ॥ ४१ ॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुंकुमगंधाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥ व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥४३॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे उत्तरार्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबंधं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥ इति संभाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानंदो भरद्वाजोऽथ गौतमः ॥ ३ ॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कंडेयो बृहस्पतिः ॥ ४ ॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथांऽगिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पांडवाः कृष्णरामौ च प्रणेमुर्विश्ववंदितान् ॥ ६ ॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥ ८ ॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥९॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते

व्रजस्त्रिय इति । यद्यथा गावो गाः महात्मनोऽपि गाश्चारयतः पादस्पर्शं च गोपा यथा वांछंति तद्वत् । तत्पराणां सुलभ इति भावः ॥ ४३ ॥ इति श्रीमद्भागवते दशमस्कंधे उत्तरार्धे टीकायां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ चतुर्भिरधिकाशीतितमे मुनिसमागमे ॥ वसुदेवमखोत्साहबंधुप्रस्थापनादिकम् ॥ १ ॥ सुबलपुत्री गांधारी । माधवी सुभद्रा । क्षितिपानां राज्ञां पत्न्यः । स्वगोप्यः कृष्णभक्ता गोप्यः । विसिस्म्युर्विस्मयं चक्रुः ॥ १–६ ॥ आनर्चुरर्चितवंतः ॥ ७ ॥ धर्मगोप्त्री तनुर्यस्य स धर्मगुप्तनुः । यता नियता वाग्यस्य तस्य सदसः ॥ ८ ॥ जन्मभृतः सफलजन्मानः । ... ॥९॥ किंच युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापमस्माकं तु स्पर्शनादिकमपि कथं नु घटितमिति विस्मयेनाह । किमिति । स्वल्पतपसां तीर्थ-

स्नानादिमात्रे तपोबुद्धिर्येषां तथाऽर्चायां प्रतिमायां देव इति चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शनादिकमिदं किमसंभावितमित्यर्थः ॥ १० ॥ [illegible] ॥ ११ ॥ [illegible] योरप्युपासनाविषयत्वम् । यो वाचं ब्रह्मेत्युपास्ते मनो ब्रह्मेत्युपास्त इति श्रुतेः । अघं तन्मूलमज्ञानं न हरंति । अत्र हेतुः । भेदकृतो भेदकारिणः । [illegible] भेदाः । ते तु मुहूर्तमात्रसेवयैवाघं घ्नंतीति ॥१२॥ अतः साधून्विहायान्यत्रात्मादिबुद्ध्या सज्जमानोऽतिमंद इत्याह । यस्येति । आत्मबुद्धिरहंमतिः [illegible] यस्य तस्मिन्कुणपे शरीरे स्वधीः स्वीया इति बुद्धिः । भौमे भूविकारे इज्यधीर्देवताबुद्धिः । यत्तस्य तीर्थबुद्धिस्तीर्थमिति बुद्धिः । अभिज्ञेषु [illegible] दारुणोऽत्यविवेकी । यद्वा गवां तृणादिभारवाहः खरो गर्दभ इति ॥ १३ ॥ दुरन्वयमननुरूपम् । भ्रमंत्यनवस्थिता बुद्धिर्येषां ते ॥ १४ ॥ [illegible] तदित्यूचुः । स्मयंतो हसंतः ॥ १५ ॥ अनन्वयं विवृण्वंत आहुर्द्वाभ्याम् । यन्माययेति । तत्त्वविदुत्तमा अपि वयम् । कास्सौ माया यया विमोहिता [illegible]

पुनंत्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥ नाग्निर्न सूर्यो न च चंद्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ॥ उपासिता भेदकृतो हरंत्यघं विप-श्चितो घ्नंति मुहूर्तसेवया ॥ १२ ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥ श्रीशुक उवाच ॥ निशम्येत्थं भगवतः कृष्णस्याकुंठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः ॥ १४ ॥ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसंग्रह इत्यूचुः स्मयंतस्तं जगद्गुरुम् ॥ १५ ॥ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडंबनम् ॥ १७ ॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥१८॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥१९॥ तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥

चेष्टितेन गूढः सन्नीशितव्यायत्यनीश्वरवदाचरति भवान् । नन्वहमीश्वरश्चेत्किमित्येवमाचरेयं तत्राह । अहो इति । भगवतस्तव विचेष्टितं विचित्रमलक्ष्यम् ॥ १६ ॥ [illegible] अनीहोऽक्रिय एव । आत्मना स्वरूपमात्रेण । बहुधेत्यत्र दृष्टांतः । यथा भौमैरिति ॥ भौमैर्घटादिविकारैरुपलक्षिता । [illegible] त्सृष्ट्यादिकर्ता वसुदेवपुत्रत्वादिति तत्राह । अथेति । विभूम्नः परिपूर्णस्य तवेदं जन्मादिचरितं विडंबनमनुकरणमात्रं न तु तत्त्वमिति ॥ १७ ॥ [illegible] सत्त्वात्मकं रूपं बिभर्षि । स्वलीलया आचारेण वेदपथं च बिभर्षि ॥ १८ ॥ अतएव ब्राह्मणेषु बहुमानमपि करोषीति सहेतुकमाह । ब्रह्मेति । [illegible] इत्यत आह । यत्रेति । तत्र ब्रह्मणि व्यक्तं कार्यमव्यक्तं कारणं ततःपरं सन्मात्रं ब्रह्म च तपआदिभिरुपलब्धं तद्ब्रह्म ॥ १९ ॥ [illegible] तव सद्धाम श्रेष्ठमुपलब्धिस्थानं सभाजयसि संपूजयसि ततस्मादेव कारणात्त्वं ब्रह्मण्यानामग्रणीर्मुख्यस्तत्प्रवर्तकः सत्कर्माचरणोत्यर्थः ॥ २० ॥ [illegible]

कृतार्था इत्याहुः अद्येति षड्भिः । सतां गत्या त्वया संगम्य संगं प्राप्य । यद्यस्मात्त्वं श्रेयसां परोऽवधिः ॥ २१ ॥ २२ ॥ एकस्मिन्नेव स्थाने आरामो येषां तेऽपि । कालं सृष्ट्यादिकारणम् । ईश्वरं नियंतारम् ॥ २३ ॥ एतत्सदृष्टांतमाहुः । यथेति । शयानः स्वप्नान्पश्यन् । गुणतत्त्वदृक् स्वप्नविषयेषु तत्त्वदृष्टिः । नाममात्रमिंद्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥ २४ ॥ एवं त्वा त्वां नाममात्रेषु स्वप्नादितुल्येषु विषयेष्विंद्रियैर्या ईहा प्रवृत्तिः सैव माया तया विभ्रमचित्तो न वेद । स्मृतेर्विवेकस्योपप्लवान्नाशात् ॥ २५ ॥ अघौघस्य मर्षं नाशं करोति यद्गंगाख्यं तीर्थं तस्यास्पदमाश्रयं तेंऽघ्रिं सुविपक्वयोगैरपि हृदि कृतं केवलं नतु दृष्टं तस्य तेंऽघ्रिं दद्दृशिम दृष्टवंतो वयं बहुभिः पुण्यैरतोऽस्मान् भक्ताननुगृहाण । भक्तान् कृत्वाऽनुग्रहं कुर्वित्यर्थः । ननु किं भक्त्या यथा पूर्वं तप एव तप्यतामिति नेत्याहुः । उत्सिक्ता उद्रिक्ता या भक्तिस्तयोपहत आशयलक्षणो जीवकोशो येषां त एव पूर्वे भवद्गतिमापुर्नान्य इति ॥२६॥

त्वया संगम्य सद्गत्या यदंतः श्रेयसां परः ॥ २१ ॥ नमस्तस्मै भगवते कृष्णायाकुंठमेधसे ॥ स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥ २२ ॥ न यं विदंत्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाछन्नमात्मानं कालमीश्वरम् ॥ २३ ॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रें- द्रियाभातं न वेद रहितं परम् ॥ २४ ॥ एवं त्वा नाममात्रेषु विषयेष्विंद्रियेहया ॥ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥ तस्याद्य ते दद्दृशिमांघ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गंतुं मुनयो दधिरे मनः ॥ २७ ॥ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयंत्रितः ॥ २८ ॥ वसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्त- दुच्यताम् ॥ २९ ॥ श्रीनारद उवाच ॥ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥ सन्नि- कर्षोऽत्र मर्त्यानामनादरणकारणम् ॥ गांगं हित्वा यथाऽन्यांभस्तत्रत्यो याति शुद्धये ॥ ३१ ॥ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिः स्वविभवैरुप- गूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुंदुभिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४ ॥

॥ २७ ॥ उपसंगृह्य चरणौ पाणिभ्यां धृत्वा । बभाषे इदमिति संधिरार्षः ॥ २८ ॥ सर्वे देवा येषु तेभ्यः । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसंतीति श्रुतेः । येन कर्मणा यथा कृतेन वा कर्मणा निर्हारो निरासो भवति तदुच्यताम् ॥ २९ ॥ श्रीकृष्णं हित्वाऽस्मान्पृच्छतीति विस्मितान्प्रत्याह । नातीति । बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥ तत्रत्यो गंगातीरवासी ॥ ३१ ॥ श्रीकृष्णोऽ- र्भकत्वमानोऽविद्याविजृंभित इत्याह । यस्येति द्वाभ्याम् । अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति । तदेवाह कालेन कर्कटिकाफलवत् । अस्य विश्वस्य लयोत्पत्त्यादिनाऽपि । स्वतश्च विद्युदादिवत् । अन्यस्माच्च मुद्गरादेर्घटादिवत् । गुणतो रूपाद्यंतरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥ तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरम् । किंच अद्वितीयं कृष्णमन्यः प्राकृत

कर्मणा निर्हारो निरासो भवति तदुच्यताम् ॥ २९ ॥ श्रीकृष्णं हित्वाऽस्मान्पृच्छतीति विस्मितान्प्रत्याह । नातीति । बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥ तत्रत्यो गंगातीरवासी ॥ ३१ ॥ श्रीकृष्णेऽर्भकत्वमानोऽविद्याविजृंभित इत्याह । यस्येति द्वाभ्याम् । अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति । तदेवाह कालेन कर्कटिकाफलवत् । अस्य विश्वस्य लयोत्पत्त्यादिनाऽपि । स्वतश्च विद्युदादिवत् । अन्यस्माच्च मुद्गरादेर्घटादिवत् । गुणतो रूपाद्यंतरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥ तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरम् । किंच अद्वितीयं कृष्णमन्यः प्राकृत उपगूढमाच्छन्नं मनुष्यं मन्येत । कैः । क्लेशकर्मादिभिः । तत्र क्लेशा रागादयश्च तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्त्वादीनां गुणानां पुनः प्रवाहश्च तैः प्राणादिभिश्च स्वैर्विभवैः स्वका-



यैः । अत्र दृष्टांतः । मेघहिमोपरागैरभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ चित्तस्योपशम उपशमहेतुः । योगो मोक्षोपायः । [illegible] अयत्नात् । धर्मश्चावश्यकः । अन्यथा विहिताकरणेन मालिन्यप्रसंगात् ॥ ३६ ॥ ननु न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्यादिना [illegible] इत्याशंक्यादावेव त्यागस्याशक्यत्वादित्याशयेनाह अयमिति सार्धचतुर्भिः । स्वस्त्ययनः स्वस्ति क्षेमस्तमयतेऽनेनेति तथा । श्रद्धया निष्कामतया [illegible] पंथाः ॥ ३७ ॥ स्वस्त्ययनमाह । वित्तैषणामिति । वित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत । गृहैर्गृहोचितभोगैर्दारसुतैषणां विसृजेत । [illegible] आत्मनः स्वर्गादिलोकैषणां कालेन क्षयानुसंधानेन विसृजेत । देव हे वसुदेव । यद्वा देवकालेन देवानामपि मृत्युहेतुभूतेनेत्यर्थः । [illegible] ॥ ३८ ॥ [illegible]

कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३५ ॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३६ ॥ अयं स्वस्त्ययनः पंथा द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३७ ॥ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३८ ॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥ ४० ॥ वसुदेव भवान्नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥ ४२ ॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ॥ ४४ ॥ तन्महिष्यश्च मुदिता निष्ककंठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकंठ्यो गंधर्व्यः संगीतं सहभर्तृकाः ॥ ४६ ॥ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥ तस्यर्त्विजो महाराज रत्नकौशेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बंधुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥

तथा च श्रुतिः । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यादि । तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य । तथाच मनुः । ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः इति ॥ ३९ ॥ निर्ऋणो निर्मुक्तऋणः । अशरणो भव गृहान्प्रव्रज ॥ ४० ॥ किंच [illegible] एवेत्याहुः । वसुदेवेति । भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिम् । प्रार्चः अर्चितवान् । यद्यस्मात् । वां युवयोः ॥ ४१–४४ ॥ आलिप्ताः कुंकुमादिभिः । [illegible] ॥ ४५ ॥ ४६ ॥ अक्तं नेत्रयोरंजनेन । अभ्यक्तं सर्वांगेषु नवनीतेन ॥ ४७ ॥ ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥ ४८ ॥ ४९ ॥ जीवेशौ सर्वजीवानामीशौ ॥ ५० ॥ [illegible]

आम्नातसर्वांगाः प्राकृता ज्योतिष्टोमदर्शपूर्णमासादयस्तेभ्यश्चोदनालिंगादिभिरतिदेशप्राप्तांगा वैकृताः सौरसत्रादयस्तैः सर्वैः । द्रव्यं पुरोडाशादि ज्ञानं मंत्रः क्रिया कर्म तेषामीश्वरम् ॥ ५१ ॥ ५२ ॥ सस्नुः स्नानं चक्रुः ॥ ५३ ॥ आश्वभ्यः शुनोऽभिव्याप्य । अन्नेन पूजयदपूजयत् ॥ ५४ ॥ बंध्वादिचारणांतान्पारिबर्हेण प्रीतिदानेन चापूजयत् । ते च सर्वे प्रययुः ॥ ५५ ॥ ५६ ॥ प्रयाणे केषांचिद्विशेषमाह धृतराष्ट्र इति द्वाभ्याम् । अनुजो विदुरः । पार्था युधिष्ठिरभीमार्जुनाः । यमौ नकुलसहदेवौ ॥ ५७ ॥ सौहृदेनाक्लिन्नानि चेतांसि येषां ते ॥ ५८ ॥ ५९ ॥ मनोरथो यज्ञविषयस्तमेव

ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥ अथर्त्विग्भ्योऽददात्काले यथाम्नातं सदक्षिणाः ॥ स्वलंकृतेभ्यो विप्रेभ्यो गोभूकन्या महाधनाः ॥ ५२ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥ ५३ ॥ स्नातोऽलंकारवासांसि बंदिभ्योऽदात्तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥ ५४ ॥ बंधून्सदारान्ससुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृंजयान् ॥ ५५ ॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसंतः प्रययुः क्रतुम् ॥ ५६ ॥ धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान् व्यासः सुहृत्संबंधिबांधवाः ॥ ५७ ॥ बंधून्परिष्वज्य यदून्सौहृदाऽऽक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेण स्वदेशाँश्चापरे जनाः ॥ ५८ ॥ नंदस्तु सह गोपालैर्बृहत्या पूजयाऽर्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बंधुवत्सलः ॥ ५९ ॥ वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नंदमाह करे स्पृशन् ॥ ६० ॥ वसुदेव उवाच ॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥ अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वाऽपि न निवर्तेत कर्हिचित् ॥ ६२ ॥ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि ॥ अधुना श्रीमदांधाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वजनानुत बंधून्वा न पश्यति ययाऽन्धदृक् ॥ ६४ ॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुंदुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ ६५ ॥ नंदस्तु सख्युः प्रियकृत्प्रेम्णा गोविंदरामयोः ॥ अद्य श्व इति मासाँस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥ ततः कामैः पूर्यमाणः सव्रजः सहबांधवः ॥ परार्ध्याभरणक्षौमनानाऽनर्घ्यपरिच्छदैः ॥ ६७ ॥ वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥ नंदो गोपाश्च गोप्यश्च गोविंदचरणांबुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥ बंधुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥

महार्णवम् ॥ ६० ॥ शूराणां बलेन योगिनां ज्ञानेनापीत्यर्थः ॥ ६१ ॥ तत्कुतस्तत्राह । अस्मास्विति । कृताज्ञेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिरप्रतिकल्पा अनुपमा मैत्रीयमर्पिता अफलाऽपि प्रत्युपकारशून्यापि कर्हिचिद्यद्यस्मान्न निवर्तेत तस्मादीश्वरकृतः पाशोऽयं भवतामिति गम्यत इत्यर्थः ॥ ६२ ॥ अफलत्वमेवाह । प्रागिति । हे भ्रातः ! अकल्पादसामर्थ्याद्वः कुशलं प्रियं न ह्याचराम न कृतवंतो वयम् । श्रीमदेनांधान्यक्षीणि येषां ते ॥ ६३ ॥ राज्यश्रीर्माभूत् । छांदसोऽडागमः ॥ ६४ ॥ ६५ ॥ अद्यश्व इति । प्रातर्निर्गमेऽद्यैवापराह्णे गम्यतामित्यपराह्णे निर्गमे श्वो गम्यतामिति

मेषां चेष्टैव न तु शक्तिः । यथा वायोः शक्त्या तृणादीनां चलनम् । यथा वा पुरुषस्य शक्त्या शराणां वेग इति ॥ ६ ॥ पारतंत्र्यमेव प्रपंचयति कांतिरिति पंचभिः । चंद्रस्य कांतिः । अग्नेस्तेजः । अर्कस्य प्रभा । ऋक्षविद्युतां सत्ता स्फुरणमात्रेण सत्त्वम् । अर्थतो वस्तुतो भवान् । तथा च श्रुतिः । न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति । स्मृतिश्च । यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति । भूमेर्वृत्तिः प्राणिनामाधारत्वेन वर्तनं गंधश्च भवान् । तवैव शक्तिरित्यर्थः ॥ ७ ॥ किंच हे देव! अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव । किंच वायोरोजःसहआदि तवैव शक्तिः ॥ ८ ॥ दिशामुपाधिकृताकाशप्रदेशाना-मवकाशो दिशश्च त्वम् । खं सामान्याकाशस्तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः । नादः पश्यंती ओंकारो मध्यमा वर्णश्चाकृतीनां पदार्थानां पृथक्करणमभिधानं यस्मात्तत्पदम् । वर्णपदाद्यात्मिका वैखरी च त्वमित्यर्थः ॥ ९ ॥ इंद्रियाणामिंद्रियं विषयप्रकाशनशक्तिर्देवाश्चेंद्रियाधिष्ठातारस्तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वम् । अवबोधोऽध्यवसायशक्तिः । अनुस्मृतिः प्रतिसंधा-नशक्तिः ॥ १० ॥ भूतानां कारणं भूतादिस्तामसोऽहंकारस्त्वमसि । इंद्रियाणां कारणं तैजसो राजसोऽहंकारस्त्वम् । विविधमधिदैवाध्यात्माधिभूतभेदेन विकल्प्यंत इति विकल्पा देवास्तेषां कारणं

ताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गंधोऽर्थतो भवान् ॥ ७ ॥ तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥
दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥ ९ ॥ इंद्रियं त्विंद्रियाणां त्वं देवाश्च तदनुग्रहः ॥
अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥ भूतानामसि भूतादिरिंद्रियाणां च तेजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥
नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा
ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥ तस्मान्न संत्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदाऽव्यावहारिकः ॥ १४ ॥
गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मामबोधेन संसरंतीह कर्मभिः ॥ १५ ॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे
प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ॥१७॥ युवां न नः

वैकारिकः सात्त्विकोऽहंकारश्च त्वम् । अनुशायिनां जीवानां संसारकारणं प्रधानं त्वम् ॥ ११ ॥ अपिच । नश्वरेषु नाशशीलेष्विहैतेषु भावेषु यदनश्वरमवशिष्यमाणं रूपं तत्त्वमसि । द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुंडलादिषु नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्रमनश्वरं यथा तद्वत् ॥ १२ ॥ ननु त्रिगुणात्मककार्यरूपोऽपि त्वमित्युक्तत्वात्कथमनश्वरत्वं तत्राह । सत्त्वमिति । तद्वृत्तयस्त-त्परिणामाश्च महदादयः । अद्धा साक्षात्त्वयि परे ब्रह्मणि कल्पिताः ॥ १३ ॥ तस्मान्न संतीति । नन्वसतां कथं प्रतीतिरत आह । यर्हीति । यदा विकल्पितास्तदैव प्रतीतिमात्रेण त्वयि संति त्वं चामीषु तदैव कारणतयाऽनुगतः । अन्यदा त्वव्यावहारिको विकल्पकस्त्वमेवावशिष्यस इत्यर्थः ॥ १४ ॥ एवंरूपत्वादज्ञाननिबंधनश्च संसार इत्याह । गुणप्रवाह इति । सूक्ष्मां निष्प्रपंचां गतिमबुधा अविद्वांसः । अबुद्ध्वेति वा पाठः । अतोऽबोधेन देहाभिमानेन कृतैः कर्मभिः संसरंतीति ॥ १५ ॥ एवं तयोस्तत्त्वं निरूप्य तदप्राप्त्या शोचति । यदृच्छयेति । नृतां मनुष्यताम् । सुकल्पां पटुतरेंद्रि-याम् ॥ १६ ॥ अहो किमिति प्रमत्तोऽसि त्वया बहुभिः पाशैर्निबद्धत्वादित्याह । असावहमिति । देहे अस्य देहस्यान्वयादिषु पुत्रादिषु च ममैवैत इति ॥ १७ ॥ अहो त्वत्पुत्रयोरावयोः किमिद-

त्पत्त्यादयो भवंति । तं त्वा त्वां गतिं शरणं गताऽस्मि ॥ ३१ ॥ आनिन्यथुरानीतवंतौ । पितृस्थानाद्यमसदनात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ दैत्यराड् बलिः । कथंभूतौ । विश्वस्यात्मभूतं देवम् । सान्वयः सपरिवारः ॥ ३५ ॥ सवृंदः सपरिजनः । कथंभूतौ । पादाववनिज्य यदंबु ययोरवनेजनोदकमाब्रह्म ब्रह्माणमभिव्याप्य जगत्पुनत्पवित्रयद्वर्तते तौ ॥ ३६ ॥ ३७ ॥ इंद्रसेनो बलिः । प्रेमार्द्रया धिया । बिभ्रद्धारयन् ॥ ३८ ॥ अनंताय शेषाय । बृहते फणैकदेशे विश्वधारणाद्बृहत्तस्मै कृष्णाय सदानंदरूपाय च । वेधसे जगद्विधात्रे । सांख्ययोगवितानायेत्यादिपदत्रयमैक्यविवक्षया ॥ ३९ ॥ योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्याह । दर्शनमिति । दुष्प्रापमपि युष्मत्कृपया केषांचिददुर्लभं सुलभमपि भवति तदाह । रजस्तमःस्वभावानामिति । नो दर्शनं प्राप्तौ

भवंति किल विश्वात्मँस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामये द्रष्टुमागतान् ॥ ३३ ॥ ऋषिरुवाच ॥ एवं मंचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथाऽऽत्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादाववनिज्य तज्जलं सवृंद आब्रह्म पुनद्यदंबु ह ॥ ३६ ॥ समर्हयामास सतौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ तांबूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥ स इंद्रसेनो भगवत्पदांबुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हानंदजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥ ३८ ॥ बलिरुवाच ॥ नमोऽनंताय बृहते नमः कृष्णाय वेधसे ॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥ दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥ विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२ ॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदंत्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविंदधिषणान्यगृहांधकूपात् ॥ निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्व-

॥ ४० ॥ अहो विद्विषो वयं सात्त्विकभक्तेभ्योऽपि सभाग्या इत्याह दैत्येत्यादित्रिभिः ॥ ४१ ॥ ४२ ॥ उद्बद्धवैरेण या भक्तिस्तया । केचनेति चैद्यादयः । कामतो भक्त्या गोप्यादयो यथा सन्निकृष्टास्त्वदात्मतां प्राप्ताः । तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४३ ॥ ननु सात्त्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रं तदाह । इदमित्थमिति । इदमिति स्वरूपतः इत्थमिति विशेषतश्च ॥ ४४ ॥ तं देवं यद्यपि वैरभावेन त्वत्प्राप्तिर्भवेत्तथाऽपि मां सात्त्विकं कुर्विति प्रार्थयते । तदिति । तत्तथा नः प्रसीद । यथा निरपेक्षैरात्मकामैरपि विमृग्यं युष्मत्पादारविंदं तदेव धिषणमाश्रयस्तस्मादन्यद्गृहं तदेवांधकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामंघ्रिमूलेषु स्वतएव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शांतः

दशमस्कंधे उत्तरार्धे टीकायां पंचाशीतितमोऽध्यायः ॥ ८५ ॥ षडशीतितमे दंभात्सुभद्रामर्जुनोऽहरत् ॥ गत्वा च मिथिलां कृष्णो नृप विप्रावनंदयत् ॥१॥ पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च ॥ जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥ २ ॥ देवक्या मृतपुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसंगात्पृच्छति । ब्रह्मन्निति ॥ १ ॥ २ ॥ कथमशृणोत् । दुर्योधनायेति । अपरे वसुदेवादयो न दास्यंतीति । तल्लिप्सुस्तस्या मातुलेय्या लिप्सुः । रामं वंचयितुं पूज्यतमं त्रिदंडिवेषं विधाय गत इत्याह । स यतिरिति ॥ ३ ॥ स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥ तमातिथ्येन निमंत्र्य गृहमानीय बलेन यच्छ्रद्धयोपहृतं परिविष्टं तद्भैक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥ भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ॥ ६ ॥ व्रीडितापांगी सव्रीडक-

न्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥ २ ॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदंडी द्वारकामगात् ॥ ३ ॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥ ४ ॥ एकदा गृहमानीय आतिथ्येन निमंत्र्य तम् ॥ श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥ साऽपि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ॥ हसंती व्रीडितापांगी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तां परं समनुध्यायन्नंतरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूराँश्चारुंधतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शांतः कविरलंपटः ॥ १३ ॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥१५॥ तथा तद्राष्ट्रपालोऽंग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥ तयोः प्रसन्नो भगवान् दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १७ ॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥

कटाक्षा । तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यया सा ॥ ७ ॥ अंतरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः । कामेन भ्रमच्चित्तं यस्य सः । शं रामादिसन्माननिमित्तं सुखम् ॥ ८ ॥ ९ ॥ आसमंताद्रुंधत आवरणं कुर्वतः ॥ १० ॥ ११ ॥ पारिबर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२ ॥ १३ ॥ अनीहयाऽनुद्यमेनैवागतं यदाहार्यं भोज्यं तेन निर्वर्तिता निजाः क्रिया येन सः ॥१४॥ यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यमुपनमति तं प्रत्यागच्छति ॥ १५ ॥ मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥ प्रभुरेव स्वयं विदेहान्देशान् प्रययौ ॥ १७ ॥ कृष्णो व्यासः । रामो भार्गवः । अहं शुकः ।

बंधुरपि श्रीर्भार्याऽपि अजः पुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छांत्यै संसारोपशमाय ॥ ३४ ॥ ३५ ॥ गृहान् गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन्परिश्रमयन् ॥ ३८ ॥ अवनिजै अवनिनिजै प्रक्षालि-
तवान् ॥ ३९ ॥ ४० ॥ फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः । सुरभ्या मृदा कस्तूरीप्रमुखया । सपर्यया पूजया । यथोपपन्नया ऽनायासेन गंधपन्नया ।
भूतानुपद्रवलब्धत्वात् । सत्त्वविवर्धनं यदंधोऽन्नं तेन च ॥ ४१ ॥ अस्य श्रीकृष्णस्यात्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः स मम कुतोऽन्वभू-
दिति । अनु इति विस्मये । यद्वा अ इति वितर्के । नु इति विस्मये ॥ ४२ ॥ उपस्थितः समीप उपविष्टः । भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः । श्रीकृष्णस्यांघ्रिमभिमृशति संमर्दय-
तीत्यंघ्र्यभिमर्शनः ॥ ४३ ॥ यर्हीदं प्रविष्टस्तदैव दर्शनं प्राप्त इति स एव सन्मात्रो नाद्यतनीभूतस्त्वमित्यर्थः । यद्वा नोऽस्मानद्यैव प्राप्त इति न किंतु तदैव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः
सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वम् । त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तम् ॥ ४४ ॥ मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टांततयाह । यथेति । आत्ममायया स्वाविद्यया । यद्वा आत्मनस्तव माययेति

स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृतांबुभिर्मृदा सुरभ्या तुलसीकुशांबुजैः ॥ आराधयामास यथोपपन्नया सप-
र्यया सत्त्वविवर्धनांधसा ॥ ४१ ॥ तर्कयामास कुतो ममान्वभूद्गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेत-
भूसुरैः ॥ ४२ ॥ सूपविष्टान्कृतातिथ्याञ्छ्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचांघ्र्यभिमर्शनः ॥ ४३ ॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं
प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनु-
विश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवंदताम् ॥ नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः
कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥
सकारणाकारणलिंगमीयुषे स्वमायया संवृत रुद्धदृष्टये ॥ ४८ ॥ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्ष-
गोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसँस्तमुवाच ह ॥ ५० ॥ श्रीभगवानु-

॥ ४५ ॥ किंच । शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि । मम तु लोचनगोचरस्त्वमहो भाग्यमिति भावः ॥ ४६ ॥ ननु सर्वेषां हृदि स्थितः कथं केषांचि-
देव हृदि भासि मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह । हृदिस्थोऽपीति । कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यो ऽव्यवहितोऽ-
प्युपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा अंतःकरणं येषां तेषामंति समीपे । अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥ एतदेव प्रपंचयन्नमस्यति । नमोऽस्त्विति । ते तुभ्यं नमोऽस्तु अध्यात्मविदां
निवृत्तदेहाद्यहंकाराणां परात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः । अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् । स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन
तस्मै । कुत एतत्तत्राह । सकारणं महदादिकार्यमकारणं प्रकृतिस्तदुभयलिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते । अत उभयनियंतुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः । नियं-
तृनियम्यत्वे कारणं वदन्नाह । हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियंत्रे तुभ्यं नमः । किंच रुद्धदृष्टये मायावित्वादेवान्येषां रुद्धा आवृता दृष्टिर्येन तस्मै । यद्वा स्वमायया स्वस्या संवृता अन्येषां रुद्धा

कथं चरंतीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति । सदसतः पर इति । कार्यकारणाभ्यां परस्मिन्नसंगे केनचिदपि संबंधाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदा-
र्थत्वायोगादपदार्थस्य च वाक्यर्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥ उत्तरमाह । बुद्धींद्रियेति । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्रार्थं प्रभुरीश्वरोऽसृजत् ।
मीयंत इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म । तत्प्रभृति कर्मकरणार्थमित्यर्थः । आत्मने लोकांतरगामिने । आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय कल्पनानिवृत्तये
मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्श-
यति । अयमभिप्रायः । सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्ति सर्वेश्वरं सर्वनियंतारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानंदं भगवंतं श्रुतयः प्रतिपादयंति । यः सर्वज्ञः
स सर्ववित् । यस्य ज्ञानमयं तपः । सर्वस्य वशी सर्वस्येशानः । यः पृथिव्यां तिष्ठन्पृथिव्या आंतरः । सोऽकामयत बहु स्याम् । स ऐक्षत तत्तेजोऽसृजत । सत्यं ज्ञानमनंतं ब्रह्मेत्याद्याः । तथाभूतेश्व-
रतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयंति । तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । तच्च प्रकारांतरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति । तथाहि । न
तावद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् । यथोक्तम् । आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ॥ आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणमिति । कुतः । भिन्नार्थत्वात् । न

मात्रार्थं च भावार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥ सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥
अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥
तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः
पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥ श्रीभगवानुवाच ॥ स्वायंभुवब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् । यथोक्तम् स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणमित्यादि । कुतः । विरुद्धार्थत्वेन तदयोगात् । न च जहत्स्वार्थत्वेन
संबंधिलक्षणया कुसुमितद्रुमा गंगेतिवत् । कुतः । एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे
पर्यवसानम् । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगान्निर्गुण एव पर्यवसानम् । तथा चात्रैवोपक्रमे स्वसृष्टमिदमापीयेत्यादिना विशिष्टमालंबनं वक्ष्यति । अंते च
श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधना इत्युपसंहरिष्यंति । उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्ट्याद्यवलंबनेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥ २ ॥ अत्र चानादिशिष्टपरं-
परागतत्वान्न संदेहो युक्त इत्याह । सैषेति । सैषा यथोक्तालंबना ब्राह्मी ब्रह्मपरा । श्रद्धया आदरेण वैतंडिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत्सः अकिंचनो निरस्तदेहाद्युपाधिः सन् परं पदं
प्राप्नुयादिति ॥ ३ ॥ एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपंचयितुमितिहासमवतारयति । अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम् । गाथामितिहासम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥
॥ ८ ॥ ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वंति तत्कर्म सत्रं प्रसिद्धम् । तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसते तद्ब्रह्मसत्रम् ॥ ९ ॥ अहो

मिधानं च धृतवंतः । न पृथग्विकारेष्वित्यर्थः । अत्र निदर्शनम् । कथमयथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवंत्यदत्तानि भवंति । अतो यथा
मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरंति । तथा यत्किमपि विकारजातं वदंतो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयंतीत्यर्थः ॥ द्रुहिणवह्निरवींद्रमुखामरा जगदिदं न भवेत्पृ-
थगुत्थितम् ॥ बहुमुखैरपि मंत्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥ १५ ॥ त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति । इति तवेति । त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भो
त्र्यधिपते ! त्रिगुणमायामृगीनर्तक ! सूरयो विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिंधुमवगाह्य निषेव्य तपांसि तपंतीति तपांसि पापानि दुःखानि वा
जहुस्त्यक्तवंतः । त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणाः । स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अंतःकरणधर्मा रागादयः
कालगुणा जरादयश्च यैस्ते तथा हे परम ! तवाजस्रसुखानुभवमखंडानंदानुभवं पदं स्वरूपं भजंति सेवंते तथाभूता दुःखानि त्यजंतीति । तद्यथा पुष्करपलाश आपो न श्लिष्यंत एवमेवंविदि पापं कर्म
न श्लिष्यते ॥ न कर्मणा लिप्यते पातकेन ॥ तत्सुकृतदुष्कृते विधुनुते ॥ एतꣳह वाव न तपति ॥ किमहꣳसाधु नाकरवम् ॥ किमहं पापमकरवमित्यादिश्रुतेरित्यर्थः ॥ सकलवेदगणेरितसद्गुणस्त्व-
मिति सर्वमनीषिजना रताः ॥ त्वयि सुभद्र गुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥ ३ ॥ १६ ॥ असुर्या नाम ते लोका अंधेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो
जनाः ॥ तथा । न चेदवेदीन्महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयंतीत्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निंदंति । दृतय इवेति । असुभृतो नरा यदि ते अनु-

**किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजंति ये पदमजस्रसुखानुभवम् ॥ १६ ॥ दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा महदहमादयोऽ-**
**ऽडमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः**

विधा अनुविदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् । तर्हि श्वसंति जीवंति सफलजीवना भवंति । इतरथा दृतय इव भस्त्रा इव । वृथाश्वासा इत्यर्थः । नन्वभक्तानामपि कामादिफलमस्त्येव
न कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह । महदहमादय इति । महानहंकारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः संतोऽडं
देहं समष्टिव्यष्टिरूपं सृष्टवंतः । तत्र च पंचापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन्यश्चेतयते स त्वं तदाह । पुरुषविध इति । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । ननु
चिदेकरसस्य कथं तत्तदाकारताऽत आह । अन्वयोऽत्रेति । अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः । अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसंगत्वं च कथं तत्राह । चरमोऽन्नमयादिषु य इति । अन्न-
मयादिषूपदिश्यमानेषु यश्चरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति संबंधः । ननु तयाप्यन्नमयादिष्वन्वितत्वेऽसंगत्वव्याहतिरेव तत्राह । सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । सदसतः
स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् । अवशेषमवशिष्यत इत्यवशेषमबाध्यम् । अथातएव ऋतं सत्यम् । तर्हि किमर्थं तेष्वन्वय उक्तः । शाखाचंद्रवच्छुद्धस्वरूपलक्षणार्थम् । तथाहि ।
स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिर इत्यादिना स्थूलसूक्ष्मक्रमेण पंचकोशानुपदिश्य तस्य पुरुषविधतामन्वयं पुरुषविध इति । पुनः पुनस्तदन्वितत्वेनालक्ष्य ब्रह्मपुच्छं प्रतिष्ठेति सर्वसाक्षि-
शुद्धस्वरूपनिरूपणमित्यनवद्यम् । नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः ॥ नरहरे न भजंति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः ॥ ४ ॥ १७ ॥ एवं तावत्सर्वात्मके परमेश्वरे
सर्वश्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वाऽभक्तनिंदया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालंबनमुपासनमुदरं ब्रह्मेति शार्कराक्षा उपासते । हृदयं ब्रह्मेत्यारुणयो ब्रह्म हैवैता इत

धर्मांस्तावदाह । कृत इति । तज्जनैस्तत्कालीनैर्जनैः दानमरागद्वेषतयाऽभयदानम् । तदेव प्रथमस्कंधे शौचशब्देनोक्तम् । विभोः संपूर्णस्य धर्मस्य ॥ १८ ॥ तदानींतनजनानाह । संतुष्टा इति । मैत्रा भूतमैत्रीयुक्ताः । श्रमणा आत्माभ्यासवंतः ॥ १९ ॥ अनृतेन सत्यं हिंसया दया असंतोषेण तपः विग्रहेण दानमिति यथासंख्यं योज्यम् ॥ २० ॥ ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥ हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः । धर्मस्यार्धं ह्रसति क्षीयते । अधर्मस्य लक्षणैश्चिह्नैः । पादैरित्यर्थः ॥ २२ ॥ यशस्विनः कीर्तिप्रियाः । क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौ धर्मपादानां तुर्यांशश्चतुर्थांशोऽवशिष्यते ॥ २४ ॥ शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः ॥ २५ ॥ युगानामेवंभूतवैषम्ये कारणमाह सत्त्वमिति पंचभिः ॥ २६ ॥ मनश्च बुद्धिश्चेंद्रियाणि च सत्त्वे यदा

मिति पादा विभोर्नृप ॥ १८ ॥ संतुष्टाः करुणा मैत्राः शांता दांतास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥ २० ॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥ तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥ यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः ॥ आढ्याः कुटुंबिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ॥ एधमानैः क्षीयमाणो ह्यंते सोऽपि विनंक्ष्यति ॥ २४ ॥ तस्मिँलुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥ सत्त्वं रजस्तम इति दृश्यंते पुरुषे गुणाः ॥ कालसंचोदितास्ते वै परिवर्तंत आत्मनि ॥ २६ ॥ प्रभवंति यदा सत्त्वे मनोबुद्धींद्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥ २७ ॥ यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥ २८ ॥ यदा लोभस्त्वसंतोषो मानो दंभोऽथ मत्सरः ॥ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥ यदा मायाऽनृतं तंद्रा निद्रा हिंसा विषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥ दस्यूत्कृष्टा जनपदा वेदाः पाखंडदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुंबिनः ॥ तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ॥ ३३ ॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥

प्रभवंत्यतिशयेन वर्तंते ॥ २७ ॥ यदा कर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ काम्यानां कर्मणां विषये यदा प्रीतिस्तत्तदा रजस्तमःप्रधानं द्वापरं जानीहीति पूर्वेणानुषंगः ॥ २९ ॥ विषादनं दुःखम् ॥ ३० ॥ कलिदोषान्प्रपंचयति यस्मादित्यादिना । यस्मात्कलेर्हेतोः क्षुद्रदृशो मंदमतयः । क्षुद्रभाग्या अल्पभाग्याः । महाशना बह्वाहाराः । वित्तहीना अपि कामिनश्च । स्वैरिण्यः पुंश्चल्यः । असतीरसत्यः ॥ ३१ ॥ दस्यव उत्कृष्टाः प्रचुरा येषु ते ॥३२॥ अव्रता विहिताचारशून्याः अशौचाः शौचशून्याश्च बटवो ब्रह्मचारिणो भविष्यंति । कुटुंबिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यंति न तु भिक्षां दास्यंति । तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यंति । न्यासिनो यतयोऽतीवार्थलोलुपा भविष्यंति ॥ ३३ ॥ पुनरपि स्त्रीणां स्वभावमाह ।

ह्रस्वकाया इति । कटुकभाषिण्योऽप्रियवादिन्यः चौर्यं च माया कपटमुरु च साहसं यासां ताः ॥ ३४ ॥ किंच । किराटा वणिजः । पणयिष्यंति क्रयादिव्यवहारं प्रवर्तयिष्यंति । किंच सर्वे जना अनापद्यपि जुगुप्सितां निंदितां वार्तां वृत्तिं साधु मंस्यंते ॥ ३५ ॥ सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यंति । पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरंपरायातं त्यक्ष्यंति । अपयस्विनीर्दुग्धदोहाः ॥ ३६ ॥ सौरतं सुरतनिमित्तं सौहृदं येषां ते । त एव ननांदरोऽत्र भार्याभगिन्यः श्याला भार्याभ्रातरस्तैः संवादो मंत्रालोचनं येषां ते । ननंद इति वा पाठः ॥ ३७ ॥ ३८ ॥ ३९ ॥ पिशाचसंदर्शाः पिशाचसदृशाः ॥ ४० ॥ काकिणिके विंशतिवराटिकामात्रेऽप्यर्थे विषयभूते । विगृह्य वैरं कृत्वा ॥ ४१ ॥ ४२ ॥ महांतमनर्थमाह द्वाभ्याम् । कलाविति । त्रिलोकनाथैरानतं नमस्कृतं

पणयिष्यंति वै क्षुद्राः किराटाः कूटकारिणः ॥ अनापद्यपि मंस्यंते वार्तां साधु जुगुप्सिताम् ॥ ३५ ॥ पतिं त्यक्ष्यंति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननांदृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥ शूद्राः प्रतिग्रहीष्यंति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यंत्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥ नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोऽन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाचसंदर्शा भविष्यंति कलौ प्रजाः ॥ ४० ॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ त्यक्ष्यंति च प्रियान्प्राणान्हनिष्यंति स्वकानपि ॥ ४१ ॥ न रक्षिष्यंति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान्क्षुद्राः शिश्नोदरंभराः ॥ ४२ ॥ कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपंकजम् ॥ प्रायेण मर्त्या भगवंतमच्युतं यक्ष्यंति पाखंडविभिन्नचेतसः ॥ ४३ ॥ यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशो गृणन्पुमान् ॥ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यंति न तं कलौ जनाः ॥ ४४ ॥ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥ श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ॥ नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥ यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हंति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यंतशुद्धिं लभतेऽतरात्मा यथा हृदिस्थे भगवत्यनंते ॥ ४८ ॥ तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ ४९ ॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यंग सर्वात्मा सर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्तनादेव कृष्ण-

पादपंकजं यस्य तम् । न यक्ष्यंति न पूजयिष्यंति । पाखंडैर्विभिन्नमन्यथाकृतं चेतो येषां ते ॥ ४३ ॥ विवशो गृणन्सन् । विमुक्ताः कर्मरूपा अर्गलाः प्रतिबंधा यस्य सः ॥ ४४ ॥ तदेवं कलिदोषान्प्रपंच्य प्रस्तुतं तन्निस्तारोपायमाह पुंसामिति षड्भिः । द्रव्यदेशात्मभिः संभवो येषां तान् । चित्तस्थश्चित्ते स्फुरितः ॥ ४५ ॥ ४६ ॥ अयमेवोपायो नान्य इति सदृष्टांतमाह । यथेति । धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हंति हरति न तु तोयादि । एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः ॥ ४७ ॥ एतदेव विवृणोति । विद्येति ।

विद्या देवतोपासना ॥ ४८ ॥ ४९ ॥ आत्मभावं स्वस्वरूपम् ॥ ५० ॥ इदानीं कलिं स्तौति द्वाभ्याम् । कलेर्दोषनिधे राजन्निति ॥ ५१ ॥ तत्सर्वं हरिकीर्तनादेव कलौ भवति नान्यस्मिन्युगे । उक्तं च । ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवमिति ॥ ५२ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ॥ तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ १ ॥ कलिदोषनिवर्तकं हरिनामसंकीर्तनादिकं स एव च कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम् । यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदिदानीं तृतीयस्कंधोक्तकालमानानुवादपूर्वकं निरूपयति । काल इति । स कालः परमाणुर्वै यो भुंक्ते परमाणुतामित्यादिना कालः कथितः । चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ॥ संख्यातानि सहस्राणि द्विगुणानि शतानि चेति युगमानं कथितम् ॥ १ ॥ तत्र कल्पमानमाह । चतुर्युगेति । यत्र चतुर्दश मनवः क्रमेण भवंति ॥ २ ॥ प्रलयस्तु चतुर्विधः । नैमित्तिकः प्राकृतिक आत्यंतिको नित्यश्चेति तत्र नैमित्तिकं प्रलयं मानसहितमाह तदंत इति द्वाभ्याम् । तावान् चतुर्युगसहस्रप्रमाणः । सैव ब्राह्मी रात्रिः ॥ ३ ॥ नैमित्तिकत्वं दर्शयति । यत्र यदा

स्य मुक्तबंधः परं व्रजेत् ॥ ५१ ॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ॥ द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे तृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीशुक उवाच ॥ कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥ २ ॥ तदंते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पंते प्रलयाय हि ॥ ३ ॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृट् ॥ शेतेऽनंतासनो विश्वमात्मसात्कृत्य चात्मभूः ॥ ४ ॥ द्विपरार्धे त्वतिक्रांते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पंते प्रलयाय वै ॥ ५ ॥ एष प्राकृतिको राजन्प्रलयो यत्र लीयते ॥ आंडकोशस्तु संघातो विघात उपसादिते ॥ ६ ॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योऽन्यं भक्षमाणाः क्षुधार्दिताः ॥ ७ ॥ क्षयं यास्यंति शनकैः कालेनोपद्रुताः प्रजाः ॥ सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ॥ ८ ॥ रश्मिभिः पिबते घोरैः सर्वं नैव विमुंचति ॥ ततः संवर्तको वह्निः संकर्षणमुखोत्थितः ॥ ९ ॥ दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ ॥ उपर्यधः समंताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥ दह्यमानं विभात्यंडं दग्धं गोमयपिंडवत् ॥ ततः प्रचंडपवनो वर्षाणामधिकं शतम् ॥११॥ परः सांवर्तको वाति धूम्रं खं रजसावृतम् ॥ ततो मेघकुलान्यंग चित्र-

विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते । आत्मभूर्ब्रह्मा च तस्मिन् शेते । तयोरभेदविवक्षया वा ब्रह्मण एवानंतासनत्वमुक्तम् । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥ ४ ॥ प्राकृतिकं प्रलयमाह द्वाभ्याम् । द्विपरार्धे तु ब्रह्मण आयुषि । सप्त प्रकृतयो महदहंकारपंचतन्मात्राणि ॥ ५ ॥ संघातो महदादिकार्यभूतः । प्रकृतीनां तत्कार्यब्रह्मांडस्य च प्रलयात्प्राकृतिक इत्यर्थः । विघाते विघातकारणे उपसादिते सति ॥ ६ ॥ तदेवाह । पर्जन्य इत्यादिना बुद्धींद्रियार्थरूपेणेत्यतः प्राक्तनेन ग्रंथेन ॥ ७ ॥ सामुद्रादिकं सर्वरसं रविः पिबते आकर्षति ॥ ८ ॥ ९ ॥ अनिलवेगोत्थो वायुवेगोद्भूतः । अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य सः । वा: रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । अनिलवेगो वै इति तु पाठः सुगमः । भूविवरान्पातालप्रदीन् शून्यात्रविणा दैहिकरसाकर्षणात्प्राणिरहितान् । शिखाभिर्ज्वालाभिः ॥ १० ॥ किंचिदधिकं वर्षाणां शतम् । सांवर्तकः प्रलयहेतुः परो वायुर्वाति तदा रज-

साऽऽवृतं खं धूम्रं भवति ॥ ११ ॥ १२ ॥ रभसस्वनैस्तीव्रगर्जितैः । ब्रह्मांडविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति ॥ १३ ॥ उदप्लवे उदकेनाप्लवे सति । प्रलयत्वायाभावाय ॥ १४ ॥ ॥ १५ ॥ १६ ॥ भूतादिस्तामसोऽहंकारः । गुणैर्वृत्तिभिः सह ॥ १७ ॥ अव्याकृतं प्रधानम् ॥ १८ ॥ तस्य तु लयो नास्तीत्याह । न तस्येति कालावयवैरहोरात्रादिभिः । गुणा भावविकाराः । परिणामो विपरिणामः । अव्यक्तमस्तित्वविकारशून्यम् । नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यम् । सर्वत्र हेतुः कारणमिति ॥ १९ ॥ किंच । वागादिगोचरस्य सविशेषस्य विकारा भवंतीदं तु न तथेत्याह न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः सन्निवेशो रचनाविशेषो नास्ति ॥ २० ॥ स्वप्नजाग्रत्स्वप्नजागरावस्थायुक्तम् । संसुप्तवदिंद्रियाभावात् । शून्यसादृश्ये हेतुः । अप्रतर्क्यं न पुनः शून्यमेवेत्याह । तदिति ॥ २१ ॥ उपसंहरति । लय इति । शक्तयः सत्त्वादयः ॥ २२ ॥ आत्यंतिकं लयमाह बुद्धींद्रियेति द्वादशभिः । आत्यंतिकलयो मोक्षः स च ब्रह्म-

वर्णान्यनेकशः ॥ १२ ॥ शतं वर्षाणि वर्षंति नदंति रभसस्वनैः ॥ तत एकोदकं विश्वं ब्रह्मांडविवरांतरम् ॥ १३ ॥ तदा भूमेर्गंधगुणं ग्रसंत्याप उदप्लवे ॥ ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥ अपां रसमथो तेजस्ता लीयंतेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥ लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १६ ॥ शब्दं ग्रसति भूतादिर्नभस्तमनु- लीयते ॥ तैजसश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः ॥ १७ ॥ महान् ग्रसत्यहंकारं गुणाः सत्त्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन् गुणान्कालेन चोदितम् ॥ १८ ॥ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ॥ न प्राणबुद्धींद्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनंति ॥ २१ ॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयंते विवशाः कालविद्रुताः ॥ २२ ॥ बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तु यत् ॥ २३ ॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राज-

ज्ञानेन सर्वप्रपंचलयात्मकः । न च प्रपंचस्यात्मवत्सत्यत्वे लयः संभवतीति ज्ञानरूपाद्ब्रह्मणः पृथग्भूतस्य तस्यासत्त्वमुपपादयति । बुद्धिश्चेंद्रियाणि चार्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक् । तत्र हेतुमाह । दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यंतवत्तदवस्तु । अत्रैवं प्रयोगः । विमतं सन्न भवति । दृश्यत्वात्कारणाव्यतिरेकादाद्यंतवत्त्वाच्च रज्जुसर्पादिवदिति ॥ २३ ॥ तत्राव्यतिरेकं दृष्टांतेन प्रपंचयति । दीप इति । दीपचक्षुरूपाणां तेजोविशेषाणां तेजसो यथा न व्यतिरेकस्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद्ब्रह्मणः पृथङ्न स्युर्ब्रह्म- कार्यत्वात् । नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्जेत तत्राह । अन्यतमादिति । कार्यादत्यंतव्यतिरिक्ताद्ब्रह्मणः प्रपंचाद्ब्रह्मणोऽस्ति व्यतिरेकः प्रपंचस्य तु ततो नास्ति व्यति- रेक इत्यर्थः ॥ २४ ॥ यदा तु बुद्धेरसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह । बुद्धेरिति । ननु विश्वतैजसप्राज्ञानामेता अवस्था न बुद्धेरित्याशंक्याह । मायामात्रमिति । इदं विश्वतैजस-

प्राज्ञरूपम् ॥ २५ ॥ आद्यंतवत्त्वादित्यस्य हेतोरसिद्धिमाशंक्य सावयवत्वेन साधयति । यथेति । अवयवीति । यत्सावयवं तदाद्यंतवद्घटादिवदित्यर्थः । अत उदयाप्ययादाद्यंतवत्त्वाद्विश्वं सन्न भवतीत्यर्थः । यद्वा पृथगेवागमापायित्वाद्विश्वं मिथ्या । ब्रह्म तु तदवधित्वात्सत्यमित्यनेन साध्यते । दृष्टांतस्तु पूर्वोक्त एव । यथा जलधरा व्योम्नीति दृष्टांतस्त्वागमापायि तदवधित्वमात्रे न तु मिथ्यात्वे ॥ २६ ॥ अन्यतमाद्दतादिति प्रतिज्ञातं कारणस्य सत्यत्वमुपपादयति । सत्यमिति । अवयवः कारणं प्रोक्तो वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिभिः । अत्र युक्तिमपि दर्शयति । विनेति । अंग हे राजन् ! हि यस्मादर्थेनावयविना पृथगेवावयवाः प्रतीयेरन् । यथा पटस्यावयवास्तंतवः पटात्पृथक्प्रतीयंते तद्वदिति ॥ २७ ॥ ननु कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत । सत्यम् । तदपि नातीव सत्यमित्याह । यदिति । सामान्यं कारणं विशेषः कार्यं तद्रूपेणान्योन्यापाश्रयात्परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्परापेक्षत्वादाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः । यद्वा तत्रैव हेत्वंतरमेतत् । यदुपलभ्येत स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् । अन्योऽन्यापाश्रयादितीदमपि हेत्वंतरं गुणगुणिविशेषणविशेष्यव्याप्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धित्वात् । तथाभूतस्वप्नवदिति निगमनम् । अतो यदाद्यंतवत्तत्सर्वमवस्त्विति ॥ २८ ॥ तदेवमनेकैर्हेतुभिः प्रपंचस्यासत्त्वं साधितम् । तत्र शंका । ननु

न्नानात्वं प्रत्यगात्मनि ॥ २५ ॥ यथा जलधरा व्योम्नि भवंति न भवंति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २६ ॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनाऽर्थेन प्रतीयेरन्पटस्येवांग तंतवः ॥ २७ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तु यत् ॥ २८ ॥ विकारः ख्यायमानोऽपि प्रत्यगात्मानमंतरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ २९ ॥ नहि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरिव ॥ ३० ॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥३१॥ यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबंधनः ॥ ३२ ॥ घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ॥ यदा ह्यहंकार उपाधिरात्मनो

प्रपंचस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राह । विकार इति । ख्यायमानः प्रकाशमानोऽपि विकारः प्रपंचः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति । तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्याच्चिद्रूपेणात्मना समः स्वप्रकाशो भवेत् । तथा च सति सोप्यात्मवत्स्यात् । एकरूपः स्यादित्यर्थः ॥ २९ ॥ कुत इत्यत आह । नहीति । ननु सत्यस्याप्यात्मनो जीवब्रह्मरूपं नानात्वमस्त्येव तत्राह । यद्येवं नानात्वं मन्यते तर्ह्यविद्वान् । कथं तर्हि तयोर्भेदव्यवहारः उपाधिकृत इत्याह । नानात्वमिति । तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदापरिच्छेदे दृष्टांतः । ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे । वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥ ३० ॥ ब्राह्मण एव प्रपंचव्यवहारालंबनत्वं दृष्टांतेन स्पष्टयति । यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुंडलादिरूपेण । लौकिकवैदिकैर्वचोभिः । जनैरहंकारोपहितैः ॥ ३१ ॥ नन्वहंकारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम् । तस्य स्वकारणभूतब्रह्मावरकत्वासंभवादावरणे वा स्वस्यापि प्रकाशासंभवादित्याशंक्य सदृष्टांतमाह । यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षंति । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्यादिवचनात्तस्मादर्कप्रभवः । अर्केणैव दर्शितः प्रकाशितश्च । तमःस्वरूपभूतार्कदर्शनप्रतिबन्धको भवति अहमहंकारो ब्रह्मगुणो ब्रह्मकार्यभूतस्तदीक्षितस्तेनैव

प्रकाशितश्चात्मनो जीवस्यात्मबंधनो ब्रह्मस्वरूपदर्शनप्रतिबंधको भवति ॥ ३२ ॥ अतएवाहंकारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टांतेनाह । घन इति । आत्मन उपाधिः । जिज्ञासया विचारेण । तर्हि तदाऽनुस्मरेत् । ब्रह्माहमिति पश्यतीत्यर्थः ॥ ३३ ॥ सोऽयमात्यंतिकः प्रलय इत्युपसंहरति । यदैवमिति । विवेकहेतिना ज्ञानशस्त्रेण । अहंकरणमेवात्मबंधनम् । अच्युतं परिपूर्णमात्मानमनु- भवतीति तथा ॥ ३४ ॥ नित्यप्रलयमाह । नित्यदेति ॥ ३५ ॥ कुत इत्यत आह । कालेति । परिणामिनां नदीप्रवाहप्रदीपज्वालादीनां या उच्चनीचावस्थास्ताः कालरूपस्रोतसो वेगेनाशु ह्रिय- माणस्य देहादेर्दृश्यमानास्ता एव नित्यदा जन्मप्रलयहेतवो भवंति । देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदास्पदत्वात्प्रदीपादिवदित्यनुमानम् ॥ ३६ ॥ ननु यदि प्रतिक्षणमवस्था भवंति तर्हि किं न दृश्यंतेऽतो हेतुरसिद्ध इत्याशंक्याह । अनाद्यंतवता कालेन जायमाना अवस्था नैव लक्ष्यंते । आकाशे गच्छतां ज्योतिषां चंद्रादीनां गमनावस्थाविशेषाय यथा नैव लक्ष्यंते तद्वत् । अतो यथा तेषां प्रदेशांतरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यंते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन मध्यवर्तिन्योऽवस्था कल्प्यंत इति न हेतुरसिद्ध इत्यर्थः ॥ ३७ ॥ उपसंहरति । नित्य इति ॥ ३८ ॥

जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥ ३३ ॥ यदैवमेतेन विवेकहेतिना माया मयाहंकरणात्मबंधनम् ॥ छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यंति- कमंगसंप्लवम् ॥ ३४ ॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ॥ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥ ३५ ॥ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३६ ॥ अनाद्यंतवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यंते वियति ज्योतिषामिव ॥ ३७ ॥ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यंतिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायण- स्याखिलसत्त्वधाम्नः ॥ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥ ४० ॥ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥ स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥ ४२ ॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्त्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १ ॥ त्वं तु राजन्मरिष्येति

पुराणार्थमुपसंहरति । एता इति । लीलाविषयाः कथा अजो ब्रह्माऽपि कार्त्स्न्येनाभिधातुं नेशः ॥ ३९ ॥ ननु यदि साकल्येनाभिधातुं न शक्यंते तर्हि किं तदभिधानेन तत्राह । संसारेति । विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्यात उत्तितीर्षोः पुंसो भगवतो या लीलास्तासां कथास्तासां रसस्तन्निषेवणमंतरेणान्यः प्लवस्तरणसाधनं न भवेत् । उपायांतरासंभवात्तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ४० ॥ श्रोतुरादरदार्ढ्याय संप्रदायप्रवृत्तिमाह पुराणसंहितामिति त्रिभिः ॥ ४१ ॥ स वै बादरायणः प्रीतः सन्मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥ ४२ ॥ असौ सूत इति पुरतः स्थितमंगुल्या निर्दिश्याह । नैमिषालये नैमिषारण्यस्थाने ॥ ४३ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ पंचमे तु समासेन परब्रह्मोपदेशतः ॥ राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति । अत्रेति । अयं भावः । जगतः कर्ता ब्रह्माऽपि यस्य प्रसादजः । प्रसादोऽत्र रजो-

वृत्तिर्हर्षः। ततो जातत्वात्परतंत्रः। सर्वसंहर्ता रुद्रश्च यस्य क्रोधसंभवो न तु स्वतंत्रः। स विश्वस्यात्मा नियंता भगवानत्रानुवर्ण्यते। अत एवंभूतं भगवंतं शृण्वतः कुतोऽन्यस्माद्भयशंकेति ॥ १ ॥ त्वं पुनः कृतार्थ एवेत्यनुस्मारयति। त्वं त्विति। पशुबुद्धिमविवेकम्। यस्मान्न नंक्ष्यसि। कुत इत्यत आह। न जात इति। यथा देहः प्रागभूत एवाद्य जातो नंक्ष्यति। न चैवं त्वं पूर्वं नाभूर्न चाद्य जातोऽस्यतो न नंक्ष्यसि ॥ २ ॥ ननु बीजादंकुरवत्त्वस्मात्पुत्ररूपेणापि स्वयमेव भवति। यथाऽऽह श्रुतिः। अंगादंगात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति। ततः पुनरंकुराद्बीजमिव पौत्रादिरूपेणापि स्वयमेव भवति। पिता पुत्रेण पितृमान्योनियोनाविति श्रुतेः। अतस्तेषु नश्यत्सु कथं न नंक्ष्यामीति चेत्तत्राह। न भविष्यसीति। भूत्वा पुत्रपौत्रादिरूपवान्बीजांकुरवन्न भविष्यसि यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात्। देहाद्देहो जायते नात्मेति भावः ॥ ३ ॥ जन्मादीनां देहधर्मत्वं दृष्टांतेन प्रपंचयति। स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि। यस्माद्देहस्य पंचत्वादिकं पश्यति ततस्तद्वदेवात्मन इदं भ्रममात्रम्। वस्तुतश्चात्माऽजोऽमरश्चेत्यर्थः। तदुक्तम्। आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षण इत्यादि ॥ ४ ॥ यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टांतमाह। घट इति। यथा पुरा घटोपाधेः

पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नंक्ष्यसि ॥२॥ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ३ ॥ स्वप्ने यथा शिरश्छेदं पंचत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥ ४ ॥ घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः ॥ ५ ॥ मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः ॥ तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥ ६ ॥ स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥ ततो दीपस्य दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥ ७ ॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ आकाश इव चाधारो ध्रुवोऽनंतोपमस्ततः ॥ ८ ॥ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिंतया ॥ ९ ॥ चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यंति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥ दशंतं तक्षकं पादे लेलिहानं विषा-

पूर्वमिव पुनर्घटे भिन्ने तदंतर्वर्त्यवकाश आकाश एव स्याद्यथा। एवं देहे मृते तत्त्वज्ञानेन लीने सति ॥ ५ ॥ ज्ञानेन लयं भावयितुं मायाकृतमात्मनो देहाद्युपाधिसंबंधप्रकारमाह। मन इति। मन आत्मनो देहादीन्सृजति। तच्च मनो माया सृजति। ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्न स्वतः ॥ ६ ॥ यस्मादुपाधिनिबंधनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं गच्छतीत्येतदेव सदृष्टांतमाह सार्धेन। स्नेहेति। दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः। तत्र तैलस्थानीयं कर्म। तदधिष्ठानस्थानीयं मनः। वर्तिस्थानीयो देहः। अग्निसंयोगस्थानीयश्चैतन्याध्यासः। दीपस्थानीयः संसार इति योज्यम्। देहकृतो देहनिबंधनः। यद्वा देहकृतो मनसो न त्वात्मनः ॥ ७ ॥ अतो दीपवत्संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह। नेति न तु तत्र प्रतीयमान आत्मा। कुत इत्यत आह। य इति। व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः। यतः स्वयंज्योतिः। परत्वं प्रपंचयति। आकाश इवेति। आधारो देहादेः प्रपंचस्य। ध्रुवो निर्विकारः। नास्त्यंत उपमा च यस्य सोऽनंतोपमः। ततो विभुः ॥ ८ ॥ अतस्त्वमेवं चिंतयेत्याह। एवमिति। आत्मस्थं देहाद्युपाधिस्थितम्। आमृश विचारय। अनुमानगर्भिण्या द्रष्टृदृश्यान्वयव्यतिरेकयुक्त्या ॥ ९ ॥

एवं च सति त्वां तक्षको दहेदित्याह । चोदित इति । तत्र हेतवः । मृत्यव इति । मृत्युहेतवः ॥ १० ॥ विमर्शप्रकारं दर्शयंस्तक्षकादर्शनं दर्शयति द्वाभ्याम् । योऽहं स ब्रह्मैव यद्ब्रह्म तदहमेवेति समीक्षन् । तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः । निष्कले निरुपाधौ । आत्मनि ब्रह्मणि ॥ ११ ॥ विषयुक्तैराननैर्दशंतं प्रसंतं तक्षकम् । लेलिहानं सर्पम् । यद्वा लेलिहानं जिह्वाभिरोष्ठप्रांतान्मनिष्पेषमास्वादयंतम् । आत्मनः पृथक् ॥ १२ ॥ हरेश्चेष्टामात्मा त्वं यत्पृष्टवांस्तदेतत्ते कथितम् । शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति । किमिति ॥ १३ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां पंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे परीक्षितो मोक्षः सर्पहोमादितन्मुतान् ॥ वेदशास्त्रविभागोक्तौ त्रिवेदि-व्यासवर्णनम् ॥ १ ॥ एतत्पुराणं निशम्य निखिलात्मा हरिस्तं पश्यति निखिलं वाऽत्मनि पश्यतीति तथा तेन अतः समेन । नतेनावनतेन मूर्ध्ना तत्पादतलमुपसृत्य तत्पादौ शिरसि निधायेत्यर्थः

नैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥ एतत्ते कथितं तात यथाऽऽत्मा पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे ब्रह्मोपदेशो नाम पंचमोऽध्यायः ॥ ५ ॥ सूत उवाच ॥ एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादपद्ममुपसृत्य नतेन मूर्ध्ना बद्धांजलिस्तमिदमाह स विष्णुरातः ॥ १ ॥ राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥ पुराणसंहितामेतामश्रौष्म भवतो वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥ ५ ॥ अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥ सूत उवाच ॥ इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ॥ समाधाय परं दध्यावस्पंदासुर्यथा तरुः ॥ ९ ॥ प्राक्कूले बर्हिष्यासीनो गंगाकूल उदङ्मुखः ॥ ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः ॥ १० ॥ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ॥ हंतुकामो

॥ १ ॥ सिद्धः कृतार्थोऽस्मि । यतोऽनुगृहीतोऽस्मि । अनुग्रहमेवाह । यद्यस्माच्छ्रावितः चशब्दात्प्राप्तिसाधनं च श्रावितम् ॥ २ ॥ करुणात्मतामभिनंदति द्वाभ्याम् । नात्यद्भुतमिति ॥ ३ ॥ अश्रौष्म श्रुतवंतः । भवतः सकाशात् ॥ ४ ॥ सिद्धोऽस्मीत्युक्तं तदेवाविष्करोति । भगवन्निति । यतस्त्वया दर्शितं ब्रह्म प्रविष्टः । कथंभूतम् । अभयम् । यतो निर्वाणं कैवल्यरूपम् ॥ ५ ॥ किं भूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोऽहं न किंचिच्छ्रोतुमिच्छामि केवलमनुज्ञां देहीत्याह । अनुजानीहीति । वाचमित्युपलक्षणं सर्वेंद्रियाणाम् । वाचं नियम्य किं करिष्यसि तदाह । मुक्ताः कामाशयास्तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्यासून्विसृजामि ॥ ६ ॥ ननु किं प्राणत्यागेन किंचित्कालं ज्ञाननिष्ठो भवेति चेत्तत्राह । अज्ञानं चेति । चकारात्तत्संस्कारश्च । तच्च त्वत्कृपयैवेत्याह । भवेति ॥ ७ ॥ ८ ॥ आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक्प्रकाशे समाधाय परमात्मानं दध्यौ । अस्पंदासुर्लीनप्राणः । यथा तरुः स्थाणुः ॥ ९ ॥ तमेव विशिनष्टि । प्राक्कूले प्रागग्रे । बर्हिषि

दर्भे ॥ १० ॥ तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति तक्षक इति त्रिभिः । हे विप्राः ॥ ११ ॥ तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छंतम् । तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत् ॥ १२ ॥ तच्च पुत्रकृत्यमिव जातमित्याह । ब्रह्मभूतस्येति ॥ १३ ॥ तत्र क्षणं सर्वेषां दुःखं च ततः परमुत्सवं चाह द्वाभ्याम् । हाहाकार इति ॥ १४ ॥ १५ ॥ प्रासंगिकमाह जनमेजय इत्यादि । सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथावदाजुहाव जुहावेति वा । सर्वसर्पाह्वाने कारणमाह । संक्रुद्ध इति ॥ १६ ॥ १७ ॥ १८ ॥ कस्मात्तक्षको न दह्यतेत्युक्ताः संतो द्विजा ऊचुः । तमिति । तेनेंद्रेण । असौ सर्पः ॥ १९ ॥ ऋत्विजः प्रत्याह ।

नृपं गच्छन्ददर्श पथि कश्यपम् ॥ ११ ॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥ ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ॥ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन्सर्वे देवासुरनरादयः ॥ १४ ॥ देवदुंदुभयो नेदुर्गंधर्वाप्सरसो जगुः ॥ ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥ जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ यथा जुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥ १६ ॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥ अपश्यंस्तक्षकं तत्र राजा पारिक्षितो द्विजान् ॥ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥ तं गोपायति राजेंद्र शक्रः शरणमागतम् ॥ तेन संस्तंभितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेंद्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥ तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेंद्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेंद्रेण मरुत्वता ॥ २१ ॥ इति ब्रह्मोदिताक्षेपैः स्थानादिंद्रः प्रचालितः ॥ बभूव संभ्रांतमतिः सविमानः सतक्षकः ॥ २२ ॥ तं पतंतं विमानेन सह तक्षकमंबरात् ॥ विलोक्यांगिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥ नैष त्वया मनुष्येंद्र वधमर्हति सर्पराट् ॥ अनेन पीतममृतमथवा अजरामरः ॥ २४ ॥ जीवितं मरणं जंतोर्गतिः स्वेनैव कर्मणा ॥ राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छते जंतुर्भुंक्त आरब्धकर्म तत् ॥ २६ ॥ तस्मात्सत्रमिदं राजन्संस्थीयेताभिचारिकम् ॥ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥ सूत उवाच ॥ इत्युक्तः स तथेत्याह

सहेंद्र इंद्रसहितः किमिति न पात्यते ॥ २० ॥ तद्राज्ञो वचः श्रुत्वा आजुहुवुः । साक्षेपमाह्वानं दर्शयति । तक्षकेति । इहाग्नावाशु पतस्व । मरुत्वता मरुद्गणवतेंद्रेण सह ॥ २१ ॥ ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः ॥ २२ ॥ तं तक्षकम् । अंगिरसः पुत्रो बृहस्पतिः प्राह ॥ २३ ॥ २४ ॥ भवतु नामाजरामरस्तथाऽपि पितृमारकं धक्ष्यामीति चेत्तत्राह । जीवितमिति । गतिः परलोकः । अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शंकनीयमित्यर्थः ॥ २५ ॥ कथमन्यः सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राह । सर्पादिना जंतुः पंचत्वं मृत्युमृच्छति प्राप्नोतीति यत्तदारब्धं कर्मैव भुंक्ते । स्वकर्मप्रयुक्ता एव सर्पादयो न स्वतंत्रा इति भावः ॥ २६ ॥ संस्थीयेत समाप्यताम् । अभिचारिकं हिंसाफलम् । दिष्टं प्राचीनं कर्म । अतः सर्पादष्टप्रयुक्तस्य तवा-

प्ययं नापराध इति भावः ॥ २७ ॥ वाक्पतिं बृहस्पतिम् ॥ २८ ॥ ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणामित्यादि तत्राह । सैषेति । तस्या महत्त्वं दर्शयति । अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रतर्क्येत्यर्थः । काऽसावित्यत आह । यथाऽस्य विष्णोरेवात्मभूता आत्मांशभूताः प्राणिनो गुणवृत्तिभिः क्रोधादिभिः सह भूतेषु देहेषु मुह्यंति । बाध्यबाधकतां व्रजंतीत्यर्थः । ननु श्रवणादिना बाधितया तया कुतो मोहः स्यात्तत्राह । अबाध्यया बाधितुमशक्यया ॥ २९ ॥ कथं तर्हि माया तत्कार्यनिवृत्तिरित्याशंक्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात्सर्वानर्थनिवृत्तिरिति शास्त्रार्थमुपसंहरति न यत्रेति पंचभिः । दंभीति माया । कपटवानयं पुमानित्येवंभूतायां बुद्धावसकृदुल्लिख्यमाना या मायेत्यर्थः । साऽऽत्मवादे क्रियमाणे आत्मवादिभिर्यत्राभया न विराजिता न प्रकाशिता किंतु भीतेव स्वकार्यं मोहादिकमकुर्वती कथंचिद्वर्तत इति प्रतिपादितेत्यर्थः । तदुक्तम् । तस्मै नमो भगवते वासुदेवाय धीमहि ॥ यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुम् ॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ॥ विमोहिता विकत्थंते ममाहमिति दुर्धिय इति । किंच यद्यस्मिंस्तदाश्रयो मायाश्रयो विविधो विवादोऽपि नास्ति । विशेषविषयत्वाद्विवादानां तस्य च विशेषातीतत्वादिति भावः । संकल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र नास्ति । संकल्पविकल्पानामपि

**महर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यथा ॥ मुह्यंत्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥ २९ ॥ न यत्र दंभीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः ॥ न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत् ॥ ३० ॥ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् ॥ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः ॥ ३१ ॥ परं पदं वैष्णवमामनंति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ३२ ॥ त एतदधिगच्छंति विष्णोर्यत्परमं पदम् ॥ अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥ नमो भगवते तस्मै कृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥ शौनक उवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥ ३६ ॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन्ब्रह्मणः**

विशेषविषयत्वात् ॥ ३० ॥ किंच । सृज्यं कर्म सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयःफलमपि । अतस्त्रिभिः सृज्यस्रष्टृफलैरन्वितो जीवश्चाहंकारात्मको यत्र नास्ति । अतएवोत्सादितौ निरस्तौ बाध्यबाधकौ यस्मिंस्तदेतत्स्वयमात्मस्वरूपमित्यर्थः । तत्तस्मिन्नूर्मीनहंकारादीन्निषिध्य विरमेत् । विशेषेण क्रीडेदित्यर्थः ॥ ३१ ॥ यतस्तद्वैष्णवं पदमामनंतीत्याह । परमिति । यदेतत्तदेव परं वैष्णवं पदं स्वरूपमामनंति । के । अतत् आत्मव्यतिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवः ! यतोऽनन्यसौहृदाः नास्त्यन्यस्मिन्सौहृदं येषां ते । कुतः दौरात्म्यं देहाद्यहंभावं विसृज्य । देहेऽहंकाराभावादन्यत्र सौहृदं नास्त्यतस्त्यक्तुमिच्छत्र इत्यर्थः । कथम् । नेति नेतीत्येवम् । अत्र विद्वदनुभवमपि प्रमाणयति । हृदोपगुह्य ध्यानादिना ततः समाहितैरवसितं निश्चितम् । यद्वा अवसितमवबद्धमात्मतया गृहीतमित्यर्थः ॥ ३२ ॥ एतत्प्राप्तावधिकारिणो दर्शयति । त एतदिति । देहजमहमिति गेहजं ममेति ॥ ३३ ॥ तत्र प्राप्त्युपायमाह । अतिवादानिति ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुं प्रणमति । नम इति । कृष्णाय व्यासाय । अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुर्वेदविभागमपि प्रसंगात्पृथक् पृच्छति । पैलादिभिरिति । हे सौम्य ॥ ३६ ॥ तत्र प्रथमं वेदाविर्भावप्रकारमाह समाहितात्मन इत्यष्टभिः । ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् । यः कर्णपुटपिधानेन श्रोत्र-

वृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ॥ ३७ ॥ प्रसंगान्नादोपासकानां मोक्षफलमाह । यस्य नादस्योपासनयाऽऽत्मनो मलं धूत्वाऽपोह्य । कथंभूतं मलं तमाह । द्रव्यमधिभूतं क्रियाऽध्यात्मं कारकमधिदैवं एवं त्रिधाभूता आख्या यस्येति तथा तम् ॥ ३८ ॥ त्रिवृत् त्रिमात्रः कंठोष्ठादिभिरुच्चार्यमाणस्योंकारस्याक्षरसमाम्नायांतर्भावात्सूक्ष्मतया तं विशिनष्टि । अव्यक्तः प्रभवो यस्य सः । तदेवाह । स्वराट् स्वत एव हृदि प्रकाशमानः । तमेव कार्येण लक्षयति । यत्तदिति । नपुंसकत्वं लिंगशब्दविशेषणत्वात् । लिंगं गमकम् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह । शृणोतीति । इमं स्फोटमव्यक्तमोंकारम् । ननु जीव एव तं शृणोतु नेत्याह । सुप्तश्रोत्रे कर्णपिधानादिनाऽवृत्तिकेऽपि श्रोत्रे सति । जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता । तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः । ईश्वरस्तु नैवम् । यतः शून्यदृक् । शून्येऽपींद्रियवर्गे दृक् ज्ञानं यस्य । तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता लीनेंद्रियत्वात् । अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैव तद्वत् । कोऽसावोंकारस्तं विशिनष्टि सार्धेन । येन वाग्बृहती व्यज्यते । यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिरभिव्यक्तिः ॥ ४० ॥ किंच

परमेष्ठिनः ॥ हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥ यदुपासनया ब्रह्मन्योगिनो मलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥ ३८ ॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ॥ यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ४० ॥ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥ स सर्वमंत्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ॥ धार्यंते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥ ४२ ॥ ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥ ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतनोदिताः ॥ ४७ ॥ अस्मिन्नप्यंतरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो

स्वधाम्नः स्वस्याश्रयः कारणं यद्ब्रह्म तस्य किंच परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह । स इति । सर्वमंत्राणामुपनिषद्रहस्यं सूक्ष्मरूपमित्यर्थः । तत्र हेतुः । वेदानां बीजं कारणम् । बीजत्वेऽप्यविकारितामाह । सनातनं सदैकरूपं । तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ इदानीं ततः सर्वप्रपंचोत्पत्तिप्रकारमाह । तस्य हीति । त्रयस्त्रिसंख्यायुक्ता भावा यैरकारोकारमकारैर्धार्यंते तत्कारणत्वात् । तानेवाह । गुणाः सत्त्वादयः । नामानि ऋग्यजुःसामानि । अर्था भूर्भुवःस्वर्लोकाः । वृत्तयो जाग्रदाद्याः ॥ ४२ ॥ ततस्तेभ्यो वर्णेभ्यः अक्षरगणं समाम्नायं समाहारम् । तमेवाह । अंतस्था यरलवाः । ऊष्माणः शषसहाः । स्वरा अकाराद्याः । स्पर्शाः कादयः । ह्रस्वदीर्घाश्च आदिशब्दाज्जिह्वामूलीयादयः त एव लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ विभुश्चतुर्मुखस्वरूपो भगवान् असृजदिति पूर्वस्य वानुषंगः । चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं होत्राध्वर्य्वादिकं कर्म चातुर्होत्रं तद्विवक्षया ॥ ४४ ॥ पुत्रान्मरीच्यादीन् तान्वेदान् ब्रह्मकोविदान्वेदोच्चारणादिनिपुणान् ॥ ४५ ॥ एवं चतुर्युगेषु प्राप्ताः । द्वापरादौ द्वापरमादिर्यस्य तदंत्यांशलक्षणस्य कालस्य तस्मिन् । द्वापरांते वेदविभागप्रसिद्धेः । शंतनुसमकालं व्यासावतारप्रसिद्धेश्च ।

व्यस्ता विभक्ताः ॥ ४६ ॥ तत्र हेतुः । क्षीणायुषो जनान् । तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशंक्याह । हृदिस्थेति ॥ ४७ ॥ एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वंतरे विशेषतो निरूपयितुमाह । अस्मिन्नपीति ॥ ४८ ॥ अंशो माया तस्या अंशः सत्त्वं तस्य कलयांऽशेनावतीर्णः सन् ॥ ४९ ॥ चातुर्विध्यमेवाह । ऋगिति । ऋगादिमंत्राणां राशीन्वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्य यथाऽनेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियंते तद्वदुद्धृत्य तैर्मंत्रैश्चतस्र ऋगादिसंहिताश्चक्रे ॥ ५० ॥ तासां संहितानां मध्ये एकैकाम् ॥ ५१ ॥ ऋक्समुदायरूपत्वाद्बह्वृचाख्याम् । नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्यम् ॥ ५२ ॥ छंदःसु गीयमानत्वाच्छंदोगाख्यां संहिताम् ॥ ५३ ॥ तत्र ऋग्वेदशाखाविभागमाह । पैल इति । स्वसंहितां द्विधा विभज्य इंद्रप्रमितये बाष्कलाय च ऊचे । स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह । हे भार्गव ! इंद्रप्रमितिरपि स्वां संहितां स्वसुतं मांडूकेयमध्यापयामास । तस्य मांडूकेयस्य शिष्यो देवमित्रः ॥ ५४ ॥ ५५ ॥ ५६ ॥ तत्सुतो मांडूकेयसुतः । शाकल्यो वात्स्यादिषु पंचस्वधात् । तानध्यापयामासेत्यर्थः ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः । प्रतिशाखाभ्य उक्तसर्वशाखाभ्यः । बालायन्यादयस्तामादधुरधीतवंतः ॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह बह्वृचा इति । एतच्छंदसामेतेषां छंदसाम् ॥ ६० ॥ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह वैशंपायनशिष्या इत्यादिना । चरकनामनिरुक्तिमाह । यच्चेरुरिति । यद्यस्माद्ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं तच्चरणाच्चरका इत्यर्थः ॥ ६१ ॥ तच्छिष्यो वैशंपायनशिष्यः । अल्पसाराणामेतेषां चरितेन कियत् । सुदुश्चर-

महाभाग वेदं चक्रे चतुर्विधम् ॥ ४९ ॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मंत्रैर्मणिगणा इव ॥ ५० ॥ तासां स चतुरः शिष्यानुपाहूय महामतिः ॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ ५१ ॥ पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय निगमाख्यं यजुर्गणम् ॥ ५२ ॥ साम्नां जैमिनये प्राह तथा छंदोगसंहिताम् ॥ अथर्वांगिरसीं नाम स्वशिष्याय सुमंतवे ॥ ५३ ॥ पैलः स्वां संहितामूच इंद्रप्रमितये मुनिः ॥ बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥ ५४ ॥ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ॥ पराशरायाग्निमित्रे इंद्रप्रमितिरात्मवान् ॥ ५५ ॥ अध्यापयत्संहितां स्वां मांडूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥ शाकल्यस्तत्सुतः स्वां तु पंचधा व्यस्य संहिताम् ॥ वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥ जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ ५८ ॥ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्यः काशारश्चैव तां दधुः ॥ ५९ ॥ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥ वैशंपायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांऽहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥ याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥ ६२ ॥ इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ॥ विप्रावमंत्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥ देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ॥ ततो

महं चरिष्यामीति ॥ ६२ ॥ विप्राणामवमंत्राऽवज्ञाकर्त्रा । मत्तोऽधीतमाशु त्यजेति ॥ ६३ ॥ देवरातसुतो याज्ञवल्क्यः ॥ ६४ ॥ छर्दितस्यादानं विप्ररूपेणानुचितमिति तित्तिराः पक्षिविशेषा भूत्वा-
ऽऽददुः ततश्च तैत्तिरीया इति प्रसिद्धाः । सुपेशला अतिरम्याः । बहुवचनमवांतरभेदविवक्षया ॥ ६५ ॥ काण्वमाध्यंदिनादिशाखाप्रसंगमाह याज्ञवल्क्य इत्यादिना । गुरौ वैशंपायनस्य व्यासेन विभ-
ज्यानुक्तत्वादविद्यमानान्यधिकानि गवेषयन्मृगयन्सूपतस्थे सम्यक् तुष्टाव । ईश्वरमृगादिवेदानाम् । तथाच श्रुतिः । ऋग्भिः पूर्वाह्णे दिवि देव ईयते ॥ यजुर्वेदे तिष्ठति मध्ये अह्नः ॥ सामवेदेनास्त-
मये महीयते ॥ वेदैरशून्यैस्त्रिभिरेति सूर्य इति ॥ ६६ ॥ नमो भगवते तुभ्यमादित्याय । यो भगवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति । अखिलजगतामात्मस्वरूपेणांतर्हृदयेषु
कालस्वरूपेण च बहिरपि वर्तमान इति । क्षणलवादयो येऽवयवास्तैरुपचिताः संवत्सरास्तेषां गणेन प्रत्यब्दमपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम् । अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता

गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥ ६४ ॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥ ६५ ॥
याज्ञवल्क्यस्ततो ब्रह्मंश्छंदांस्यधिगवेषयन् ॥ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ ॐ नमो भगवते आदित्याया-
खिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भग-
वानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥ यदु ह वाव विबुधर्षभ सवितरदस्त-
पत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमंडलम् ॥ ६८ ॥ य इह वाव स्थिर-
चरनिकराणां निजनिकेतनानां मनइंद्रियासुगणाननात्मनः स्वयमात्मांतर्यामी प्रचोदयति ॥ ६९ ॥ य एवेमं लोकमतिकरालवदनांधकारसंज्ञाजगर-
ग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकंपया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवा-
साधूनां भयमुदीरयन्नटति ॥ ७० ॥ परित आशापालैस्तत्र तत्र कमलकोशांजलिभिरुपहृतार्हणः ॥ ७१ ॥ अथ ह भगवंस्तव चरणनलिनयुगलं
त्रिभुवनगुरुभिर्वंदितमहमयातयामयजुःकाम उपसरामीति ॥ ७२ ॥ सूत उवाच ॥ एवं स्तुतः स भगवान्वाजिरूपधरो हरिः ॥ यजूंष्ययातयामानि

॥ ६७ ॥ द्वितीयपादार्थानुवर्णनेन स्तौति । यदुहेति । हे विबुधर्षभ हे सवितः ! यदप्यदो भगवतस्तव मंडलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम । पुनस्तस्यैव संबोधनम् ।
प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषामवभर्जन विनाशक हे तपनेति ॥ ६८ ॥
तृतीयपादेन स्तौति । य इहेति । भवान्स्थावरजंगमसमूहानां स्वाश्रयाणां जीवानां मन इंद्रियप्राणगणाननात्मनो जडान्स्वयमात्मैवांतर्यामी सन्प्रचोदयति प्रवर्तयति ॥ ६९ ॥
तृतीयपादमेव मंडलस्थपरतया व्याचक्षाणः स्तौति । य एवेति । य एव भगवानतिकरालवदनो योऽधकारसंज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्र-
वणत्वं तदेव श्रेयस्तस्मिन्प्रवर्तयति । किंच यो भवानवनिपतिरिवाटति गच्छति ॥ ७० ॥ आशापालैरिंद्रादिभिः । कमलकोशयुक्तैस्तत्तुल्यैर्वाऽञ्जलिभिरुपहृतार्हणो दत्तार्घः ॥ ७१ ॥ यत एवंभूतस्त्व-

मथातः ह स्फुटमयातयामान्यन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२ ॥ एवं स्तुतः प्रसादितश्च ॥ ७३ ॥ पंचदश शाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् । न तैरिति पाठे स एष याज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति । जगृहुरधीतवंतः । रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा मन्यस्तास्त्यक्ताः शाखा वाजसनीसंज्ञास्ताः शाखा इति वा ॥ ७४ ॥ सामशाखाविभागमाह । जैमिनेरिति । तत्सुतः सुमंतुसुतः । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥ ७५ ॥ तच्छिष्यो जैमिनेः शिष्यः । महानतिमेधावी । सहस्रसंहितारूपं भेदं चक्रे । साम्नां तं संहिताभेदम् । ततस्तदनंतरम् । सुकर्मणः शिष्य एकः कौशल्यो हिरण्यनाभः पौष्यंजिर्नामैकस्तौ जगृहतुः । आवंत्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह ॥ ७६ ॥ ७७ ॥ पौष्यंज्यावंत्ययोरपि चकाराद्धिरण्यनाभस्यापि पंचशतानि शिष्या आसन् । ते तावतीः शाखा यथायथं जगृहुः । तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथैवोक्तं वैष्णवे । उदीच्यसामगाः शिष्यास्तस्य पंचशतं स्मृताः ॥ हिरण्यनाभात्तावत्याः संहिता यैर्द्विजोत्तमैः ॥ गृहीतास्तेऽपि चोच्यंते पंडितैः प्राच्यसामगा इति ॥ ७८ ॥ पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यांतरैः

मुनयेऽदात्प्रसादितः ॥ ७३ ॥ यजुर्भिरकरोच्छाखा दश पंच शतैर्विभुः ॥ जगृहुर्वाजसंन्यस्ताः काण्वमाध्यंदिनादयः ॥ ७४ ॥ जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ७६ ॥ हिरण्यनाभः कौशल्यः पौष्यंजिश्च सुकर्मणः ॥ शिष्यो जगृहतुश्चान्य आवंत्यो ब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याः सामगाः शिष्या आसन्पंचशतानि वै ॥ पौष्यंज्यावंत्ययोश्चापि तांश्च प्राच्यान्प्रचक्षते ॥ ७८ ॥ लौगाक्षिर्मांगलिः कुल्यः कुशीदः कुक्षिरेव च ॥ पौष्यंजिशिष्या जगृहुः संहितास्ते शतं शतम् ॥ ७९ ॥ कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवंत्य आत्मवान् ॥ ८० ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥ ६ ॥ सूत उवाच ॥ अथर्ववित्सुमंतुश्च शिष्यमध्यापयत्स्वकाम् ॥ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥ शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ॥ २ ॥ बभ्रुः शिष्योऽथांगिरसः सैंधवायन एव च ॥ अधीयेतां संहिते द्वे सावर्ण्या-

शाखाबाहुल्यं दर्शयति । लौगाक्षिरिति द्वाभ्याम् ॥ ७९ ॥ कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे । शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवंत्यः स्वशिष्येभ्य ऊच इति ॥ ८० ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमेऽथर्वविस्तारः पुराणव्यवसनं ततः ॥ पुराणलक्षणादीनि फलं भागवत श्रुतेः ॥ १ ॥ क्रमप्राप्तमथर्ववेदविभागमाह । अथर्वविदिति । शिष्यं कबंधनामानम् । स्वकां स्वकीयां संहिताम् । सोऽपि शिष्योऽपि तां द्विधा विभज्य । तदुक्तं वैष्णवे । अथर्ववेदं स मुनिः सुमंतुरमितद्युतिः ॥ शिष्यमध्यापयामास कबंधं सोऽपि च द्विधा ॥ कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवानिति ॥ १ ॥ तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास । पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन । शौक्लायनिरिति ॥ २ ॥ अंगिरसः शुनकस्य शिष्यो बभ्रुः सैंधवायनश्च । तदुक्तम् । शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात्सैंधवायनसंज्ञिने इति । सावर्ण्याद्याः सैंधवा-

यनादीनां शिष्याः ॥ ३ ॥ नक्षत्रकल्पः शांतिकल्पश्चेति द्वौ । तदुक्तम् ॥ नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ चतुर्थः स्यादांगिरसः शांतिकल्पश्च पंचम इति । नक्षत्रकल्पादीनां कर्तारस्तत्तन्ना-
मभिरुच्यंते ॥ ४ ॥ ५ ॥ मत्पितुर्मुखादिति । प्रथमं व्यासः षट्संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात् । तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयंत । एतेषां षण्णां शिष्योऽहं
ताः सर्वाः समधीतवान् ॥ ६ ॥ रामशिष्यो योऽकृतव्रणः एवं चत्वारो वयम् । मूलसंहिता इत्यनेन ततः संहिताबाहुल्यं सूचितम् ॥ ७ ॥ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथ-
नाय दर्शयति । पुराणेति ॥ ८ ॥ अस्य विश्वस्य । अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वंतरेशानुकथा निरोधो मुक्तिराश्रय इत्यत्रोक्ते स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते । अंतराणि
मन्वंतराणि वंशो वंश्यानुचरितमितीशानुकथाः । संस्था निरोधः । अनेनैवात्यंतिकलयरूपा मुक्तिरप्युक्ता । हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥ ९ ॥ दशभिरेतैर्लक्षणैर्युक्तं
महापुराणं विदुः । केचित्पंचविधम् । सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च । वंश्यानुचरितं चेति पुराणं पंचलक्षणमिति । महत्पुराणमल्पं चेति व्यवस्थया । यत्र दशापि लक्षणानि पृथक् पृथङ्-

द्यास्तथाऽपरे ॥ ३ ॥ नक्षत्रकल्पः शांतिश्च कश्यपांगिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥ ४ ॥ त्रय्यारुणिः कश्यपश्च साव-
र्णिरकृतव्रणः ॥ वैशंपायनहारीतौ षड्वै पौराणिका इमे ॥ ५ ॥ अधीयंत व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः सम-
ध्यगाम् ॥ ६ ॥ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः ॥ ७ ॥ पुराणलक्षणं ब्रह्मन्ब्रह्मर्षिभिर्निरू-
पितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षांतराणि च ॥ वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥९॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पंचविधं ब्रह्मन्महदल्पव्यवस्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतसूक्ष्मेंद्रिया-
र्थानां संभवः सर्ग उच्यते ॥ ११ ॥ पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥ १२ ॥ वृत्तिर्भूतानि भूतानां
चराणामचराणि च ॥ कृता स्वेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥ १३ ॥ रक्षाऽच्युतावतारेहा विश्वस्यानुयुगे युगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यंते
यैस्त्रयीद्विषः ॥ १४ ॥ मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥ १५ ॥ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽ-

निरूप्यंते तन्महापुराणम् । यत्र त्वन्येषां पंचस्वेवांतर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिलक्षणानि व्याचष्टे अव्याकृतेत्यादिना । अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद्यो
महांस्तस्मात्त्रिवृदहंकारस्तस्माद्भूतमात्राणां सूक्ष्माणामिंद्रियाणां च तदर्थानां च स्थूलानां देवतानां च संभवः सर्गः कारणसृष्टिसर्ग इत्यर्थः । उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषंगः ॥११॥ विसर्गं
व्याचष्टे । पुरुषेणेश्वरेणानुगृहीतानामेतेषां महदादीनाम् । पूर्वकर्मवासनाप्रधानोऽयं समाहारः । कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥ १२ ॥ चराणां
भूतानां सामान्यतोऽचराणि । चकाराच्चराणि च वृत्तिः । तत्र नृणां स्वेन स्वभावेन कामाच्चोदनयाऽपि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः ॥ १३ ॥ तिर्यङ्मर्त्यर्षिदेवेषु
येऽच्युतावतारास्तेषामीहा लीला सा विश्वस्य रक्षोच्यत इत्यर्थः । यैस्त्वतारैरिति समासान्निष्कृष्य कथंचित्संबंधः । त्रयीद्विषो दैत्याः ॥ १४ ॥ षड्विधं मन्वंतरमुच्यते । षड्विधत्वमेवाह । मनु
रिति । मन्वादयः षडेते वर्गाः स्वस्वाधिकारेण यदा प्रवर्तंते तन्मन्वंतरमित्यर्थः ॥ १५ ॥ वंशमाह । राज्ञामिति । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धानामित्यर्थः । तेषामन्वयो वंशः । तेषां वृत्तम् ।

ये च तद्वंशधरास्तेषां च वृत्तं वंशानुचरितमुच्यते ॥ १६ ॥ अस्य विश्वस्य । स्वभावतो मायातो निष्पन्नस्य । यद्वा मायातो यश्चतुर्विधो लय इति ॥ १७ ॥ अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः । सोऽत्र हेतुरुच्यत इत्यर्थः । तस्य निमित्ततामाह । अविद्यया कर्मकारकः कर्मकर्ता । जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः । नन्वनुशयीनिमित्तमिति केचित् । अव्याकृतमित्यपरे । तत्राह । यमिति । चैतन्यप्राधान्येनानुशयिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥ १८ ॥ अपाश्रयमाह । व्यतिरेकेति । जाग्रदादिष्ववस्थासु जीवतया वर्तत इति जीववृत्तयो विश्वतैजसप्राज्ञास्तेषु मायामयेषु साक्षितयाऽन्वयः समाध्यादौ च व्यतिरेको यस्य तद्ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥ १९ ॥ एतदेव सदृष्टांतं प्रपंचयति । पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च बहिरप्यवस्थानात् । रूपनामसु च सन्मात्रं सत्तामात्रं यथा । एवं बीजं गर्भाधानमादिर्यासां पंचतांऽतो यासां तासु देहावस्थासु नवस्वप्यधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥ २० ॥ एवं दशापि लक्षणानि व्याख्याय दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयंति महात्मान इति यदुक्तं तदाह । विरमेतेति ।

न्वयः ॥ वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६ ॥ नैमित्तिकः प्राकृतिको नित्य आत्यंतिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥ १७ ॥ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ॥ यं चानुशयिनं प्राहुरव्याकृतमुतापरे ॥ १८ ॥ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु ॥ बीजादिपंचतां तासु ह्यवस्थासु युतायुतम् ॥ २० ॥ विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् ॥ योगेन वा तदाऽऽत्मानं वेदेहाया निवर्तते ॥ २१ ॥ एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महांति च ॥ २२ ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं लैंगं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कांदसंज्ञितम् ॥ २३ ॥ भविष्यं ब्रह्मवैवर्तं मार्कंडेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्मांडाख्यमिति त्रिषट् ॥ २४ ॥ ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥ २५ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे सप्तमोऽध्यायः ॥ ७ ॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतांवर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥ आहुश्चिरायुषमृषिं मृकंडतनयं जनाः ॥ यः कल्पांते उर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्भार्गवर्षभः ॥ नैवाधुनाऽपि भूतानां संप्लवः कोऽपि जायते ॥ ३ ॥ एक एवार्णवे भ्राम्यन्ददर्श

यदा सर्गादीनां मायामयत्वानुसंधानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत । इहैवानुष्ठितेन योगेन वा देवहूत्यादिवत् । तदा विक्षेपाभावादात्मानं वेद । तदा चाविद्यानिवृत्तेरीहायाः संसाररूपाया निवर्तते इत्यर्थः ॥ २१ ॥ पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासंगिकमुक्त्वा प्रस्तुतमाह । एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२ ॥ २३ ॥ त्रिषडष्टादश ॥ २४ ॥ उपसंहरति । ब्रह्मन्निति । मुनेर्व्यासस्य शिष्यादीनां च । ब्रह्मतेजो ब्रह्मवर्चसं तद्विवर्धनम् । श्रोतॄणामिति शेषः ॥ २५ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमे तु तपश्चर्या मार्कंडेयस्य मोहकैः ॥ कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥ पुराणविभागप्रसंगेन पुराणकर्तुर्मार्कंडेयस्य चरितप्रश्नमाह । सूतेति । त्वमेव वक्तुं योग्य इत्याह । तमसि संसारे भ्रमतां पारदर्शनस्तन्निवर्तकः ॥१॥ वक्तव्यमाह । आहुरिति । उर्वरितोऽवशिष्टः । येन कल्पांतेन । एतत्कथं घटत इत्येकः प्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्न घटत इत्याह । स वा इति । यतो भार्गवर्षभः । कोऽपि प्राकृतिको नैमि-

त्तिको वा ॥ ३ ॥ अन्यदप्यघटितमेवेत्याह । एक एवेति । तोकं बालकम् ॥ ४ ॥ कौतूहलमौत्सुक्यम् । तं संशयम् । न केवलं त्वं महायोगी किंतु पुराणेष्वपि ज्ञातृत्वेन संमतः ॥ ५ ॥ प्रश्नमभिनंदति । हे महर्षे ! अयं प्रश्नः । तत्र हेतुः । नारायणेति । यत्र प्रश्नविषये ॥ ६ ॥ तत्र मार्कंडेयस्तपसा भगवंतमाराध्य मायाप्रदर्शनं वव्रे ततश्च तेनैव भगवन्मायया सप्तकल्पा दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह । प्राप्त इत्यादिना । मार्कंडेयो मृत्युं जिग्ये इति पंचमश्लोकेनान्वयः । मध्यमग्रंथेन तस्य धर्मः कथ्यते । प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः । पितुः सकाशाद्गर्भाधानादिक्रमात् । छंदांसि वेदान् ॥ ७ ॥ बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥ ८ ॥ नियमर्द्धये धर्मवृद्धये । अग्न्यादिषु पंचसु हरिमर्चयन् ॥ ९ ॥ भैक्ष्यं गुर्वर्थमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे नोचेत्सकृत्कदाचिदुपोषितो भवति ॥ १० ॥ ११ ॥ तेन मृत्युंजयेन ॥ १२ ॥ ध्वस्ताः क्लेशा रागादयो यस्य तेनांतरात्मना प्रत्याहृतमनसा ॥ १३ ॥ १४ ॥ तस्य तपोनिष्ठामितिहासेन

पुरुषं किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥ ४ ॥ एष नः संशयो भूयान्सूत कौतूहलं यतः ॥ तं नश्छिंधि महायोगिन्पुराणेष्वपि संमतः ॥ ५ ॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ॥ नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥ प्राप्तद्विजातिसंस्कारो मार्कंडेयः पितुः क्रमात् ॥ छंदांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥ ७ ॥ बृहद्व्रतधरः शांतो जटिलो वल्कलांबरः ॥ बिभ्रत्कमंडलुं दंडमुपवीतं समेखलम् ॥ ८ ॥ कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये ॥ अग्न्यर्कगुरुविप्रात्मस्वर्चयन्संध्ययोर्हरिम् ॥ ९ ॥ सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥ बुभुजे गुर्वनुज्ञातः सकृन्नोचेदुपोषितः ॥ १० ॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥ इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशांतरात्मना ॥ १३ ॥ तस्यैवं युंजतश्चित्तं महायोगेन योगिनः ॥ व्यतीयाय महान्कालो मन्वंतरषडात्मकः ॥ १४ ॥ एतत्पुरंदरो ज्ञात्वा सप्तमेऽस्मिन्किलांतरे ॥ तपोविशंकितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥ गंधर्वाप्सरसः कामं वसंतमलयानिलौ ॥ मुनये प्रेषयामास रजस्तोकमदौ तथा ॥ १६ ॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलतांचितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥ मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥ वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान् ॥ सुमनोभिः परिष्वक्तो ववावुत्तंभयन्स्मरम् ॥ २० ॥ उद्यच्चंद्रनिशावक्त्रः प्रवालस्तबकालिभिः ॥ गोपद्रु-

वर्णयति एतदित्यादिना । अस्मिन्सप्तमे मन्वंतरे । तपसा मत्पदं ग्रहीष्यतीति विशंकितः ॥ १५ ॥ मुनये मुनिं भ्रंशयितुम् । रजसस्तोकमतिप्रियमपत्यं लोभो मदश्च तौ ॥ १६ ॥ १७ ॥ तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । पुण्यैर्द्रुमैर्लताभिश्चांचितं पूजितम् । पुण्यद्विजानामृषीणां कुलैराकीर्णम् । पुण्या अमला जलाशया यस्मिन् ॥ १८ ॥ मत्तभ्रमराणां संगीतं यस्मिन् । मत्तकोकिलानां कूजितं तस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥ १९ ॥ एवंभूतं तदाश्रमपदं प्रविष्टः सन्वायुर्मलयानिलो ववौ प्रससार । उत्तंभयन्नुद्दीपयन् । तत्र वृक्षेषु प्रवेशान्मांद्यं हिमनिर्झरकणानामादानाच्छैत्यं पुष्पपरिष्वंगात्सौगंध्यं चोक्तम् ॥ २० ॥ किंच । उद्यंश्चंद्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं

यस्मिन्सः । प्रवालस्तबकानामालयः श्रेणयो येषु तैः । गुप्यंति विटपैः संश्लिष्यंतीति गोपा द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षित आविर्बभूव ॥ २१ ॥ किंच । तदा गीतवादित्रयूथकैर्गायकादिसमुदायिभिर्गंधर्वैरन्वीयमानः । तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः । आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत ॥ २२ ॥ दुराधर्षमभिभवितुमशक्यम् ॥ २३ ॥ २४ ॥ शोषणदीपनसंमोहनतापनोन्मादनाख्यानि पंचमुखानि यस्य तदस्त्रं संदधे । तदैव मधुर्वसंतः । रजस्तोकश्च । पुंस्त्वमार्षम् । अन्ये चेंद्रभृत्यास्तस्य मनो व्यकंपयन् ॥ २५ ॥ २६ ॥ किंच । वायुर्मलयानिलः पुंजिकस्थल्यास्तत्सूक्ष्मं वासो जहार ॥ २७ ॥ सर्वे तेषां कर्म । तत्र तस्मिन् । मोघं व्यर्थम् । अनीशस्य निर्दैवस्य ॥ २८ ॥ मुनेरपकुर्वतः प्रतिकूलमाचरंतः । हे मुने ॥ २९ ॥ अहमोऽहंकारस्य ।

मलताजालैस्तत्रासीत्कुसुमाकरः ॥ २१ ॥ अन्वीयमानो गंधर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥ हुत्वाऽग्निं समुपासीनं ददृशुः शक्रकिंकराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमंतमिवानलम् ॥२३॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदंगवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥ संदधेऽस्त्रं स्वधनुषि कामः पंचमुखं तदा ॥ मधुर्मनोरजस्तोक इंद्रभृत्या व्यकंपयन् ॥ २५ ॥ क्रीडंत्याः पुंजिकस्थल्याः कंदुकैः स्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥ इतस्ततो भ्रमद्दृष्टेश्चलंत्या अनुकंदुकम् ॥ वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥ त इत्थमपकुर्वंतो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥२९॥ इतींद्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥३०॥ दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वाऽनुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥ तस्यैवं युंजतश्चित्तं तपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥ तौ शुक्लकृष्णौ नवकंजलोचनौ चतुर्भुजौ रौरववल्कलांबरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमंडलुं दंडमृजुं च वैणवम् ॥ ३३ ॥ पद्माक्षमालामुत जंतुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ॥ तपत्तडिद्वर्णपिशंगरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥ ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामांगेन दंडवत् ॥ ३५ ॥ स तत्संदर्शनानंदनिर्वृतात्मेंद्रियाशयः ॥ हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥ उत्थाय प्रांजलिः प्रह्व औत्सुक्यादाश्लिषन्निव ॥ नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ॥ पुनरानम्य पादा-

भावं विकारम् ॥ ३० ॥ निस्तेजसं म्लानवदनम् । स्वराडिंद्रः ॥ ३१ ॥ नरनारायणरूपो हरिः ॥ ३२ ॥ तावनुवर्णयति द्वाभ्याम् । ताविति रौरवं कृष्णाजिनं वल्कलं चांबरं ययोस्तौ । पवित्रे पाण्योर्ययोस्तौ । त्रिवृत्त्रिगुणं नवतंतुकमिति वा । त्रिवृद्बहिःपवमानमित्यादौ नवके प्रयोगात् । उपवीतकादीन्दधानौ ॥ ३३ ॥ वेदं दर्भमुष्टिम् । किंच साक्षात्तप एव तौ । तत्र हेतुः । तपत्तडिद्वर्णं देदीप्यमानविद्युत्संकाशं यत्पिशंगं रोचिस्तेन रूपिणौ मूर्तिमंतौ । तादृक् तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ ॥ ३४ ॥ उच्चैर्महताऽऽदरेण ॥ ३५ ॥ तयोः संदर्शनेन य आनंदस्तेन निर्वृता उपशांता आत्मेंद्रियाशया देहेंद्रियमनांसि यस्य सः । न सेहे नाशक्नोत् ॥ ३६ ॥ आश्लिषन्नालिंगन्निव ॥ ३७ ॥ पादयोरवनिज्य पादौ प्रक्षाल्य । अर्हणेनार्घ्येण ॥ ३८ ॥

पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ तौ प्रति ॥ ३९ ॥ अंतर्यामिणस्तस्यैव प्राणादिप्रवर्तकत्वादात्मनस्तत्स्तुतावस्वातंत्र्यं पश्यन्नाह । किमिति । तव त्वां किमहं वर्णये कथं स्तौमि । यद्येन त्वयैवोदीरितः प्रेरितोऽसुः प्राणः संस्पंदते प्रवर्तते तमनु च वागादयः स्पंदंति । अत्र हेतुः । वै अन्वयव्यतिरेकाभ्यां श्रोत्रस्य श्रोत्रमित्यादि श्रुतिभिश्चैतत्प्रसिद्धमित्यर्थः । न केवलं प्राकृतानां तनुभृतां किंत्वजशर्वयोश्चातः स्वस्य ममापि तथैव । एवं यद्यपि न कस्यापि स्वातंत्र्यमथापि दारुयंत्रवत्त्वत्प्रवर्तितैरपि वागादिभिर्भजतां पुंसां भावबंधुरात्मबंधुरसि न तु पित्रादिवद्देहमात्रबंधुः । अहो कृपालुता तवेत्यर्थः ॥ ४० ॥ ननु कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत्तत्राह । मूर्ती इति । हे भगवन्! भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःखनिवृत्त्यै मृत्युजित्यै मोक्षाय । ननु त्वं कस्यापि पुत्र इत्यर्थः । अत्र दृष्टांतः । यथेदं विश्वमवितुमन्यास्तनूर्मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि तद्वत् । न केवलं पालनमात्रं तव कर्म किंतु सृष्टिलयावपीत्याह । सृष्ट्वेति । तत्राप्यन्यनिरपेक्षत्वे दृष्टांतः । ऊर्णनाभिरिवेति ॥ ४१ ॥ यस्मादेवंभूतस्त्वं तस्मात्तवांघ्रिमूलं भजामीत्याह । तस्येति । तस्यावितुः पालकस्य स्थावरजंगमानामीश्वरस्यांघ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषंगः । कथंभूतमंघ्रिमूलम् । यत्स्थं यत्र स्थितम् । कर्मगुणकालानां रजो मलम् । अन्ये च पूर्वोक्तास्तापादयो न स्पृशंति । रुज इति वा पाठः । यतो वेदो हृदये येषां

भ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥ मार्कंडेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पंदते तमनु वाङ्मनइंद्रियाणि ॥ स्पंदंति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबंधुः ॥ ४० ॥ मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥ तस्यावितुः स्थिरचरेशितुरंघ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशंति ॥ यद्वै स्तुवंति निनमंति यजंत्यभीक्ष्णं ध्यायंति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥ नान्यं तवांघ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितो भिय ईश विद्मः ॥ ब्रह्मा बिभेत्यलमतो द्विपरार्द्ध्यधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदंत्यमभिज्ञमात्रं विंदेत ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥ सत्त्वं रजस्तम इतीश तवात्मबंधो मायामयाः स्थितिलयोदयहेतवोऽस्य ॥ लीलाधृता यदपि सत्त्वमयी प्रशांत्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥ तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं

ते वेदतात्पर्यविदो मुनयो यदेव स्तुवंति नितरां नमंति तदाप्त्यै तत्प्राप्तये एव स्तवनादि कुर्वंति ॥४२॥ यतोऽन्यः पुरुषार्थो नास्तीत्याह । नान्यमिति । अंघ्र्युपनयाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः । परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य । तदेवाह । द्विपरार्धधिष्ण्यं स्थानं यस्य स ब्रह्माऽपि ते कालस्य त्वद्भ्रूविजृंभरूपात्कालादलं बिभेति । अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति ॥४३॥ यस्मादेवं तत्तस्मात्तव पादमूलं भजामि । कथंभूतस्य । ऋतधियः सत्यज्ञानस्वरूपस्य । यद्वा सत्या धीर्यस्य यस्मिन्वा तस्यात्मगुरोर्जीवनियंतुरतः कारणात्परस्य । किं कृत्वा । आत्मच्छादि स्वात्मावरकमपार्थं च निष्फलमसच्च तुच्छमंत्यं च नश्वरमिदं देहादि हित्वा देहादिभजनं त्यक्त्वा । असच्चेत्कथं प्रतीयेत तत्राह । अभिज्ञामात्रम् । नह्यत्यंतमसत्किंत्वाभासमात्रम् । न ततः पृथगस्तीत्यर्थः । नन्वपवर्गाय भवतु मद्भजनं फलांतरार्थं त्वन्ययजनं कार्यमेव तत्राह । तर्हीति । यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विंदेतेति ॥ ४४ ॥ ननु ब्रह्मरुद्रावपि ममैव मूर्ती अतो मामेव किमत्यंतमाद्रियसे तत्राह । सत्त्वमिति । यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशांत्यै मोक्षाय न केवलमस्य प्रशांत्यभा-

वमात्रमन्यभजने किं त्वनिष्टं च भवेदित्याह । व्यसनेति ।।४५।। तदेव सदाचारेण द्रढयति। तस्मादिति। हे भगवन्! तव शुक्लां तनुं श्रीनारायणाख्याम्। अथ तावकानां च शुक्लां तनुं नराख्याम्। यद्यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशंति मन्यंते न त्वन्यद्रजस्तमश्चेति । अत्र हेतुः । यतः सत्त्वाल्लोको वैकुंठाख्यः लोकत्वे सत्यप्यभयं च भोगे सत्यप्यात्मसुखं च।।४६।। अतस्तं प्रणमति । तस्मै नम इति । हंसाय शुद्धाय । संयतगिरे नियतवाचे । अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ।।४७।। वेदार्थसंप्रदायप्रवर्तने हेतुत्वं वदन्स्तौति । यमिति । वितथात्पथैः कपटेंद्रियमार्गैर्भ्रमद्धीर्विक्षिप्तबुद्धिः पुमान् स्वेन्द्रियादिषु नियंतृत्वेन संतमपि यं त्वां न वेद । दृक्पथेषु विषयेषु । बुद्धिविक्षेपे हेतुः । तन्मायया तस्य तवैव मायया आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविद्वानेवाखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ।।४८।। वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति । यस्य तव दर्शनं निगमे भवति । कथंभूतम् । आत्मनस्तव रहो रहस्यं तस्य प्रकाशकम् । अन्यथा दुर्ज्ञेयतामाह । अजपरा ब्रह्ममुख्याः कवयोऽपि सांख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति । कुत इत्यत आह सर्वेषां सांख्यादिवादिनां ये वादास्तेषां विषया

स्त्वदर्पितां कुशला भजंति ।। यत्सात्वताः पुरुषरूपमुशंति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ।। ४६ ।। तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ।। नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ।। ४७ ।। यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः संतं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।। तन्माययावृतमतिः स उ एव साक्षादाद्यस्तेऽखिलगुरोरुपसाद्य वेदम् ।। ४८ ।। यद्दर्शनं निगम आत्मरहः प्रकाशं मुह्यंति यत्र कवयोऽजपरा यतंतः ।। तं सर्ववादविषयप्रतिरूपशीलं वंदे महापुरुषमात्मनिगूढबोधम् ।। ४९ ।। इति श्रीमद्भागवते महापुराणे द्वादशस्कंधेऽष्टमोऽध्यायः ।। ८ ।। सूत उवाच ।। संस्तुतो भगवानित्थं मार्कंडेयेन धीमता ।। नारायणो नरसखः प्रीत आह भृगूद्वहम् ।। १ ।। श्रीभगवानुवाच ।। भो भो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना ।। मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ।। २ ।। वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ।। वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ।। ३ ।। ऋषिरुवाच ।। जितं ते देवदेवेश प्रपन्नार्तिहराच्युत।। वरेणैतावताऽलं नो यद्भवान्समदृश्यत ।। ४ ।। गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ।। मनसा योगपक्वेन स भवान्मेऽक्षगोचरः ।। ५ ।। अथाप्यंबुजपत्राक्ष पुण्यश्लोकशिखामणे ।। द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ।। ६ ।। सूत उवाच ।। इतीडितोऽर्चितः काममृषिणा भगवान्मुने ।। तथेति सस्मयन्प्रागाद्बदर्याश्रम-

भेदादयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम् । कुतः । आत्मना देहादिसंघातेन निगूढो बोधो यस्य तम् । एवंभूतं महापुरुषं त्वां वंदे ।।४९।। इति श्रीमद्भागवते द्वादशस्कंधे टीकायामष्टमोऽध्यायः ।।८।। नवमे भगवन्मायादिदृक्षोर्दर्शने मुहुः ।। मायाशिशोर्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ।। १ ।। भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह संस्तुत इत्यादिना ।। १ ।। आत्मसमाधिना चित्तैकाग्र्येण ।। २ ।। वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनं द्वयोरैक्याभिप्रायेण । प्रतीच्छ गृहाण ।। ३ ।। वरेण च्छंदयता त्वया जितमुत्कर्षो दर्शितः । मम तु वराकांक्षा नास्तीत्याह । वरेणेति ।। ४ ।। यस्य तव श्रीमत्पादाब्जदर्शनं मनसाऽपि गृहीत्वा प्राप्य कृतार्था अजादयो भवंति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतःपरं वरेणेत्यर्थः ।। ५ ।। द्रक्ष्ये द्रष्टुमिच्छामि । लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम् ।। ६ ।। तथेति द्रक्ष्यसीति । स ईश्वरः स्मयन्प्रागात् । पाठांतरे क्रिया-

विशेषणम् ॥ ७ ॥ तमेवार्थं मायादर्शनरूपम् । अग्न्यादिमूर्तिषु ॥ ८ ॥ भावद्रव्यैर्मनोमयैर्द्रव्यैः । कचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकं प्राप्तः ॥ ९ ॥ मायादर्शनमाह तस्येत्यादिना ॥ १० ॥ तं वायुमनु बलाहका मेघा अभवन्नाविर्बभूवुः । ते च तडिद्भिः सहिता उच्चैः स्वनंतो गर्जंतः । अक्षो रथांगं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥ चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगेनो- र्मयस्तैर्भूतलं ग्रसंतः । उग्रा नक्रा येषु महाभया आवर्ता येषु गभीरो घोषो येषु ते च ते च ते च ॥ १२ ॥ आत्मना सह जरायुजादिचतुर्विधं जगदंतर्बहिश्चोपतापितं वीक्ष्य क्ष्मां जलाप्लुतां वीक्ष्य मुनिः समत्रसद्भयं प्राप । केनोपतापितम् । अद्भिः । कथंभूताभिः । अतिद्युभिरतिक्रांता द्यौर्याभिः खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः दीर्घत्वमार्षं छंदोऽनु-

मीश्वरः ॥ ७ ॥ तमेव चिंतयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियुदात्मसु ॥ ८ ॥ ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ कचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ॥ ९ ॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः ॥ उपासीनस्य संध्यायां ब्रह्मन्वायुरभून्महान् ॥ १० ॥ तं चंड- शब्दं समुदीरयंतं बलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनंत उच्चैरभिवर्षधाराः ॥ ११ ॥ ततो व्यदृश्यंत चतुःसमुद्राः स- मंततः क्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥ अंतर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥ तस्यैवमुद्वीक्षित ऊर्मिभीषणः प्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्य- माणो वरषद्भिरंबुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥ सक्ष्मांतरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवो- र्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडांधवत् ॥ १५ ॥ क्षुत्तृट्परीतो मकरैस्तिमिंगिलैरुपद्रुतो वीचिनभस्वताहतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥ क्वचिद्गतो महावर्ते तरलैस्ताडितः क्वचित् ॥ यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥ क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ॥ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥ १९ ॥ स कदाचिद्भ्रमंस्तस्मिन्पृथिव्याः ककुदि द्विजः ॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥ प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ॥ शयानं पर्णपुटके ग्रसंतं प्रभया तमः ॥ २१ ॥ महामरकतश्यामं श्रीमद्वदनपंकजम् ॥ कंबुग्रीवं महो- रस्कं सुनासं सुंदरभ्रुवम् ॥ २२ ॥ श्वासैजदलकाभातं कंबुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥ पद्मगर्भारुणापांगं

सारेण ॥ १३ ॥ प्रभंजनेनाघूर्णितं प्रकंपितं वाः उदकं यस्मिन् सः । अप्यधाच्छादयामास । समं सह ॥ १४ ॥ सक्ष्मांतरिक्षं भूम्यंतरिक्षस्थप्राणिसहितम् । सदिवं स्वर्गस्थदेवसहितम् । भागणा ज्योतिर्गणास्तैः सहितम् । जटा विक्षिप्य विकीर्य ॥ १५ ॥ परिश्रमेण इषितो गतः प्राप्त इत्यर्थः । इषुमपण इत्यस्मात् ॥ १६ ॥ अन्योन्यघातिभिस्तद्भक्षणाय परस्परं युध्यद्भिः ॥ १७ ॥ ॥ १८ ॥ विष्णुमायावृतात्मन इति । स तथा दृष्टवानित्यर्थः ॥ १९ ॥ ककुद्युन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥ तस्येशानदिक्शाखायां शिशुमपि ॥ २१ ॥ श्रीमद्रम्यं वदनपंकजं यस्य तम् । कंबुवत्त्रिरेखावृता ग्रीवा यस्य तम् । महोरस्कं विशालवक्षसम् । सुनासं शोभना नासा यस्य तम् । सुंदरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजंतः कंपमाना अलकास्तैराभातं शोभि-

विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥ २३ ॥ पद्मगर्भवत् आ ईषदरुणावपांगौ
तम् । कंबुवदंतर्वलयेन श्रीयंयोस्तौ कंबुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् । श्वासैरेजंत्यश्चलंत्यो वलयस्तिर्यङ्‌निम्नरेखास्ताभिः संविग्ना चंचला निम्ना गंभीरा नाभिर्यस्मिंस्तदलवदश्वत्थपत्रमंकाशमुदरं यस्य
नेत्रप्रांतौ यस्य तम् । हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम् । अद्भुतभावोऽत्याश्चर्यरूपं तेन शंकितः मन्नपि तं प्रष्टुं
तम् ॥ २४ ॥ चारवोऽङ्गुलयो ययोस्ताभ्यामुन्नीयाकृष्य धयंतं पिबंतम् ॥ २५ ॥ हृत्पद्मं च विलोचनांबुजे च प्रोत्फुल्लानि तानि यस्य सः । कृत्स्नशो दर्शनं प्रपंचयति खमित्यादिना । ककुभो दिशः ।
पुरः प्रससार समीपं गतः ॥ २६ ॥ अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चातीव विस्मितः सन्नमुह्यत् ॥ २७ ॥ नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति तथा तं कालं च । सदिव परमार्थं
पुराण्याकरांश्च । खेटान्कर्षकग्रामान् । व्रजान्गोकुलानि । आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥

चार्वंगुलिभ्यां पाणिभ्यामुन्नीय चरणांबुजम् ॥ मुखे निधाय विप्रेंद्रो धयंतं
हृद्यहासावलोकनम् ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥ प्रहृष्टरोमाऽद्भुतभावशंकितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥२६॥
वीक्ष्य विस्मितः ॥२५॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाऽऽविशत् ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥ खं
रोदसी भगणानद्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान् ॥ वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः ॥२८॥ महांति भूतान्यथ
भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥ हिमालयं पुष्पवहां च
तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ॥ विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥ तस्मिन्पृथिव्याः ककुदि प्ररूढं
वटं च तत्पर्णपुटे शयानम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपांगनिरीक्षणेन ॥ ३१ ॥ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ॥
अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥ तावत्स भगवान्साक्षाद्योगाधीशो गुहाशयः ॥ अंतर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥
तमन्वथ वटो ब्रह्मन्सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे माया-
दर्शनं नाम नवमोऽध्यायः ॥ ९ ॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥ मार्कंडेय

इवावभासितं तेनैव ॥ २९ ॥ ३० ॥ वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापांगनिरीक्षणेन निरीक्षितः सन् । अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति द्वयोरन्वयः । कथं-
भूतम् । नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३१ ॥ ३२ ॥ तावत्परिष्वंगलाभात्पूर्वमेव ऋषेस्तस्यांतर्हितो बभूव । तदुद्यमवैफल्ये दृष्टांतः । अनीशो निर्दैवस्तेन निर्मिता ईहा क्रीडा यथेति ॥ ३३ ॥
अंतर्हितं भगवंतमनु वटः सलिलं लोकसंप्लवश्च तिरोधाय्यंतर्हितः । स च स्वाश्रम एव यथा पूर्वं स्थित इति ॥ ३४ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे
शिव आगत्य मुनेस्तुष्टो वरानदात् ॥ तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥ १ ॥ १ ॥ ज्ञानकाशया ज्ञानवत्प्रकाशमानया त्वद्भजनं विना विद्वांसोऽपि यस्य तव मायया

ज्ञानिनो वयमित्यहंकारेण विमुह्यंतीत्यर्थः ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रांतं शिवरूपेण सांत्वयामास । तदाह तमेवमित्यादिना । निभृतात्मानं समाहितचित्तम् । रुद्राण्या भवान्या ॥ ३ ॥ निभृता निश्चला आत्मेंद्रियाशया देहेंद्रियमनांसि यस्य तम् ॥ ४ ॥ निभृतं निश्चलमुदकं झषव्रताश्च यस्मिंस्तम् । संसिद्धिं फलं साक्षात्कुरु प्रकटीकुरु । यतो भवान्सिद्धिदः ॥ ५ ॥ आशिषोऽभ्युदयलक्षणाः । उत निश्चितम् । अत्र हेतुः । भक्तिमिति ॥ ६ ॥ संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥ सात्वतां सताम् । गतित्वे हेतुः । ईशान इति ॥ ८ ॥ रुद्धा धियोऽन्तःकरणस्य वृत्तयो येन सः ॥ ९ ॥ १० ॥ न केवलं बहिरेवात्मन्यपि प्राप्तं शिवं विचक्ष्य विस्मितः । कथं प्राप्तम् । सहसाऽकस्मादेव हृदि भातम् । कथंभूतम् । तडिद्वत्पिशंगा जटा धारयतीति तथा तम्

उवाच ॥ प्रपन्नोऽस्म्यंघ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्माययाऽपि विबुधा मुह्यंति ज्ञानकाशया ॥ २ ॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान्रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥ अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन्विप्रं निभृतात्मेंद्रियाशयम् ॥ ४ ॥ निभृतोदझषव्रातं वातापाये यथाऽर्णवम् ॥ कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये ॥ ६ ॥ अथापि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान्सात्वतां गतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥ भगवांस्तदभिज्ञाय गिरिशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥१०॥ आत्मन्यपि शिवं प्राप्तं तडित्पिंगजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यंतमिव भास्करम् ॥ ११ ॥ व्याघ्रचर्मांबरं शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह ॥ १२ ॥ बिभ्राणं सहसाभातं विचक्ष्य हृदि विस्मितः ॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥ नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ १४ ॥ तस्मै सपर्यां व्यदधात्सगणाय सहोमया ॥ स्वागतासनपाद्यार्घ्यगंधस्रग्धूपदीपकैः ॥ १५ ॥ आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥ नमः शिवाय शांताय सत्त्वाय प्रमृडाय च ॥ रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥ सूत उवाच ॥ एवं स्तुतः स भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं

त्र्यक्षीण्यक्षीणि यस्य तम् । शूलादिभिः सहाक्षमालादीन्बिभ्राणमित्यन्वयः । अक्ष मालादीनां द्वंद्वैक्यम् ॥ ११ ॥१२॥ विस्मयपूर्वकं बहिर्दर्शनमाह । किमिदमिति ॥ १३ ॥ सोमया उमया सहागतं रुद्रं ददृशे । ततो ननाम ॥ १४ ॥ १५ ॥ पूर्णकामत्वं व्यनक्ति । येन त्वया जगन्निर्वृतं भवतीति ॥ १६ ॥ निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति । नमः शिवाय निर्गुणाय । सत्त्वाय सत्त्वाधिष्ठात्रे । अतएव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७ ॥ १८ ॥ नोऽस्मत्तः । त्रयो ब्रह्मविष्णुमहेश्वराः । यद्येभ्यः । तं वयम् ॥ १९ ॥ वरदानादिना भवत्सेवैवास्माभिः क्रियते न त्वनुग्रहो

जगद्वंद्यस्त्वाद्भवतामिति ब्राह्मणान्स्तौति ब्राह्मणा इत्यादि । ये साधवः सदाचाराः । शांता मत्सरादिरहिताः । निःसंगा निष्कामाः ॥ २० ॥ न केवलं त एव किं त्वहं चेत्यादि ॥ २१ ॥ पूज्यतमत्वे हेत्वंतरमाह । नेति । अणवप्यणुमात्रमपि न चलते न पश्यंति । ततस्मादेवंभूतान्युष्मान् ईमहि भजेम ॥ २२ ॥ २३ ॥ ब्राह्मणेभ्यो ब्राह्मणान । आत्मसमाधानं चित्तैकाग्र्यम् । तप आलोचनम् । स्वाध्यायोऽध्ययनम् । संयमो वागादिनियमस्तैः ॥ २४ ॥ किंच श्रवणादित्यादि ॥ २५ ॥ चंद्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नातृप्यदलमिति नाम-न्यत । कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥ शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुंजो यस्य सः ॥ २७ ॥ इयं लीला दुर्विभाव्याऽवितर्क्या । यद्वया ईशितव्यानि स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमंति स्तुवंति चेति ॥ २८ ॥ अथवा लोकसंग्रहमात्रमेतदित्याह । धर्ममिति । प्रवक्तारोऽपि यत्स्वयं देहिनां धर्म ग्राहयितुमाचरंति ॥ २९ ॥ नन्वेतत्स्वप्रभाव-

दर्शनं येषां मर्त्यो यद्विंदतेऽमृतम् ॥ १९ ॥ ब्राह्मणाः साधवः शांता निःसंगा भूतवत्सलाः ॥ एकांतभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥ सलोका लोकपालास्तान्वंदंत्यर्चंत्युपासते ॥ अहं च भगवान्ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ॥ नात्म-नश्च जनस्यापि तद्युष्मान्वयमीमहि ॥ २२ ॥ न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनंत्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥ ब्राह्म-णेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २४ ॥ श्रवणाद्दर्शनाद्वाऽपि महापातकिनोऽपि वः ॥ शुद्ध्येरन्नं-त्यजाश्चापि किमु संभाषणादिभिः ॥ २५ ॥ सूत उवाच ॥ इति चंद्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २६ ॥ स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् ॥ २७ ॥ ऋषिरुवाच ॥ अहो ईश्वर चर्येयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमंतीशितव्यानि स्तुवंति जगदीश्वराः ॥ २८ ॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरंत्यनुमोदंते क्रियमाणं स्तुवंति च ॥ २९ ॥ नैतावता भगवतः स्वमायामयवृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ ३० ॥ सृष्ट्वेदं मनसा विश्वमात्मनाऽनुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥ ३१ ॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥ कं वृणे नु परं भूमन्वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत् ॥ ३३ ॥ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥ सूत उवाच ॥ इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवाञ्छर्वः शर्वया चाभिनंदितः ॥ ३५ ॥

तिरस्कारकं कथं मया क्रियते तत्राह । नैतावतेति । एतावता लोकसंग्रहमात्रेण । तैर्नमनादिभिः । कथंभूतैः । स्वमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न दुष्येत । यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि । अतस्तस्य तथा कुहकैरात्मानुभावो न दुष्यति तद्वत् । प्रदुष्येतानुभाव इति पाठे नकारस्य दृष्टांतेप्यनुषंगः ॥ ३० ॥ मायाचेष्टितं प्रपंचयति । सृष्ट्वेति । स्वप्नदृग्यथेत्यविद्याचेष्टिते दृष्टांतः ॥ ३१ ॥ त्रिगुणत्वेऽपि न जीववत्तदभिभूताय किंतु गुणानामात्मने नियंत्रे ॥ ३२ ॥ वरं वृणीष्वेति यदुक्तं तत्राह । कमिति । वरं दर्शनं यस्य तस्मात् । त्वत्तः परं कं नु वरं वृणे । यस्य तव दर्शनादवलोकनात्पूर्णकामः सर्वानंदसंदोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानंदः ॥ ३३ ॥ ३४ ॥ वरदानाय स्वयमेव प्रवृत्तः शर्वयोमया चाभिनंदितोऽनुमोदितः

सन्नाह ॥ ३५ ॥ कामोऽयं सर्वोऽप्यन्यच्च यत्पुण्यं यश इत्यादि ब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः । यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६ ॥ ३७ ॥ तस्य कर्म तपआदि । मुनेः पुराऽनुभूतं भगवन्मायावैभवं तच्च कथयन् ॥ ३८ ॥ अवाप्तो महायोगमहिमा येन सः ॥ ३९ ॥ एतन्मार्कंडेयस्य चरितं तेनानुभूतं च भगवन्मायावैभवं तेऽनुवर्णितम् ॥ ४० ॥ नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुद्धमेव तत्राह । एतन्मार्कंडेयेनानुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं न तु सर्वसाधारणम् । एतत्केचिदनादि बहुकालमावर्तितं दैवयुगसहस्रद्वयमानेन पुनः पुनः परिवर्तितं प्रचक्षते । के ते । नृणां संसृतिं सर्गप्रलयादिलक्षणामात्मनो भगवतो मायेत्येवमविद्वांसः । विद्वांसस्तु माया शिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणेति वदंत्यतो न विरोध इत्यर्थः ॥ ४१ ॥ संशृणुयात् । उ इति हर्षे । संश्रावयेद्वा । यौ तावुभौ तयोः कर्मवासनाकृता संसृतिर्न भवेदिति ॥ ४२ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशे तु पूजार्थं महापुरुषवर्णनम् ॥ रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥ १ ॥ येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवो-

कामस्तेऽयं महर्षेऽस्तु भक्तिमांस्त्वमधोऽक्षजे ॥ आकल्पांताद्यशः पुण्यमजरामरता तथा ॥ ३६ ॥ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विरक्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥ ३७ ॥ सूत उवाच ॥ एवं वरान्स मुनये दत्त्वाऽगात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुरा मुनेः ॥ ३८ ॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाऽप्यद्धा हरावेकांततां गतः ॥ ३९ ॥ अनुवर्णितमेतत्ते मार्कंडेयस्य धीमतः ॥ अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥ एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४१ ॥ य एवमेतद्भृगुवर्य वर्णितं रथांगपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादु तावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे दशमोऽध्यायः ॥ १० ॥ शौनक उवाच ॥ अथेममर्थं पृच्छामो भवंतं बहुवित्तमम् ॥ समस्ततंत्रराद्धांते भवान्भागवततत्त्ववित् ॥ १ ॥ तांत्रिकाः परिचर्यायां केवलस्य श्रियः पतेः ॥ अंगोपांगायुधाकल्पं कल्पयंति तथैव यैः ॥ २ ॥ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ॥ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥ ३ ॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याः प्रोक्ता वेदतंत्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥ मायाद्यैर्नवभिस्तत्त्वैः सविकारमयो विराट् ॥ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः

त्तमः ॥ तं पृच्छति क्रियायोगं सांगोपांगादिकल्पितम् ॥ २ ॥ अथेति । हे भागवत ! यतो भवान्समस्ततंत्रराद्धांते तत्त्ववित्त्रहस्यज्ञः ॥ १ ॥ प्रष्टव्यमाह तांत्रिका इति । परिचर्यायामुपासनायां विषये । केवलस्य चैतन्यघनस्य । अंगानि पादादीन्युपांगानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पाः कौस्तुभादयस्तेषां द्वंद्वैक्यम् । तद्यथा कल्पयंति यैश्च तत्त्वैः कल्पयंति तन्नो वर्णयेति ॥ २ ॥ ३ ॥ गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह । नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः ॥ ४ ॥ अंगादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यया कल्पयंतीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तु विराड्विग्रहमाह । मायाद्यैः प्रकृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्त्वैः । विकारा एकादशेंद्रियाणि पंचमहाभूतानीति षोडश । तन्मयो विराट् सप्रसिद्धो निर्मितः । यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेनांगादिकल्पनामौलभ्यं दर्शितम् ॥ ५ ॥ एतद्वै पौरुषम् । पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षया तस्य रूपमुच्यते । अंगकल्पनामाह । भूः पादा-

वित्यादित्रिभिः । भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥ प्रजननं मेढ्रम् । अपानः पायुः ॥ ७ ॥ ८ ॥ अनुक्तमन्यदप्येवमूह्यमित्याह । यावानयं व्यष्टिः पुरुषः स्वमानतः सप्तवितस्तिः संस्थयाऽवयवसन्निवेशेन मितः परिमितः ॥ ९ ॥ भूषणादीन्याह कौस्तुभेत्यादिना । स्वात्मज्योतिः शुद्धं जीवचैतन्यम् । या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥ १० ॥ त्रिवृत्स्वरं त्रिमात्रं प्रणवम् ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥ १२ ॥ अव्याकृतं प्रधानम् । यदधिष्ठितोऽधिष्ठाय स्थितः । तदासनभूतं पद्मं सत्त्वं सत्त्वगुणः ॥ १३ ॥ मुख्यतत्त्वं प्राणतत्त्वम् । प्राणो वै मुख्य इति श्रुतेः । दरवरं शंखम् ॥ १४ ॥ १५ ॥ आकूतीः क्रियाशक्तियुक्तं मनः । अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तं रूपम् । मुद्रया धृत्वाऽर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्ति । तत्तन्मु-

शिरो नभः ॥ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥ प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चंद्रो भ्रुवौ यमः ॥ ७ ॥ लज्जोत्तरोऽधरो लोभो दंता ज्योत्स्ना स्मयो भ्रमः ॥ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥ ८ ॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १० ॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् ॥ वासश्छंदोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ ११ ॥ बिभर्ति सांख्यं योगं च देवो मकरकुंडले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥ १२ ॥ अव्याकृतमनंताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् ॥ अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥ इंद्रियाणि शरानाहुराकूतीरस्य स्यंदनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयाऽर्थक्रियात्मताम् ॥ १६ ॥ मंडलं देवयजनं दीक्षासंस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥ आतपत्रं तु वैकुंठं द्विजा धामाकुतोभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितः पार्षदाधिपः ॥ नंदादयोऽष्टौ द्वास्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ २० ॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥ २१ ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अर्थें-

द्रया तथा तथा भावयेदित्यर्थः ॥ १६ ॥ मंडलं देवयजनं देवपूजाभूमिं सूर्यमंडलत्वेन भावयेदित्यर्थः । अंतर्वह्निमंडलं वा दीक्षासंस्कार आत्मनो गुरुकृतां मंत्रदीक्षामेवात्मनस्तत्पूजायोग्यतां भावयेदित्यर्थः । परिचर्येति । भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयायेत्येवं भावयेदित्यर्थः ॥ १७ ॥ पूर्वमासनपद्ममुक्तमिदानीं करस्थं पद्ममाह । भगवानिति । भगशब्दार्थमैश्वर्यादिषाड्गुण्यम् ॥ १८ ॥ हे द्विजाः । एकवचनांतो वा पाठः । अकुतोभयं कैवल्यं धाम गृहमभजत् । यद्वा वैकुंठस्य विशेषणमकुतोभयं यद्धामेति । त्रिवृत् ऋग्यजुः-सामरूपो वेदः । सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिर इत्यादिमंत्रलिंगात् । यज्ञं यज्ञरूपं पुरुषम् । यज्ञो वै विष्णुरिति श्रुतेः ॥ १९ ॥ अनपायिनी हरेः शक्तिः । तत्र हेतुः । साक्षादात्मनः स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः । तंत्रमूर्तिः पंचरात्राद्यागमरूपः । येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपाला नंदादयः ॥ २० ॥ तस्यैव चतुर्व्यूहोपासनामाह । वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिभेदैरुपास्य इत्यभिधीयते ॥ २१ ॥

तस्यैवाध्यात्मनि चतुर्धोपासनामाह । स एव भगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः परिभाव्यते । तद्वृत्त्युपाधीनाह । अर्था बाह्याः इंद्रियं मनः आशयस्तदुभयसंस्कारयुक्तमज्ञानं ज्ञानं त्रितयसाक्षि तैः ॥ २२ ॥ उक्तचतुर्व्यूहद्वयोपासनेऽपि पूर्वोक्तमंगाद्युपासनमाह । अंगेति । अंगादिभिरुपलक्षितो भगवान्हरिर्वासुदेवादिचतुर्मूर्तिः सन्विश्वादिचतुष्टयं बिभर्ति स्म। विश्वादिभावेऽपि तन्नियंतुस्तस्य न जीवत्वमित्याह । विश्वादिचतुष्टयं बिभ्रदपि भगवानीश्वर एवेति ॥ २३ ॥ तस्यैव ब्रह्मादित्रिमूर्तितामाह । द्विजऋषभेति । स एष एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादिहेतुत्रयम् । वस्तुतो भेदाभावेऽप्येतज्जगत्स्वगतमायया सृजति हरति पातीति कृत्वाऽऽख्यया ब्रह्मादिरूपयाऽनावृतात्मो नाच्छन्नज्ञानोऽपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु न तु भिन्नः । अत्र विद्वदनुभवं प्रमाणयति । यतस्तत्परैरात्मत्वेनैव लभ्यत इति ॥ २४ ॥ यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते । कृष्णसख अर्जुनस्य सखे वृष्णिश्रेष्ठ ! अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहनः । अनपवर्गमक्षीणं वीर्यं यस्य । गोपवनितानां व्रजाः समूहा भृत्या नारदादयस्तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य । श्रवणमेव मंगलं यस्य ॥ २५ ॥ एतज्जपमात्रस्यापि ब्रह्मज्ञानं फलमित्याह । य इति । कल्ये

द्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥ २२ ॥ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्तिस्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥ २३ ॥ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक्स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥२४॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोपवनिताव्रजभृत्यगीततीर्थश्रवः श्रवणमंगल पाहि भृत्यान् ॥ २५ ॥ य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥ शौनक उवाच ॥ शुको यदाह भगवान्विष्णुराताय शृण्वते ॥ सौरो गणो मासि मासि नाना वसति सप्तकः ॥ २७ ॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥ सूत उवाच ॥ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतंत्रोऽयं लोकेषु परिवर्तते ॥ २९ ॥ एक एव हि लोकानां सूर्य आत्माऽदिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥ कालो देशः क्रिया कर्ता करणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥ ३१ ॥ मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥ लोकतंत्राय चरति पृथग्द्वादशभिर्गणैः ॥ ३२ ॥ धाता कृतस्थली

उषःकाले यस्तच्चित्तः प्रयतः शुचिश्च स जप्त्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥ २६ ॥ मंडलं देवयजनमित्युक्त्या बुद्धिमागतो मूर्तिव्यूहप्रसंगेन रविव्यूहोऽत्र पृच्छ्यते । शुक इति पंचमे यदाह तथाऽन्ये च ऋषयो गंधर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तेत्यादिना । सौरः सूर्यसंबंधी । सप्तकः सप्तानां गणः ॥ २७ ॥ तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्यैर्वा । व्यूहं विभागम् ॥ २८ ॥ तत्र तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह । अनाद्यविद्यया मायया । अयं सूर्यः । लोकतंत्रो लोकयात्राप्रवर्तकः ॥ २९ ॥ अतस्तस्य क्रियाभेदोपाधिकमेव नानात्वं न स्वत इत्याह । एक एवेति । सूर्य आत्मा जगतस्तस्थुषश्चेति श्रुतेः । जगदात्मा आदिकृत्सृष्टिकर्ता हरिरेव सूर्यः स च सर्वासां वेदोक्तक्रियाणां मूलं संस्तेनोपाधिना बहुधोक्तः ॥ ३० ॥ कालरूपधारिणो हरेर्द्वादशादित्यरूपं भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह । काल इति । कालः प्रातरादिः । देशः समादिः । क्रिया अनुष्ठानम् । कर्ता ब्राह्मणादिः । कारणं स्रुगादि । कार्यं यागादि । आगमो मंत्रादिः । द्रव्यं व्रीह्यादि । फलं स्वर्गादि ॥ ३१ ॥ तत्र च कालस्वरूपधारी भगवान्पृथक्चरति । मध्वादिषु चैत्रादिषु ।

॥१

लोकतंत्राय लोकयात्रानिर्वाहाय ॥ ३२ ॥ तानेव गणानाह धातेति द्वादशभिः । धाता सूर्यः । कृतस्थली अप्सराः । हेती राक्षसः । वासुकिर्नागः । रथकृद्यक्षः । पुलस्त्य ऋषिः । तुंबुरुर्गंधर्वः । मधुमासं चैत्रम् । नयंत्यनुवर्तयंति ॥ ३३ ॥ अथौजा यक्षः । प्रहेती राक्षसः । नारदो गंधर्वः । कच्छनीरो नागः । माधवं वैशाखम् ॥ ३४ ॥ मित्रः सूर्यः । पौरुषेयो राक्षसः । रथस्वनो यक्षः । शुक्रमासं ज्येष्ठम् ॥ ३५ ॥ वरुणः सूर्यः । सहजन्यो यक्षः । शुक्रो नागः । चित्रस्वनो राक्षसः । शुचिमासमाषाढम् ॥ ३६ ॥ इंद्रः सूर्यः । विश्वावसुर्गंधर्वः । श्रोता यक्षः । एलापत्रो नागः । वर्यो राक्षसः इति स्वयमेव व्याख्यातम् । नभोमासं श्रावणम् ॥ ३७ ॥ विवस्वान्सूर्यः । उग्रसेनो गंधर्वः व्याघ्रो राक्षसः । आसारणो यक्षः । शंखपालो नागः । नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ धनंजयो नागः । वातो राक्षसः । सुषेणो गंधर्वः । सुरुचिर्यक्षः । तपोमासं माघम् । मासक्रमातिलंघनं कौर्मोक्तादित्यनुक्रमानुसारेण । वैष्णवे तु मासक्रमेणोक्तिः । क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥ क्रतुर्यक्षः । वर्चा राक्षसः । पर्जन्यः सूर्यः । सेनजिदप्सराः । विश्वो गंधर्वः । ऐरावतो नागः । तपस्याख्यं फाल्गुनम् ॥ ४० ॥ अंशुः सूर्यः । अंश इति वा पाठः । तार्क्ष्यो यक्षः ।

हेतिर्वासुकी रथकृन्मुने ॥ पुलस्त्यस्तुंबुरुरिति मधुमासं नयंत्यमी ॥ ३३ ॥ अर्यमा पुलहोऽथौजाः प्रहेतिः पुंजिकस्थली ॥ नारदः कच्छनीरश्च नयंत्येते स्म माधवम् ॥ ३४ ॥ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयंत्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रंभा सहजन्यस्तथा हुहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयंत्यमी ॥ ३६ ॥ इंद्रो विश्वावसुः श्रोता एलापत्रस्तथांगिराः ॥ प्रम्लोचा राक्षसो वर्यो नभोमासं नयंत्यमी ॥ ३७ ॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनुम्लोचा शंखपालो नभस्याख्यं नयंत्यमी ॥ ३८ ॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ॥ घृताची गौतमश्चेति तपोमासं नयंत्यमी ॥ ३९ ॥ क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं नयंत्यमी ॥ ४० ॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखः सहोमासं नयंत्यमी ॥ ४१ ॥ भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पंचमः ॥ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयंत्यमी ॥ ४२ ॥ त्वष्टा ऋचीकतनयः कंबलश्च तिलोत्तमा ॥ ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषंभराः ॥ ४३ ॥ विष्णुरश्वतरो रंभा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयंत्यमी ॥ ४४ ॥ एता भगवतो विष्णोरादित्यस्य विभूतयः ॥

ऋतसेनो गंधर्वः । विद्युच्छत्रू राक्षसः । महाशंखो नागः । सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गंधर्वः ऊर्णो यक्षः । आयुर्ऋषिः । कर्कोटको नागः ॥ ४२ ॥ त्वष्टा सूर्यः । ऋचीकतनयो जमदग्निः । कंबलो नागः । ब्रह्मापेतो राक्षसः । शतजिद्यक्षः । धृतराष्ट्रो गंधर्वः । इषंभरा आश्विनपालकाः ॥ ४३ ॥ विष्णुरादित्यः । अश्वतरो नागः । सूर्यवर्चा गंधर्वः । सत्यजिद्यक्षः । मखापेतो राक्षसः । ऊर्जमासं कार्तिकमासम् । एते चादित्यादयः कौर्मे विभज्योक्ताः । धाताऽर्यमा च मित्रश्च वरुणश्चेंद्र एव च ॥ विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥ भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः ॥ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथांगिरा भृगुः ॥ गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च ॥ जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः ॥ रथकृच्चोऽरिष्टनेमिर्ग्रामणीश्च रथस्वनः ॥ रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा ॥ तार्क्ष्यश्चारिष्टनेमिश्च रुतजित्सत्यजित्तथा ॥ एते यक्षाः ॥ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा ॥ वर्यो व्याघ्रस्तथा यश्च वायुर्विद्युद्दिवाकरः ॥ ब्रह्मापेतश्च विप्रेंद्रा यज्ञापेतश्च राक्षसाः ॥ वासुकिः कच्छनीरश्च तक्षकः सर्पपुंगवः ॥ एलापत्रः शंखपालस्तथैरावतसंज्ञितः ॥ धनंजयो महापद्मस्तथा कर्कोटको द्विजाः ॥ कंबलोऽश्वत-

रथैवं वहंत्येनं यथाक्रमम् । तुंबुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा ॥ उग्रसेनो वसुरुचिर्विश्वावसुरथापरः ॥ चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥ सूर्यवर्चा द्वादशैते गंधर्वा गायतां वराः ॥ कृतस्थ-
ल्यप्सरो वर्या तथाऽन्या पुंजिकस्थली ॥ मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः ॥ अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा ॥ अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा ॥ रंभा
चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृता इति ॥ ४४ ॥ ४५ ॥ एतेषां पृथक्कर्माणि निरूपयति द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः षड्भिर्गंधर्वादिभिरस्य जनस्य समंताच्चरन् शुभां मतिं तनुते ।
गायत्र्यर्थोऽनेन सूचितः ॥ ४६ ॥ तल्लिंगैः सूर्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यंति दृढं बध्नंति । ग्रामण्यो यक्षाः । नैर्ऋता राक्षसाः ॥ ४८ ॥ किंच वालखिल्या इति । एवं प्रतिमासं त एव स्तुवंति ।
विभुं सूर्यम् ॥ ४९ ॥ व्यूह्य विभज्य ॥ ५० ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ॥ प्रथमस्कंधमारभ्य प्राधान्येन समा-

स्मरतां संध्ययोर्नॄणां हरंत्यंहो दिने दिने ॥ ४५ ॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ॥ चरन्समंतात्तनुते परत्रेह च सन्मतिम् ॥४६॥ सा-
मर्ग्यजुर्भिस्तल्लिंगैर्ऋषयः संस्तुवंत्यमुम् ॥ गंधर्वास्तं प्रगायंति नृत्यंत्यप्सरसोऽग्रतः ॥ ४७ ॥ उन्नह्यंति रथं नागा ग्रामण्यो रथयोजकाः ॥ नोदयंति
रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोऽभिमुखं यांति स्तुवंति स्तुतिभिर्विभुम् ॥ ४९ ॥ एवं
ह्यनादिनिधनो भगवान्हरिरीश्वरः ॥ कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥५०॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे आदित्यव्यूह-
विवरणं नाम एकादशोऽध्यायः ॥११॥ सूत उवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥ ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥ १ ॥
एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥ अत्र संकीर्तितः साक्षात्सर्वपापहरो हरिः ॥ नारायणो
हृषीकेशो भगवान्सात्वतां पतिः ॥ ३ ॥ अत्र ब्रह्मपरं गुह्यं जगतः प्रभवाप्ययम् ॥ ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥ भक्तियोगः
समाख्यातो वैराग्यं च तदाश्रयम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्य ब्रह्मर्षभस्य
संवादश्च परीक्षितः ॥ ६ ॥ योगधारणयोत्क्रांतिः संवादो नारदाजयोः ॥ अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥ विदुरोद्धवसंवादः

सतः ॥ १ ॥ तदेवमस्मिन्पुराणे विस्तरेणोक्तानर्थान्संक्षेपतो वर्णयिष्यन्धर्मादीन्प्रणमति । नम इति । महते हरिभक्तिलक्षणाय । ब्राह्मणान् । सनातनान् अनादीन् । धर्मानित्युपलक्षणं पुराणोक्ता-
र्थानाम् ॥ १ ॥ पुरुषत्वे उचितं श्रवणादियोग्यम् ॥ २ ॥ एतत्प्रपंचयति । अत्रेति । भगवानैश्वर्यादिषड्गुणः साक्षात्संकीर्तित इति देवताकांडार्थः ॥ ३ ॥ ब्रह्मकांडार्थमाह । अत्र ब्रह्मेति । गुह्यं
निर्गुणम् । प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवं अप्येत्यस्मिन्नित्यप्ययं तच्च तच्च । अनेनाश्रयशब्दार्थो दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यंतं ज्ञानम् । तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते
येन तज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥ कर्मकांडार्थमाह । भक्तियोगश्च साध्यसाधनरूपः । तदाश्रयं भक्तियोगेन निष्पादितम् । एवं सामान्यतो निरूप्येदानीं द्वादशस्कंधप्रकरणार्थाननुक्रामति । पारी-
क्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानं च ॥ ५ ॥ ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य । इति प्रथमस्कंधार्थः ॥ ६ ॥ उत्क्रांतिरर्चिरादिगतिः । प्राधानिकः प्रधानकार्यविराड्रूपः सर्गः ।

अग्रत आदितो महदादिक्रमेणेत्यर्थः । इति द्वितीयार्थः ॥ ७ ॥ महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम् ॥ ८ ॥ प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः । वैकृतिका महदादयश्चकाराद्विकाराश्च ये तेषां सर्गः ॥ ९ ॥ गतिः स्वरूपम् । उद्धरणे उद्धारणे ॥ १० ॥ अर्धाभ्यां नारी च नरश्च तस्य सर्गः ॥ ११ ॥ संतानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्यानंतरं द्रष्टव्यम् ॥ १२ ॥ १३ ॥ इति तृतीयार्थः ॥ चतुर्थस्कंधार्थमाह । नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः संतानः ॥ १४ ॥ पंचमस्कंधार्थमाह । ततः प्रैयव्रतं प्रियव्रतस्य चरितम् ॥ १५ ॥ द्वीपाद्युपवर्णनं प्रथमं संक्षेपतस्ततो

क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥ ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्मांडसंभूतिर्वैराजः पुरुषो यतः ॥ ९ ॥ कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ॥ भुव उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा ॥ १० ॥ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च ॥ अर्धनारीनरस्याथ यतः स्वायंभुवो मनुः ॥ ११ ॥ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥ १३ ॥ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥ ततो द्वीपसमुद्राद्रिवर्षनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६ ॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्राणां च संततिः ॥ यतो देवासुरनरास्तिर्यङ्नगखगादयः ॥ १७ ॥ त्वाष्ट्रस्य जन्मनिधनं पुत्रयोश्च दितेर्द्विजाः ॥ दैत्येश्वरस्य चरितं प्रह्रादस्य महात्मनः ॥ १८ ॥ मन्वंतरानुकथनं गजेंद्रस्य विमोक्षणम् ॥ मन्वंतरावताराश्च विष्णोर्हयशिरादयः ॥ १९ ॥ कौर्मं मात्स्यं नारसिंहं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम् ॥ २० ॥ देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्मतद्वंशः सुद्युम्नस्य महात्मनः ॥ २१ ॥ इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृगादयः ॥ २२ ॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वांगस्य च मांधातुः सौभरेः सगरस्य च ॥ २३ ॥ रामस्य कोशलेंद्रस्य चरितं किल्बिषापहम् ॥ निमेरंगपरित्यागो जनकानां च संभवः ॥ २४ ॥ रामस्य भार्गवेन्द्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥ दौष्यंतेर्भरतस्यापि शंतनोस्तत्सुतस्य च ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥ यत्रावतीर्णो भगवान्कृष्णाख्यो जगदीश्वरः ॥ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनाऽ

द्वीपादीनां ये गिरयो नद्यश्च तेषामुपवर्णनम् । पातालानां नरकाणां च संस्थितिः । अनेनैव नरकनिवर्तकमजामिलोपाख्यानं गृहीतं ततः पराचीनम् ॥ १६ ॥ षष्ठार्थमाह । दक्षजन्मेति ॥ १७ ॥ सप्तमार्थमाह पुत्रयोश्चेति ॥ १८ ॥ अष्टमार्थमाह । मन्वंतरानुकथनमिति । कचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसाकुलत्वेनेति द्रष्टव्यम् ॥ १९ ॥ २० ॥ नवमार्थमाह । राजवंशेति ॥ २१ ॥ ॥ २२–२४ ॥ सोमवंशादिभूतस्यैलस्य चरितम् ॥ २५ ॥ तत्सुतस्य भीष्मस्य ॥ २६ ॥ २७ ॥ दशमार्थमाह । तस्य कर्माणीति । पूतनायाः असुसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥ महभ्रातुः

ससखस्य ॥ २९–३१ ॥ यज्ञाभिषेकं यज्ञः पूजा अभिषेकश्च तयोर्द्वंद्वैक्यम् ॥ ३२–३६ ॥ द्विषतः शत्रून्प्रमथ्य ॥ ३७ ॥ ३८ ॥ ये च शंबरादयस्तेषां माहात्म्यं प्रभावो वधश्च ॥ ३९ ॥ ४० ॥ एकादशार्थमाह । विप्रशापेति ॥ ४१ ॥ धर्मविनिर्णयो वर्णाश्रमधर्मविनिश्चयः मर्त्यपरित्यागो मनुष्यत्वस्यांतर्धानम् ॥ ४२ ॥ द्वादशार्थमाह । युगेति युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥ ऋषेर्व्यासस्य । सूर्यस्य च विन्यास इत्यर्थः ॥ ४४ ॥ इति चोक्तमिति चकारादन्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति । किमेवं नानार्थ

सुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सहभ्रातुः प्रलंबस्य च संक्षयः ॥ २९ ॥ गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाऽहेर्नंदमोक्षणम् ॥ ३० ॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः ॥ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥ गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥ शंखचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥ ३३ ॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ॥ गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥ मृतस्यानयनं सूनोः पुनः सांदीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ३५ ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ जरासंधसमानीतसैन्यस्य बहुशो वधः ॥ घातनं यवनेंद्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७॥ हरस्य जृम्भणं युद्धे बाणस्य भुजकृंतनम् ॥ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥ चैद्यपौंड्रकशाल्वानां दंतवक्रस्य दुर्मतेः ॥ शंबरो द्विविदः पीठो मुरः पंचजनादयः ॥ ३९ ॥ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ॥ भारावतरणं भूमेर्निमित्तीकृत्य पांडवान् ॥ ४० ॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥ ४१ ॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ॥ ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥ देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कंडेयस्य सत्कथा ॥ महापुरुषविन्यासः सूर्यस्य जगदात्मनः ॥ ४४ ॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥ ४५ ॥ पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥४६॥ संकीर्त्यमानो भगवाननंतः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥४७॥ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ॥ तदेव सत्यं तदुहैव

कथनेन तत्राह । लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४५ ॥ तत्कीर्तनेनापि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम् । पतितः कूपादिषु । स्खलितः सोपानादिषु । आर्तो दुःखितः । क्षुत्त्वा क्षुतं कृत्वा विवशोऽपि ॥ ४६ ॥ संकीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति । हीति सतामनुभवं प्रमाणयति । अर्को गिरिगुहादिध्वांतं न धुनोतीत्यप-

रितोषादृष्टांतांतरमाह । अतिवातोऽभ्रमिवेति ॥ ४७ ॥ हरिसंकीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपंचयति मृषागिर इति चतुर्भिः । मृषागिरो मिथ्यावाचः । असतीरसत्यः । असतां कथा यासु ताः । यद्यासु उत्तमश्लोकस्य यशोऽनुगीयत इति यत्तदेव सत्यं तदेव हि मंगलम् । उह इति हर्षे । भगवद्गुणानामभ्युदयो यस्मात्तत् ॥ ४८ ॥ नवं नवं यथा भवति तथा रुचिरं रुचिप्रदम् । महानुत्सवो यस्मात् ॥ ४९ ॥ चित्राणि पदानि यस्मिन् । तदपि जगत्पवित्रयतीति तथा तद्धरेर्यशो न प्रगृणीत न वर्णयेत्तद्वचो ध्वांक्षतीर्थं काकतुल्यनराणां रतिस्थानं न तु हंसैर्ज्ञानिभिः सेवितम् । तत्र हेतुः । यत्रेति ॥ ५० ॥ स वाग्विसर्गः स एव वाचः प्रयोगो जनताघसंप्लवो जनसमूहाघनाशकः । यद्यस्मात्तान्येवान्यैः कीर्त्यमानानि शृण्वंति श्रोतरि सति गायंति नोचेत्स्वयमेव गृणंति ॥ ५१ ॥ इदानीं ज्ञानकर्मादरादपि भगवत्कीर्तनादिष्वेवादरः कर्तव्य इत्याह त्रिभिः । नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानं यतो निरंजनमुपाधिनिवर्तकं तदप्यच्युतभक्तिवर्जितं चेन्न

मंगलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८॥ तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ न तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्ध्वांक्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥ स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्य यशोऽङ्कितानि यच्छृण्वंति गायंति गृणंति साधवः ॥५१॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥ यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादः श्रवणादिभिर्हरेः ॥ ५३ ॥ अविस्मृतिः कृष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोति च ॥ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ५४ ॥ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमजस्रभावा भजताविवेश्य ॥ ५५ ॥ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥५७॥ य एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः ॥ श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥५८॥ द्वादश्यामेकादश्यां वा शृण्व-

शोभते नापरोक्षपर्यंतं भवतीत्यर्थः । ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतः शोभते यतः शश्वत्साधनकाले फलकाले चाभद्रं दुःखात्मकम् ॥ ५२ ॥ किंच । वर्णाश्रमाचारादिषु यः परो महान्परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्तिः संपत्तिश्च केवलं परः पुरुषार्थ इत्यर्थः । गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरेव स्मृतिर्भवति ॥ ५३ ॥ ततः किमत आह । अविस्मृतिरिति । क्षिणोति नाशयति ॥ ५४ ॥ अथेदानीं श्रोतॄनात्मानं चाभिनंदन्नाह यूयमिति द्वाभ्याम् । हे द्विजाग्र्याः ! यद्यस्मादात्मन्यंतःकरणे श्रीनारायणमाविवेश्य शश्वद्भजत । संभावनायां लोट् । अतो भूरिभागाः बहुपुण्याः । कथंभूतं । अखिलात्मभूतं सर्वांतर्यामिणम् । अतएव देवं सर्वोपास्यम् । अदेवं न देवोऽन्यो यस्य तम् । कुतः ईशम् । यद्वा । यस्माद्यूयं भूरिभागाः तपआदिसंपन्नाः ततो नारायणं भजतेति विधिः ॥ ५५ ॥ मे मया श्रुतम् ॥ ५६ ॥ एतत्पुराणकीर्तनादिफलं प्रपंचयितुमाह एतदित्यष्टभिः ॥ ५७ ॥ यामक्षणं यामं क्षणं चेत्यर्थः । आत्मानमेव साक्षात्पु-

नास्ति ननु स्नानादिवद्देहमात्रम् ॥ ५८-६१ ॥ ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविंदते तत्फलमेतां पठित्वा अनुविंदत इति ॥ ६२ ॥ किंच प्रोक्तमिति ॥६३॥ राजन्य उदधिमेखलां पृथ्वीम् । सर्वशिराषः ॥ ६४ ॥ अस्य पुराणस्यैवं प्रभावातिरेके कारणमाह । कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा । इतरत्र शास्त्रांतरे ॥ ६५ ॥ शास्त्रप्रतिपादितं भगवंतं नमस्करोति तमिति द्वाभ्याम् । जगदुदयस्थितिसंयमात्मनो रजआदयः शक्तयो यस्य तम् । द्युपतिभिर्देवैरपि दुरवसितः अज्ञातः स्तवः स्तोत्रं यस्य तम् ॥ ६६ ॥ उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्वस्मिन्नात्मन्येवोपरचितं स्थिरं जंगमं च आलयो यस्य तस्मै भगवते ॥६७॥ श्रीगुरुं नमस्करोति । स्वसुखेनैव निभृतं पूर्णं चेतो यस्य । तेनैव व्युदस्तोऽन्यस्मिन् भावो

न्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्तो भवत्यपातकी ॥ ५९ ॥ पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ॥ उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥ देवता मुनयः सिद्धाः पितरो मनवो नृपाः ॥ यच्छंति कामान्गृणतः शृण्वतो यस्य कीर्तनात् ॥ ६१ ॥ ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविंदते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥ ६२ ॥ पुराणसंहितामेतामधीत्य प्रयतो द्विजः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥ विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥ ६४ ॥ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसंगैः ॥ ६५ ॥ तमहमजमनंतमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥ ६६ ॥ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजंगमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥ ६७ ॥ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥ ६८ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कंधे द्वादशस्कंधार्थनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥ सूत उवाच ॥ यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैः स्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगाः ॥ ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥ पृष्ठे भ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनांभसां यातायातमतंद्रितं जलनिधेर्ना-

यस्य तथा भूतोऽपि अजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत तं नतोऽस्मीति ॥ ६८ ॥ इति श्रीमद्भागवते द्वादशस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् ॥ दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥ सर्वपुराणसंख्यादीनुपवर्णयिष्यन् तत्प्रतिपाद्यं देवं प्रणमति । यमिति । स्तवैर्वेदैश्च स्तुन्वंति स्तुवंति । उपनिषच्छब्दस्याकारांतत्वं छंदोऽनुरोधेन ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यस्यांतं न विदुः सुरासुरगणाः ॥ १ ॥ क्षीरोदमथनादौ दुर्ज्ञेयत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मारयन्नाशिषः प्रार्थयते । पृष्ठे भ्राम्यन् अमंदो मंदरगिरिः गरिष्ठो मंदराचलस्तस्य ग्रावाणस्तेषामग्राणि तैः कंडूयनात्तेन सुखेन निद्रालोः निद्राशीलस्य येषां

[illegible] कलाव लशाः तदनुवर्तनवशाज्जलानधरभमा यातायात न विश्राम्यति । ननु समुद्रक्षोभादेव तत् न संस्कारवशात्तत्राह । वेलाक्षोभस्तस्य निमेन मिषेण ॥ २ ॥ पुराणसंख्यास्तासां संभूतिं समाहारं चास्य तु श्रीभागवतस्य वाच्यं विषयाः प्रयोजनं च दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥ त्रयोविंशत्त्रयोविंशतिसहस्राणि । चतुर्विंशति चतुर्विंशतिः । शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नं तु अग्निपुराणं तु दशपंचसहस्राणि चत्वारि शतानि ॥ ५ ॥ ६ ॥ स्कांदं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणमेकोनविंशदेकोनविंशतिः ॥ ८ ॥ महाभारतं त्वितिहासः । रामायणं च ऋषिप्रोक्तं काव्यम् । अतः पुराणानां संदोहः समूहश्चतुर्लक्षसंख्याक एव । इदानीमस्य वाच्यप्रयोजनादीन् दर्शयितुमाह तत्रेत्यादिना ॥ ९ ॥ १० ॥ हरि-

द्यापि विश्राम्यति ॥ २ ॥ पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने ॥ दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥ ब्राह्मं दश सहस्राणि पाद्मं पंचोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥ दशाष्टौ श्रीभागवतं नारदं पंचविंशतिः ॥ मार्कंडेयं नव वाह्नं तु दशपंच चतुःशतम् ॥ ५ ॥ चतुर्दश भविष्यं स्यात्तथा पंच शतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥ ६ ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥ ८ ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥ इदं भगवता पूर्वं ब्रह्मणे नाभिपंकजे ॥ स्थिताय भवभीताय कारुण्यात्संप्रकाशितम् ॥ १० ॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्रातामृतानंदितसत्सुरम् ॥ ११ ॥ सर्ववेदांतसारं यद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ १२ ॥ प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ददाति यो भागवतं स याति परमां गतिम् ॥ १३ ॥ राजंते तावदन्यानि पुराणानि सतां गणे ॥ यावद्भागवतं नैव श्रूयतेऽमृतसागरम् ॥ १४ ॥ सर्ववेदांतसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ १५ ॥ निम्नगानां यथा गंगा देवानामच्युतो यथा ॥ वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥ १६ ॥ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १७ ॥ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ॥ यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ १८ ॥ कस्मै येन विभाषितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥ योगींद्राय तदात्मनाऽथ भगवद्राताय

लीलाकथानां व्रातः समूहः स एवामृतं तेनानंदिताः संतः सुराश्च येन तत् ॥ ११ ॥ तन्निष्ठं तद्विषयम् ॥ १२ ॥ प्रौष्ठपद्यां भाद्रपद्याम् । हेमसिंहसमन्वितं सुवर्णसिंहासनारूढम् ॥ १३ ॥ १४ ॥ तद्रसं एवामृतं तेन तृप्तस्य निर्वृतस्य ॥ १५ ॥ १६ ॥ १७ ॥ पारमहंस्यं परमहंसैः प्राप्यम् । नैष्कर्म्यं सर्वकर्मोपरमः । भक्त्या तच्छ्रवणादिपरो विमुच्येत् ॥ १८ ॥ श्री[illegible] भगवद्ध्यानलक्षणं मंगलमाचरति । कस्मै ब्रह्मणे । अतुलोऽसमः । अयं श्रीभागवतरूपः । पुरा कल्पादौ । तद्रूपेण ब्रह्मरूपेण नारदाय । तद्रूपिणा नारदरूपिणा कृष्णाय व्यासाय । तद्रूपिणा

योगींद्राय शुकाय । तदात्मना शुकरूपेण । तत्परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहि । इति गायत्र्यैव यथोपक्रममुपसंहरन्गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ तमेव देवतारूपेण गुरुरूपेण च प्रणमति मम इति द्वाभ्याम् । व्याचचक्षे व्याख्यातवान् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ भावार्थदीपिकामेतां भगवद्भक्तवत्सलाम् ॥ परमानंदपादाब्जभृंगश्रीः श्रीधरोऽकरोत् ॥ १ ॥

कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥ नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥ योगींद्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ॥ संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २१ ॥ भवे भवे यथा भक्तिः पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥ २२ ॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैय्यासिक्यां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीकृष्णार्पणमस्तु ॥

स्वबालचपलालापैः स्वलीलापरिनर्तितैः ॥ प्रीयतां परमानंदनृहरिः सद्गुरुः स्वयम् ॥ २ ॥ श्रीपरानंदसंप्रीत्यै गुह्यं भागवतं मया ॥ तन्मतेनेदमाख्यातं न तु मन्मतिवैभवात् ॥ ३ ॥ क्वेदं नानानिगूढार्थं श्रीमद्भागवतं क्व नु ॥ मंदबुद्धिरहं कृष्णप्रेम किं किं न कारयेत् ॥ ४ ॥ इति श्रीमद्भागवते भावार्थदीपिकायां श्रीधरस्वामिविरचितायां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

श्रीनारायणार्पणमस्तु ।

यदक्षरं पदभ्रष्टं मात्राहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥

श्रीकृष्णजन्माष्टमी सं० २००६

( १—४—४६ )

इति श्रीधरीटीकासहिते-

# श्रीमद्भागवते द्वादशस्कन्धः

* श्रीहरिः शरणम् *

# श्रीमद्भागवत श्रीधरी (भावार्थदीपिका) टीका


सम्पादक

पाण्डेय रामतेज शास्त्री

सहायक सम्पादक

पं० विन्ध्येश्वरीप्रसाद मिश्र साहित्याचार्य। पं० युगल किशोर द्विवेदी विद्यार्णव।

पं० राजाराम पाण्डेय व्याकरणाचार्य



प्रकाशक

राधेमोहन पाण्डेय

पंडित-पुस्तकालय, राजादरवाजा बनारस।

मूल्य—२४)